जैन-विविध-साहित्य-शास्त्रमाला ( ४, ८, १२ )

श्रीलक्ष्मणगणिविरचितं

# सुपासनाह-चरित्रं ।

गूर्जरदेशान्तर्गतराजधन्यपुरवास्तव्येन श्रेष्ठित्रिकमचन्द्रतनूजेन कलिकाताविश्वविद्यालये
संस्कृत-प्राकृताध्यापक-परीक्षकेण न्याय-व्याकरणतीर्थपदवीकेन पण्डित-

हरगोविन्ददासेन

संशोधितं संस्कृतच्छायया विभूषितं च ।

वीरसंवत् २४४५ ।

मूल्यं रूप्यकपट्कम् ।

## समर्पणम् ।

यस्यानन्यसमं मदेन रहितं पाण्डित्यमत्युज्ज्वलं
वाणी चन्दनशीतला जनमनः—संतापसंहारिणी ।
इष्टेऽनिष्टतरे च वस्तुनिचये चेतो विकारोज्झितं
बाह्याडम्बरवर्जिता परहिताधाने प्रवृत्तिः शुभा ॥ १ ॥

अन्ये चापि गुणाः सुधांशुविमला गाम्भीर्यधैर्यादय-
स्तत्तत्पूर्वमहर्षिचारुचरितं सत्यापयन्ति ध्रुवम् ।
तस्य श्रीमुनिराजराजविजयस्येदं कराम्भोरुहे
भक्त्या पुस्तकमर्पयामि कृपया तस्यैव संपादितम् ॥ २ ॥

संपादकः ।

श्रीजैन-विविध-साहित्य-शास्त्रमालाके परिपोषक।



रावसाहेब लोकमान्य आत्मारामभाई हरकचंद शेटजी.

तळेगांव ढमढेरे—जि॰ पुणे.

चित्रशाळा प्रेस, पुणे शहर.

# सहायकों के शुभ नाम।

यह प्राकृतभाषाका प्राचीन और विस्तीर्ण ग्रन्थ का सानुवाद प्रकाशनका पवित्र कार्यमें प्रातःस्मरणीय मुनि महाराज श्री राजविजयजीके सदुपदेशसे जिन सद्गृहस्थोंने उल्लेखनीय आर्थिक सहायता करके अपनी धार्मिकता और शासनप्रिय्ताके साथ उदारताका परिचय दिया है उन महानुभावोंके साधुवादार्ह नाम और मददकी रकम इस प्रकार है। जिसमें श्रीयुत मोहनलालभाई खुशालचंद, जिसने इस कार्यकी पहल की है; श्रीयुत शामचंद केवलदास, जिसकी तर्फसे सबसे अधिक मदद की गई है; और श्रीयुत राव साहेब आत्माराम भाई हरखचंद, जो जैनधर्मावलम्बी न होने पर भी जैन साहित्यकी तर्फ क्रियात्मक अनुराग रखते हैं, विशेषतः धन्यवादके पात्र हैं।

| रकम। | नाम। | स्थान। |
|---|---|---|
| ५००) | शेठ मोहनलाल खुशालचंद | पूना |
| ७००) | शेठ शामचंद केवलचंद संघवी | तळेगाम ढमढेरा (पूना) |
| १२५) | राव साहेब आत्मारामभाई हरखचंद | ,, |
| २५०) | शेठ जमनादास माणेकचंद | पूना |
| १००) | शेठ शिवराम कस्तूरचंद | ,, |
| १२५) | शेठ चुन्नीलाल गणेश | तळेगाम ढमढेरा (पूना) |
| ७५) | शेठ बालभाई प्रेमचंद | ,, |
| १५०) | शेठ खूबचंद रामचंद | येवला (नासिक) |
| १००) | शेठ राहोबा रामचंद | माहाडा (सोलापुर) |
| ३००) | शेठ वीरचंदजी हिंदुमलजी | वार्सी ,, |
| १००) | शेठ कनकमलजी दलीचंदजी द्वारा | अहमदनगर |
| ७५) | शेठ रवचंद लालचंद | जूनेर (पूना) |
| ३९७) | प्रकीर्ण | |

प्रकाशक।

# प्रस्तावना।

अयं सुपार्श्वनाथचरितनामा पद्यात्मको विस्तीर्णः प्राकृतग्रन्थः। सप्तमतीर्थंकरस्य भगवतः सुपार्श्वनाथस्य चरितमत्र प्रतिपाद्यो विषयो ग्रन्थनाम्नैव प्रकटः। भगवदुपदेशप्रस्ताव एवास्य ग्रन्थस्य महान्तमंशमवरुणद्धि। तत्र श्रावकाणां सम्यक्त्वमूलानि द्वादश व्रतानि, प्रत्येकं तेषां पञ्च पञ्चातिचारान् (दूषणानि) चाधिकृत्य व्रतपालने सुफलोपलम्भः, अतिचाराधाने च समुचितो दण्डविधिरेकैककथाद्वारा समुपदिष्टः। प्रायः प्रत्येकमपि कथायाः केवलं व्रताद्युपदेशविधावेव पर्यवसानमकृत्वा प्रसङ्गानुसंधानपुरस्सरं कस्यांचिद् बुद्धिमाहात्म्यम्, क्वचित् कलाकौशल्यम्, क्वापि वासनावैषम्यम्, क्वचन प्रकृतिप्रभावम्, कुत्रापि च तत्त्वरहस्यादिकं सरलेनाथ च सरसेन रचनासंदर्भेण व्यावर्णयन् ग्रन्थकारः स्वसमयविद्यमानस्य लौकिकाचार-व्यवहारस्य, सामाजिकप्रथायाः, राजकीयपरिस्थितेः, धार्मिकभावस्य, नैतिकजीवनस्य, अन्यस्यापि च तादृशस्यानुषङ्गिकस्य ज्ञातव्यवस्तुनः समुल्लेखं विहितवान्। अतोऽयं ग्रन्थो यथा जैनधर्मावलम्बिनां धार्मिकशिक्षाविषयत्वेनोपकारकतामाकलयति, अन्येषामपि काव्यरसास्वादरतिकानां रसिकानां, पुरातत्त्वानुसंधानैकलक्षाणां दक्षाणां, भारतवर्षीयभाषातत्त्वपरिशीलनोद्युक्तानां चाभियुक्तानां तथैवोपयोगितामावहति, इति संप्रधार्य, अद्याप्यमुद्रितस्यास्य ग्रन्थस्य संपादनकर्मणि व्यापृतोऽभवम्।

इतरप्राकृतकाव्यग्रन्थेष्विव प्रकृतग्रन्थे परिच्छेदरूपः[1], आश्वासकात्मकः[2], सर्गस्वरूपः[3], अन्यो वा कश्चन तादृशः प्रकरणविभागो नोपलब्धः, अथ च **गौडवध** इव गाथाङ्कानामखण्डितप्रवाहो यावदन्तं ग्रन्थस्यास्य पुरातनादर्शपुस्तकेषु दृष्टः, केवलं भगवतः पूर्वभवद्वयवर्णनपरिसमाप्तावुपान्त्यगाथायां **"पढमपत्थावो"** इति, उपसंहारवाक्ये **"इय सिरिसुपासनाहचरिए पढमो वीओ सुरभवो अ समत्तो"** इति च; दीक्षावर्णनावसानेऽन्त्यगाथायां **"दुइयपत्थावो"** इति; केवलज्ञानोत्पत्त्युपक्रमान्ते **"इति श्रीसुपार्श्वजिनचरित्रे केवलज्ञानश्रीप्राप्तिः"** इति; एवमेव च ततः परं प्रत्येककथावसाने **"इति सम्यक्त्वप्रशंसायां चम्पकमालाकथानकं समाप्तम्"** इत्याद्याकाराणि संस्कृतभाषायामेवोपसंहारवाक्यान्युपलब्धानि। अतो गाथाङ्कांस्तेष्वेव ग्रन्थकाराभिमतेषु स्थानेषु विभज्य तदुल्लेखानुसारी प्रकरणविभागो विहितः; ग्रन्थकारेणान्तरान्तरा प्रमाणरूपेणोद्धृताः संस्कृतश्लोकाश्च प्रवाहागतेन पद्याङ्केन विरहय्य लघ्वक्षरेषु मुद्रिताः; पाठकगणः सौकर्येण तद्विदं विदांकरोत्विति।

१ यथा सुरसुन्दर्यादौ। २ यथा सेतुबन्धे। ३ यथा कुमारपालचरिते (प्राकृतद्व्याश्रये)।

प्रस्तुतग्रन्थस्य प्राकृतभाषामयत्वं प्रागेवोक्तम्। प्राकृतभाषा च, आसतामितरे, संस्कृतविदुषामपि संप्रति दुरवबोधा। प्राकृतव्याकरणातिरिक्तं प्राकृतसाहित्यग्रन्थपरिशीलनमवश्यमपेक्षते प्राकृतभाषावबोधः। विना संस्कृतानुवादसाहाय्यं तत्परिशीलनं च नैपत्करम्। इति संस्कृतानुवादसहकृतस्यैवास्य समुपकारकत्वमवधार्य, विहितेऽपि गवेषणे क्वापि प्राच्याचार्यविनिर्मितमस्य संस्कृतानुवादम्, अनुवादोपयोगि विवरणं, विषमस्थानटिप्पनकं वा किञ्चिदप्यनासाद्य, तत्करणेऽपि प्रवृत्तिमकार्षम्।

प्राकृतस्य संस्कृतानुवादः ( न तु टीका ) प्राच्यग्रन्थेष्वपि क्रमेण यावत्संभवं तत्प्रतिरूपकैः ( अभिन्नप्रकृतिकैः ) एव संस्कृतशब्दैर्विहितः, विशिष्टेन 'छाया' शब्देनाभिहितश्च विलोक्यते। एवंविधस्य च्छायारूपस्यानुवादस्य नियन्त्रितशब्दमर्यादतया क्वचिद् भावसौन्दर्यहानिकारकत्वे सत्यपि प्राकृतभाषावबोधजनकत्वेऽनन्यसदृशं साहाय्यविधायकत्वमसाधारणो गुणः। इत्येनमेव गुणं, यो वर्तमानसमयेऽप्युपयुक्ततां दधाति, अग्रेकृत्य प्राचीनरूढिमनुसरन्नत्रापि तादृशानुवाद( छाया )मेव विधाय मूलग्रन्थस्याधोभागे न्यवीविशम्।

छायायामत्र या पद्धतिरङ्गीकृता, तस्या विषयेऽत्र क्रियमाणं किञ्चित्स्पष्टीकरणं, बाढं विश्वसिमि, औचित्यं नातिक्रमिष्यति;—

१ (क) यथा क्वचिदेकस्यापि तीर्थ-कुतूहल-पद्म-बृहस्पत्यादेः संस्कृतशब्दस्य प्राकृतेऽनेकरूपाणि व्याकरणनियमेन सिध्यन्ति, तथा क्वापि समत्त-पत्त-मय-सत्थप्रभृतेः प्राकृतस्याप्येकस्य शब्दरूपस्य नानाविधानि संस्कृतरूपाणि भवितुमर्हन्ति; सत्यप्येवम्, प्रकरणसंगतार्थकमेवैकं रूप विहाय नान्यानि तत्रोपयुज्यन्त इति सुप्रसिद्धमेतत्। किन्तु यत्र प्रकरणसंगतान्यप्येकस्य प्राकृतशब्दस्य नानाविधानि संस्कृतरूपाणि संभवन्ति, तत्राप्यन्यतरस्यैवेहोपादानं कृत्वाऽन्यान्युपेक्षितानि, यथा—'सुहयर' शब्दस्य, ( पृ० ३ ) प्रकरणाविरोधेन संगम्यमानानां शुभकर-सुखकर-शुभतरशब्दानां त्रयाणामपि मध्य एकतम एव सुखकरशब्द आदृतः, अन्यावुपेक्षितौ, एकेनैव रूपेण पर्याप्तप्रयोजनत्वात्; एवं 'निव्वडिअ' प्रभृतेरपि निर्वृत्त-निष्पतित-स्पष्टभूतादीनामेकतमस्यैवैकत्रोपादानम्, उक्तादेव कारणात्; रूपवैचित्र्यदर्शनस्यापि स्थलभेदेनैकतममपि भिन्नभिन्नं रूपमादाय यावत्संभवं साधितत्वात्।

(ख) यत्र च श्लेषप्रसङ्गस्तत्र पक्षद्वये पृथक् पृथक् संबध्यमानं रूपद्वयमप्यादृतम्, अन्यथा भिन्न-

---

१ तित्थ, तूह ( हे० प्रा० १, १०४ ); कोऊहल, कुऊहल, कोउहल्ल ( हे० प्रा० १, ११७ ); पडुम, पुम्म, पदुम, पउम ( हे० प्रा० १, ६१ ), मयस्सइ, मयप्फइ, मयप्पइ, बहस्सइ, बहप्फइ, बहप्पइ, बिहस्सइ, बिहप्फइ, बिहप्पइ, बुहस्सइ, बुहप्फइ, बुहप्पइ, ( हे० प्रा० २, १३७ )। २ समस्त, समाप्त; पत्र, पात्र, प्राप्त; मद, मत, मृग, मृत; शस्त्र, शास्त्र, सार्थ स्वस्थ, स्वास्थ्य, शस्त, सुप्त, स्वार्थ, साम्र; स्वाप्त।

पक्षे तदर्थासंगतेः; केवलमुपमेयपक्षीयं रूपं मुख्यतः, उपमानपक्षीयं तु रूपं, भिन्नवर्णो रूपांशो वा गौणतया ( ) एवंभूते कोष्ठके स्थापितः, यथा 'सावय' शब्दस्य ( पृ० ३४८) श्रावक-श्वापदात्मकस्य रूपद्वयस्य मध्य उपमेयपक्षीयं श्रावकरूपं प्रथममुपादाय, उपमानभूतारण्यपक्षीयं श्वापदरूपं कोष्ठके गृहीतम्; यथा च 'सयण' शब्दस्य (पृ० ३६९) सदन-शयनरूपरूपद्वितयस्य मध्ये पुरपक्षीयं सदनं मुख्यतः, उपमानभूतजलधिजलपक्षीयशयनस्य भिन्नवर्णांशः 'शय' इति कोष्ठके, एवमन्यत्रापि सर्वत्र।

(ग) यत्र पुनः श्लेषेऽपि पर्याप्ताद् रूपद्वयादधिकस्यापि रूपस्य प्रकरणसंगतस्य संभवः, तत्राधिकस्य प्रागुक्तवदनावश्यकतयाऽनुपादानम्, यथा 'सप्पायारं' ( पृ० ३४८ ) इत्यादौ सप्राकार—सर्पाधारात्मकस्य रूपद्वयस्यैव पक्षद्वयेऽपि पर्याप्ततयाऽधिकस्य 'सर्पागार' इत्यस्योपमानभूतारण्यपक्षे संभवत्संगतिकस्याप्यग्रहणम्।

(घ) यत्र तु श्लेषे पक्षद्वयेऽप्येकेनैव शब्दरूपेणैकार्थकेन भिन्नार्थकेन वा निर्वाहः, तत्रैकस्मादधिकं संभवदपि प्रकरणसंगतिमदपि नोपात्तम्, यथा 'वररयणा' (पृ० ३०४ ) इत्यत्र 'वररत्ना' इत्यनेनैकेन रत्नशब्देनैव जलधिलहरिरूपोपमानपक्षे भार्यारूपोपमेयपक्षे च (वराणि रत्नान्याभरणेषु यस्याः सा ) पर्याप्ततया सुसंगतिकस्य संभवतश्च 'वररचना' इतिरूपस्योपेक्षा; यथा वा 'सुरयणमहियं' (पृ० ३६९) इत्यत्र सुरत्नमहितेनैकेनैव शब्देन पक्षद्वयेऽपि निर्वाहादभ्यधिकस्य 'सुरजनमथितं' इत्यस्योपमानपक्षे घटमानस्याधिकस्य रूपस्यानुपादानम्। एवमन्यत्रापि। सर्वत्रापि पर्याप्तरूपमात्रस्यैव ग्रहणं, नाधिकस्येत्यत्र निगर्वः।

२ (क) कतिपयप्राकृतशब्दानां निष्पद्यमान एकार्थकेऽपि संस्कृतरूपद्वय एकं वर्णपरावृत्तिसहम्, इतरच्च तत्परिवर्तनरहितं भवति, यथा प्राकृतस्य 'तूर' शब्दस्य संस्कृते तूर-तूर्ये इति, मोरशब्दस्य च संस्कृते मोरं-मयूराविति। एतादृशस्थलेषु प्रायो वर्णपरावृत्तिरहितमेव रूपं छायायामुपात्तम्।

(ख) येषां तु द्वे अपि वर्णपरावृत्तिसहे एव, यथा 'सुक्ख' शब्दस्य सुख-सौख्ये, 'कोऊहल' स्य वा कुतूहल—कौतूहले। तेषां स्थानभेदेन कुत्रापि कतरदुपात्तम्, अविशेषात्।

३ (क) तादृशा अप्यनेके सन्ति शब्दाः, येषां प्राकृतत्वे संस्कृतत्वे वा प्राच्यविदुषामपि मतभेदः, यथा 'चिहुर' शब्दस्य हेमचन्द्रमते प्राकृतत्वेऽपि दुर्गस्तं संस्कृतं मन्यते[२]। 'द्रह' शब्दस्यान्यमते

---

१ अभिधानचिन्तामणौ २, २०० । २ हे० प्रा० १, १७१ सूत्रस्य वृत्तौ । ३ अभिधानचिन्तामणौ ३, ९९० । ४ हे० प्रा० १, १८६ सूत्रवृत्तौ ।

संस्कृतत्वेऽपि हेमचन्द्रमते प्राकृतत्वम्[1] । 'णवर' शब्दः केवलार्थे प्राकृतव्याकरणेषु[2] निपात उक्तः, बहुभिर्विद्वद्भिश्च संस्कृतत्वेन तस्य प्रयोगः कृत उपलभ्यते[3] । 'चड' इति रुहधातोरादेशो हेमचन्द्रेण विहितः, अथ चानेकेषु संस्कृतग्रन्थेषु 'चट' धातोर्व्यवहारो दृश्यते[4] । एवमेव 'वेउव्विय' प्रभृतीनां प्राकृतशब्दानां संस्कृते वैक्रियादिवद् विकुर्वितप्रमुखाणि रूपाण्यपि विद्वद्भिः प्रयुक्तान्यनेकशो विलोक्यन्ते[5] । एतादृशेषु विवादापन्नेषु स्थलेषु[6] सादृश्यानुबन्धितया संस्कृतत्वपक्ष एवात्र च्छायायां विशेषेणादृतः; इतरस्यापि मतस्याऽतिरस्करणीयत्वेन क्वचित् प्राकृतत्वमप्युररीकृतम् ।

(ख) 'महइ' इत्यादीनां पुनः सादृश्यानुबन्धितया 'महति' इति संस्कृतत्वपक्षं क्वचिदुपलभ्यमानमप्यनादृत्य प्राकृतव्याकरणकारैर्वाञ्छार्थकधात्वादेशविधानद्वारा गृहीतः प्राकृतत्वपक्ष एवात्राप्युपात्तः, संस्कृते महादिधातूनां वाञ्छाद्यर्थे प्रयोगस्याहृदयहारित्वात्, सादृश्यानुबन्धस्यापि प्रकरणसंगतार्थानुपातिन एवोपादेयत्वादिति ।

४ (क) प्राकृतव्याकरणानामपि परस्परं नाल्पीयान् मतभेदः । अयं च मुख्यतो विभागद्वये विभक्तुं शक्यते, अर्थपरः शब्दरूपविषयश्च । तत्र प्रथमप्रकारो यथा, 'णवरि' शब्दस्य प्राकृतप्रकाशहेमचन्द्रव्याकरणयोरानन्तर्यार्थकत्वमुक्तम्, अन्येन केवलार्थकत्वमपि । एवंरूपेऽर्थविषये मतभेदे प्रकरणसंगतेरेवात्र निर्विवादं नियामकत्वेन तत्संगत एवार्थश्छायायामनुसृतः ।

(ख) यत्र पुनरर्थाभेदेऽपि शब्दरूपविषयको मतभेदः, यथा,—वररुचिः 'वद' इत्यस्य 'बोल्ल' इति 'इष' इत्यस्य च 'मह' इति रूपं व्याकरोति, हेमचन्द्रः पुनः 'कथ' इत्यस्य 'काङ्क्ष' इत्यस्य च क्रमेण 'बोल्ल, इति 'मह' इति चादिशति; एवं ण्यन्तस्यैव 'दृङ्' धातोः 'दूम' आदेशो हेमचन्द्रमते, केवलस्य तु प्राकृतप्रकाशे; तत्र विवादास्पदे प्रकृतिनिर्देशे हेमचन्द्रव्याकरणस्यैव विस्तीर्णतया विशेषोपकारकत्वात्, मूलग्रन्थेऽपि तल्लक्षितस्य तकारलुगादिनियमस्य विशेषेण दृग्गोचरीभवनात्, वर्णविसदृशतायाश्चोभयत्र तुल्यत्वाद् हेमचन्द्रव्याकरणानुसरणं छायायां विशेषेण विहितम्[11] ।

---

१ हे० प्रा० २, ८० सूत्रवृत्तिः । २ प्राकृतप्रकाशे ८, ७; हे० प्रा० २, १८७ । ३ विशेषावश्यकभाष्यटीका पृ० ११३९; औपपातिकसूत्रटीका पृ० १३३; प्रश्नव्याकरणटीका पृ० ३४४, ३७४; उपदेशरत्नाकरस्य १७ तरङ्गः; विपाकसूत्रटीका पृ० ४४ । ४ हीरसौभाग्यटीका १, २८; "चटिष्यति कथं प्रौढदेहोऽयं गजराजवत्" इति ऋषिमण्डलवृत्तिः; दोधकवृत्तिः पृ० २, ४१, ९२, ९६ । ५ प्रश्नव्याकरणटीका पृ० ३१९; वि० भा० टीका । ६ सेतुबन्धटीका १, ६ । ७ प्रा० प्र० ८, १९; हे० प्रा० ४, १९२ । ८ हे० प्रा० १, ३९ । १, ८८ । १, २०९ । २, १९९ । प्रा० प्र० का० २, ४७ । ४, २४ । ९ हे० प्रा० २, १८८ । १० हे० प्रा० १,२०९ । ११ वस्तुतस्तु विशिष्टवर्ण-

(ग) यत्र तु वर्णसादृश्यानुबन्धः प्रकृत्यादेशयोः, तत्र 'जंप-णोल्ल' प्रभृतौ वैररुचिप्रोक्ताया 'जल्प-णोद' प्रमुखाया एव प्रकृतेर्ग्रहणम्, न तु हेमचन्द्रप्रदिपादिताया: 'कथ-क्षिप' आदिरूपाया:, अत्यन्तं विसदृशवर्णत्वात्, अर्थविशेषस्य चानुपलम्भात् ।

(घ) 'निसुअ' प्रभृतीनां तु 'श्रुत' आद्यनुवादविधानेन देशीनाममालोक्तं देश्यत्वमेवात्राङ्गीकृतम्, निश्रुतादिरूपाणां वर्णसादृश्यानुबन्धेऽपि संस्कृते रूढ्या प्रसिद्ध्यभावात्, देश्यत्वेऽपि चैतेषां क्रियावाचितया 'निसुणिज्जंत' आदिरूपाणामपि सिद्धौ न किञ्चिद् बाधकम् ।

५ देश्य-समसंस्कृत-तद्भवत्वेन त्रिधा विभक्तस्यापि प्राकृतस्य मिथो विलक्षणतया संजातस्य संमिश्रणस्य विवेको न केवलं दुःशकः, अशक्य एव, तत्रापि विदुषां प्रचुरमतभेदस्य देशीनाममालादिषु प्रतिपदमुपलम्भात् । विस्तरेण तद्वर्णनानुरूपस्य स्थानस्यात्राभावेन प्रकृतग्रन्थोपात्तानामेव कियतां शब्दानां विषये दिङ्मात्रदर्शनपर उल्लेखोऽत्र क्रियते;–

| विवादापन्नशब्दः | यत्र देश्यत्वप्रतिपादनम् | | यत्र समसंस्कृ० तद्भवत्वं वा |
|---|---|---|---|
| कङ्केल्लि | देशीनाममालायां | १, १२ | अमरकोषे, अभिधानचिन्तामणौ च |
| चंग | ,, | ३, १ | मेदिनीकोषे, शब्दकल्पद्रुमे च |
| कोसलिअ | ,, | १, १२ | अभिधानचिन्ता० ( कौशलिक ) |
| चउक्क | ,, | ३, १२ | देशीनाम० ३,१२ वृत्तौ (चतुष्क) |
| मेरा | ,, | ६, ११३ | हे० प्रा० १,८७ (मिरा) |
| मुक्कल | ,, | ६, १४७ | दोधकवृत्तौ पृ० १६ ( मुत्कल ) |
| उव्वरिअ | ,, | १, १३२ | प्राकृतपिङ्गले १० काव्ये (उर्वरित) |

(क) एवं च कङ्केल्यादिशब्दानां संस्कृतत्वेनापि प्रसिद्ध्या वर्णसादृश्यानुबन्धं निबन्धनीकृत्य छायायामिह समसंस्कृतत्वपक्ष आदृतः ।

(ख) कौशलिकाप्रभृतिशब्दानामपि संस्कृतसाहित्ये भूयो विलोकनेन 'कोसलिअ' आदीनां तद्भवत्वसिद्ध्या सादृश्यानुबन्धं च गुणमपेक्ष्य तद्भवत्वपक्षोऽत्र च्छायायामङ्गीकृतः ।

(ग) मेराशब्दस्य तु मिराशब्दाद् व्याकरणेन तद्भवत्वसिद्धावपि मिराशब्दस्य संस्कृतसाहित्ये

---

सादृश्यादिरहितानां शब्दरूपाणां देश्यत्वमेव, व्याकरणकाराणां तद्भवप्राकृतत्वेन तेषां निर्देशोऽभ्यासप्तौकर्यायैव केवलमित्युत्पश्यामः । प्राच्यग्रन्थेषूपलभ्यमानानि कतिचिद् वाक्यानि सूक्ष्मतया मिथःपर्यालोच्यमानान्यस्यैवाभिप्रायस्य समर्थकानि विभाव्यन्ते, हे० प्रा० ४,२ वृत्तिः, देशीनाम० १,६९; ६,२४ वृत्ती च द्रष्टव्याः । १ प्रा०प्र० ८,२९;८,७। २ हे० प्रा० ४,२;४,१४३।३ दे० ना० ४,२७। ४ दे० ना० ६,२४ ।

प्रसिद्धिमपश्यता कुमारपालचरित ( प्राकृतद्व्याश्रय ) टीकायां प्रक्रमागतस्यापि तस्य स्थाने देश्यस्यैव मर्यादापर्यायेणैव व्याख्यानमालोकयताऽपि तद्भवत्वपक्षमुपेक्ष्य देश्यत्वमेवोररीकृतम्

(घ) मुत्कलप्रमुखाणां तु संस्कृतसाहित्येऽप्युक्तवत् क्वचिद् व्यवहारदर्शनात्, प्रसिद्ध्यभावाच्चोभयमपि—तद्भवत्वं देश्यत्वं च—स्थानभेदेनाङ्गीकृतम् ।

(ङ) 'अणह' आदीनां त्वर्थभेदेन तद्भवत्वं देश्यत्वं च, इति तेषां प्रकरणसंगत्या क्वचित् किञ्चिदित्युभयमप्यविरुद्धतयाऽऽश्रितम् ।

६ (क) देश्यशब्दानां चैकेनैव देशीनाममालादिप्रतिपादितेन केनचिच्छब्देन च्छायानुवादविधाने न किञ्चिद् निबन्धनमाकलयामः, किन्तु तदर्थकेनान्येनापि शब्देन तत्करणं नानुचितम्; वर्णसादृश्यानुबन्धस्य तद्भवप्राकृतविषयत्वात् । अत एव प्राच्यग्रन्थेषु 'धणिअ' प्रमुखदेश्यशब्दानां बहु-गाढ-बाढादिशब्देनेवात्रापि 'पच्चोणी' आदिदेश्यानां समानार्थकेनापि भिन्नभिन्नशब्देनानुवादो विहितः, समानार्थेष्वपि शब्देषु प्रकरणानुरोधेन क्वचित् कस्यचित् सौन्दर्यावहत्वात् । अत एव 'हु' 'चिय' आद्यव्ययानामपि व्याकरणेषु तद्भवप्राकृतत्वेनाधिकृतानामपि वस्तुतो देश्यप्रपञ्चान्तर्गतानां भिन्नभिन्नैः 'हि' 'एव' 'अपि' 'खलु' प्रभृतिभिः शब्दैरत्रानुवादः कृतः ।

(ख) येषां तु पोट्ट-मेहरी-मुरुंडियादिशब्दानां देशीनाममालाप्रतिपादितानां क्रमश उदर-ग्राम-प्रवरा-शिवाद्यर्थानां प्रकरणार्थेनासंगतिः, तेषामनुवादे देशीनाममालोक्तमर्थमगृहीत्वा प्रकरणसंगत्योह्यमान एवार्थः समुपात्तः, प्रकरणासंबद्धवचनानामनुपादेयत्वात् । अत एव तद्भवप्राकृतानां 'गेड्ड' आदिशब्दानामपि गर्ताद्यननुवादेन शकटाद्यर्थग्रहणमिह विहितम् ।

७ प्रकृतग्रन्थेऽपभ्रंशातिरिक्तेषु प्राकृतपद्येष्वपि बहवस्तादृशाः शब्दा दृष्टिपथमवतरन्ति, येषां शुद्धेन तद्भवप्राकृतत्वेन देश्यत्वेन वा व्यपदेशो दुःशकः कर्तुम्, व्याकरणनियमाननुपातित्वात्, देशीकोषे चानुपलम्भात् ; अथ च शुद्धैस्तद्भवप्राकृतैर्देश्यैर्वा शब्दैः सह वर्णसादृश्यानुबन्धं प्रकरणसंगतार्थसमानतां च पश्यंस्तेषामपभ्रष्टरूपतामनुमिमानस्तत्तत्प्राकृत-देश्यशब्दार्थानुसारेण प्रागुक्तशैल्या छायामकार्षम् । कतिपयानि तादृश्यत्रोदाहरणानि;—

---

१ तद्भवत्वे अणहं = अनघम्,देश्यत्वे अणहं = अक्षतम् ( दे० ना० १, १३ ) एवं तद्भवत्वे तत्ती तृप्तिः, देश्यत्वे तत्ती = तत्परता, आदेशश्च ( दे० ना० ५, २० ) । २ चतुर्थपृष्ठस्यैकादशाङ्का टिप्पनी द्रष्टव्या । ३ अनुक्रमं ६, ६० । ६, १२१ । ६, १०१ । ४ हे० प्रा० २, ३९ ।

| ग्रन्थपृ० | अपभ्रष्टशब्दः | तद्भवरूपम् | देश्यरूपम् |
|---|---|---|---|
| १०–३९९ | भिंभल | भिब्भल ( विह्वल ) | ० |
| २७८–३३२ | संतिअ | संतय ( सेंतक ) | ० |
| २९२ | भीडिअ | पीडिअ ( पीडित ) | ० |
| ३११ | पोट्ट | पोट्टली ( पोट्टली ) | ० |
| ४८९ | उल्ल | अण ( ऋण ) | ० |
| ५६९ | भिडण | भेअण ( भेदन ) | ० |
| ६०१ | सवक्की | सवत्ती ( सपत्नी ) | ० |
| २२९ | मुरुंडिय | ० | मुरुहुंडिय[३] |
| ८७ | कयवर | ० | कयवार[४] |
| ३६९ | पसव | ० | पसअ[५] |
| ६३१ | करय | ० | करवू[६] |

८ दौर्भाग्यात् प्राकृतशब्दार्थज्ञानोपयुक्तायां विद्यमानसामग्र्यामेकस्यापि तादृशस्योपयोगिनः कोषग्रन्थस्याद्यावध्यभावः। प्रस्तुतग्रन्थप्रयुक्तानां च कतिपयशब्दानां वर्तमानसामग्र्यामनुपलम्भः। अतस्तादृशशब्देषु (क) केषांचित् प्रकरणसंगतिसहकृतमन्यग्रन्थकृतव्याख्यानमवलम्ब्य (ख) केषांचित् तादृशमपरग्रन्थाधिकृतप्रकरणं तुलनया पर्यालोच्य (ग) केषांचन प्रचलितभाषापभ्रंशमवष्टभ्य, (घ) अवशिष्टानां च प्रकरणसंगतिमेव केवलामथ च सर्वत्रापेक्षणीयत्वेन बलवतीमाश्रित्य च्छायायामर्थो विहितः। क्रमेण चैषामत्र कतिचिदुदाहरणानि;—

(क) (पृ०६४३) 'पामिच्च' शब्दस्य 'उच्छिन्नं' इति ग्रन्थान्तरव्याख्यानम्[७]।

(ख) (पृ० ६५७) 'सुंग'–'सकढ' शब्दयोरनुक्रमं समुद्र-दंष्ट्रे अर्थौ[८]।

| (ग) ग्रन्थपृ० | शब्दः | अपभ्रंशः | छाया |
|---|---|---|---|
| २३७ | पट्टुया | पादु | पाद |
| २३८ | लत्ता | लात | पाद |

१ 'अम् मुवि' इत्यस्य शतरि स्वार्थिके कप्रत्यये सत्कं-संबन्धीत्यर्थः; अस्य प्रयोगा रत्नाकरावतारिकादिषु (पृ० १८) बहुषु ग्रन्थेषूपलभ्यन्ते। २ शब्दकल्पद्रुमे। ३ दे० ना० ६, १०६। ४ दे० ना० २, ११। ५ दे० ना० ६, ४। ६ दे० ना० २, १२। ७ सूत्रकृताङ्गस्य द्वितीयश्रुतस्कन्धे प्रथमचूलिकायां चतुर्दशाध्ययने प्रथमोद्देशस्थस्य 'पामिच्च' शब्दस्य शीलाङ्काचार्यकृतं दीपिकाकारानुविहितं च विवरणं द्रष्टव्यम्। ८ प्रस्तुतग्रन्थीयसुपार्श्वनाथनिर्वाणप्रकरणेन समं हेमचन्द्रकृतत्रिषष्टिशलाकापुरुषचरितस्य प्रथमपर्वाणि षष्ठसर्गे ऋषभदेवनिर्वाणप्रकरणं विलोकनीयम्।

| | | | |
|---|---|---|---|
| २३८ | गड्डय | गाड़ुं | शकट |
| २९३ | टोपिआ | टोपी | उष्णीष |
| २७६ | सट्टी | साटुं | विनिमय |
| ३८८ | डंगा | डांग | यष्टि |
| ५१४ | भोलिआ | भोली | भद्रिका |
| ५१७ | पुक्क | पोक | पूत्कार |
| ५९२ | चउरी | चॉरी | विवाहमण्डप |
| ५८४ | चीरी | चीर ( चीरो ) | ( वस्त्र ) खण्ड |

(घ) बीयत्तिय ( पृ० ३९० ), पलहिय ( पृ० ४१२ ), रव्वारिअ (पृ० ४२८), उव्वाइअ (पृ० ४३६ ) चव्वक्किय ( पृ० ४५५ ), वसेरी (पृ० ४७३ )

५ प्राकृतवत् संस्कृतेऽपि वैयाकरणानां महान् कलहः। विस्तरतस्तदुल्लेखस्य नेदमनुरूपं स्थलम्। अधिकृतच्छायाविषयस्तु कियन्मात्रः सोऽत्रोल्लेख्यतामर्हति, तथाहि;—केचिद् धवादिधातूनां सेट्त्वमेव, धावादीनां वेट्त्वमेव, स्कन्दादिधातूनां चानिट्त्वमेवेति 'इट्' प्रत्ययं नियमयन्ति, अन्ये सर्वेषामपि धातूनां वेट्त्वमनुशासयन्तस्तन्नियमं निराकुर्वन्ति। केचिद् माङो निपातस्य योगेऽद्यतनी(लुङ)मेव निर्दिशन्तो 'मा कुरु' आदिप्रयोगाणामपपाठत्वं प्रतिपादयन्ति, अपरे तूभयसंमतेन माङ्समानार्थकेन 'मा' इति निपातेन सह तद्योगमाचक्षाणास्तेषां साधुत्वमुपपादयन्ति। केचिदतृशव्ययादिभिः सह षष्ठीसमासप्रतिषेधं व्याकुर्वन्ति, इतरे पुनस्तन्नियमस्य बहुलशब्दानुवृत्त्याऽव्यापकतां व्यञ्जयन्तः 'श्रुतरत्नबहिः' आदिप्रयोगाणामपशब्दत्वमपाकुर्वन्ति। केचित् 'कथापयति' प्रभृतीनामशुद्धत्वमेव निरूपयन्ति, उत्पलादयस्तु तेषामपि 'मापयति' आदिवत् प्वागमप्राप्त्या सम्यक्त्वं संसूत्रयन्ति। केचित् समासान्तविधिं विस्तरत उपदिशन्तो विकल्पाविकल्पनिषेधैस्तं व्यवस्थापयन्ति, परे पुनः "समासान्तविधिरनित्यः" इति सर्वानुमतपरिभाषाप्रपञ्चेन तं शिथिलयन्ति। उभयेषामपि परस्परं विरोधभाजामेतेषां मतानां मध्ये 'एतदेव सत्यम्' 'तदितरत्तु असत्यमेव' इत्येकपक्षीयनिर्णयाधानं दुःसाहसमेव केवलम्, लक्ष्यानुसारिताया उभयत्राप्यविशेषात्। इत्यत्र च्छायायां स्थानभेदेनोभयमतानि कक्षीकुर्वतापि सुप्रसिद्धत्वेन बहुमतानुकूलतया प्रथमानां केचिच्छब्दोपलक्षितानां मतानां विशेषेणादरो विहितः; केवलं माङ्योगजाया अद्यतन्याः (लुङः) आडम्बरो विशेषतो नादृतः, तद्रूपाणां विषमत्वात्, दुरवबोधत्वात्, छायाया व्याकरणप्रौढतोपदर्शनानुपयुक्तस्थलत्वाच्चेत्यलमधिकेन, दिङ्मात्रप्रदर्शनपरत्वादस्य प्रयासस्य।

१ क्रियारत्नसमुच्चये पृ० ६६। २ क्रिया० पृ० १०। ३ उपदेशरत्नाकरे १२ तरङ्गे; एवं "घटानां निर्मातुस्त्रिभुवनविधातुश्च कलहः" इत्यादेरपि। ४ क्रिया० पृ० २९८।

अस्य ग्रन्थस्य विनिर्माता **लक्ष्मणगणि**र्विक्रमीयद्वादशशताब्द्यां लब्धसत्ताकः, विशेषतो गूर्जरदेशे कृतविहारश्चेति प्रस्तुतग्रन्थप्रशस्तावेव विनिर्दिष्टेन **धंधुक्कय**[1]नगरे ग्रन्थस्य प्रारम्भेण, **मंडली**[2]पुर्यां विक्रमात् ११९९ तमे वर्षे **कुमारपाल**-राज्ये समापनेन च व्यक्ततमेव प्रतीयते। स्वगुरुपरम्परासंबन्धे च ग्रन्थकृता कृत उल्लेखो वंशवृक्षाकारेणैवं परिणमति;–

जयसिंहसूरिः
|
अभयदेवसूरिः
|
हेमचन्द्रसूरिः
|
विजयसिंहसूरिः | श्रीचन्द्रसूरिः | विबुधचन्द्रसूरिः | लक्ष्मणगणिः

अस्यैवात्र संक्षेपतः समुपदर्शितस्य गुरुपारम्पर्यस्य, तत्रापि विशेषेणाऽभयदेवसूरि-हेमचन्द्रसूर्यो-र्वृत्तान्तः प्रस्तुतग्रन्थकारसब्रह्मचारिणा **श्रीचन्द्रसूरिणा** स्वकीयस्य **मुनिसुव्रतस्वामिचरितस्य** प्रशस्तौ किञ्चिद्विस्तरतः प्रतिपादितः। तस्य च भैक्त्याद्यावेशरहिततया ग्रन्थकृता प्रतिज्ञातत्वेनातिश-योक्त्याद्यालंकारिकभावामिश्रितत्वादैतिहासिकदृष्ट्या महोपयोगितामवधारयन्नत्र सच्छायमुल्लेखमुचित-मुत्पश्यामि;—

"तेस्स अपच्छिमतित्थाहिवस्स तित्थे पयट्टमाणम्मि।
**सिरिपण्हवाहणकुले** गच्छे **हरिसउ**रतव (?रतणय)म्मि ॥ ७२ ॥
**सिरिजयसिंहो** सूरी **सयंभरी**मंडलम्मि सुपसिद्धो।
पंचविहायारसमायरणरओ गुणणिही जाओ ॥७३॥

तस्यापश्चिमतीर्थाधिपस्य तीर्थे प्रवर्तमाने। श्रीप्रश्नवाहनकुले गच्छे हर्षपुरीये ॥ ७२ ॥
श्रीजयसिंहसूरिः शाकम्भरीमण्डले सुप्रसिद्धः। पञ्चविधाचारसमाचरणरतो गुणनिधिर्जातः ॥७३॥

१ संप्रति गूर्जरदेशे 'धंधुका' इति ख्यातम्। २ अधुना गूर्जरदेशे 'माण्डल' इति नाम्ना प्रसिद्धम्।
३ द्रष्टव्याऽत्र(मुनि०प्रशस्तौ)एकत्रिंशदङ्का गाथा।

४ अस्याः प्रशस्तेः पुस्तकद्वयमुपलब्धम्,—(१) अणहिल्लपुरपत्तनीयभाण्डागारस्थपुस्तकानां पञ्चमी सूची [ Fifth report of P. Peterson ] (२) प्रवर्तकश्रीकान्तिविजयैः कृपया प्रेषितं हस्तलिखितं पुस्तकम्, यत् तस्मिन्नेव पत्तने वैक्रमीय १९६० तमे वर्षे लेखितम्। आदर्शद्वयमप्येतदत्यशुद्धम्, प्रायः समान-पाठत्वात् तुल्यस्थलोद्भवत्वाच्चैकस्मादेव मूलपुस्तकात् कृतप्रतिलिपिकतयाऽनुमीयमानम्, इति यत्र यः शुद्धः

ताण विणेओ गुणरयणसायरो अभयदेवसूरित्ति। उवसमपहाणयाए जेण सुगराणवि मणो हरियं॥
सुरगुरुसरिसमईवि हु जस्स समग्गेवि गुणगणे गहिउं । नेव समत्थो किंपुण ते थोत्तुमहं खमो जिम्हो?॥
असरिसगुणाण (?णु)राएण परवसीहूयमाणसो तहवि। तेसिं गुणमाहप्पं मणंपि कित्तेमि सत्तीए ॥७६॥
गरुयगुणे अणुसरणं कुणमाणो पासिऊणव पवन्नं। तुंगत्तणं सरीरेण जस्स अच्चब्भुयं भुवणे॥७७॥

रूवेण निज्जिउव्व (? निज्जिओ लज्जिउव्व) मयरद्धओ महासुभडो।
नियडो न कयावि ( हु )जस्स संठिओ चिट्टिमविमुक्को ॥७८॥

निव्वाणत्थगिरिसिरतिरोहिए दिणयरम्मिव जिणिंदे । पुव्वमुणिमयंकमहे लोगंतरपट्टिए संते ॥७९॥
कलिकालनिसापसरियपमायबहलंधयारपडलेण । संजममग्गे पच्छाइयम्मि पाएण इह भरहे ॥८०॥
जेण तवनियमसंजमसमुज्जएणं महानिरीहेण। विप्फुरियं विमलमणिप्पईवकप्पेण सर (?सव्व) त्तो ॥७८(?)॥
तह कहवि अणुट्ठाणं मुक्ककसायं अणुट्ठियं जेण। परपक्खसपक्खेसुवि मणंपि जह होइ न विरोहो ॥७९॥

---

तेषां विनेयो गुणरत्नसागरोऽभयदेवसूरिरिति । उपशमप्रधानतया येन सुगराणामपि मनो हृतम् ॥७४॥
सुरगुरुसदृशमतिरपि हि यस्य समग्रानपि गुणान् ग्रहीतुम्। नैव समर्थः किं पुनस्तान्स्तोतुमहं क्षमो जिह्मः?
असदृशगुणानुरागेण परवशीभूतमानसस्तथापि । तेषां गुणमाहात्म्यं मनागपि कीर्तयामि शक्त्या ॥७६॥
गुरुगुणानुसरणं कुर्वाणेन दृष्ट्वेव प्रपन्नम्। तुङ्गत्वं शरीरेण यस्यात्यद्भुतं भुवने ॥७७॥
रूपेण निर्जितो लज्जित इव मकरध्वजो महासुभटः। निकटो न कदापि खलु यस्य संस्थितः स्थेमविमुक्तः॥
निर्वाणास्तगिरिशिरस्तिरोहिते दिनकर इव जिनेन्द्रे। पूर्वमुनिमृगाङ्कमहसि लोकान्तरप्रस्थिते सति ॥७९॥
कलिकालनिशाप्रसृतप्रमादबहलान्धकारपटलेन। संयममार्गे प्रच्छादिते प्रायेणेह भरते॥८०॥
येन तपोनियमसंयमसमुद्यतेन महानिरीहेण। विस्फुरितं विमलमणिप्रदीपकल्पेन सर्वतः ॥७८॥
तथा कथमप्यनुष्ठानं मुक्तकषायमनुष्ठितं येन। परपक्षस्वपक्षयोरपि मनागपि यथा भवति न विरोधः॥७९॥

---

पाठ उपलब्धः सोऽत्रादृतः, यस्तु द्वयोरपि पुस्तकयोः समानः, अशुद्धतया प्रतिभातश्च, स तथाभूत एवात्रोद्धृतः, संभवन् शुद्धिप्रकारश्च तस्य तदासने कोष्ठके समुपदर्शितः ।

१ अस्याभयदेवसूरेः संबन्धे मलधारिश्रीराजशेखरसूरिः स्वीयाया न्यायकन्दलीपञ्जिकायाः प्रशस्ताविदमन्यदप्युल्लिलखति,—

"देव्याश्चक्रेश्वर्याः प्रतिपन्नः सुतः श्रुताब्धिगोविन्दः। श्रीअभयसूरिरभवत्रिःसङ्ग ( ता ) सिद्धबहुविद्यः॥३॥
परःसहस्रान् भूदेवान् यक्षं कडमडं च यः। प्रबोध्य मेडत (?) पुरे वीरचैत्यमचीकरत् ॥ ४ ॥
श्रीगूर्जरेश्वरो दृष्ट्वा तीव्रं मलपरीषहम्। श्रीकर्णो बिरुदं यस्य मलधारीत्यघोषयत् ॥ ५ ॥
नाथ सुराष्ट्रराष्ट्रस्य खेंगारं प्रतिबोध्य यः। उज्जयन्ततीर्थपथं खलीभूतमवीवहत् ॥ ६ ॥
यस्योपदेशाद् निर्मुच्य चतसृश्चपलेक्षणाः । प्रद्युम्नो राजसचिवश्चारित्रं प्रत्यपद्यत ॥ ७ ॥

[ See Peterson's third report page 274]

एगो य चोलपट्टो तह पच्छायणपडोवि एक्का य। नियपरिभोगे जस्सासि सव्वया अईनिरीहस्स ॥८०॥
देहे वत्थेसु यसा (? सया) वि जस्स मलनिवहमुव्वहंतस्स। अब्भिंतरकम्ममलो तब्भयभीउव्व नीहरइ ॥८१॥
घयविगई मोत्तूणं पचक्खायाओ सेसविगईओ। सव्वाओ जेण जावजीवं रसगिद्धिरहिएण ॥८२॥
निज्जरणकए कम्माण जेण दिणतइयजामसमयम्मि। गिम्हे भिक्खा भमिया पढमगुणट्ठाणियगिहेसु ॥८३॥
भिक्खाविणिग्गयं जं सोऊणं सावया नियनिएसु। होंति गिहेसुवउत्ता भिक्खादाणाहिलासेण ॥८४॥
जं नियगिहम्मि पयडागयमत्ता (?त्तं) छउमदिट्ठियावि नरा। आसणसेट्ठिपमुहा पडिलाभंति य सहत्थेण॥
गामे वा नगरे वा सो कत्थइ जत्थ संठिओ जाव। ताव तमवंदिऊणं न तत्थ पाए जणा मुत्तो ॥८६॥

सिरिवीरएवतणओ ठक्कुरसिरिजज्जाओ(सिरि?) जयपसिद्धो।
गाउयपंचम (? य) मज्झे अवंदिउं जं न भुंजंतो ॥८७॥
अणहिल्लवाडयपुरे जायविभू(?हुऊ)सवे जिणाययणे।
हक्कारिऊण नीए एक्कम्मिवि (?वि) जम्मि तत्थ तओ ॥८८॥

गरुओ गरुययरोवि हु सेसो सावयजणो सयं चेव। जाइ अणाहूओवि हु जस्स नमंसणकयपइन्नो ॥८९॥

मुत्तीवि जस्स सयला अमयरसेणोवनि(? णेव नि)म्मिया विहिणा।
तद्दंसणे विणासइ ( जणाण ) जम्हा कसायविसं ॥ ९० ॥

परतित्थीणवि दिट्ठो हिययं पल्हायए सदंसणओ। जो तेहिंवि मणिज्जइ नियनियदेवावयारुव्व ॥९१॥
तं चिय सयावि वयणं मुहकुहराओ विणिसु (?ग) यं जस्स। जम्मि निसुए जणाणं परमा मणनिव्वुई होइ॥

---

एकश्च चोलपट्टस्तथा प्रच्छादनपट्यप्येका च। निजपरिभोगे यस्यासीत्सर्वदाऽतिनिरीहस्य ॥८०॥
देहे वस्त्रेषु सदापि यस्य मलनिवहमुद्वहतः। अभ्यन्तरकर्ममलस्तद्भयभीत इव निस्सरति ॥८१॥
घृतविकृतिं मुक्त्वा प्रत्याख्याताः शेषविकृतयः। सर्वा येन यावज्जीवं रसगृद्धिरहितेन ॥८२॥
निर्जरणकृते कर्मणां येन दिनतृतीययामसमये। ग्रीष्मे भिक्षा भ्रान्ता प्रथमगुणस्थानिकगृहेषु ॥ ८३ ॥
भिक्षाविनिर्गतं यं श्रुत्वा श्रावका निजनिजेषु। भवन्ति गृहेषूपयुक्ता भिक्षादानाभिलाषेण ॥ ८४ ॥
यं निजगृहे प्रकटागतमात्रं छद्मदृष्टिका अपि नराः। आमणश्रेष्ठिप्रमुखाः प्रतिलम्भयन्ति च स्वहस्तेन ॥८५॥
ग्रामे वा नगरे वा स कुत्रचिद्यत्र संस्थितो यावत्। तावत्तमवन्दित्वा न तत्र प्रायो जनो भुक्तः ॥८६ ॥
श्रीवीरदेवतनयठक्कुरश्रीजज्जयो जगत्प्रसिद्धः। क्रोशपञ्चकमध्येऽवन्दित्वा यं नाभुङ्क्त ॥ ८७ ॥
अणहिल्लपाटकपुरे जातविभूत्सवे जिनायतने। आहूय नीत एकस्मिन्नपि यस्मिंस्तत्र ततः ॥ ८८ ॥
गुरुर्गुरुतरोऽपि हि शेषः श्रावकजनः स्वयमेव। यात्यनाहूतोऽपि हि यस्य नमस्यनकृतप्रतिज्ञः ॥ ८९ ॥
मूर्तिरपि यस्य सकलाऽमृतरसेनेव निर्मिता विधिना। तद्दर्शने विनश्यति जनानां यस्मात्कषायविषम् ॥९०॥
परतीर्थिनामपि दृष्टो हृदयं प्रह्लादयति स्वदर्शनतः। यस्तैरपि मन्यते निजनिजदेवावतार इव ॥ ९१ ॥
तदेव सदापि वचनं मुखकुहराद् विनिर्गतं यस्य। यस्मिन् श्रुते जनानां परमा मनोनिर्वृतिर्भवति ॥ ९२

अन्नोन (?न्न) गोट्ठिकलहे जेहिं कओ सावएहिं रोसवसा। जिणभवणगमणनियमो उवसंता तेवि जस्स गिरा॥
कहवि कसायवसेणं सहोयरा भाउणोवि वट्टंता। अन्नोन्नमणालावे विगयकसाया कया जेण ॥९४॥
लद्धनरिंदपसाया थद्धा जे देवयाणवि पणामं। किच्छेण ऊणंवा (?कुणंता) तह गुरुणो एगस्स नियगच्छे॥
रायामच्चप(?प्प)मुहा निओगिणो तेवि जस्स वयणेण। सामन्नस्सनि मुणिणो मुक्का(?क्क)मया कमनया जाया॥
गोवेगिरिसिहरसंठियचरण(?म)जिणाययणदारमवरुद्धं।
पुनिव(पुन्नंव)दिन्नसासणसंसाधणिएहिं चिरकालं ॥९७॥
गंतूण तत्थ भणिऊण **भुवणपाला**भिहाणभूवालं। अइगरुयपयत्तेणं मुक्कलयं कारियं जेण ॥९८॥
**वरणगसुयं संतुय**सचिवं भणिऊण (जेण) **भरुयच्छे**।
सिरि**सवलिया**विहारे हेममया रोविया कलसा ॥९९॥
जेण जयसिंहदेवो राया भणिऊणसयलदेसम्मि। काराविओ अमारिं पज्जोसवणाईसु तिहीसुं १०९००॥
**पुहईपाएण सयंभरी**नरिंदेण जस्स लेहेण।

---

अन्योन्यगोष्ठीकलहे यैः कृतः श्रावकै रोपवशात्। जिनभवनगमननियम उपशान्तास्तेऽपि यस्य गिरा॥९३॥
कथमपि कषायवशेन सहोदरा भ्रातरोऽपि वर्तमानाः। अन्योन्यमनालापे विगतकषायाः कृता येन ॥९४॥
लब्धनरेन्द्रप्रसादाः स्तब्धा ये देवतानामपि प्रणामम्। कृच्छ्रेणाकुर्वंस्तथा गुरोरेकस्य निजगच्छे॥ ९५ ॥
राजामात्यप्रमुखा नियोगिनस्तेऽपि यस्य वचनेन। सामान्यस्यापि मुनेर्मुक्तमदाः क्रमनता जाताः ॥ ९६ ॥
गोपगिरिशिखरसंस्थितचरमजिनायतनद्वारमवरुद्धम्। पुण्यमिव दत्तशासनसंसाधनिकैश्चिरकालम् ॥९७॥
गत्वा तत्र भणित्वा भुवनपालाभिधानभूपालम्। अतिगुरुप्रयत्नेन मुत्कलं कारितं येन ॥ ९८ ॥
वरणकसुतं संतुकसचिवं भणित्वा येन भृगुकच्छे। श्रीशवलिकाविहारे हेममयाः रोपिताः कलशाः ॥९९॥
येन जयसिंहदेवो राजा भणित्वा सकलदेशे। कारितोऽमारिं पर्युषणादिषु तिथिषु ॥१०९००॥

---

१ यत्तु P. Peterson महोदयेन प्रस्तुतप्रशस्तेः सारं विनिर्दिशता (In his fourth report text page 8) "And at his request king Bhuvanapala remitted the taxes levied on worshippers in jain temples" इति " अस्य सूरेः प्रार्थनया भुवनपालेन राज्ञा जैनमन्दिराणां पूजकेषु संस्थापितः करस्त्यक्तः " इत्येतदर्थकमुक्तम्, तच्चिन्त्यम् " गोपगिरिशिखरस्थितं यदेकं ( न तु बहूनि ) जिनमन्दिरं राजनियोगिकै रुद्धद्वारं कृतमासीत, तत् सूरिणाऽनेन राजानमुक्त्वा उद्घाटितम् " इत्यस्यैवार्थस्यात्रोपलम्भात्।

२ यत्तु **पिटरसन्**महोदयः प्रशस्तेरस्याः सारे [ In his fourth report text page 8 ] "द्वे अष्टम्यौ, द्वे दशम्यौ, एका च शुक्लपञ्चमी, इत्येवं मासस्य पञ्चसु दिनेषु **जयसिंहराजो**ऽमारिं कारितः" इत्युदलिखत, तच्चिन्त्यम्, "पर्युषणा" पदस्य श्रावणमासान्ते समुपक्रम्यमाणेऽष्टाहे संकेतात्।

३ एतत्संवादो विक्रमात् ११९१ वर्षे विजयसिंहसूरिविनिर्मिते धर्मोपदेशमालाविवरणेऽप्युपलभ्यते;–

रणखंभउरजिणहरे चडाविया कणय(मय)कलसा ॥ १ ॥
जेण कुणंतेण तवं चउत्थछट्ठं च उभयकालेवि । सद्धम्मदेसणा भवियणस्स न कयावि परिचत्ता ॥२॥
सावयलोओ कल्लाणएसु अट्ठाहियासु सविसेसं । गामेसु य नयरेसु य बहू पयट्टाविओ जेण ॥३॥
नियनाणेणं केणइ तह वेमाणियसुरोवएसेण । परलोयगमणसमयं निययं नाऊण आसन्नं ॥७(?)॥
नीरोगम्मिवि देहे कमेण काऊण कवलपरिहारं । खविऊण सुहं सयलं जेण पवन्नो अभत्तट्ठो ॥८॥
जस्सुत्तिमट्टगहणं सोऊणं गरुयखेयभरियमणा । परतित्थियावि पइदिणमुवेंति पासे सयलनयणा ॥९॥
गुज्जरनरिंदनयरे सो कोवि न अत्थि रायपभिइजणे । अणसणवियाण जो तेसिमागओ नेय पासम्मि ॥१०॥
सिरिसालिभद्दसूरिप्पमुहेहिं ग (?अ) भय २ सूरीहिं । जस्स समीवे गंतूण मूरियं बहु ससोएहिं ॥११॥
मासम्मि भद्दवए टूं (?वट्टंते) तेरसम्मि उववासे । सोहियवसा य वरभवणमज्झओ नीहरेऊण ॥१२॥
पाययलेहिं लीलाए डंडहत्थेहिं अखलियगईहिं । कस्सवि अन्नस्स करे अविलग्गं (?गं) तेहिं सयमेव ॥१३॥
नरनाहमाणणिज्जे (?ज्जो) निवनयरनिवासिनेगमगणाण । सव्वेसिंपि पहाणो सगिहट्ठिओ सीयओ सेट्ठी ॥
जस्स पयपउमदंसणकयाहिलासो समाहिमलहंतो । दक्खिन्नमहोयहिणा परोवयारेक्करसिएण ॥१५॥

---

पृथ्वीराजेन शाकम्भरीनरेन्द्रेण यस्य लेखेन । रणस्तम्भपुरजिनगृहे आरोपिताः कनकमयकलशाः ॥ १ ॥
येन कुर्वता तपश्चतुर्थषष्ठं चोभयकालेऽपि । सद्धर्मदेशना भविजनस्य न कदापि परित्यक्ता ॥२॥
श्रावकलोकः कल्याणकेष्वष्टाहिकासु सविशेषम् । ग्रामेषु च नगरेषु च बहुः प्रवर्त्तितो येन ॥ ३ ॥
निजज्ञानेन केनचित्तथा वैमानिकसुरोपदेशेन । परलोकगमनसमयं निजं ज्ञात्वाऽऽसन्नम् ॥ ७ ॥
नीरोगेऽपि देहे क्रमेण कृत्वा कवलपरिहारम् । क्षपयित्वा सुखं सकलं येन प्रपन्नोऽभक्तार्थः ॥ ८ ॥
यस्योत्तमार्थग्रहणं श्रुत्वा गुरुखेदभृतमनसः । परतीर्थिका अपि प्रतिदिनमुपयन्ति सजलनयनाः ॥ ९ ॥
गूर्जरनरेन्द्रनगरे स कोऽपि नास्ति राजप्रभृतिजने । अनशनितानां यस्तेषामागतो नैव पार्श्वे ॥ १० ॥
श्रीशालिभद्रसूरिप्रमुखैरभयाभयसूरिभिः । यस्य समीपे गत्वा खेदितं बहु सशोकैः ॥ ११ ॥
मासे भाद्रपदे वर्तमाने त्रयोदश उपवासे । शुद्धिवशाच्च वरभवनमध्यतो निःसृत्य ॥ १२ ॥
पादतलैर्लीलया दण्डहस्तैरस्खलितगतिभिः । कस्याप्यन्यस्य करेऽविलगद्भिः स्वयमेव ॥ १३ ॥
नरनाथमाननीयो नृपनगरनिवासिनैगमगणानाम् । सर्वेषामपि प्रधानः स्वगृहस्थितः श्रीयकः श्रेष्ठी ॥ १४ ॥
यस्य पदपद्मदर्शनकृताभिलाषः समाधिमलभमानः । दाक्षिण्यमहोदधिना परोपकारैकरसिकेन ॥ १५ ॥

---

"यस्य संदेशकेनापि पृथ्वीराजेन भूभुजा । रणस्तम्भपुरे न्यस्तः स्वर्णकुम्भो जिनालये ॥ ९ ॥"
सद्गुरुपद्धतिगाथासु च;—
"रणथंभपुरे आणालेहेणं जस्स नवरिंदेण । हेमयपदंडमिसओ निच्चं नच्चाविया किची ॥ ३ ॥"

१ 'अजमेर' समीपे 'रणथंभोर' इति संप्रति ख्यातम् ।

गंतूण जेण वंदाविऊण विहिओ समाहिसंपन्नो । धम्मवए दंमाणं कराविओ वीससहस्साइं ॥१६॥
गुज्जरदेसम्मि समग्गगामनगराइवासिसड्ढजणो । जम्मु(?स्सु)त्तिमट्ठसवणे पाएण समागओ तत्थ ॥१७॥
अह सग्गचालीसदिणाइं पालिऊणं समाहिणाणसणं । धम्मज्झाणपरायणचित्तो जो परभवं पत्तो ॥१८॥
बहुभूमिगबहुकलसं अणेगसियधयवडेहिं रमणिज्जं । वरसिरिखंडविणिम्मियविमाणमारोहिऊण तओ॥१९॥
नीहारियं सरीरं जस्स बहिं सयलमिलियसंघेण । एक्केक्कं गिहरक्खगमणुयं मोत्तूण सेसजणो ॥२०॥
नीसेसो निवनयरस्स निग्गओ जस्स दंमणनिमित्तं । भत्तीए कोउगेण य मग्गेसु अलद्धसंचारो ॥२१॥
सव्वप्पमयाउलेहिं सव्वाउज्जेहिं वंदिहिं (?दिग्गज्जेहिं) । सव्वेहिं वियंभियसद्दबहिरिए अंबराभोए ॥२२॥
पायारपच्छिमट्टालए ठिओ परियणेण सह राया । जयसिंहो पेक्खंतो जस्सिड्ढिं नीहरंतस्स ॥२३॥
तं अच्छरियं दट्ठुं नरिंदपुरिसा परोप्परं बेंति । मरणमणिट्ठंपि इट्ठमन्हए (? मसन्हाए) विभूईए ॥२४॥
रविउदयाउ आरब्भ निग्गयं तं विमाणमवरन्हे । पत्तं सक्कारपएसमणुपयं लोयकयपूयं ॥२५॥
पूइज्जंते मिउपट्टंसुयपमुहपवरवत्थाणं । मिलियाइं कोडियाणं तया सयाइं अणेगाइं ॥२६॥
सिरिखंडविमाणेणं तेणेव समं सरीरसक्कारो । जस्स कओ लोएणं तह उवरि पुणोवि खित्ताइं ॥२७॥
कट्ठाइं अगरसिरिखंडसंतियाइं घणो (य) घणसारो । निव्वाणाए चियाए जणेण गहिया तओ रक्खा ॥
रक्खाएवि अभावे गहिया तट्ठाणमट्टिया तत्तो । ता जाव तत्थ जाया अणु (?अतणु)माणा वियडखड्डा॥
तीसे रक्खाए मट्टियाए अणुभावओ सिरोबाहा । वेलाजरएगंतरजराइरोगा पणस्संता ॥३०॥

---

गत्वा येन वन्दयित्वा विहितः समाधिसंपन्नः । धर्मव्यये द्रम्माणां कारितो विंशतिसहस्रीम् ॥ १६ ॥
गूर्जरदेशे समग्रग्रामनगरादिवासिश्राद्धजनः । यस्योत्तमार्थश्रवणे प्रायेण समागतस्तत्र ॥ १७ ॥
अथ साग्रचत्वारिंशद्दिनानि पालयित्वा समाधिनाऽनशनम् । धर्मध्यानपरायणचित्तो यः परभवं प्राप्तः ॥१८॥
बहुभूमिकबहुकलशमनेकसितध्वजपटै रमणीयम् । वरश्रीखण्डविनिर्मितविमानमारोप्य ततः ॥ १९ ॥
निस्सारितं शरीरं यस्य बहिः सकलमिलितसंघेन । एकैकं गृहरक्षकमनुजं मुक्त्वा शेषजनः ॥ २० ॥
निःशेषो नृपनगरस्य निर्गतो यस्य दर्शननिमित्तम् । भक्त्या कौतुकेन च मार्गेष्वलब्धसंचारः ॥ २१ ॥
सर्वप्रमदाकुलैः सर्वातोद्यैर्वन्दिगजैंः । सर्वैर्विजृम्भितशब्दबधिरितेऽम्बराभोगे ॥२२॥
प्राकारपश्चिमाट्टालके स्थितः परिजनेन सह राजा । जयसिंहः प्रेक्षत यस्यर्द्धिं निस्सरतः ॥ २३ ॥
तदाश्चर्यं दृष्ट्वा नरेन्द्रपुरुषाः परस्परं ब्रुवन्ति । मरणमनिष्टमपीष्टमस्मदमायां विभूतौ ॥ २४ ॥
रव्युदयादारभ्य निर्गतं तद् विमानमपराह्णे । प्राप्तं संस्कारप्रदेशमनुपदं लोककृतपूजम् ॥ २५ ॥
पूज्यमाने मृदुपट्टांशुकप्रवरवस्त्राणाम् । मिलितानि कोटिकानां तदा शतान्यनेकानि ॥ २६ ॥
श्रीखण्डविमानेन तेनैव समं शरीरसंस्कारः । यस्य कृतो लोकेन तथोपरि पुनरपि क्षिप्तानि ॥ २७ ॥
काष्ठान्यगरश्रीखण्डसत्कानि घनश्च घनसारः । निर्वाणायां चितायां जनेन गृहीता ततो रक्षा ॥ २८ ॥
रक्षाया अप्यभावे गृहीता तत्स्थानमृत्तिका ततः । तावद्यावत्तत्र जाताऽतनुमाना विकटगर्त्ता ॥ २९ ॥
तस्या रक्षाया मृत्तिकाया अनुभावतः शिरोबाधा। वेलाज्वरैकान्तरज्वरादिरोगाः प्राणश्यन् ॥३०॥

भत्तिवसेणं न मए मणंपि इह भासियं मुसा किंपि । जं पच्चक्खं दिट्ठं तस्सवि लेसो इमो भणिओ ॥३१॥
नियतेयविसेसेणं पुरिसोत्तिमहिययरंजणो जाओ । कोत्थुहमणिव्व तत्तो सूरी सिरिहेमचंदोत्ति ॥३२॥
जगु ( ? ग ) वट्टमाणपवयणपारगओ वयणसत्तिसंपन्नो । नियनामंव भगवई जीहग्गगया कया जेण ॥३३॥
मूलगंथि [?थ] विसेसावस्सयलक्खणपमाणपमुहाणं । सेसाणवि गंथाणं पढियं जेणद्ध(?ट्ठ)लक्खं च ॥

रायामच्चाईणवि महिड्ढियाणं जणाण आएज्जे (? ज्जो) ।
जिणसासणप्पभावणपरायणो परमकारुणिओ ॥३५॥

नवजलहरगहिरसरे धम्मुवएसं च दितए जम्मि । जिणभवणाउ बहिम्मिवि ठिओ जणो सुणइ फुडसद्दं ॥३६॥
वक्खाणलद्धिजुत्ते जम्मि कुणंतम्मि सत्थवक्खाणं । पाएण जडमईणवि जणाण बोहो समुप्पन्नो ॥३७॥

उवमियभवप्पवंचा वेरग्गकरी कहा कया (?कया) आसि ।
वेक्खाण(?णि)यसिद्धेणं जा पुव्वं सा कढोरत्ति ॥३८॥

वक्खाणिया सहाए पाएण न केणई चिरं कालं । जस्स मुहनिग्गयत्था मुद्धाणवि सा तह कहंचि ॥३९॥
जाया हिययगयत्था अब्भत्थेऊण तेहिं जह एसा । उवरुवरि तिन्नि वरिसे निसुया तस्सेव य मुहाओ ॥
तद्दिणपभिइ पयारो जाओ पाएण तीए सव्वत्थ । जे तेण सयं रइया गंथा ते संपइ कहेमि ॥४१॥

---

भक्तिवशेन न मया मनागपीह भाषितं मृषा किमपि । यत्प्रत्यक्षं दृष्टं तस्यापि लेशोऽयं भणितः ॥३१॥
निजतेजोविशेषेण पुरुषोत्तमहृदयरञ्जनो जातः । कौस्तुभमणिरिव ततः सूरिः श्रीहेमचन्द्र इति ॥३२॥
जगद्वर्तमानप्रवचनपारगतो वचनशक्तिसंपन्नः । निजनामेव भगवती जिह्वाग्रगता कृता येन ॥३३॥
मूलग्रन्थविशेषावश्यकलक्षणप्रमाणप्रमुखाणाम् । शेषाणामपि ग्रन्थानां पठितं येनाष्टलक्षं च ॥३४॥
राजामात्यादीनामपि महर्द्धिकानां जनानामादेयः । जिनशासनप्रभावनापरायणः परमकारुणिकः ॥३५॥
नवजलधरगम्भीरस्वरे धर्मोपदेशं च ददति तस्मिन् । जिनभवनाद्बहिरपि स्थितो जनः शृणोति स्फुटशब्दम् ॥
व्याख्यानलब्धियुक्ते यस्मिन्कुर्वति शास्त्रव्याख्यानम् । प्रायेण जडमतीनामपि जनानां बोधः समुत्पन्नः ॥३७॥
उपमितभवप्रपञ्चा वैराग्यकरी कथा कृतासीत् । वैयाख्यानिकसिद्धेन या पूर्वं सा कठोरेति ॥३८॥
व्याख्याता सभायां प्रायेण न केनचिच्चिरं कालम् । यस्य मुखनिर्गतार्था मुग्धानामपि सा तथा कथंचित् ॥३९॥
जाता हृदयगतार्थाऽभ्यर्थ्य तैर्यथैषा । उपर्युपरि त्रीणि वर्षाणि श्रुता तस्यैव च मुखात् ॥४०॥
तद्दिनप्रभृति प्रचारो जातः प्रायेण तस्याः सर्वत्र । ये तेन स्वयं रचिता ग्रन्थास्तान्संप्रति कथयामि ॥४१॥

---

१ एतद्विषये राजशेखरसूरिर्न्यायकन्दलीपञ्जिकाप्रशस्ताविदमेकं पद्यमुल्लिखति स्म ;–

"प्रतिवर्षजीवरक्षामशीत्यहमशीत्यहम् । यस्योपदेशात् सिद्धेशस्ताम्रपत्रेष्वलीलिखत् ॥१०॥"

सुत्तमुवएसमाला-भवभावणपगरणाण काऊण । गंथसहस्सा चउदस तेरस वित्ती कया जेण ॥४२॥

अणुओगदा(?दा)राणं जीवसमासस्स तह य सयगस्स ।

जेण च्छ सत्त चउरो गंथसहस्सा कया वित्ती ॥४३॥

मूलावस्सयवित्तीए उवरि रइयं च टिप्पणं जेण । पंचसहस्सपमाणं विसमट्ठाणावबोधयरं ॥४४॥

जेण विसेसावस्सयसुत्तस्सुवरिं सवित्थरा वित्ती । रइया परिप्फुडत्था अडवीससहस्सपरिमाणा ॥४५॥

वक्खाणगुणपसिद्धिं सोऊणं जस्स गुज्जरनरिंदो । जयसिंहदेवनामो कयगुणिजणमणचमक्कारो ॥

आगन्तूण (?णं) जिणमंदिरम्मि सयमेव सुणइ धम्मकहं । जस्सुवउत्तचित्तो सुइरं परिवारसंजुत्तो ॥४७॥

---

सूत्रमुपदेशमाला-भवभावनाप्रकरणयोः कृत्वा । ग्रन्थसहस्राश्चतुर्दश त्रयोदश वृत्तिः कृता येन ॥४२॥
अनुयोगद्वाराणां जीवसमासस्य तथा च शतकस्य । येन षट् सप्त चत्वारो ग्रन्थसहस्राः कृता वृत्तिः ॥४३॥
मूलावश्यकवृत्त्या उपरि रचितं च टिप्पनं येन । पञ्चसहस्रप्रमाणं विषमस्थानावबोधकरम् ॥ ४४ ॥
येन विशेषावश्यकसूत्रस्योपरि सविस्तरा वृत्तिः । रचिता परिस्फुटार्थाऽष्टाविंशतिसहस्रपरिमाणा ॥ ४५ ॥
व्याख्यानगुणप्रसिद्धिं श्रुत्वा यस्य गूर्जरनरेन्द्रः । जयसिंहदेवनामा कृतगुणिजनमनश्चमत्कारः ॥ ४६ ॥
आगत्य जिनमन्दिरे स्वयमेव शृणोति धर्मकथाम् । यस्योपयुक्तचित्तः सुचिरं परिवारसंयुक्तः ॥ ४७ ॥

---

१ इयं सटीकापि सुलभा, 'पुष्पमाला' इति नाम्नापीयं विख्याता ।

२ इदं विक्रमात् ११७० वर्षे तैर्विनिर्मितम्, तथा च तत्प्रशस्तौ ;—

"सप्तत्यधिकैकादशवर्षशतैर्विक्रमादतिक्रान्तैः ।
निष्पन्ना वृत्तिरियं श्रावणवदिपञ्चमीदिवसे ॥११॥"

३ रायधनपतिसिंहेन कलिकातायां मुद्रितमेतत् ।

४ अस्य ग्रन्थस्य संवत् ११६४ वर्षे स्वयं ग्रन्थकर्त्रा लिखिता प्रतिरपि खंभात (Cambay) भाण्डागारे विद्यते । (See Kielhorn's collection of 1873-74) ।

५ संप्रति विद्यमानम् । (See Kielhorn's Palm-leaf report Pages 41-44) ।

६ एतदपि सुलभम् ( द्रष्टव्यं जैनग्रन्थावल्यां पृ० २० ) ।

७ एतत् सवृत्तिकं यशोविजयजैनग्रन्थमालायां मुद्रितम् । एतद्वृत्तिनिर्माणकालश्च कर्त्रा

"शरदां च पञ्चसप्तत्यधिकैकादशशतेष्वतीतेषु ।
कार्त्तिकसितपञ्चम्यां श्रीमज्जयसिंहनृपराज्ये ॥ ११ ॥"

इति पद्येन प्रशस्तौ विक्रमात् ११७५ रूपो विनिर्दिष्टः । एतन्निर्माणेऽस्मद्ग्रन्थकारेण लक्ष्मणगणिना-ऽपि साहाय्यं कृतम्-( द्रष्टव्यं पृ० १२५७ ) ।

कइयावि जस्स दंसणउक्कंठियमाणसो सयं चेव । आगच्छइ वसहीए चिरकालं कुणइ संलावं ॥४८॥
अन्नम्मि दिणे अब्भत्थिऊण नेउं नियम्मि धवलहरे । सम्मुहमुट्ठिऊणं जयसिंह निवेण जस्स सयं ॥४९॥
उद्धट्ठियस्स उल्लसियबहलपुलएण कंचणमएण । विउलेण भायणेणं दुव्वाफलकुसुमजलमइओ ॥५०॥
अग्घो भमाडिऊणं चिरेण आरत्तियं च वारत्तियं । पक्खित्तो पयपुरओ कओ पणामो य पंचंगो ॥५१॥
थालपरिवेसयाओ आहाराओ (? रत्थालओ) सहत्थेण । दिन्नो नियइच्छाए चउव्विहो तेण आहारो ॥५२॥
भणियं च जोडिऊणं करजुयमज्जेव खलु कयत्थो हं । जाओ अज्जेव तहा कल्लाणपरंपराठाणं ॥५३॥
जस्स मह अज्ज भवणं तुम्मेहिं फरिसियं सचरणेहिं । ता अज्ज वीरनाहो मज्झ मयं आगउव्व गिहे ॥५४॥
[1]जेण जयसिंहरायं भणिऊणं तस्स मंडले सयले । जिणमंदिरेसु कलसा चडाविया स (?रु) इरकणयमया ॥
धंधुक्क (?क्क) यसच्चउर[2]पभिइसु ठाणेसु अन्नतित्थीहिं । जिणसासणस्स पीडा कीरंती रक्खिया जेण ॥
कराविंयं च तह तेसु चेव ठा (?ठा) णेसु रहपरिब्भमणं । निव्विग्घं जयसिंहं भणाविऊणं पुहइनाहं ॥५७॥

---

कदापि यस्य दर्शनोत्कण्ठितमानसः स्वयमेव । आगच्छति वसतौ चिरकालं करोति संलापम् ॥ ४८ ॥
अन्यस्मिन् दिनेऽभ्यर्थ्य नीत्वा निजे धवलगृहे । संमुखमुत्थाय जयसिंहनृपेण यस्य स्वयम् ॥ ४९ ॥
ऊर्ध्वस्थितस्योल्लसितबहलपुलकेन काञ्चनमयेन । विपुलेन भाजनेन दूर्वाफलकुसुमजलमयः ॥ ५० ॥
अर्घो भ्रमयित्वा चिरेणारात्रिकं च वारत्रिकम् । प्रक्षिप्तः पदपुरतः कृतः प्रणामश्च पञ्चाङ्गः ॥ ५१ ॥
स्थालपरिवेषकादाहारस्थालतः स्वहस्तेन । दत्तो निजेच्छया चतुर्विधो येनाहारः ॥ ५२ ॥
भणितं च योजयित्वा करयुगमद्यैव खलु कृतार्थोऽहम् । जातोऽद्यैव तथा कल्याणपरम्परास्थानम् ॥ ५३ ॥
यस्य ममाद्य भवनं युष्माभिः स्पृष्टं सचरणैः । तदद्य वीरनाथो मम स्वयमागत इव गृहे ॥ ५४ ॥
येन जयसिंहराजं भणित्वा तस्य मण्डले सकले । जिनमन्दिरेषु कलशा आरोपिता रुचिरकनकमयाः ॥५५॥
धन्धुकयसत्यपुरप्रभृतिषु स्थानेष्वन्यतीर्थिभिः । जिनशासनस्य पीडा क्रियमाणा रक्षिता येन ॥ ५६ ॥
कारितं च तथा तेष्वेव स्थानेषु रथपरिभ्रमणम् । निर्विघ्नं जयसिंहं भाणयित्वा पृथिवीनाथम् ॥ ५७ ॥

---

१ संवदति चैतद् विजयसिंहसूरेर्धर्मोपदेशमालाविवरणमपि ;—

"सकलनिजधरित्रीमध्यमध्यासितानां जिनपतिभवनानां तुङ्गशृङ्गावलीषु ।
अनघयदुपदेशात् सिद्धराजेन राज्ञा स्फुरदविरलभासः स्थापिताः स्वर्णकुम्भाः ॥ १९ ॥

राजशेखरसूरेर्न्यायकन्दलीपञ्जिकापि;—

"प्रतिबोध्य सिद्धभूधवमुद्दण्डैः कनककलशदण्डर्यः । उच्चैसितवान् परितः स्वदेशपरदेशचैत्यानि ॥९॥

सद्गुरुपद्धतिगाथापि;—

"जीवाण अभयदाणं चेईयसिहरेसु हेमघयकलसा । देसणवयणाउ कयाइं जस्स सिरिसिद्धरायण ॥६॥

२ 'साचोर' इति नाम्ना संप्रति श्रूयमाणम् ।

कुनिओइएहिं तह जिणहरेसु भज्जंतदेवदायाण । काराविया निवारा **जयसिंह**नरिंदपासाओ ॥५८॥
भंडारपविट्ठंपि हु केसुवि ठाणेसु देवदायस्स । दव्वं जिणभवणेसुं पुणोवि अप्पाविय जेण ॥५९॥
किं बहुणा भणिएणं जिणसासणपरिभवम्मि जायंते । सव्वप्पणावि तुलियं जेण उवायंतरसएहिं ॥६०॥
जिणसासणकज्जाइं विसेसा(? सेससंसा)हियाइं इह जेण ।
अन्नस्स मणम्मिवि फु ( ? विप्फु ) रंति नहु जाइं कइयावि ॥६१॥
लिंगावि(?व)सेसमित्तेवि जईजणे परिभविज्जमाणम्मि । नियसत्तीए तत्ती जेण कया सव्वकालंपि ॥६२॥
**अणहिल्लवाड**नयराओ तित्थजत्ताए चलियसंघेण ।
अस(?ब्भ)त्थिऊण नीओ सहप्पणा जो महामहिमो ॥ ६३ ॥
सेज्जावलयलंगडिपमुहाणं जत्थ सगडरूवाणं । एक्कारस उ सयाइं संचलियाइं (समहियाइं ?) ॥६४॥
हयकरहवसहवाहणपयचराणं तु नज्जइ न संखा । **वामणथलि**नयरीए दिन्नावसहम्मि संघेण ॥६५॥
वाडीविताणएहिं गुँरुरखउखँडेहिं ( ? ) गुलिणीहिं । वियडे विरायमाणे निवखंधावारसारिच्छे ॥६६॥
कयकुंकुमंगरायं नियत्थपट्टंसुयाइवरवत्थं । कंचण(वर)रयणाइविभूसियं अंगवंगेसु ॥६७॥
दट्ठूण सावयजणं जिणहरपरिहावणं पकुव्वंतं । **खंगारस्स सुरट्ठा**पहुणो जायं मणं दुट्ठं ॥६८॥

---

कुनियोगिकैस्तथा जिनगृहेषु भज्यमानदेवदायानाम् । कारिता निवारा जयसिंहनरेन्द्रपार्श्वात् ॥५८॥
भाण्डागारप्रविष्टमपि हि केषुचित्स्थानेषु देवदायस्य । द्रव्यं जिनभवनेषु पुनरप्यर्पितं येन ॥ ५९ ॥
किं बहुना भणितेन जिनशासनपरिभवे जायमाने । सर्वात्मनापि तुलितं येनोपायान्तरशतैः ॥ ६० ॥
जिनशासनकार्याणि विशेषसंसाधितानीह येन । अन्यस्य मनस्यपि विस्फुरन्ति नहि यानि कदापि ॥६१॥
लिङ्गावशेषमात्रेऽपि यतिजने परिभूयमाने । निजशक्त्या तत्परता येन कृता सर्वकालमपि ॥६२ ॥
अणहिल्लपाटनगरात्तीर्थयात्रया चलितसंघेन । अभ्यर्थ्य नीतः सहात्मना यो महामहिमा ॥ ६३ ॥
शय्यावलयलङ्कडिप्रमुखाणां यत्र शकटरूपाणाम् । एकादश तु शतानि संचलितानि समधिकानि ॥६४॥
हयकरभवृषभवाहनपदचराणां तु ज्ञायते न संख्या । वामनस्थलीनगर्यां दत्तावसथे संघेन ॥ ६५ ॥
वाटीवितानकैर्गुरु ········· गुलिनीभिः । विकटे विराजमाने नृपस्कन्धावारसदृक्षे ॥ ६६ ॥
कृतकुङ्कुमाङ्गरागं निवसितपट्टांशुकादिवरवस्त्रम् । काञ्चनवररत्नादिभूषितमङ्गोपाङ्गेषु ॥ ६७ ॥
दृष्ट्वा श्रावकजनं जिनगृहपरिधावनं प्रकुर्वन्तम् । खङ्गारस्य सुराष्ट्रप्रभोर्जातं मनो दुष्टम् ॥ ६८ ॥

---

१ एतद्गाथापञ्चकोक्तोऽर्थः सामान्य-विशेषरूपतो विजयसिंहसूरिणा धर्मोपदेशमालावृत्तिप्रशस्तावपि ( श्लो० १४–१६ ) उक्त. । ( See Peterson's fifth report pages 89–90 )

२ संप्रति 'वणथली' इति नाम्ना प्रसिद्धा ।

३ प्रवर्तकश्रीकान्तिविजयानां पुस्तके 'गुड्डुखउरखंडएहिं' इति पाठः ।

अन्नेहिंवि सो भणिओ सयमणहिल्लवाडयस्स नगरस्स। चिट्ठइ लच्छी सव्वा इहागया तुज्झ पुन्नेहिं ॥
ता गिण्ह तुमं एयं, भंडारो होइ तुह जहा पोढो। संभाविज्जइ ठाणं एक्काए दव्वकोडीए ॥७०॥
लोभेण सोवि सव्वं तं गहिउं वंछए पुणोवि परं। सवयणमज्जायालोवअयभ (?वयस) भीओ नियत्तेइ ॥
इय अकयनिच्छओ सो गहणे मोक्खे य संसइयचित्तो। चितू (? घित्तू)णं दिणमाणं संघं धारेइ तत्थेव ॥
भणिज्जंतोवि दिणो (? णे २)वि सो संघसंतियजणस्स। नो देइ दंसणं, अन्नया य सयणो मओ तस्स ॥
तो दिक्खणयमिसेणं जेण मुणिंदेण तत्थ गंतूण। पडिबोहिऊण एयं संघो मोयाविओ सव्वो ॥७४॥
ता उज्जयंतसत्तुंजएसु तित्थेसु दोसुवि जिणिंदे। सिरिनेमिउसहनाहे वंदइ संघो विभूईए ॥७५॥
तत्थुज्जयंततित्थे पारुत्थयअद्धलक्खमुप्पन्नं। सत्तुंजयम्मि तित्थे तीसमहस्सा समुप्पन्ना ॥७६॥
जेण पडिबोहिऊणं भवियजणो ठाविओ बहू धम्मे। जिणभणिए सम्मत्ते देसे सव्वे य विरईए ॥७७॥
पज्जंते सिपि हु ( सा ) ठाणंतरसंकमाइया नेया। आराहणा गुरूण व सत्तदिणा अणसणं नवरं ॥७८॥
नीहारणाइमहिमा देहस्स तहेव जाव सक्कारो। किन्तु सयमेव राया समागओ कित्तियंपि पहं ॥७९॥

---

अन्यैरपि स भणितः स्वयमणहिल्लपाटकस्य नगरस्य। तिष्ठति लक्ष्मीः सर्वेहागता तव पुण्यैः ॥ ६६ ॥
तस्माद् गृहाण त्वमेतां, भाण्डागारो भवेत्तव यथा प्रौढः। संभाव्यते स्थानमेकस्या द्रव्यकोटेः ॥७०॥
लोभेन सोऽपि सर्वं तद् ग्रहीतुं वाञ्छति पुनरपि परम्। स्ववचनमर्यादालोपापयशोभीतो निवर्त्तते ॥७१॥
इत्यकृतनिश्चयः स ग्रहणे मोक्षे च संशयितचित्तः। गृहीत्वा दिनमानं संघं धारयति तत्रैव ॥ ७२ ॥
भण्यमानोऽपि दिने दिनेऽपि स संघसत्कजनस्य। नो ददाति दर्शनम्, अन्यदा च स्वजनो मृतस्तस्य॥७३॥
ततो दर्शनमिषेण येन मुनीन्द्रेण तत्र गत्वा। प्रतिबोध्यैनं संघो मोचितः सर्वः ॥७४ ॥
तत उज्जयन्त-शत्रुञ्जययोस्तीर्थयोर्द्वयोरपि जिनेन्द्रौ। श्रीनेमिऋषभनाथौ वन्दते संघो विभूत्या ॥७५॥
तत्रोज्जयन्ततीर्थे पारुत्तकार्धलक्षमुत्पन्नम्। शत्रुञ्जये तीर्थे त्रिंशत्सहस्राः समुत्पन्नाः ॥७६॥
येन प्रतिबोध्य भविकजनः स्थापितो बहुधर्मे। जिनभणिते सम्यक्त्वे देशे सर्वत्र च विरतौ ॥७७॥
पर्यन्तेऽस्यापि हि सा स्थानान्तरसंक्रमादिका ज्ञेया। आराधना गुरूणामिव सप्तदिनादनशनं किन्तु ॥७८॥
निस्सारणादिमहिमा देहस्य तथैव यावत्संस्कारः। किन्तु स्वयमेव राजा समागतः कियन्तमपि पन्थानम्॥७९॥

---

१ उज्जयन्तः = गिरनारपर्वतः।

२ अस्यापि = हेमचन्द्रसूरेरपि पर्यन्ताराधना गुरूणामिव = अभयदेवसूरीणामिव एकोनविंशगाथात आरभ्य सप्तविंशगाथापर्यन्तं प्रतिपादितप्रकारेण ज्ञेया; तत्र प्राकारपश्चिमाट्टालकस्थितेन राज्ञा गुरूणां शवनिर्याणमहोत्सवो दृष्टः ( गाथा २३ ), किन्त्वत्र स्वयं राजा ( जयसिंहः ) कियन्तमपि पन्थानं तन्महोत्सवे सह चलित इति विशेष इत्यर्थः। एतेन पिटर्सनमहोदयेन मस्तुनप्रशस्तिसारे (In his fourth report text page 9) अस्य हेमचन्द्रसूरेः यच्छत्रुञ्जये परलोकगमनमुक्तं, तदयुक्तम्, सम्यक्पाठानवगमेन कल्पनामात्रोद्भावितत्वादिति।

तेसिं सीसो( ? सा )सिरिविजयसिंह-सिरिचंद-विबुहचंदत्ति ।
जाया तिन्नि गुण( ? गण )हरा सिरिसिरिचंदो तओ सूरी ॥८०॥

देसेसु विहरमाणो कमेण धवलक्कयम्मि वरनयरे। संपत्तो तत्थ त (?ठि)ओ नरुयच्छयनामजिणभवणे॥
उत्त (त्तुं) गम्मि विसाले रुप्पगरमणिज्जमंडवसणाहे। सिरिमुणिसुव्वयजिणवरपडिमासमहिट्ठिए रम्मे॥८२॥
सड्ढो अत्थि गुणड्ढो धवलो नामेण पोरुवाडकुले। तेण जिणचंदसूरिप्पमुहो संघो समग्गोवि॥८३॥
मेलेउं विन्नत्तो सिरिमुणिसुव्वयजिणिंदचरिस (?य) स्स। करणत्थं संघेणवि सिरिचंदो पभणिओ सूरी॥
सो तं संघाएसं पडिवज्जेउं विणिग्गओ तत्तो। आसावल्लीपुरीए आगंतूणं ठिओ गेहे ॥८५॥

सिरिमालकुलसमुब्भववरसावयसेट्ठिनागिलसुयाण।
अंबहरिमंडसालियसरणयपमुहाण सगुणाण ॥८६॥

तत्थट्ठिएण सिरिचंदसूरिणा विरइयं इमं चरियं। सिरिमुणिसुव्वयतित्थंकरस्स समयाणुसारेण॥८७॥
जं किंपि इह अजुत्तं उत्तं मइमोहओ मए अत्थि। तं सुयहरा कयकिवा मज्झ विसोहंतु सव्वंपि ॥८८॥
पट्टियपोत्थियलिहणे गणिणा कयमत्थ पासदेवेण। बहुसाहेज्जं उज्जमपरेण वरमइनिहाणेण ॥८९॥

---

तेषां शिष्याः श्रीविजयसिंह-श्रीचन्द्र-विबुधचन्द्रा इति। जातास्त्रयोऽपि गणधराः श्रीश्रीचन्द्रस्ततः सूरिः॥८०॥
देशेषु विहरमाणः क्रमेण धवलक्के वरनगरे। संप्राप्तस्तत्र ततो भृगुकच्छकनामजिनभवने॥८१॥
उत्तुङ्गे विशाले रूप्यकरमणीयमण्डपसनाथे। श्रीमुनिसुव्रतजिनवरप्रतिमासमधिष्ठिते रम्ये॥८२॥
श्राद्धोऽस्ति गुणाढ्यो धवलो नाम्ना पोरुवाडकुले। तेन जिनचन्द्रसूरिप्रमुखः संघः समग्रोऽपि ॥८३॥
मेलयित्वा विज्ञप्तः श्रीमुनिसुव्रतजिनेन्द्रचरितस्य। करणार्थं संघेनापि श्रीचन्द्रः प्रभणितः सूरिः॥८४॥
स तं संघादेशं प्रतिपद्य विनिर्गतस्ततः। आशावल्लीपुर्यामागत्य स्थितो गेहे ॥ ८५ ॥
श्रीमालकुलसमुद्भववरश्रावकश्रेष्ठिनागिलसुतानाम्। आम्रहरिमाण्डशालिकशरणकप्रमुखाणां सगुणानाम्॥
तत्र स्थितेन श्रीचन्द्रसूरिणा विरचितमिदं चरितम्। श्रीमुनिसुव्रततीर्थंकरस्य समयानुसारेण ॥८७॥
यत्किमपीहायुक्तमुक्तं मतिमोहतो मयाऽस्ति। तत् श्रुतधराः कृतकृपा मयि विशोधयन्तु सर्वमपि ॥८८॥
पट्टिकापुस्तिकालेखने गणिना कृतमत्र पार्श्वदेवेन। बहुसाहाय्यमुद्यमपरेण वरमतिनिधानेन ॥८९॥

---

१ संप्रति गूर्जरदेशे 'धोलका' इति नाम्ना ख्याते। तत्र भृगुकच्छनाम्नि जिनभवने, न तु पिटर्सन्महाशयोक्ते भृगुकच्छे (Broach) नगरे; तादृशस्यार्थस्यात्रालाभात्, अनन्वयात्; मुनिसुव्रतस्वामिनः स्वसत्तासमये भृगुकच्छे नगरेऽश्वरक्षणाय संजातस्य गमनस्य शास्त्रप्रसिद्धत्वेन तत्प्रतिमाधिष्ठिते जिनभवनेऽपि भृगुकच्छनाम्नो व्यवहारस्यौपचारिकस्यादुष्टत्वात् सांप्रतमपि तादृशव्यवहारस्यान्यत्र बहुशो दर्शनाच्च ।

अंबहरिसरणयाणं कणिट्ठभाया तहेव जसराओ। साहेज्जकरो उच्छाहम्म (?स्स) य जाओ रि (?वि) सेसेण॥
विक्कमकालाओ एगवाससहस्से सए ( य ) सावणओ ( ?ताणवए )।
तवयणंतरदीव (,? वदि ) सव्वदिणम्मि एयं परिसमत्तं ॥९१॥"

येषां द्वाराऽस्य ग्रन्थस्य निम्नोल्लिखितान्यादर्शपुस्तकानि मयाऽऽसादितानि, यैश्च निजोपदेशद्वाराऽस्य मुद्रणार्थमर्थसाहाय्यं विहितम्, तेषामनवद्यवैदुष्यमाविभ्रतामहर्निशं परोपकारव्रतमुद्वहतां प्रातःस्मरणीयमुनिराजश्रीराजविजयानामहमत्रातीव कृतज्ञोऽस्मि। आदर्शपुस्तकानि चेमानि;—

क—प्रातःस्मरणीय-प्रवर्तकश्रीकान्तिविजयानां संबन्धि, १९८ पत्रात्मकम्, प्राचीनं, शुद्धप्रायम्, लेखनसमयोल्लेखविरहितम्।

ख—प्रातःस्मणीय-मुनिराजश्रीराजविजयानाम्, १८२ पत्रात्मकं, प्राचीनं, नातिशुद्धम्, लेखनसमयोल्लेखवर्जितम्।

ग—प्रातःस्मरणीय—प्रवर्तकश्रीकान्तिविजयानाम्, १९६ पत्रात्मकं, नवीनं, नात्यशुद्धम्, प्रान्ते चैतदुल्लेखविभूषितम्;—

" कृतिरियं मलधारिगच्छतिलकश्रीहेमसूरिशिष्येन लखमणगणिना ॥छ॥ संवत् १४८० वर्षे शाके १३४५ प्रवर्तमाने ज्येष्ठवदि १० शुक्रे। बवकरणे मेदपाटदेशे। देवकुलपाटके। राजाधिराजराणामोकल-

आम्रहरिशरणकानां कनिष्ठभ्राता तथैव यशोराजः। साहाय्यकर उत्साहस्य च जातो विशेषेण ॥९०॥
विक्रमकालादेकवर्षसहस्रे शते च त्रिनवते। तपोनन्तरवदिशर्वदिन एतत् परिसमाप्तम् ॥ ९१ ॥

१ अध्यापकपिटर्सन्संबन्धिनि पत्तनभाण्डागारीयसूचीपुस्तके 'वीस' इति पाठः, यमुपजीव्य तेन सर्वत्र ( Fourth report text page 7, fifth report Pages 43 and 74 ) एतस्य मुनिसुव्रतस्वामिचरितस्य निर्माणकालो विक्रमात् ११२१ वर्षे निर्दिष्टः, सोऽयुक्तः, अस्य हस्तादर्शपुस्तके 'वास' इति पाठस्य स्पष्टं दर्शनात्, भवभावना-विशेषावश्यकवृत्त्योरनुक्रमं विक्रमात् ११७० तमे वर्षे ११७५ तमे संवत्सरे च निर्मितयोरत्र कृतस्योल्लेखस्यानुपपत्तेः ( द्रष्टव्यमत्रैव ४२—४५ गाथयोरधोवर्ति टिप्पनम् ), जैनग्रन्थावल्यामपि प्रकृतग्रन्थस्य ११९३ तमे वर्षे निर्माणस्योपदर्शितत्वाच्च ( द्रष्टव्यं पृष्ठं २४२ )

२ तपाः = माघमासः ( अ० चि० २, ६७ ) तदनन्तरः फाल्गुनस्तस्य शर्वदिने महेश्वरदिवसे एकादश्यामित्यर्थः।

३ एष उल्लेखो यदादर्शपुस्तकमुपजीव्यैतत् पुस्तकं लिखितं तत्रस्थ एव विभाव्यते, अन्यथा प्रस्तुतपुस्तकस्य नवीनत्वेन तदघटनात्।

विजयराज्ये । श्रीमद्बृहद्गच्छे । मड्डाहडीयभट्टारकश्रीहरिभद्रसूरिपरिवारभूषण पं० भावचंद्रस्य शिष्यलेशेन । मुनि । हीराणंदेन लिलिखिरे ।

नंदे मुनौ युगे चंद्रे ज्येष्ठमासे सिते दले । दशम्यां लेखयामास शुभाय ग्रंथपुस्तकं ॥ १ ॥

नंदमुनिवेदचंद्रे वर्षे श्रीविक्रमस्य ज्येष्ठशिते । अलिखत् सुपार्श्वचरितं हीराणंदो मुनींद्रोयं ॥ २ ॥

जाव य सग्ग सुरिंदो कणयगिरिंदो धराय धरणिंदो । चंदो तह य दिणिंदो तारगणो जाव गयणंमि ॥३॥

गलगज्जि जलनिहिणो अ जिणधम्मो तिलोय विप्फुरइ । ता जिणसुपासचरिओ पढिज्जमाणो उ चिर होउ ॥

हीणाहिय जं किंचिवि वंजण मत्ताय अक्खर पयं व । लिहियं अयाणमाण मिच्छा मे दुक्कडं तस्स ॥४॥

इति श्रीसुपार्श्वजिनचरित्रे गाथा ८६६८ लिखिता ॥ छ ॥ श्रीः[1] ॥"

एतत् पुस्तकत्रयमवलम्ब्य विहिते ग्रन्थस्यास्योपयुक्तपाठभेदसहिते छायानुवादविभूषिते संपादने दत्तशुद्धिपत्रेऽपि याः काश्चन मतिमान्द्यप्रभवाः स्खलनाः स्थिता भवेयुः, सदयाः सहृदयास्ताः क्षमन्तामिति सानुनयं प्रार्थयमानो विरमामि ।

हरगोविन्दः ।



१ इतः परमेतत्पुस्तकस्वामिनो गुर्वादिश्यावर्णनपरं श्लोकसप्तकं वर्तते, तच्चाधुनिकत्वेनानुपयोगित्वादनावश्यकमत्रोल्लेखितुमित्युपेक्षितम् ।

# विषयानुक्रमणिका

॥ ॐ नमो वीतरागाय ॥

# ॥ सुपासनाह-चरिअं ॥

जयइ जुँयाइजिणिंदो अंतररिउविजयनाडयपबंधे । नवनिउणसुत्तहारोव्व विहियसुहसंघचउपत्तो ॥१॥
सियज्झाणानलपजलिरकम्मकंतारधूमलइउव्व । रेहंति जस्स अंसे सवोलिरा चिहुरकुरलीओ ॥२॥
चरिमं नमिमो सिरिवीरजिणवरं जस्स अज्जवि य तित्थं । जयइ तिलोईकमलाविलासतिलयंव सुपवित्तं ॥३॥
सेसेवि असेसे निक्कलेवि सयलेऽगुणेवि गुणकलिए । नमिमो अणंगराए निहयअणंगेवि अजियाई ॥४॥
पणमह फुरंतपणफणकिरीडवररयणकिरणदीवेहिं । पयडंतं पिव सिवमग्गमग्गिमं सिरिसुपासजिणं ॥५॥
जाणं च तज्जणातज्जणीइ लग्गो ठवेमि मंदपए । कव्वपहे बालो इव ताण गुरूण नमामि कमे ॥६॥
सन्निज्झं मज्झ सया विमलंगोवंगगुणमहग्घविया । तिजयपियामहमुहकमलवासिणी कुणउ सुयदेवी ॥७॥
गंभीरपसन्नपयप्पवाहिणिं विबुहजणमणाणंदं । कविकुलगिरिस्स वंदे सरस्सइं इंदभूइस्स ॥८॥
को न जणो हरिसिज्जइ तरंगवइ-वइयरं सुणेऊण । इयरे पबंध-सिंधूवि पाविया जीए महुरत्तं ॥९॥
भद्दं सिरिहरिभद्दस्स सूरिणो जस्स भुवण-रंगम्मि । वाणी विसट्टरसभावमंथरा नच्चए सुइरं ॥१०॥
मंदारमंजरिं पिव सुरावि सवणावयं सयं णिंति । पागयपबंधकइणो वाणिं सिरिजीवदेवस्स ॥११॥

---

जयति युगादिजिनेन्द्र आन्तररिपुविजयनाटकप्रबन्धे । नवनिपुणसूत्रधार इव विहितशुभसंघचतुष्पात्रः ॥१॥
सितध्यानानलप्रज्वलनशीलकर्मकान्तारधूमलता इव । राजन्ति यस्यांसे सघूर्णनाश्चिहुरकुरल्यः ॥२॥
चरमं नमामः श्रीवीरजिनवरं यस्याद्यापि च तीर्थम् । जयति त्रिलोकीकमलाविलासतिलकमिव सुपवित्रम् ॥३॥
शेषानप्यशेषान्निष्कलानपि सकलानगुणानपि गुणकलितान् । नमामोऽनङ्गरागान्निहतानङ्गानप्यजितादीन् ॥४॥
प्रणमत स्फुरत्पञ्चफणकिरीटवररत्नकिरणदीपैः । प्रकटयन्तमिव शिवमार्गमग्रिमं श्रीसुपार्श्वजिनम् ॥५॥
येषां च तर्जनातर्जन्यां लग्नः स्थापयामि मन्दपदानि । काव्यपथे बाल इव तेषां गुरूणां नमामि क्रमान् ॥६॥
सांनिध्यं मम सदा विमलाङ्गोपाङ्गगुणमहार्घिता । त्रिजगत्पितामहमुखकमलवासिनी करोतु श्रुतदेवी ॥७॥
गम्भीरप्रसन्नपद(यः)प्रवाहिनीं विबुधजनमनआनन्दाम् । कविकुलगिरेर्वन्दे सरस्वतीमिन्द्रभूतेः ॥८॥
को न जनो हृष्येत् तरङ्गवतीव्यतिकरं श्रुत्वा । इतरे प्रबन्धसिन्धवोऽपि प्रापिता यया मधुरत्वम् ॥९॥
भद्रं श्रीहरिभद्रस्य सूरेर्यस्य भुवनरङ्गे । वाणी विकसितरसभावमन्थरा नृत्यति सुचिरम् ॥१०॥
मन्दारमञ्जरीमिव सुरा अपि श्रवणपदं स्वयं नयन्ति । प्राकृतप्रबन्धकवयो वाणीं श्रीजीवदेवस्य ॥११॥

---

१ ख. जुगाइ । २ अनङ्गे कामदेवे रागो येषां तानिति विरोधः, नास्त्यङ्गरागो येषां तानिति परिहारः । ३ क. ग. °यपत्तो । ४ ग. °कणं । ५ ग. निंति । ६ चिहुराणां=केशानां कुरल्य=वक्रमता 'करनली' इति भाषायाम् ।

इह सुयणा कह. मह संथवारिहा, जे पबंधगुणलेसं । गिण्हंति दिट्ठमित्तंपि पयडवियडेविय न हु दोसे ॥१२॥
ता इह संथवियव्वा पढमं चिय दुज्जणा गुरुजणव्व । जाण वयणाण भीओ जत्तेण कई कुणइ कव्वं ॥१३॥
अहवा एयम्मि समुज्जयस्स मह किं इमाए चिंताए । को सुरगिरिणो सरणिं पुच्छइ जलहिम्मि गंतुमणो?॥१४॥
ता इह सुपासचरियं विरइउकामस्स मह जहासत्ति । नियनियभावेणुवयारकारिणो हुंतु ते दोवि ॥१५॥
इह पुव्वसुकइविरइयपबंधसवणेण जणियगुरुहरिसो । कह लोओ अम्हारिसरइयपबंधेसु अहिरमउ?॥१६॥
कत्थाहं मंदमई कत्थ सुपासस्स चरियपरिकहणं । गुरुतरुफलखिवियकरो ता हसणिज्जो म्हि कुज्जुव्व॥१७॥
तहवि य जिणवरगुणसंथवेण कम्मं खवंति इह जीवा । एएण कारणेणं मज्झ पवित्ती इमा जाया ॥१८॥
सुकइत्तणकित्तिं पुण महेमि एयाउ न बुहमज्झम्मि । गंधत्थमित्थ न हु गंठिवन्नयं चरइ गंधमओ ॥१९॥
अलमित्थ वित्थरेणं, ता संपइ पत्थुअत्थवित्थारं । कयमंगलोवयारो करेमि भत्तीए जहसत्ति ॥२०॥

अत्थि चउजलहिरसणामणहरमहिमहिलियाए मुहकमले । सुपवित्तमंडणं धाइसंडनामो महादीवो॥२१॥
जो नीसढनीलवंतायलेहिं गयणग्गलग्गसिंगेहिं । रेहइ नहसिरिपरिरंभणत्थमुक्खिवियबाहुव्व ॥२२॥
बहुवन्नधन्नपयपूरपावियं करिसएहिं [3]संकिण्णं । पुव्वविदेहभिधाणं तत्थ य खित्तं सुखित्तंव ॥२३॥
जं नीलवंतगिरिसिंगसरियसीयासरिप्पवाहेण । पयडियकित्तिपडायंव सहइ नियपरमपुरिसाण ॥२४॥

---

इह सुजनाः कथं मम संस्तवार्हाः, ये प्रबन्धगुणलेशम् । गृह्णन्ति दृष्टमात्रमपि प्रकटविकटानपि न तु दोषान् ॥१२॥
ततं इह संस्तोतव्याः प्रथममेव दुर्जना गुरुजना इव । येषां वचनेभ्यो भीतो यत्नेन कविः करोति काव्यम् ॥१३॥
अथवैतस्मिन् समुद्यतस्य मम किमनया चिन्तया? । कः सुरगिरेः सरणिं पृच्छति जलधौ गन्तुमनाः ? ॥१४॥
तस्मादिह सुपार्श्वचरितं विरचयितुकामस्य मम यथाशक्ति । निजनिजभावेनोपकारकारिणौ भवतां तौ द्वावपि ॥१५॥
इह पूर्वसुकविविरचितप्रबन्धश्रवणेन जनितगुरुहर्षः । कथं लोकोऽस्मादृशरचितप्रबन्धेष्वभिरमताम् ? ॥१६॥
कुत्राहं मन्दमतिः कुत्र सुपार्श्वस्य चरितपरिकथनम् ? । गुरुतरुफलक्षिप्तकरस्तस्माद्धसनीयोऽस्मि कुब्ज इव ॥१७॥
तथापि च जिनवरगुणसंस्तवेन कर्म क्षपयन्तीह जीवाः । एतेन कारणेन मम प्रवृत्तिरियं जाता ॥१८॥
सुकवित्वकीर्तिं पुनः काङ्क्षाम्येतस्माद् न बुधमध्ये । गन्धार्थमत्र न खलु ग्रन्थिवर्णकं चरति गन्धमृगः ॥१९॥
अलमत्र विस्तरेण, तस्मात् संप्रति प्रस्तुतार्थविस्तारम् । कृतमङ्गलोपचारः करोमि भक्त्या यथाशक्ति ॥२०॥

अस्ति चतुर्जलधिरसनामनोहरमहीमहिलाया मुखकमले । सुपवित्रमण्डनं धातकीषण्डनामा महाद्वीपः॥२१॥
यो निषधनीलवदचलाभ्यां गगनाग्रलग्नशृङ्गैः । राजते नभःश्रीपरिरम्भणार्थमुत्क्षिप्तबाहुरिव ॥२२॥
बहुवर्णध(धा)न्यपद(यः)पूरपावितं करिशतैः (कर्षकैः)संकीर्णम् । पूर्वविदेहाभिधानं तत्र च क्षेत्रं सुक्षेत्रमिव॥२३॥
यद् नीलवद्गिरिशृङ्गसृतसीतासरित्प्रवाहेण । प्रकटितकीर्तिपताकामिव राजते [4]निजपरमपुरुषाणाम् ॥२४॥

---

१ ग. होंतु । २ विदेहपक्षे बहुवर्णका भिन्नजातीया ये धन्या भाग्यशालिनः पुरुषास्तेषां पदानां चरणानां पूरैः समूहैः पावितं पवित्रितम्, क्षेत्रपक्षे बहुवर्णानि धान्यानि यस्मात् तादृशेन पयःपूरेण जलप्रवाहेण पावितमित्यर्थः । ३ क. ख. किन्नं । ४ ख. साहइ ।

अत्थि तरुणियणपारद्धवरमंगलो मंगलुग्गारबहिरीकयंवरतलो ।
तलवरप्पमुहनिवलोयरक्खियपुरो पुरजणारद्धसविसेसधम्मुज्जमो ॥२५॥
जमियजोगेहिं साहूहिं सुपवित्तिओ तियससमरूवतरुणयणकयविब्भमो ।
भमरपरिकलणखमकमलभूसियसरो सरसमल्लीणहंसावलीमणहरो ॥२६॥
हरियपरिकवलणापुट्ठगोसंकुलो कुलसमुप्पन्ननरनियरपयडियनओ ।
नय कया कलिनिवोवहयनरमयसुहो सुहयरो पवररमणिज्जविजओ तहिं ॥२७॥

तत्थ य जिणधम्ममहामहिवालनिवासगाढदुग्गंव । नयरी सुहंकरिच्चिय अत्थि जहत्था जयपसिद्धा ॥२८॥
जीए विसालतुंगो मणिमयकविसीसकलियपायारो । गयणसिरीए रसणाकलावलायण्णमुव्वहइ ॥२९॥
जीए जलरासिसच्छहपरिहासंकंतरुइरविंबिवं । जालाकलावपिंगलवडवानललीलमुव्वहइ ॥३०॥
जीए समुन्नयजिणभवणसिहरसंठवियकणयकलसाण । मज्झेण पल्लट्टंतं न मुणिज्जइ मंडलं रविणो ॥३१॥
जीए ससिकंतमणिमंदिराइं निसि ससिकरावपुट्ठाइं । वियलियबाहजलाइं रोयंतिव तरणितवियाइं ॥३२॥
गयदोसावि सदोसव्व जीए पविसंति कहवि रविपाया । कोडीसरघरसचवियचिंधसंरुद्धसंचारा ॥३३॥
कमलदलट्ठियजललवतरलावि न जं कयावि कयराया । मुंचइ निवासिजणगुणकलावसंदाणियव्व सिरी॥३४॥
रंगिरतुंगतुरंगमखुरग्गनिग्घायविहुरियं धरणिं । सिंचंति जीए करसीयरेण सदयव्व करिनिसरा ॥३५॥

---

अस्ति तरुणीजनप्रारब्धवरमङ्गलो मङ्गलोद्गारबधिरीकृताम्बरतलः ।
पुररक्षकप्रमुखनृपलोकरक्षितपुरः पुरजनारब्धसविशेषधर्मोद्यमः ॥२५॥
यमितयोगैः साधुभिः सुपवित्रितस्त्रिदशसमरूपतरुणजनकृतविभ्रमः ।
भ्रमरपरिकलनक्षमकमलभूषितसरः सरःसमालीनहंसावलीमनोहरः ॥२६॥
हरितपरिकवलनापुष्टगोसंकुलः कुलसमुत्पन्ननरनिकरप्रकटितनयः ।
नच कदा कलिनृपोपहतनरमृगसुखः सुखकरः प्रवररमणीयविजयस्तस्मिन् ॥२७॥

तत्र च जिनधर्ममहामहीपालनिवासगाढदुर्गं इव । नगरी शुभङ्करी खल्वस्ति यथार्था जगत्प्रसिद्धा ॥२८॥
यस्या विशालोत्तुङ्गो मणिमयकपिशीर्षकलितप्राकारः । गगनश्रियो रसनाकलापलावण्यमुद्वहति ॥२९॥
यस्या जलराशिसदृक्परिखासंक्रान्तरुचिररविबिम्बम् । ज्वालाकलापपिङ्गलवडवानललीलामुद्वहति ॥३०॥
यस्याः समुन्नतजिनभवनशिखरसंस्थापितकनककलशानाम् । मध्येन पर्यस्यमानं न ज्ञायते मण्डलं रवेः ॥३१॥
यस्याः शशिकान्तमणिमन्दिराणि निशि शशिकरावस्पृष्टानि । विगलितबाष्पजलानि रुदन्तीव तरणितप्तानि॥३२॥
गतदोषा अपि सदोषा इव यस्यां प्रविशन्ति कथमपि रविपादाः । कोटीश्वरगृहदृष्टचिह्नसंरुद्धसंचाराः ॥३३॥
कमलदलस्थितजललवतरलापि न यां कदापि कृतरागा । मुञ्चति निवासिजनगुणकलापसंदानितेव श्रीः ॥३४॥
रङ्गनशीलतुङ्गतुरङ्गमखुराग्रनिर्घातविधुरितां धरणिम् । सिञ्चन्ति यस्याः करसीकरेण सदया इव करिविसराः॥३५॥

---

१ ग. °ववरतरुणिक०। २ ख. लावन्न° ग. लावण्ण० । ३ ग पलोट्ट° ।

दढभुयदंडालाणियकमलाकरिणी निवो समरसीहो । चउरंगचमूसंचाररुद्धधरणीयलो तत्थ ॥३६॥
मंडलियचंडकोदंडमुक्ककंडोलिखंडियसिरेहिं । जो रयइ रणे जयसिरि पवेसपउमोवयारं व ॥३७॥
विमलकरवालधाराजलेण चित्ताइं रिउचरित्ताइं । जो फुसइ भुवणभवणंतरालभित्तीनिहित्ताइं ॥३८॥
जस्स य जसजलसित्तं पयावपावयपलुट्ठमवणियलं । नवकंदलकलियं पिव जयथंभमिसा सया सहइ ॥३९॥
तस्स य सारयच्छणससिसमवयणा मयणकंदली दइया । नियनिरुवमसुंदेरिमअहरीकयकुसुमसरघरिणी ॥४०॥
चिरचिन्नपुन्नपब्भारपरिणयं तीए सह निवो निच्चं । भुंजंतो विसयसुहं सुहेण वोलेइ बहुकालं ॥४१॥
अह अन्नया य सेवासमागयासेसमंतिसामंते । कयजहुचियसम्माणे संझावसरे विसज्जेउं ॥४२॥
कयदेवपायपूयापहणियनीसेसविग्घसंघाओ । संभाविऊण सब्भावनिब्भरं किंपि नियदइयं ॥४३॥
विमलच्छवत्थपच्छाइयाए सुरसरियपुलिणपिहुलाए । मिउसुहुमहंसतूलोवहाणकलियाए सेज्जाए ॥४४॥
निद्दामुद्दामिलियच्छिसंपुडो जाव वासभवणम्मि । निबिडीकयदारकवाडसंपुडो चिट्ठइ निसीहे ॥४५॥
ताव सहसत्ति निद्दासम्मद्दुवमद्दविहडियच्छिपुडो । पिच्छइ पुरओ रमणिं तणुप्पहापहयतमपडलं ॥४६॥
चरणारविंदभममिलियमुहलभसलावलिं व वहमाणिं । मरगयमणिमयमंजीरजुवलयं मंजुसिंजणयं ॥४७॥
कलयंतिं मणिमयकिरणकिंकिणीकलियमेहलं रमणं । कयतुमुलतलवराउलसालं रइरमणनयरं व ॥४८॥
मुत्तावलिं वहंतिं घडिमालं पिव सतण्हतरुणकए । गुरुनाहिवाविलायन्नरससमाकरिसणत्थं व ॥४९॥

---

दृढभुजदण्डालानितकमलाकरिणीको नृपः समरसिंहः । चतुरङ्गचमूसंचाररुद्धधरणीतलस्तत्र ॥३६॥
मण्डलितचण्डकोदण्डमुक्तकाण्डालिखण्डितशिरोभिः । यो रचयति रणे जयश्रीप्रवेशपद्मोपचारमिव ॥३७॥
विमलकरवालधाराजलेन चित्राणि रिपुचरित्राणि । यः स्पृशति भुवनभवनान्तरालभित्तिनिहितानि ॥३८॥
यस्य च यशोजलसिक्तं प्रतापपावकपर्यस्तमवनितलम् । नवकन्दलकलितमिव जयस्तम्भमिषात्सदा राजति ॥३९॥
यस्य च शारदक्षणशशिसमवदना मदनकन्दली दयिता । निजनिरुपमसौन्दर्याधरीकृतकुसुमशरगृहिणी ॥४०॥
चिरचीर्णपुण्यप्राग्भारपरिणयं तया सह नृपो नित्यम् । भुञ्जानो विषयसुखं सुखेनातिक्रामति बहुकालम् ॥४१॥
अथान्यदा च सेवासमागताशेषमन्त्रिसामन्तान् । कृतयथोचितसम्मानान् सन्ध्यावसरे विसृज्य ॥४२॥
कृतदेवपादपूजाप्रहतनिःशेषविघ्नसंघातः । संभाव्य सद्भावनिर्भरं किमपि निजदयिताम् ॥४३॥
विमलाच्छवस्त्रप्रच्छादितायां सुरसरित्पुलिनपृथुलायाम् । मृदुसूक्ष्महंसतूलोपधानकलितायां शय्यायाम् ॥४४॥
निद्रामुद्रामिलिताक्षिसंपुटो यावद् वासभवने । निबिडीकृतद्वारकपाटसंपुटस्तिष्ठति निशीथे ॥४५॥
तावत् सहसेति निद्रासंमर्दोपमर्दविघटिताक्षिपुटः । पश्यति पुरतो रमणीं तनुप्रभाप्रहततमःपटलाम् ॥४६॥
चरणारविन्दभ्रममिलितमुखरभ्रमरावलिमिव वहन्तीम् । मरकतमणिमयमञ्जीरयुगलकं मञ्जुसिञ्जनकम् ॥४७॥
कलयन्तीं मणिमयकिरणकिङ्किणीकलितमेखलं रमणम् । कृततुमुलपुररक्षकाकुलसालं रतिरमणनगरमिव ॥४८॥
मुक्तावलीं वहन्तीं घटीमालामिव सतृष्णतरुणकृते । गुरुनाभिवापीलावण्यरससमाकर्षणार्थमिव ॥४९॥

---

१ क ग पच्छ । २ क मिउ्राए । ३ क किंकणी । ४ क ख वहिंति ।

सीमंतनिसियवरपउमरायमणिकिरणरंजियं भालं । कंकेल्लिपल्लवविल्लं वम्महसयणंव वहमाणि ॥५०॥
अह तं निरुवमरूवोवसोहियं पिच्छिऊण नरनाहो । विम्हयरसरसियंतक्करणो स परिचिंतिउं लग्गो ॥५१॥
किं काचि कामिणी निसियमयणबाणप्पहारविहुरियया । सविसेसभूसियंगी सरणत्थं मं समल्लीणा? ॥५२॥
अहवा ठाणम्मि इमम्मि पवलवायालजामइल्लम्मि । पयचारीण पवेसो कहं नु, ता नूणममरीयं ॥५३॥
अहव किमिमिणा मह संसएण, जा कावि होइ सा होउ । अब्भागयत्ति काउं अब्भुट्ठाणारिहा ताव ॥५४॥
इय चिंतिऊण परिचत्तसिज्जसंगेण तेण धरणियलं । मउलियकरकमलेणं पवित्तियं पायपउमेहिं ॥५५॥
पसरंतदंतकिरणालिदलियतिमिरं पयंपियं तयणु । सुअणु ! तए नियजम्मेण भूसिया कहसु का जाई ? ॥५६॥
का य तुह नामवण्णावली विभूसेइ लोयवयणाइं ? । केण व कज्जेण गिहं पवित्तियं चरणफंसेण ? ॥५७॥
इय बहुमाणपुरस्सरणरवइजुत्ताभिभासणपहिट्ठा । सा पभणइ निवपुंगव ! जइ सुस्सूसा तुह इहत्थे ॥५८॥
ता होसु सावहाणो खणमेगं जेण तुज्झ अहुणावि । पयडेमि पुव्ववुत्तं सवित्थरं, तो इमं कहइ ॥५९॥
अत्थि ससिकंतमणिसालचंगिमासमियसग्गसोहग्गं । असढवियड्ढमहिड्ढियनरकलियं रयणसारपुरं ॥६०॥
तं पालइ पोढपयावजलणजालावलीहिं सयकालं । जलियदरियारिवंसो राया संगामसूरोत्ति ॥६१॥
तस्स य समग्गसोहग्गपमुहगुणगामगामणी दइया । रइरमणगेहिणी इव नामेणं चंदलेहत्ति ॥६२॥
अवरुप्परपीइपरायणंतकरणाण ताण सयकालं । अन्नोन्नअमंदाणंदमंदिरा वासरा जंति ॥६३॥

---

सीमन्तनिशितवरपद्मरागमणिकिरणरञ्जितं भालम् । कङ्केल्लिपल्लववद् मन्मथसदनमिव वहन्तीम् ॥५०॥
अथ तं निरुपमरूपोपशोभितां दृष्ट्वा नरनाथः । विस्मयरसरसितान्तःकरणः स परिचिन्तयितुं लग्नः ॥५१॥
किं काचित् कामिनी निशितमदनबाणप्रहारविधुरिता । सविशेषभूषिताङ्गी शरणार्थं मां समालीना ? ॥५२॥
अथवा स्थानेऽस्मिन् प्रबलवाचालयामिके । पदचारिणां प्रवेशः कथं नु, तस्माद् नूनममरीयम् ॥५३॥
अथवा किमनेन मम संशयेन, या कापि भवति सा भवतु । अभ्यागतेति कृत्वाऽभ्युत्थानार्हा तावत् ॥५४॥
इति चिन्तयित्वा परित्यक्तशय्यासङ्गेन तेन धरणितलम् । मुकुलितकरकमलेन पवित्रितं पादपद्माभ्याम् ॥५५॥
प्रसरद्दन्तकिरणालिदलिततिमिरं प्रजल्पितं तदनु । सुतनु ! त्वया निजजन्मना भूषिता कथय का जातिः ? ॥५६॥
का च तव नामवर्णावली विभूषयति लोकवदनानि ? । केन वा कार्येण गृहं पवित्रितं चरणस्पर्शेन ? ॥५७॥
इति बहुमानपुरस्सरनरपतियुक्ताभिभाषणप्रहृष्टा । सा प्रभणति नृपपुङ्गव ! यदि शुश्रूषा तवेहार्थे ॥५८॥
ततो भव सावधानः क्षणमेकं येन तवाधुनापि । प्रकटयामि पूर्ववृत्तं सविस्तरं, तत इदं कथयति ॥५९॥
अस्ति शशिकान्तमणिसालचङ्गिमाश्रमितस्वर्गसौभाग्यम् । अशठविदग्धमहर्द्धिकनरकलितं रत्नसारपुरम् ॥६०॥
तं पालयति प्रौढप्रतापज्वलनज्वालावलीभिः सदाकालम् । ज्वलितदृप्तारिवंशो राजा संग्रामशूर इति ॥६१॥
तस्य समग्रसौभाग्यप्रमुखगुणग्रामणीर्दयिता । रतिरमणगेहिनीव नाम्ना चन्द्रलेखेति ॥६२॥
परस्परप्रीतिपरायणान्तःकरणयोस्तयोः सदाकालम् । अन्योन्यामन्दानन्दमन्दिराणि वासरा यान्ति ॥६३॥

---

१ क. ग. कंकिल्लि । २ क. ग. 'दुरहिय ।

अह अन्नया य सह सहयरीहिं पासायसिहरमारूढा । जा चिट्ठइ ता पिच्छइ कयसिंगारं नयरलोयं॥६४॥
अंकनिवेसियनियनियपुत्तयपडिपुत्तनत्तपुत्तीयं । विविहफलफुल्लपरिकलियपडलियावावडकरग्गं ॥६५॥
कुसुमावयंसगाभिहउज्जाणेऽणंगतेरसिदिणम्मि । गच्छंतं कुसुमाउहपयजुयलसमचणनिमित्तं ॥६६॥
तम्मज्झट्ठियबहुविहरयणाहरणेहिं भूसियसरीरं । पिच्छइ कमलायरमंतिपणइणिं लडहलायण्णं ॥६७॥
सोहग्गमडप्फरहेरियकामघरणिं सुहासणासीणं । अंकनिवेसियदुहियं लालिंतिं विविहभंगीहिं ॥६८॥
तं पिच्छिऊण संगामसूरनरनाहपणइणी सहसा । ससहरकरचुंबियकमलिणिव्व दीणाणणा जाया ॥६९॥
पाउब्भवंतनिम्मेरमन्नुभरभारनीसहा तयणु । कोवभवणम्मि जरजिन्नसिक्कडे पडइ जरियव्व ॥७०॥
चिंतइ नियबालाए विभूसियाणंगतेरसिदिणम्मि । जा एवं विलसइ मंतिपणइणी सच्चिय कयत्था ॥७१॥
विहलो चिय मह महिलाजम्मो कंकेल्लितरुलयाएव्व। जीए सुयपसवफलणेण पावियं नेय जम्मफलं ॥७२॥
ता कहणु सलहणिज्जा पियमाणसफुरणरायहंसीवि । होमि अहं जीउच्छंगलंछणं नेय दुहियावि ॥७३॥
इय तीए नियपसवोवलंभचितासमुद्दपडियाए । तद्दुक्खदुक्खिओ इव दिवसवसाणक्खणो पत्तो ॥७४॥
एत्थंतरम्मि रोसारुणच्छिअसईकडक्खलक्खेहिं । विच्छुरियं पिव रविणो बिंबं आयंबिरं जायं ॥७५॥
अच्छोययंव सेवइ खणेण भाणू विलुणकरपसरो । अवरसमुद्दे पुणरवि दिणलच्छीसंगमनिमित्तं ॥७६॥
अत्थं गयम्मि सूरे कमेण अक्कमइ दसदिसाचक्कं । तम्मग्गमग्गणत्थंव पमुइयं तिमिरनिवसिबिरं ॥७७॥

---

अथान्यदा च सह सहचरीभिः प्रासादशिखरमारूढा । यावत् तिष्ठति तावत्पश्यति कृतशृङ्गारं नगरलोकम्॥६४॥
अङ्कनिवेशितनिजनिजपुत्रकप्रतिपुत्रनप्तृपुत्रीकम् । विविधफलपुष्पपरिकलितपटलिकाव्यापृतकराग्रम् ॥६५॥
कुसुमावतंसकाभिधोद्यानेऽनङ्गत्रयोदशीदिने । गच्छन्तं कुसुमायुधपदयुगलसमर्चननिमित्तम् ॥६६॥
तन्मध्यस्थितबहुविधरत्नाभरणैर्भूषितशरीराम् । पश्यति कमलाकरमन्त्रिप्रणयिनीं सुन्दरलावण्याम् ॥६७॥
सौभाग्यगर्वाधरितकामगृहिणिकां सुखासनासीनाम् । अङ्कनिवेशितदुहितरं लालयन्तीं विविधभङ्गिभिः ॥६८॥
तां दृष्ट्वा संग्रामशूरनरनाथप्रणयिनी सहसा । शशधरकरचुम्बितकमलिनीव दीनानना जाता ॥६९॥
प्रादुर्भवन्निर्मर्यादमन्युभरभारनिःसहा तदनु । कोपभवने जराजीर्णसीत्कटे पतति ज्वरितेव ॥७०॥
चिन्तयति निजबालया विभूषिताऽनङ्गत्रयोदशीदिने । यैवं विलसति मन्त्रिप्रणयिनी सैव कृतार्था ॥७१॥
विफलमेव मम महिलाजन्म कङ्केल्लितरुलताया इव । यया सुतप्रसवफलनेन प्राप्तं नैव जन्मफलम् ॥७२॥
तस्मात्कथं नु श्लाघनीया प्रियमानसस्फुरणराजहंस्यपि । भवाम्यहं यस्या उत्सङ्गलाञ्छनं नैव दुहितापि ॥७३॥
इति तस्यां निजप्रसवोपलम्भचिन्तासमुद्रपतितायाम् । तद्दुःखदुःखित इव दिवसावसानक्षणः प्राप्तः ॥७४॥
अत्रान्तरे रोषारुणाक्ष्यसतीकटाक्षलक्षैः । विच्छुरितमिव रवेर्बिम्बमाताम्रं जातम् ॥७५॥
अच्छोदकमिव सेवते क्षणेन भानुर्विलूनकरप्रसरः । अपरसमुद्रे पुनरपि दिनलक्ष्मीसङ्गमनिमित्तम् ॥७६॥
अस्तं गते सूरे क्रमेणाक्रामति दशदिक्चक्रम् । तन्मार्गमार्गणार्थमिव प्रमुदितं तिमिरनृपशिबिरम् ॥७७॥

---

१ क दरिय। २ क ख. लालंतिं ।

अह राया भणइ सयावि मज्झ दूमइ मणम्मि एसत्थो । नवरं इहभवसंचिंतणाइसज्झो न होइ फुडं ॥९१॥
किंतु पिए ! पुव्वभवाणुचिन्नेहिं सिज्झए नूणं । ताइं विहियाइं न हु होज्ज, तेण न हु संतई अम्ह ॥९२॥
ता पिययमे ! विसायं मुंचसु इण्हि कुणेसु सविसेसं । कुलदेवयाइ पूयं इत्थ सुओवाइयं च तहा ॥९३॥
इय सोऊणं अंतोफुरंतदररोसकंपिरहराए । संगाममूरनरवइसमुहं देवीए भणियमिमं ॥९४॥
पिययम ! पुव्वाइट्ठं सव्वंपि सवित्थरं मए विहियं । भत्तिभरणिब्भराए तहावि न समीहियं सिद्धं ॥९५॥
किंच,
सुहसज्झं चिय कज्जं किज्जइ महिलाहिं नूण लोयम्मि । दुस्सज्झं पुण कज्जं कुणंति पुरिसाण भुयदंडा ॥९६॥
जेणं साहससहिया गणंति ते गिरिवरंपि गिरिकप्पं । भुयगाहिवंपि रज्जुं पायालंपि हु विलायारं ॥९७॥
ता तुब्भिच्चिय इह उज्जमंतु इय निसुणिऊण से वयणं । किंकायव्वविमूढो जा चिट्ठइ नरवरो तत्थ ॥९८॥
ताव सहसत्ति पिच्छइ उज्जोयं कोवभवणमज्झम्मि । विम्हयवसेण तो चउदिसिंपि सो पेसए दिट्ठिं ॥९९॥
पेच्छइ य लुलंतमहंतरयणमयकुंडलिल्लगंडयलं । दारेणं पविसंतं सुरजुयलं दिव्वकंतिल्लं ॥१००॥
तं दट्ठूण तहाविहचिंधेहिं जाणिऊण देवत्ति । राया विम्हियहियओ अब्भुट्ठाणाइयं कुणइ ॥१०१॥
भणइ य के तुब्भे एत्थ आगया केण वावि कज्जेण ? । इय तुम्ह चरियपीऊसपाणपउणा इमे सवणा ॥१०२॥
अह तम्मज्झा एगो देवो जंपइ सुणेसु नरनाह ! । सोहम्मे अम्हे दोवि इंदसामाणिया देवा ॥१०३॥

---

अथ राजा भणति सदापि मम दावयति मन एषोऽर्थः । नवरमिहभवसंचिन्तनादिसाध्यो न भवति स्फुटम् ॥९१॥
किन्तु प्रिये ! पूर्वभवानुचीर्णपुण्यैः सिध्यति नूनम् । तानि विहितानि न खलु भवेयुः, तेन न संततिरावयोः ॥९२॥
तस्मात् प्रियतमे ! विषादं मुञ्चेदानीं कुरुष्व सविशेषम् । कुलदेवतायाः पूजामत्र सुतोपयाचितं च तथा ॥९३॥
इति श्रुत्वाऽन्तःस्फुरदीषद्रोषकम्पनशीलाधरया । संग्रामशूरनरपतिसंमुखं देव्या भणितमिदम् ॥९४॥
प्रियतम ! पूर्वादिष्टं सर्वमपि सविस्तरं मया विहितम् । भक्तिभरनिर्भरया तथापि न समीहितं सिद्धम् ॥९५॥
किञ्च,
सुखसाध्यमेव कार्यं क्रियते महिलाभिर्नूनं लोके । दुःसाध्यं पुनः कार्यं कुर्वन्ति पुरुषाणां भुजदण्डाः ॥९६॥
येन साहससहिता गणयन्ति ते गिरिवरमपि गिरिकल्पम् । भुजगाधिपमपि रज्जूं पातालमपि हि बिलाकारम् ॥९७॥
तस्माद् यूयमेवेहोद्यच्छतेति श्रुत्वा तस्या वचनम् । किंकर्तव्यविमूढो यावत्तिष्ठति नरवरस्तत्र ॥९८॥
तावत् सहसेति पश्यति उद्योतं कोपभवनमध्ये । विस्मयवशेन ततश्चतुर्दिक्ष्वपि स प्रेषयति दृष्टिम् ॥९९॥
पश्यति च लोलन्महारत्नमयकुण्डलितगण्डतलम् । द्वारेण प्रविशत् सुरयुगलं दिव्यकान्तिकम् ॥१००॥
तद् दृष्ट्वा तथाविधचिह्नैर्ज्ञात्वा देवाविति । राजा विस्मितहृदयोऽभ्युत्थानादिकं करोति ॥१०१॥
भणति च कौ युवामत्रागतौ केन वापि कार्येण ? । इति युवयोश्चरितपीयूषपानप्रगुणाविमौ श्रवणौ ॥१०२॥
अथ तन्मध्यादेको देवो जल्पति शृणु नरनाथ ! । सौधर्मे आवां द्वावपीन्द्रसामानिकौ देवौ ॥१०३॥

---

१ ग °ओभाइ° । २ °यारं° । ३ ख. ग. तुब्भेचि° ।

जेणव कज्जेण पुणो समागया तंपि संपयं सुणसु। खणमिक्कमवहियमणो होह साहिज्जए इत्तो ॥१०४॥
नियविहवमहिमसरिसं चिरकालं तत्थ विसयसुहमणहं। अणुहवियममंदाणंद जलहिपरिमज्जिरंगेहिं ॥१०५॥
अह कइया नेसग्गियसग्गसिरीसंगभोगभंगकरा। जाया अम्हाण इमा दुट्ठारिट्ठाण रिंछोली ॥१०६॥
कंठयलकलियमाला परिमलवहुलावि सया वियासिल्ला। अम्हं भाविरदीहरपवासदुहिया मिलाएइ॥१०७॥
सासणसिरीवि नियपरियणम्मि न तहा फुरेइ अम्हाण। भाविभवनयरगमणे पढमं चिय कयपयाणव्व॥१०८॥
भाविभवगब्भसंभवसंभावियभूरिसंभमेणंव। अनिमित्तं चिय कंपइ काओ अम्हाण अणुसमयं ॥१०९॥
सहगमणमणो परभवपत्थाणं जाणिऊण अम्हाण। कंपंतो कप्पतरू सिढिलइ नियमूलजालंव ॥११०॥
अणवरयविहियभासुररयणविमाणावलोयपइयव्व। अम्हाण नयणतारा परिचियवत्थुम्मिवि मिलाइ॥१११॥
अणवरयं रयणविमाणगमणसंभग्गगइयमिव देहं। अम्हाण निविडजडिमाडंवरमावहइ चंकमणे ॥११२॥
इय दट्ठुमणिट्ठमरिट्ठमंडलं मुणियचवणखणविहुरा। अवगणियधीरिमगुणा केवलिपासं समल्लीणा ॥११३॥
आगामिभवुप्पायं पुच्छेउं जाणिऊण तेण सयं। हिययगयाभिप्पाओ अम्हाणं सोहिओ एवं ॥११४॥
जह भो देवाणुपिया! तुब्भे चविऊण देवलोगाओ। संगामसूररन्नो देवीए चंदलेहाए ॥११५॥
एगो पुत्तत्ताए दुइओ दुहियत्ति होहिही,एयं। सोऊणं अम्हेहिं पयंपियं नाह! किं स निवो? ॥११६॥
सम्मदिट्ठी अहवा मिच्छद्दिट्ठित्ति तेण तो भणियं। तुब्भेहिंतो सम्मं पवज्जिही भद्दओ संतो ॥११७॥

---

येन वा कार्येण पुनः समागतौ तदपि सांप्रतं शृणु। क्षणमेकमवहितमना भव कथ्यत इतः ॥१०४॥
निजविभवमहिमसदृशं चिरकालं तत्र विषयसुखमक्षतम्। अनुभूतममन्दानन्दजलधिपरिमग्नाङ्गाभ्याम्॥१०५॥
अथ कदाचिन्नैसर्गिकस्वर्गश्रीसङ्गभोगभङ्गकरा। जाताऽऽवयोरियं दुष्टारिष्टानां पङ्क्तिः ॥१०६॥
कण्ठतलकलितमाला परिमलबहुलापि सदा विकासवती। आवयोर्भवनशीलदीर्घप्रवासदुःखिता म्लायति॥१०७॥
शासनश्रीरपि निजपरिजने न तथा स्फुरत्यावयोः। माविभवनगरगमने प्रथममेव कृतप्रयाणेव ॥१०८॥
माविभवगर्भसंभवसंभावितभूरिसंभ्रमेणेव। अनिमित्तमेव कम्पते काय आवयोरनुसमयम् ॥१०९॥
सहगमनमनाः परभवप्रस्थानं ज्ञात्वाऽऽवयोः। कम्पमानः कल्पतरुः शिथिलयति निजमूलजालमिव ॥११०॥
अनवरतविहितभासुररत्नविमानावलोकप्रहतेव। आवयोर्नयनतारा परिचितवस्तुन्यपि म्लायति ॥१११॥
अनवरतं रत्नविमानगमनसंभग्नगतिक इव देहः। आवयोर्निबिडजाडिमाडम्बरमावहति चङ्क्रमणे ॥११२॥
इति दृष्ट्वानिष्टमरिष्टमण्डलं ज्ञातच्यवनक्षणविधुरौ। अवगणितधीरिमगुणौ केवलिपार्श्वं समालीनौ ॥११३॥
आगामिभवोत्पादं प्रष्टुं, ज्ञात्वा तेन स्वयम्। हृदयगताभिप्राय आवयोः कथित एवम् ॥११४॥
यथा भो देवानुप्रियौ! युवां च्युत्वा देवलोकात्। संग्रामशूरराजस्य देव्याश्चन्द्रलेखायाः ॥११५॥
एकः पुत्रतया द्वितीयो दुहितेति भविष्यथः,एतत्। श्रुत्वाऽऽवाभ्यां प्रजल्पितं नाथ! किं स नृपः ॥११६॥
सम्यग्दृष्टिरथवा मिथ्यादृष्टिरिति तेन ततो भणितम्। युवाभ्यां सम्यक्त्वं प्रपत्स्यते भद्रकः सन् ॥११७॥

---

१ क. सिढलइ। २ ग. भमेइ। ३ ग °प्पायं। ४ ग. कहियमिणमेव।

इय सोऊणं नमिउं च केवलिं इह समागया अम्हे । तुह सम्मत्तपवत्तणहेउं जेणम्ह तुज्झ कुले ॥११८॥
उप्पन्नाणं न हु होइ दुल्लहो नरवरिंद ! जिणधम्मो । समयम्मि जं इमस्सवि तं भणियं मूलबीयंति ॥११९॥
अपरं च,
अम्हाणं न हु दूमइ इण्हिं चवणंपि देवलोगाओ । अविरइबहुलाओ, तुह कुलम्मि जायाण जं भणियं ॥१२०॥
सावयकुलं कुलाणं निग्गंथं पवयणं पवयणाणं । दाणाणमभयदाणं समाहिमरणं च मरणाणं ॥१२१॥
ता तुम्हकुलुप्पन्ना सम्मं पडिवज्जिऊण जिणधम्मं । पुव्वं पिव सग्गसिरीए भायणं होम्ह नहु चोज्जं ॥१२२॥
अह सहरिसो नरिंदो तयभिमुहं भणइ कहह कह पुव्विं । जिणधम्मासेवाए पत्ता देवत्तणं तुब्भे ? ॥१२३॥
ते [1]भणहिं नियचरियं जइवि न जुत्तं कहेउमम्हाण । तहवि तुह पत्थणाए साहिज्जइ, कहइ ताणेगो ॥१२४॥
निम्मलफलिहसिलायलविसालसालग्गभग्गरविमग्गं । आसि इह भरहभूमीए भूसणं कणयकूडपुरं ॥१२५॥
तत्थ निवसेइ सिट्ठी पउरगरिट्ठो विसिट्ठगुणजुत्तो । नामेणं जिणचंदो जणमाणसरायहंसोव्व ॥१२६॥
सीलवई नामेणं सीलालंकारसालिणी तस्स । भज्जा निरुवमविणयप्पमुक्खगुणजणियजणचोज्जा ॥१२७॥
तीसे पुत्तत्तेणं संजाओ हं उवाइयसएहिं । अहिगयकलाकलावो कमेण तारुण्णमणुपत्तो ॥१२८॥
अह जिणचंदो सिट्ठी कुडुंबसामित्तयम्मि मे ठविउं । जिणभणियधम्ममग्गाणुसारओ मरणमावन्नो ॥१२९॥
तव्विरहदूमिओ हं तद्दंसियमग्गमणुचरामि परं । धम्मम्मि पमायंतो घरचिंतावावडत्तेण ॥१३०॥

---

इति श्रुत्वा नत्वा च केवलिनमिह समागतावावाम् । तव सम्यक्त्वप्रवर्तनहेतोर्येनावयोस्तव कुले ॥११८॥
उत्पन्नयोर्न खलु भवेद् दुर्लभो नरवरेन्द्र ! जिनधर्मः । समये यदस्यापि तद् भणितं मूलबीजमिति ॥११९॥
अपरञ्च,
आवयोर्न खलु दावयतीदानीं च्यवनमपि देवलोकात् । अविरतिबहुलात्, तव कुले जातयोर्यद् भाणितम् ॥१२०॥
श्रावककुलं कुलानां नैर्ग्रन्थं प्रवचनं प्रवचनानाम् । दानानामभयदानं समाधिमरणं च मरणानाम् ॥१२१॥
तस्मायुष्मत्कुलोत्पन्नौ सम्यक् प्रतिपद्य जिनधर्मम् । पूर्वमिव स्वर्गश्रिया भाजनं भविष्यावो न खल्वाश्चर्यम् ॥१२२॥
अथ सहर्षो नरेन्द्रस्तदभिमुखं भणति कथयतं कथं पूर्वम् । जिनधर्मासेवया प्राप्तौ देवत्वं युवाम् ? ॥१२३॥
तौ भणतो निजचरितं यद्यपि न युक्तं कथयितुमावयोः । तथापि तव प्रार्थनया कथ्यते, कथयति तयोरेकः ॥१२४॥
निर्मलस्फटिकशिलातलविशालशालाग्रभग्नरविमार्गम् । आसीदिह भरतभूमेर्भूषणं कनककूटपुरम् ॥१२५॥
तत्र निवसति श्रेष्ठी पौरगरिष्ठो विशिष्टगुणयुक्तः । नाम्ना जिनचन्द्रो जनमानसराजहंस इव ॥१२६॥
शीलवती नाम्ना शीलालङ्कारशालिनी तस्य । भार्या निरुपमविनयप्रमुखगुणजनितजनाश्चर्या ॥१२७॥
तस्याः पुत्रत्वेन संजातोऽहमुपयाचितशतैः । अधिगतकलाकलापः क्रमेण तारुण्यमनुप्राप्तः ॥१२८॥
अथ जिनचन्द्रः श्रेष्ठी कुटुम्बस्वामित्वे मां स्थापयित्वा । जिनभणितधर्ममार्गानुसारतो मरणमापन्नः ॥१२९॥
तद्विरहदावितोऽहं तद्दर्शितमार्गमनुचरामि परम् । धर्मे प्रमाद्यन् गृहचिन्ताव्यापृतत्वेन ॥१३०॥

---

१ क. इण्ह । २. कइ कई । ३ ख भणिहिं, ग. भणहि । ४ क. ग संठ° ।

अह मह माया हट्टागमणावसरम्मि सिग्घमेव सयं। वरसालिदालिघयघयपूराइयं रसवइं कुणइ॥१३१॥
नवरं परिवेसंती मह्भिमुहं भणइ पइदिणं एवं। वच्छ! दुहाइं पाविहिसि भुंजिरो वासियं भत्तं॥१३२॥
अहमवि भणामि अंबे! कहमेयं भणसि पइदिणंपि तुमं। सयमवि निव्वत्तियरसवईए मह भोयणं दिंती?॥१३३॥
इय पुट्ठा तुण्हिक्का होउं सा चिट्ठए सयावि तओ। कोऊहलकलिएणं पुणोवि पुट्ठा गुरुवरोहा॥१३४॥
तो तीए संलत्तं एयं तं वच्छ! पुच्छ गंतूणं। समयामयनिहिसूरिं समोसढं अज्ज उज्जाणे॥१३५॥
अह तत्थवि गंतुं तं नमिउं पसिणिस्समहमिमं जाव। ताव सयमेव नाणेण जाणिउं तेणिमं भणियं॥१३६॥
भो तुह एयारूवं पसिणं साहिस्सई सुहागपुरे। चेडयसिद्धो मायंगसड्ढओ थावरो नाम॥१३७॥
अहह अहो! अच्छरियं सव्वं नाणेण जाणमाणोवि। जं मह न इमं साहइ तदवस्सं कारणं किंपि॥१३८॥
एवं विचिंतमाणो कमेण पत्तो सुहागपुरनयरे। जाव रमणीययाए पिच्छामि अहं विवणिमग्गं॥१३९॥
ताव जरजज्जरंगो नियसियआजाणुमलिणसाडिल्लो। पंडुरियरोमकूवो पयडसिराधमणिसंठाणो॥१४०॥
हरिनहकढिणमहापरिपयनहरपरंपराए विकरालो। अद्धघरट्टियघुट्टं पूगं गंठीए बंधंतो॥१४१॥
दूरपलंबिरनासाकेसचओ मूलयट्टकरुहओ। बहुसेयसिन्नमलमइलवत्थणयचिक्कणसरीरो॥१४२॥
गहियकयाणगउव्वरियलब्भदविणंपि पत्थमाणेहिं। सह गाहगेहिं दुव्वयणनिब्भरं कलहमाणो य॥१४३॥
कहकहवि हु सत्तेणं रेणुतुसावणयणत्थमनिलम्मि। उप्पाडिऊण पिडगाइं तंदुले उप्पिणितो य॥१४४॥

---

अथ मम माता हट्टागमनावसरे शीघ्रमेव स्वयम्। वरशालिदालिघृतघृतपूरादिकां रसवतीं करोति॥१३१॥
नवरं परिवेविषाणा मदभिमुखं भणाति प्रतिदिनमेवम्। वत्स! दुःखानि प्राप्स्यासि भुञ्जानो वासितं भक्तम्॥१३२॥
अहमपि भणाम्यम्ब! कथमेतद्भणसि प्रतिदिनमपि त्वम्। स्वयमेव निर्वर्तितरसवत्या मम भोजनं ददती?॥१३३॥
इति पृष्टा तूष्णीका भूत्वा सा तिष्ठति सदापि ततः। कौतूहलकलितेन पुनरपि पृष्टा गुर्ववरोधात्॥१३४॥
ततस्तया संलप्तमेतत् त्वं वत्स! पृच्छ गत्वा। समयामृतनिधिसूरिं समवसृतमद्योद्याने॥१३५॥
अथ तत्रापि गत्वा तं नत्वा प्रक्ष्याम्यहमिदं यावत्। तावत् स्वयमेव ज्ञानेन ज्ञात्वा तेनेदं भणितम्॥१३६॥
भोस्तवैतद्रूपं प्रश्नं कथयिष्यति शुभाकपुरे। चेटकसिद्धो मातङ्गश्राद्धकः स्थावरो नाम॥१३७॥
अहह अहो! आश्चर्यं सर्वं ज्ञानेन जानन्नपि। यद् मां नेदं कथयति तदवश्यं कारणं किमपि॥१३८॥
एवं विचिन्तयन् क्रमेण प्राप्तः शुभाकपुरनगरे। यावद् रमणीयतया पश्याम्यहं विपणिमार्गम्॥१३९॥
तावज्जराजर्जराङ्गो निवसिताजानुमलिनशाटकः। पाण्डुरितरोमकूपः प्रकटशिराधमनीसंस्थानः॥१४०॥
हरिनखकठिनमहापदनखरपरम्परया विकरालः। अर्धघरट्टितघुण्टं पूगं ग्रन्थ्यैर्बध्नन्॥१४१॥
दूरप्रलम्बमाननासाकेशचयो मूलपट्टकररुहकः। बहुस्वेदशीर्णमलमलिनवस्त्रचिक्कणशरीरः॥१४२॥
गृहीतक्रयाणकोर्वरितलभ्यद्रविणमपि प्रार्थयद्भिः। सह ग्राहकैर्दुर्वचननिर्भरं कलहयंश्च॥१४३॥
कथंकथमपि खलु सत्त्वेन रेणुतुषापनयनार्थमनिले। उत्पाट्य पिटकादि तण्डुलानुत्क्षेपयंश्च॥१४४॥

---

१ क. संताणो। २ ग. °घरट्ट। ३ ग. उप्पणिं°।

एकम्मि महाहट्टे दिट्ठो धणसारनामओ सिट्ठी । किविणपियामह इय नयरवासिविहियवरभिहाणो ॥१४५॥
पुट्ठो य सो मए जह थावरनामा इहत्थि मायंगो । जिणवयणभावियमई चेडयसिद्धो य किं कोवि ? ॥१४६॥
एयं सम्ममसोऊण तेण भणियं कयाणगं किंपि । हट्टाओ आयड्ढिय दंसेमि तओ मए पुट्ठं ॥१४७॥
महया सद्देण पुणो तं चिय, तो तेण साहियं, अत्थि । दारट्ठियवचणिगाए तस्स पयडं चिय गिहंपि॥१४८॥
इयं सोऊण गओ हं तस्स गिहे तत्थ सोवि संपत्तो । कहिओ वासियभत्ताइवइयरो तस्स सव्वोवि ॥१४९॥
ता जाव सूरिणा हं तुह पासे पेसिउत्ति तं सोउं । तेण भणियं कहिस्सं नवरं साहम्मिओ तं सि ॥१५०॥
ता काऊण पसायं पाहुणगो होसु अज्ज मज्झ तुमं । भणियं मए कहंपिव जाइविरुद्धं इमं जेण ॥१५१॥
अह महणिच्छंतस्सवि साहम्मियवच्छलच्छपुन्नट्ठा । किविणपियामहहट्टे निरूवियं भोयणं तेण ॥१५२॥
भणियं च भोयणाणंतरंपि सिग्घं गिहम्मि महतणए । तुमए आगंतव्वं तुह पुट्ठं जेण साहेमि ॥१५३॥
इय भणिऊण गओ सो एत्तो य मएवि पभणिओ सिट्ठी । जह तंदुले पयावसु कत्थवि भुंजामि जेणाहं॥१५४॥
तेण नियसिट्ठिणिच्चिय आहूया रंधणत्थलोभेण । तीएवि अणुसारेणं जिणचंदसुउत्ति विन्नाओ ॥१५५॥
भणियं भो भो तं मह पिउभायसुउत्ति बंधवो होसि । ता मुंच-इमं मायंगदावियं तंदुलाईयं ॥१५६॥
भुंजसु नियगेहिच्चिय आगंतूणंति तो मए भणियं । अहममुगकारणेणं समागओ तस्समीवम्मि ॥१५७॥
तो तद्दावियमेयं भुंजिस्सं भोअणं अहं अज्ज । एत्तो उड्ढं जइ किंपि भणसि तो तुज्झ मह सवहो ॥१५८॥

---

एकस्मिन् महाहट्टे दृष्टो धनसारनामकः श्रेष्ठी । कृपणपितामह इति नगरवासिविहितवराभिधानः ॥१४५॥
पृष्टश्च स मया यथा स्थावरनामेहास्ति मातङ्गः । जिनवचनभावितमतिश्चेटकसिद्धश्च किं कोऽपि ? ॥१४६॥
एतत् सम्यगश्रुत्वा तेन भणितं क्रयाणकं किमपि हट्टादाकृष्य दर्शयामि ततो मया पृष्टम् ॥ १४७ ॥
महता शब्देन पुनस्तदेव, ततस्तेन कथितं, अस्ति । द्वारस्थितपरट्टिकया तस्य प्रकटमेव गृहमपि ॥ १४८ ॥
इति श्रुत्वा गतोऽहं तस्य गृहे तत्र सोऽपि संप्राप्तः । कथितो वासितभक्तादिव्यतिकरस्तस्य सर्वोऽपि ॥१४९॥
तावद् यावत्सूरिणाऽहं तव पार्श्वे प्रेषित इति श्रुत्वा । तेन भणितं कथयिष्यामि नवरं सार्धर्मिकस्त्वमसि ॥१५०॥
ततः कृत्वा प्रसादं प्राघुणको भवाद्य मम त्वम् । भणितं मया कथमिव जातिविरुद्धमिदं येन ॥ १५१ ॥
*अथ ममानिच्छतोऽपि सार्धर्मिकवात्सल्याच्छपुण्यार्थम् । कृपणपितामहहट्टे निरूपितं भोजनं तेन ॥ १५२ ॥*
भणितं च भोजनानन्तरमपि शीघ्रं गृहे मदीये । त्वया आगन्तव्यं तव पृष्टं येन कथयामि ॥ १५३ ॥
इति भणित्वा गतः स इतश्च मयापि प्रभणितः श्रेष्ठी । यथा तण्डुलान् पाचय कुत्रापि भुञ्जे येनाहम् ॥१५४॥
तेन निजश्रेष्ठिन्येवाहूता रन्धनार्थलोभेन । तयाप्यनुसारेण जिनचन्द्रसुत इति विज्ञातः ॥ १५५ ॥
भणितं च भो भोस्त्वं मम पितृभ्रातृसुत इति बान्धवो भवसि । तस्मान्मुञ्चेदं मातङ्गदापितं तण्डुलादिकम्॥१५६॥
भुङ्क्ष्व निजगेह एवागत्येति ततो मया भणितम् । अहममुककारणेन समागतस्तत्समीपे ॥ १५७ ॥
ततस्तद्दापितमेतद् भोक्ष्ये भोजनमहमद्य । इत ऊर्ध्वं यदि किमपि भणसि ततस्तव मम शपथः ॥ १५८ ॥

---

१ क. मायंग । २ ख. ग. भोयणं ।

इय गुरुनिब्बंधेणं भणिया सा रंधिऊण मुहिगाए। मह देइ भोयणं नियगिहम्मि भुत्तुत्तरेय अहं ॥१५९॥
जा मायंगस्स गिहं वच्चामि सुणेमि ताव अक्कंदं। तो तस्संन्निहियजणा पुट्ठा तक्कारणं तेहिं ॥१६०॥
कहियं, जइ मायंगो जस्स समीवम्मि आगओ तं सि। सो संपइ मूढविसूइयाए पंचत्तमणुपत्तो ॥१६१॥
इय सोउं विमणमणो अहयं तं सिट्ठिणीए कहिऊणं। जा नियनयराभिमुहं चलिओ तो तीए इय भणिओ॥१६२॥
जह बीयदिणं चिट्ठसु इहेव काऊण बंधव! पसायं। चेइहराइं वंदसु तह पाहुणगो य मे होसु ॥१६३॥
इय अइनिब्बंधपरं तीसे वयणं निसामिऊण मए। पडिवज्जियं तहच्चिय एत्तो दुइयम्मि दिवसम्मि॥१६४॥
किविणपियामहसिट्ठी तीए गंतूण हट्टउवविट्ठो। भणिओ जह मह बंधू भुंजिही अज्ज तुह गेहे ॥१६५॥
ता सालिदालिसुसुयंधसप्पिपभीइ समप्पहत्ति तओ। सिट्ठी तयभिमुहं भणइ भुंजिही कह णु तुह बंधू?॥१६६॥
देसागओवि अइदुत्थिओवि तइया गिहाउ मे मुक्को। निक्कालेउं बंधू सहोयरोवि हु न किं सरसि?॥१६७॥
अन्नं च, कुणसि वत्तं सालीदालीण तं न किं मुणसि?। जं देवागिहे जंतीए तुज्झ तुसणी अणुण्णाया॥१६८॥
किञ्च,
जइ बंधुसिणेहग्गहगहिया चिट्ठसि कहंपि न तुमं ता। भुंजाइयाए मह सोवि जिम्मउ तिल्लेण सह बल्ले॥१६९॥
सा भणइ नियगिहेवि हु घयघेउरभोयणं समाकुणइ। मह भाया, ता सामिय! लज्जिस्समहं इमं दिंती॥१७०॥
अह सो अणक्खभरिओ पभणइ पुव्वागया सिरी जस्स। विलसंतस्स जहिच्छं का पीडा तस्स का निट्ठा?॥१७१॥

---

इति गुरुनिर्बन्धेन भणिता सा रन्धित्वा मुधा। मम ददाति भोजनं निजगृहे, भुक्त्वा त्वरेयाहम् ॥ १५९ ॥
यावद् मातङ्गस्य गृहं व्रजामि शृणोमि तावदाक्रन्दम्। ततस्तत्संनिहितजनाः पृष्टास्तत्कारणं तैः ॥ १६० ॥
कथितं, यथा मातङ्गो यस्य समीपं आगतस्त्वमसि। स संप्रति मूढविसूचिकया पञ्चत्वमनुप्राप्तः ॥ १६१ ॥
इति श्रुत्वा विमनोमना अहकंतत् श्रेष्ठिन्यै कथयित्वा। यावन्निजनगराभिमुखं चलितस्ततस्तयेति भणितः॥१६२॥
यथा द्वितीयदिनं तिष्ठेहैव कृत्वा बान्धव! प्रसादम्। चैत्यगृहाणि वन्दस्व तथा प्राघुणकश्च मम भव ॥१६३॥
इत्यतिनिर्बन्धपरं तस्या वचनं निशम्य मया। प्रतिपन्नं तथैवेतो द्वितीयस्मिन् दिवसे ॥ १६४ ॥
कृपणपितामहश्रेष्ठी तया गत्वा हट्टोपविष्टः। भणितो यथा मम बन्धुर्भोक्ष्यतेऽद्य तव गेहे ॥ १६५ ॥
तस्माच्छालिसूपसुसुगन्धसर्पिःप्रभृति समर्पयेति ततः। श्रेष्ठी तदभिमुखं भणति भोक्ष्यते कथं नु तव बन्धुः? ॥१६६॥
देशागतोऽप्यतिदुःस्थितोऽपि तदा गृहान्मया मुक्तः। निष्काश्य बन्धुः सहोदरोऽपि खलु न किं स्मरसि? ॥१६७॥
अन्यच्च, करोषि वार्तां शालिसूपयोस्तत्न किं जानासि?। यद् देवगृहे यान्त्यास्तव तूष्णीमनुज्ञाता ॥ १६८ ॥
किञ्च,
यदि बन्धुस्नेहग्रहगृहीता तिष्ठसि कथमपि न त्वं ततः। भोजिकया मम सोऽपि भोज्यतां तैलेन सह वल्लान्॥१६९॥
सा भणति निजगृहेऽपि खलु घृतघृतपूरभोजनं सदा करोति। मम भ्राता, तस्मात् स्वामिन्! लज्जिष्याम्यहमिदं ददती॥
अथ स कोपभरितः प्रभणति पूर्वागता श्रीर्यस्य। विलसतो यथेच्छं का पीडा तस्य का निष्ठा? ॥१७१॥

---

१ ग. सोऊण। २ ग. ॰णामणो। ३ ग. अहं सि॰। ४ क. तुमली।

कट्टेण इमेण मए लच्छी समुवज्जिया न किं मुणासि। जं सिसिरे हिमपाएवि चरिमजामम्मि रयणीए ॥१७२॥
उत्तरिउं गुरुसरियं परतीरे कट्ठभारयं गहिउं। जह नवि पिच्छइ कोवि हु तह तुह अप्पिंतओ आसि ॥१७३॥
नीरंपि हु रयणीए आणिंतो, मा कहिंपि मह अत्थो। पाणचएवि वचउ खंडणदलणाइगिहकम्मे ॥१७४॥
जो मे उवज्जिओ इह करुरुहघसणेण चरणघासेण। गिम्हुम्हतवियतणुणा तेल्लकणाईण वहणेण ॥१७५॥
धम्मत्थेवि हु जइ कहवि कोवि मग्गइ कवड्डियं काणं। तो बद्धदंतसगडो मउव्व चिट्ठामि निचिट्ठो ॥१७६॥
ता तं कह मं पत्थसि सालिप्पभिईणि इय मुणंतीवि। एवं वालालुंबिं काउं सिट्ठी ठिओ मोणी ॥१७७॥
परहट्टाओ अह सिट्ठिणीवि आणेवि सालिमाईयं। जा पयइ ताव सिट्ठीवि भोयणत्थं तहिं पत्तो ॥१७८॥
पुट्ठा य तेण गिहिणी किं वल्ला पगुणिया तए नो वा ? । सा भणइ तुज्झ नियबंधुणो य जोग्गं मए अज्ज ॥१७९॥
वरसालिदालिमाई अन्नं पगुणीकयंति सोऊण। दढकोववसा तेणं पयंपियं देह मह तंपि ॥१८०॥
तो भणइ सावि सिट्ठिं खणमेगं एवमेव चिट्ठेह। घेउरघाणदुगं जा पएमि इय निसुणिउं सहसा ॥१८१॥
नीसहकरप्पहारेण पहणिऊणं पुणो पुणो हिययं। दुव्वयणाइं तह जंपिऊण गिहिणीए समुहाइं ॥१८२॥
चिंतइ हद्धी अत्थो एमेव मुहाए गलइ मह गेहे। तो खेयमुव्वहंतो सुत्तो गंतूण गिहमज्झे ॥१८३॥
अह दव्वव्वयसंजणियहिययसंघट्टघट्टियविवेओ। परिमुक्को पाणेहिं सो किविणपियामहो सिट्ठी ॥१८४॥
अह सिट्ठिणीवि निप्पाइऊण वररसवइं समग्गंपि। भरिऊण चउक्कदुगं दाऊणं आसणाइं च ॥१८५॥

कष्टेनानेन मया लक्ष्मीः समुपार्जिता न किं जानासि। यच्छिशिरे हिमप्रायेऽपि चरमयामे रजन्याः ॥१७२॥
उत्तीर्य गुरुसरितं परतीरे काष्ठभारकं गृहीत्वा। यथा नापि पश्यति कोपि खलु तथा तुभ्यमर्पयन्नासम् ॥१७३॥
नीरमपि खलु रजन्यामानयन्, मा कुत्रापि ममार्थः। प्राणत्यागेऽपि व्रजतु खण्डनदलनादिगृहकर्मणि ॥१७४॥
यो मयोपार्जित इह कररुहघर्षणेन चरणघर्षेण। ग्रीष्मोष्मतप्ततनुना तैलकणादीनां वहनेन ॥१७५॥
धर्मार्थेऽपि खलु यदि कथमपि कोपि मार्गयति कपर्दिकां काणाम्। ततो बद्धदन्तशकटो मृत इव तिष्ठामि निश्चेष्टः ॥
तस्मात् त्वं कथं मां प्रार्थयसि शालिप्रभृतीनीति जानत्यपि। एवं बालालुम्बीं (?) कृत्वा श्रेष्ठी स्थितो मौनी ॥१७७॥
परहट्टादथ श्रेष्ठिन्यप्यानीय शाल्यादिकम्। यावत् पचति तावत् श्रेष्ठ्यपि भोजनार्थं तत्र प्राप्तः ॥१७८॥
पृष्टा च तेन गृहिणी किं वल्लाः प्रगुणितास्त्वया नो वा ?। सा भणति तव निजबन्धोश्च योग्यं मयाद्य ॥१७९॥
वरशालिसूपाद्यन्नं प्रगुणीकृतमिति श्रुत्वा। दृढकोपवशात् तेन प्रजल्पितं दत्त मह्यं तदपि ॥१८०॥
ततो भणति सापि श्रेष्ठिनं क्षणमेकमेवमेव तिष्ठत। घृतपूरसंघातद्विकं पचामीति श्रुत्वा सहसा ॥१८१॥
निःसहकरप्रहारेण प्रहृत्य पुनः पुनर्हृदयम्। दुर्वचनानि तथा जल्पित्वा गृहिण्याः संमुखानि ॥१८२॥
चिन्तयति हा धिगर्थ एवमेव मुधा गलति मम गेहे। ततः खेदमुद्वहन् सुप्तो गत्वा गृहमध्ये ॥१८३॥
अथ द्रव्यव्ययसंजनितहृदयसंघट्टघट्टितविवेकः। परिमुक्तः प्राणैः स कृपणपितामहः श्रेष्ठी ॥१८४॥
अथ श्रेष्ठिन्यपि निष्पाद्य वररसवतीं समग्रामपि। भृत्वा चतुष्कद्विकं दत्त्वाऽऽसने च ॥१८५॥

१ क. तिल्ल। २ ग. °हाइ। ३ क मणिऊ°।

भोयणहेउं कोमलगिराहिं सिट्ठिं पबोहिउं लग्गा। जाव न तीसे पच्चुत्तरंपि सो देइ सावि तओ ॥१८६॥
रुट्ठोत्ति मन्नमाणी सिणेहसारं पयंपिउं जाव। सच्चइ संमुहं ताव भग्गं तारायणं नियइ ॥१८७॥
तो एस मउत्ति विणिच्छिऊण पिहिऊण तह घरदुवारे। मह भोयणं विइन्नं सयंच भुत्तं तओ तीए ॥१८८॥
कहियं मह जह भत्ता एसो तिलतुसतिभागमेत्तंपि। कहवि न कस्सवि दिंतो अंतं पंतं च भुंजंतो ॥१८९॥
एत्तियकाला इण्हिं उक्खुडियं सालिमाइयं नाउं। तुह जोग्गं तो सहसा पुणो पुणो कुट्टियं हिययं ॥१९०॥
सुत्तोच्चिय सिज्जाए मओ अपुत्तो इमो य इह आसि। चउकोडिसामिओ भाय! ता जह न जाइ नो दव्वं॥१९१॥
रायउले, तमुवायं चिंतेमो, किंपि सो इमो चेव। घरमज्झिच्चिय सिट्ठी खिप्पउ उंडाए खड्डाए ॥१९२॥
काऊण किंपि कवडं न मुणिज्जइ जहव हिं इमो अत्थो। इय निच्छिऊण तीए मए य जहचिंतियं विहियं॥१९३॥
अह तीए मदभिमुहं भणियं जह अज्ज निसि पसुत्ताए। जं दिट्ठं सुमिणं तयणुसारओ हं मुणेमि इमं ॥१९४॥
जेह होही मह पुत्तो ता भाय! तुमं इहेव हट्टम्मि। ववहरमाणो चिट्ठसु जाहं पसवामि, इय सोउं॥१९५॥
तीसे उवरोहेणं तहत्ति पडिवज्जियं मए सव्वं। सावि हु कयसिंगारा सहीण पुरओ इमं कहइ ॥१९६॥
वड्ढाविज्जह तुब्भे सिंघलदीवम्मि जाइं वहाणाइं। तुम्हाण भइणिवइणो अवतित्थगयाइं निसुयाइं ॥१९७॥
मह पइपुन्नवसेणं वेलाकूलम्मि ताइं पत्ताइं। तो तयभिमुहो सिट्ठी हरिसेण सयं गओ इण्हिं ॥१९८॥
इय पयडंती सव्वं गमेइ दियहाइं सिट्ठिणी दिट्ठा। अहमवि घरवावारं सव्वं चिंतेमि एत्तो य ॥१९९॥

---

भोजनहेतोः कोमलगीर्भिः श्रेष्ठिनं प्रबोधयितुं लग्ना। यावन्न तस्यै प्रत्युत्तरमपि स ददाति सापि ततः ॥१८६॥
रुष्ट इति मन्यमाना स्नेहसारं प्रगल्प्य यावत्। पश्यति संमुखं तावद् भग्नं ताराकगं पश्यति ॥१८७॥
तत एष मृत इति विनिश्चित्य पिधाय तथा गृहद्वारम्। मह्यं भोजनं वितीर्णं स्वयं च भुक्तं ततस्तया ॥१८८॥
कथितं मम यथा भर्तैष तिलतुषत्रिभागमात्रमपि। कथमपि न कस्यापि ददद् अन्तं प्रान्तं च भुञ्जानः ॥१८९॥
एतावत्कालादिदानीं रुन्वितं शाल्यादिकं ज्ञात्वा। तव योग्यं ततः सहसा पुनः पुनः कुट्टितं हृदयम् ॥१९०॥
सुप्त एव शय्यायां मृतोऽपुत्रोऽयं चेहासीत्। चतुष्कोटिस्वामी भ्रातः! तस्माद्यथा याति नो द्रव्यम् ॥१९१॥
राजकुले, तमुपायं चिन्तयामः कमपि सोऽयमेव। गृहमध्य एव श्रेष्ठी क्षिप्यतां गभीरे गर्ते ॥१९२॥
कृत्वा किमपि कपटं न ज्ञायते यथावध्ययमर्थः। इति निश्चित्य तया मया च यथाचिन्तितं विहितम् ॥१९३॥
अथ तया मदभिमुखं भणितं यथाऽद्य! निशि प्रसुप्तया। यो दृष्टः स्वप्नस्तदनुसारतोऽहं जानामीदम् ॥१९४॥
यथा भविष्यति मम पुत्रस्तस्माद् भ्रातस्त्वमिहैव हट्टे। व्यवहरंस्तिष्ठ यावदहं प्रसूये इति श्रुत्वा ॥१९५॥
तस्या उपरोधेन तथेति प्रतिपन्नं मया सर्वम्। सापि खलु कृतशृङ्गारा सखीनां पुरत इदं कथयति ॥१९६॥
वर्धाप्यध्वे यूयं सिंहलद्वीपे यानि यानानि। युष्माकं भगिनीपतेरपतीर्थगतानि श्रुतानि ॥१९७॥
मत्पतिपुण्यवशेन वेलाकूले तानि प्राप्तानि। ततस्तदभिमुखः श्रेष्ठी हर्षेण स्वयं गत इदानीम् ॥१९८॥
इति प्रकटयन्ती सर्वं गमयति दिवसानि श्रेष्ठिनी दृष्टा। अहमपि गृहव्यापारं सर्वं चिन्तयामि, इतश्च ॥१९९॥

---

१ क. जइ।

सा समयम्मि पसूया परमसुहुत्तम्मि दारयं पवरं । भो माम माम लहु एहि एहि पुणरुत्तमिय भणिरं ॥२००॥
तो तीए सहिज्झीए विम्हियहियियाए लहु समागंतुं। आहूओ हं गेहे गओ य जा तस्स दिट्ठिपहं ॥२०१॥
तो भणिओ तेणाहं भो मामग ! अज्ज दाहिणदिसाए। चिंचणीगाए समीवे मायंगी पसविया अत्थि ॥२०२॥
जाओ य तीए तणओ अहुणा सा ठिव्विऊण तस्स मुहं । पंचत्तं पाविही वहुडिंभदुहेहिं संतत्ता ॥२०३॥
ता तीए दम्मपंचगमप्पसु तं झत्ति तत्थ गंतूण । भणियव्वा य तए सा घयतंदुलमाइयं कुणसु ॥२०४॥
पालसु डिंभं मा मारसुत्ति एयं तहत्ति काऊण । पुणरवि गिहागओ हं सप्पणयं तेणेमं भणियं ॥२०५॥
पच्चभिजाणसि नो वा मामग ! मं सो अहं खु मायंगो । वासियभत्ताईवइयरसंसु संपुच्छणनिमित्तं ॥२०६॥
समयामयनिहिगुरुणा जस्स समीवम्मि पेसिओ सि तुमं। साहम्मिउत्ति काउं तुह भोयणदाणओ तइया॥२०७॥
चिरपुन्नपभावेण य उम्मूढविसूइयाए मरिऊण । अहमिहमुप्पन्नो बद्धपुव्वमणुयाउयत्तेण ॥२०८॥
जो पुण मारिज्जंतो दव्वपयाणेण रक्खिओ तुमए । सो धणसारो सिट्ठी मरिउं मेइणिसुओ जाओ ॥२०९॥
नवपुन्नणज्जणेणं वासियपुन्नक्खएण ता माम ! । धम्मम्मि पमायंतो दिट्ठो तुह अन्नयाए तुमं ॥२१०॥
इय कारणेण तइया भणिओ तं तीए पइदिणंपि इमं । 'वच्छ ! दुहाइं पाविहिसि भुंजिरो वासियं भत्तं' ॥२११॥
तह सूरिणावि धणसारपच्चएण तुज्झ मुणिवि पडिवोहं। तं इह पहिओ मामग ! ता धणसारो दुहं पत्तो॥२१२॥
जह वासियपुन्नुवभुंजणेण तह माम ! तंपि पाविहिसि। जइ धम्मपमायपरो उवभुंजसि वासियं पुन्नं ॥२१३॥

---

सा समये प्रसूता परममुहूर्ते दारकं प्रवरम् । भो मातुल मातुल लघ्वेहि एहि भृशमिति भणितारम् ॥२००॥
ततस्तया प्रातिवेश्मिक्या विस्मितहृदयया लघु समागत्य । आहूतोऽहं गेहे गतश्च जातस्य दृष्टिपथम् ॥२०१॥
ततो भणितस्तेनाहं भो मातुल ! अद्य दक्षिणदिशि । घरट्टिकायाः समीपे मातङ्गी प्रसूतास्ति ॥२०२॥
जातश्च तस्यास्तनयोऽधुना सा विप्रोक्ष्य तस्य मुखम् । पञ्चत्वं प्रापयिष्यति वहुडिम्भदुःखैः संतप्ता ॥२०३॥
तस्मात्तस्यै द्रम्मपञ्चकमर्पय त्वं झटिति तत्र गत्वा । भणितव्या च त्वया सा घृततण्डुलादिकं कुरुष्व ॥२०४॥
पालय डिम्भं मा मारयेत्येतत् तथेति कृत्वा । पुनरपि गृहागतोऽहं सप्रणयं तेनेदं भणितम् ॥ २०५ ॥
प्रत्यभिजानासि नो वा मातुल! मां सोऽहं खलु मातङ्गः । वासितभक्तादिव्यतिकरस्य संप्रश्ननिमित्तम् ॥२०६॥
समयामृतनिधिगुरुणा यस्य समीपे प्रेषितोऽसि त्वम् । साधर्मिक इति कृत्वा तुभ्यं भोजनदानतस्तदा ॥२०७॥
निरपुण्यप्रभावेण चोन्मूढविसूचिकया मृत्वा । अहमिहोत्पन्नो बद्धपूर्वमनुजायुष्कत्वेन ॥ २०८ ॥
यः पुनर्मार्यमाणो द्रव्यप्रदानेन रक्षितस्त्वया । स धनसारः श्रेष्ठी मृत्वा मेदिनीसुतो जातः ॥ २०९ ॥
नवपुण्यानर्जनेन वासितपुण्यक्षयेण तस्मान्मातुल ! । धर्मे प्रमाद्यन् दृष्टस्तवाम्बया त्वम् ॥ २१० ॥
इति कारणेन तदा भणितस्त्वं तया प्रतिदिनमपीदम् । 'वत्स ! दुःखानि प्राप्स्यसि भुञ्जानो वासितं भक्तम्' ॥२११॥
तथा सूरिणापि धनसारप्रत्ययेन तव ज्ञात्वा प्रतिबोधम् । त्वमिह प्रहितो मातुल! तस्माद् धनसारो दुःखं प्राप्तः॥२१२॥
यथा वासितपुण्योपभोगेन तथा मातुल ! त्वमपि प्राप्स्यसि । यदि धर्मप्रमादपर उपभुङ्क्षे वासितं पुण्यम् ॥२१३॥

---

१ ख. °हिज्झीए । २ क, तेण.भणिओ हं°।

इय सुणिवि विम्हियमणो चिंतेमि अहो इमं महच्छरियं। जं तद्दइजायस्सवि इमस्स इय वयणविन्नासो ॥२१४॥
ता किं सच्चमसच्चं इमंति पुच्छामि किंपि अइसइणं। इय संकप्पपरो हं जा संचिट्ठामि ता तत्थ ॥२१५॥
समयामयनिहिसूरी सो चेव समागउत्ति लोआओ। निसुयं तस्स समीवे गओ तओ ते इमं पुट्ठा ॥२१६॥
पुव्वुत्तवइयरं, तेहिं जंपियं भद्द सव्वमवि सच्चं। जं तुह भइणिसुएणं पयंपियं, तो मए भणियं ॥२१७॥
किं पहु मायंगेणं पुन्नं समुवज्जियं जओ जाओ। चउकोडीणं सामी एसो, तो तेण इय कहियं ॥२१८॥
चउरूवगे वएऊण तेण केणावि सुद्धभावेण। साहम्मिउत्ति काउं दिन्नं तुह भोयणं तइया ॥२१९॥
तं जेण तस्स चउकोडिदविणभावेण परिणया, एत्तो। भणियं मए कहं पहु तस्सिण्हिं वयणसत्तीवि? ॥२२०॥
तेण भणियं इमंपि हु निसुणसु, तइया गयस्स गेहम्मि। दिवसस्स पढमजामे से मूढविसूइया जाया ॥२२१॥
संखुद्धमाणसेणं सरिओ तो सिद्धचेडओ तेण। तत्थागओ य पुट्ठो किं मह संपइ चरिमसमओ? ॥२२२॥
जो एवं संजाया विसूइया मज्झ, सो भणइ एवं। तो पुट्ठं मरिऊणं उप्पज्जिस्सं अहं कत्थ? ॥२२३॥
तेणवि सम्मं अवहिं पउंजिउं साहियं इमं तस्स। जह धणसारसुओ तं होहिसि तो तेणिमं पुट्ठं ॥२२४॥
जह कह जाणंतेणवि नाणेणं सूरिणा मह समीवे। वासियभत्ताईवइयरस्स संपुच्छणनिमित्तं ॥२२५॥
एसो सड्ढो इह पेसिउत्ति सोऊण जंपियं तेण। जह एयस्सवबोहो सूरीहिं इहेव विन्नाओ ॥२२६॥
सो उण धणसारगिहम्मि जायमित्तस्स तुह मुहे होउं। जंपिस्सामि जया हं तइया होहित्ति जंपेउं ॥२२७॥

---

इति श्रुत्वा विस्मितमनाश्चिन्तयाम्यहो इदं महाश्चर्यम्। यत् तदहर्जातस्याप्यस्येति वचनविन्यासः ॥२१४॥
तस्मात् किं सत्यमसत्यमिदमिति पृच्छामि कमप्यतिशयिनम्। इति संकल्पपरोऽहं यावत्संतिष्ठे तावत्तत्र ॥२१५॥
समयामृतनिधिसूरिः स एव समागत इति लोकात्। श्रुतं तस्य समीपे गतस्ततस्ते इमं पृष्टाः ॥२१६॥
पूर्वोक्तव्यतिकरं, तैर्जल्पितं भद्र सर्वमपि सत्यम्। यच्च भागिनीसुतेन प्रजल्पितं, ततो मया भणितम् ॥२१७॥
किं प्रभो मातङ्गेन पुण्यं समुपार्जितं यतो जातः। चतुष्कोटीनां स्वाम्येषः, ततस्तेनेति कथितम् ॥२१८॥
चतूरूपकान् वीत्यं तेन केनापि शुद्धभावेन। साधर्म्मिक इति कृत्वा दत्तं तुभ्यं भोजनं तदा ॥२१९॥
ते येन तस्य चतुष्कोटिद्रविणभावेन परिणताः, इतः। भणितं मया कथं प्रभो तस्येदानीं वचनशक्तिरपि? ॥२२०॥
तेन भणितमिदमपि खलु शृणु, तदा गतस्य गृहे। दिवसस्य प्रथमयामे तस्य मूढविसूचिका जाता ॥२२१॥
संक्षुभ्यमानसेन स्मृतस्ततः सिद्धचेटकस्तेन। तत्रागतश्च पृष्टः किं मम संप्रति चरमसमयः? ॥२२२॥
यत एवं संजाता विसूचिका मम, स भणत्येवम्। ततः पृष्टं मृत्वोत्पत्स्येऽहं कुत्र? ॥२२३॥
तेनापि सम्यगवधिं प्रयुज्य कथितमिदं तस्मै। यथा धनसारसुतस्त्वं भविष्यसि ततस्तेनेदं पृष्टम् ॥२२४॥
यथा कथं जानतापि ज्ञानेन सूरिणा मम समीपे। वासितभक्तादिव्यतिकरस्य संप्रश्ननिमित्तम् ॥२२५॥
एष श्राद्ध इह प्रेषित इति श्रुत्वा जल्पितं तेन। यथैतस्यावबोधः सूरिभिरिहैव विज्ञातः ॥ २२६ ॥
स पुनर्धनसारगृहे जातमात्रस्य तव मुखे भूत्वा। जल्पिष्यामि यदाऽहं तदा भविष्यतीति जल्पित्वा ॥२२७॥

---

१ व्ययं कृत्वा। २ अवबोधः।

नियठाणम्मि गओ सो तइया इण्हिं तु अवसरं नाउं। अवइन्नो तस्स मुहे सोचिय तो जंपइ इमोत्ति ॥२२८॥
इय सोउं भववासुव्विग्गेणं तस्स चेव पासम्मि । नवपुन्नज्जणहेउं पडिवन्ना सव्वओ विरई ॥२२९॥
एक्कारस अंगाइं अहिज्जिऊण कमेण संपत्तो । गीयत्थो विहरंतो बहुवरिसेहिं सुहागपुरे ॥२३०॥
तो सो मह भइणिसुओ समागओ मज्झ वंदणनिमित्तं । तप्पुरओ आरद्धा मएवि सदेसणा एवं ॥२३१॥
भो सव्वहा असारे संसारे सयलदुक्खनिलयम्मि। तं कीस वससि उज्जमपरम्मुहो धम्मविसयम्मि? ॥२३२॥
किं एत्थ चउगईसुवि सुक्खं दिट्ठं तए कहिं, अहवा । मरणम्मि अभयवत्तं पत्तं तुमए कयंताओ? ॥२३३॥
किंवाजरामरत्ते देवेणं दाणवेणव विइन्नो । तुज्झ वरो, इह अहवा मणिमंतोसहिबलं किंपि ? ॥२३४॥
किं नो पिच्छसि सयलं जियलोयं विसरिसं पकुव्वंती । जररक्खसी हठेणं सुइवीरियपमुहहरणेण ? ॥२३५॥
ता चयसु पमायं सव्वहावि अंगीकरेसु जइधम्मं । जइ सिद्धिवहूपरिरंभविब्भमं महसि भो भद्द ॥२३६॥
इय सोउं पडिवन्नो पढमवए चेव तेण जइधम्मो । परिपालिओ य सुचिरं पज्जंते अणसणं काउं ॥२३७॥
संपत्तो सोहम्मे तत्थाहं पढमओ समुप्पन्नो । इय जह जिणधम्माओ पत्तो सग्गो तहा कहियं ॥२३८॥
इय सोउं विणयपुरस्सरेण संगामसूरराएण । देवीए चंदलेहाए संजुएणं सुरसमीवे ॥२३९॥
सम्मत्तेणं जुत्तो गहिओ बारसविहोवि गिहिधम्मो । सुरजुयलंपि हु एत्तो वच्चइ सोहम्मकप्पम्मि ॥२४०॥
कालक्कमेण तत्तो चविउं देवीए चंदलेहाए । समगं गब्भत्ताए उप्पन्नं पुन्नसमयम्मि ॥२४१॥
सावि पसूया पुत्तं कन्नं च तओ य नरवरिंदेण । बारस दिणाइं विहिअं वद्धावणयं पमोएण ॥२४२॥

---

निजस्थाने गतः स तदेदानीं त्ववसरं ज्ञात्वा । अवतीर्णस्तस्य मुखे स एव ततो जल्पत्ययमिति ॥२२८॥
इति श्रुत्वा भववासोद्विग्नेन तस्यैव पार्श्वे । नवपुण्यार्जनहेतोः प्रतिपन्ना सर्वतो विरतिः ॥२२९॥
एकादशाङ्गान्यधीत्य क्रमेण संप्राप्तः । गीतार्थो विहरन् बहुवर्षैः शुभाकपुरे ॥२३०॥
ततः स मम भागिनीसुतः समागतो मम वन्दननिमित्तम् । तत्पुरत आरब्धा मयापि सद्देशनैवम् ॥२३१॥
भोः सर्वथाऽसारे संसारे सकलदुःखनिलये । त्वं कस्माद् वसस्युद्यमपराङ्मुखो धर्मविषये ? ॥२३२॥
किमत्र चतुर्गतिष्वपि सौख्यं दृष्टं त्वया क्वाथवा । मरणेऽभयवत्त्वं प्राप्तं त्वया कृतान्तात् ? ॥२३३॥
किंवाऽजरामरत्वे देवेन दानवेन वा वितीर्णः । तुभ्यं वरः, इहाथवा मणिमन्त्रौषधिबलं किमपि-? ॥२३४॥
किं नो पश्यसि सकलं जीवलोकं विसदृशं प्रकुर्वती । जराराक्षसी हठेन स्मृतिवीर्यप्रमुखहरणेन ? ॥२३५॥
तस्मात्त्यज प्रमादं सर्वथाप्यङ्गीकुरु यतिधर्मम् । यदि सिद्धिवधूपरिरम्भविभ्रमं काङ्क्षसि भो भद्र ॥२३६॥
इति श्रुत्वा प्रतिपन्नः प्रथमवयस्येव तेन यतिधर्मः । परिपालितश्च सुचिरं पर्यन्तेऽनशनं कृत्वा ॥२३७॥
संप्राप्तः सौधर्मे तत्राहं प्रथमतः समुत्पन्नः । इति यथा जिनधर्मात् प्राप्तः स्वर्गस्तथा कथितम् ॥२३८॥
इति श्रुत्वा विनयपुरस्सरं संग्रामशूरराजेन । देव्या चन्द्रलेखया संयुतेन सुरसमीपे ॥२३९॥
सम्यक्त्वेन युक्तो गृहीतो द्वादशविधोऽपि गृहिधर्मः । सुरयुगलमपि खल्वितो व्रजति सौधर्मकल्पे ॥२४०॥
कालक्रमेण ततश्च्युला देव्यां चन्द्रलेखायाम् । समकं गर्भतयोत्पन्नं पूर्णसमये ॥२४१॥

उचियसमयम्मि नामं विहियं जयसुंदरोत्ति पुत्तस्स। दुहियाए पुणो जयसुंदरित्ति एत्तो य ताइंपि ॥२४३॥
बहुविहजहिच्छकीलाविलाससुहगहियविग्गहवलाइं। जायाइं अट्ठवच्छरपरियायाइं कमेण तओ ॥२४४॥
सयलकलाकलणकए लेहायरियस्स ताइं विहिपुव्वं। उवणीयाइं रन्ना गहियाउ कलावि कमेण ॥२४५॥
अह अन्नया य जयसुंदरीवि समवयसहीहिं परियरिया। उज्जाणवणे सिरिवीयरायभवणम्मि गंतूण ॥२४६॥
नमिऊण जिणं पुरओ उवविसिय भत्तिनिब्भरा तयणु। कहवि हु लग्गा वीणावायणवावारमायरिउं ॥२४७॥
एत्थंतरे जहिच्छाविहारवावारपरवसं किंपि। किन्नरमिहुणं गयणे वचंतं तं निसामेउं ॥२४८॥
वीणारवाणुसारेण जणियगयणयलतरलगइभंगं। जयसुंदरीसमीवे पत्तं कोऊहलाउलियं ॥२४९॥
तीसे सागयवयणप्पमुक्खपडिवत्तिपयडणपहिट्ठं। उचियासणम्मि रम्मे तो तं मिहुणं समासीणं ॥२५०॥
साहियआगमणपओयणस्स पुरओ य तस्स कुमरीए। विहियं वीणावायणकलाए कोसल्लसव्वस्सं ॥२५१॥
तत्तो काए कलाए तुम्हं कोसल्लसंपया फुरइ ?। इय सबहुमाणवयणाए पसिणियं तीए तं मिहुणं ॥२५२॥
तेणवि गीयकलाकोसल्ले साहियम्मि तयभिमुहं। जयसुंदरीए भणियं तं दंसह मज्झ, तो तेहिं ॥२५३॥
कलकंठकंदलीघोलमाणमिउमहुरमुंदियसरेणं। जयसुंदरिसवणामयपाणसमो थोहिओ विहिओ ॥२५४॥
तालाणुकूलसुललियपयपेसलमुल्लसंतसुंहरायं। सपियाए समं चिय किन्नरेण तो गाइयं गीयं ॥२५५॥

---

सापि प्रसूता पुत्रं कन्यां च ततश्च नरवेरन्द्रेण। द्वादश दिनानि विहितं वर्धापनकं प्रमोदेन ॥२४२॥
उचितसमये नाम विहितं जयसुन्दर इति पुत्रस्य। दुहितुः पुनर्जयसुन्दरीतीतश्च तावपि ॥२४३॥
बहुविधयथेच्छक्रीडाविलाससुखगृहीतविग्रहबलौ। जातावष्टवत्सरपर्यायौ क्रमेण ततः ॥२४४॥
सकलकलाकलनकृते लेखाचार्यस्य तौ विधिपूर्वम्। उपनीतौ राज्ञा, गृहीता कला अपि क्रमेण ॥२४५॥
अथान्यदा च जयसुन्दर्यपि समवय सखीभिः परिकरिता। उद्यानवने श्रीवीतरागभवने गत्वा ॥२४६॥
नत्वा जिनं पुरत उपविश्य भक्तिनिर्भरा तदनु। कथमपि खलु लग्ना वीणावादनव्यापारमाचरितुम् ॥२४७॥
अत्रान्तरे यदृच्छाविहारव्यापारपरवशं किमपि। किन्नरमिथुनं गगने व्रजत् तं निशम्य ॥२४८॥
वीणारवानुसारेण जनितगगनतलतरलगतिभङ्गम्। जयसुन्दरीसमीपे प्राप्तं कौतूहलाकुलितम् ॥२४९॥
तस्याः स्वागतवचनप्रमुख्यप्रतिपत्तिप्रकटनप्रहृष्टम्। उचितासने रम्ये ततस्तन्मिथुनं समासीनम् ॥२५०॥
कथितागमनप्रयोजनस्य पुरतश्च तस्य कुमार्या। विहितं वीणावादनकलायाः कौशलसर्वस्वम् ॥२५१॥
तत कस्यां कलाया युष्माकं कौशलसंपत् स्फुरति ?। इति सबहुमानवचनया प्रश्नितं (पृष्टं)तया तन्मिथुनम्॥२५२॥
तेनापि गीतकलाकौशले कथिते तदभिमुखम्। जयसुन्दर्या भणितं तद् दर्शय मम ततस्ताभ्याम् ॥२५३॥
कलकण्ठकन्दलीघूर्णमानमृदुमधुरमुदितस्वरेण। जयसुन्दरीश्रवणामृतपानसम आलापो (?) विहितः ॥२५४॥
तालानुकूलसुललितपदपेशलमुल्लसच्छुभरागम्। स्वप्रियया सममेव किन्नरेण ततो गीतं गीतम् ॥२५५॥
तत्र च विस्मयवशाविकसन्नयनेन तेन सगीत। तथैव गुणग्रामस्तथा कथमपि खलु येन तद्वेलम् ॥२५६॥

---

१ ग मीए। २ ख महि°। ३ ग साहि°। ४ क सुह।

तत्थ य विम्हयवसवियसमाणनयणेण तेण संगीओ। तुह चेव गुणग्गामो तह कहवि हु जेण तव्वेलं ॥२५६॥
रइरमणसरासणबाणवरिसणज्झासठाणमणुपत्ता। जयसुंदरी सुणंती तमसरिसं तुह गुणग्गामं ॥२५७॥
तो तक्खणेण मुच्छानिमीलियच्छिमहीयलुच्छंगे। अच्छुक्कुत्थरियमहल्लबाहभरनीसहा पडिया ॥२५८॥
तो से सहीओ काओवि हिंयं मद्दंति काओवि कुणंति। सिरिखंडरसनिसेयं काओवि वीयंति वियणेहिं॥२५९॥
परियणकरुणाइव तो कहंपि विविहोवयारविहवेण। पच्चागयचेयन्ना संजाया सा ससंकमुही ॥२६०॥
एत्थंतरम्मि बहवे समागया खेयरा तहिं भवणे। जिणपडिमं पणमेउं एयावत्था य सा तत्थ ॥२६१॥
दिट्ठा उत्तरसेढीवइणो तणएण कणयचूडेण। तो सो तव्वेलं चिय गहिओ मयणग्गहेण दढं ॥२६२॥

किं बहुणा,

फुट्टंति हारमुत्तामणीउ लायव्व जम्मि सयखंडं। सो दाहजरो सहसा वियंभिओ तस्स देहम्मि ॥२६३॥
जयसुंदरीवि एत्तो कहवि हु संवाहिउं सहियणेण। नियपिउगिहम्मि नीया तत्थवि तुममेव चिंतंती ॥२६४॥
न रसं रसेइ न रवं सुणेइ न हु गंधयं च गेण्हेइ। नय रूवंपि निरूवइ न किंपि फासंपि सा मुणइ ॥२६५॥
एत्थंतरम्मि संगामसूररायस्स पासमल्लीणो। सिरिकणयचूडपियरेण पेसिओ महुयरो दूओ ॥२६६॥
अब्भागयजणपडिवत्तिनिउणरन्नावि दाविय विउलं। कणयमयमासणं तस्स सोवि नमिऊण उवविट्ठो ॥२६७॥
तो दूएणं भणियं जह एवं भणइ कणयचूडपिया। वियरिज्जउ जयसुंदरिकन्ना सिरिकणयचूडस्स ॥२६८॥

---

रतिरमणशरासनबाणवर्षणाध्यासस्थानमनुप्राप्ता। जयसुन्दरी शृण्वती तमसदृशं तव गुणग्रामम् ॥२५७॥
ततस्तत्क्षणेन मूर्च्छानिमीलिताक्षिमहीतलोत्सङ्गे। अक्षिकूपतुलोत्स्तृतमहाबाष्पभरनिःसहा पतिता ॥२५८॥
ततस्तस्याः सख्यः का अपि हृदयं मर्दयन्ति का अपि कुर्वन्ति। श्रीखण्डरसनिषेकं का अपि वीजन्ति व्यजनैः।२५९।
परिजनकरुणयेव ततः कथमपि विविधोपचारविभवेन। प्रत्यागतचैतन्या संजाता सा शशाङ्कमुखी ॥२६०॥
अत्रान्तरे बहवः समागताः खेचरास्तस्मिन् भुवने। जिनप्रतिमां प्रणन्तुमेतदवस्था च सा तत्र ॥२६१॥
दृष्टोत्तरश्रेणीपतेस्तनयेन कनकचूडेन। ततः स तद्वेलमेव गृहीतो मदनग्रहेण दृढम् ॥२६२॥

किं बहुना,

स्फुटन्ति हारमुक्तामणयो लाता इव यस्मिन्शतखण्डम्। स दाहज्वरः सहसा विजृम्भितस्तस्य देहे ॥२६३॥
जयसुन्दर्यपीतः कथमपि किल संवाह्य सखीजनेन। निजपितृगृहे नीता तत्रापि त्वामेव चिन्तयन्ती ॥२६४॥
न रसं रसति न रवं शृणोति न खलु गन्धं च गृह्णाति। नच रूपमपि निरूपयति न कमपि स्पर्शं च सा जानाति॥२६५॥
अत्रान्तरे संग्रामशूरराजस्य पार्श्वमालीनः। श्रीकनकचूडपित्रा प्रेषितो मधुकरो दूतः ॥२६६॥
अभ्यागतजनप्रतिपत्तिनिपुणराज्ञापि दापितं विपुलम्। कनकमयमासनं तस्मै सोऽपि नत्वोपविष्टः ॥२६७॥
ततो दूतेन भणितं यथैवं भणति कनकचूडापिता। वितीर्यतां जयसुन्दरी कन्या श्रीकनकचूडाय ॥२६८॥
ततो नरवरेण भणितं रतिमदनयोरिवानयोः संबन्धम्। को न बहु मन्यते किन्तु तस्या जननीह प्रमाणम् ॥२६९॥

तो नरवरेण भणियं रइमयणाणव`रमाण संबंधं। को न वहु मन्नए किंतु तीए जणणी इह पमाणं ॥२६९॥
इय भणिऊणं सम्माणिउं च राया विसज्जिउं दूयं। चंदलेहाए पुव्वुत्तवइयरं साहए सावि ॥२७०॥
पुच्छिस्समहं धूयंति जंपिऊणं तओ समुट्ठेउं। जा जयसुंदरिपासे समागया तो तयं नियइ ॥२७१॥
परिहरियकेलिकमलं करकिसलयगब्भसंठियकवोलं। उवरिनिवडंतअंसुप्पहारथरहरियसिहिणजुयं ॥२७२॥
मिउमहुरालावपरायणाए देवीए चंदलेहाए। जयसुंदरी सप्पणयं पारद्धा पुच्छिउं एवं ॥२७३॥
एयावत्थाए तुह को पुत्ति ! निबंधणं फुडं कहसु। मइ सव्वकज्जचिंतायगाए मा खेयमुव्वहसु ॥२७४॥
तं नत्थि किंपि भुवणत्तयम्मि सयलम्मि जं न मह सज्झं। जं फुरइ वत्थुजायं मह हत्थगयंव सव्वंपि॥२७५॥
इय पुट्ठा सा नहु किंपि देइ पच्चुत्तरं तओ तीए। कहियं जह तुह वरणत्थमागओ संपयं दूओ ॥२७६॥
सिरिकणयचूडहेउं तप्पिउणा पेसिउत्ति सोऊण। बाढं नीससिऊण य पुणोवि धरणीयले पडिया ॥२७७॥
अह तीए सहयरीए विब्भमलेहाए कुमरिजणणीए। कहियं जह राईए किन्नरमिहुणेण गिज्जंतो ॥२७८॥
सिरिसमरसीहराया निसामिओ नूण ता इमा तम्मि। अणुरत्ता,ता जह कहवि तेण सह संगमो होइ॥२७९॥
तइ उज्जमेउ देवी, इय सोऊणं निवेइयं तीए। नियपिययमस्स, तेणवि आहूओ सो खयरदूओ ॥२८०॥
कहियं जहट्ठियं चिय तप्पुरओ नरवरेण, सो भणइ। जइ कहवि कोवि अन्नो परिणेही तुह इमं धूयं॥२८१॥
ता नूण तुज्झ तस्सवि नो कुसलं ता तुमं इमं नाउं। देहि नियकन्नयं कणयचूडखयरस्स अहवावि ॥२८२॥
रणसज्जो होसु लहुं, एही जेणं पभायसमयम्मि। सिरिकणयचूडखयरो बलावि कुमरिं पगिण्हेउं ॥२८३॥

---

इति भणित्वा सम्मान्य च राजा विसृज्य दूतम्। चन्द्रलेखायै पूर्वोक्तव्यतिकरं कथयति सापि ॥२७०॥
प्रस्याम्यहं दुहितरमिति जल्पित्वा ततः समुत्थाय। यावज्जयसुन्दरीपार्श्वे समागता ततस्तां पश्यति ॥२७१॥
परिहृतकेलिकमलां करकिशलयगर्भसंस्थितकपोलाम्। उपरिनिपतदश्रुप्रहारकम्पितस्तनयुगाम् ॥२७२॥
मृदुमधुरालापपरायणया देव्या चन्द्रलेखया। जयसुन्दरी सप्रणयं प्रारब्धा प्रष्टुमेवम् ॥२७३॥
एतदवस्थायास्तव कः पुत्रि ! निबन्धनं स्फुटं कथय। मयि सर्वकार्यचिन्तिकायां मा खेदमुद्वह ॥२७४॥
तन्नास्ति किमपि भुवनत्रये सकले यन्न मम साध्यम्। यत् स्फुरति वस्तुजातं मम हस्तगतमिव सर्वम् ॥२७५॥
इति पृष्टा सा न खलु किमपि ददाति प्रत्युत्तरं ततस्तया। कथितं यथा तव वरणार्थमागतः संप्रति दूतः॥२७६॥
श्रीकनकचूडहेतोस्तत्पित्रा प्रेषित इति श्रुत्वा। बाढं निःश्वस्य च पुनरपि धरणीतले पतिता ॥२७७॥
अथ तस्याः सहचर्या विभ्रमलेखया कुमारीजनन्यै। कथितं यथैतया किन्नरमिथुनेन गीयमानः ॥२७८॥
श्रीसमरसिंहराजो निशमितो नूनं तत इयं तस्मिन्। अनुरक्ता, तस्माद्यथा कथमपि तेन सह संगमो भवेत् ॥२७९॥
तथोद्यच्छतु देवीति श्रुत्वा निवेदितं तया। निजप्रियतमाय, तेनाप्याहूतः स खचरदूतः ॥२८०॥
कथितं यथास्थितमेव तत्पुरतो नरवरेण स भणति। यदि कथमपि कोऽप्यन्यः परिणेष्यति तवेमां दुहितरम्॥२८१॥
ततो नूनं तव तस्यापि नो कुशलं तस्मात्त्वमिदं ज्ञात्वा। देहि निजकन्यकां कनकचूडखचरायाथवापि ॥२८२॥
रणसज्जो भव लघु, एष्यति येन प्रभातसमये। श्रीकनकचूडखचरो बलादपि कुमारीं प्रग्रहीतुम् ॥२८३॥

इय भणिऊणं रुट्ठो दप्पिट्ठो निग्गओ खयरदूओ । कहियं जह वित्तं तह सपिइणो कणयचूडस्स॥२८४॥
रणसामग्गिं काउं समुज्जओ सोवि, तम्मि समयम्मि। मह सविसेसं पूया विहिया संगामसूरेण ॥२८५॥
तस्स कुलदेवया हं खणेण पत्तम्मि समवइण्णम्हि । मह पुरओ विण्णत्तं तेण इमं देवि जह कहवि ॥२८६॥
अम्हाणं कुसलेणं कुमरिं परिणेइ समरसीहनिवो । अक्कमिउं विज्जाहरसिन्नं तह कुणसु लहु देवि॥२८७॥
पडिवज्जिऊण एयं तुज्झ समीवम्मि आगया अहयं। कहियं पओयणं तुह संपइ सह सिविरनियरेण ॥२८८॥
होसु पयाणगपवणो बद्धो पणयंजली मए तुज्झ । इय निसमिऊण सिरिसमरसूरराया वि लहुमेव ॥२८९॥
चउरंगचमूए समं देवीए पभावओ नहपहेण । पत्तो खणेण सिरिरयणसारनयरस्स बाहिम्मि ॥२९०॥
एत्थंतरम्मि नियभुयबलगव्वुग्गारबद्धरणवंछो । पत्तो सह पिउणा तत्थ खेयरो कणयचूडोवि ॥२९१॥
संनद्धियसव्वसुहडं कयबहुपहरणपरिग्गहं लग्गं । अवरोप्परेण सिन्नं वरिसेउं विसिहपब्भारं ॥२९२॥
जा समरसीहखयराण ताव कुलदेवयाए मायाए। सहसच्चिय तल्लोयस्स दंसियं समररंगम्मि ॥२९३॥
पडियं सिरकमलं कणयचूडखयरस्स तस्स तो सिन्नं । दूरं दूरं पलाणं अप्पाणमनायगं नाउं ॥२९४॥
तयणु बलेणं रहिओ एगागी कणयचूडखयरोवि । तब्भयभीओ नट्ठो सव्वं सुत्थं तओ जायं ॥२९५॥
अह सोहणे मुहुत्ते अमंदआणंदसंदोहपुव्वं । पियरेहिं परिदिन्नं परिणइ जयसुंदरीकन्नं ॥२९६॥
सिरिसमरसीहराया तीए समं चिय पुणोवि नियनयरे। आगंतुं विसयसुहं उवभुंजइ जणियजणचोज्जं ॥२९७॥

---

इति भणित्वा रुष्टो दर्पिष्ठो निर्गतः खचरदूतः । कथितं यथा वृत्तं तथा सपितृकाय कनकचूडाय ॥२८४॥
रणसामग्रीं कृत्वा समुद्यतः सोऽपि, तस्मिन् समये । मम सविशेषं पूजा विहिता संग्रामशूरेण ॥२८५॥
तस्य कुलदेवताऽहं क्षणेन पात्रे समवतीर्णाऽऽसम् । मम पुरतो विज्ञप्तं तेनेदं देवि ! यथा कथमपि ॥२८६॥
अस्माकं कुशलेन कुमारीं परिणयेत् समरसिंहनृपः । आक्रम्य विद्याधरसैन्यं तथा कुरुष्व लघु देवि ! ॥२८७॥
प्रतिपद्यैतत् तव समीपमागताऽहकम् । कथितं प्रयोजनं ते संप्रति सह शिविरनिकरेण ॥२८८॥
भव प्रयाणकप्रवणो बद्धः प्रणयाञ्जलिर्मया तुभ्यम् । इति निशम्य श्रीसमरशूरराजोऽपि लघ्वेव ॥२८९॥
चतुरङ्गचम्वा समं देव्याः प्रभावतो नभःपथेन । प्राप्तः क्षणेन श्रीरत्नसारनगराद् बहिः ॥२९०॥
अत्रान्तरे निजभुजबलगर्वोद्गारबद्धरणवाञ्छः । प्राप्तः सह पित्रा तत्र खेचरः कनकचूडोऽपि ॥२९१॥
संनद्धसर्वसुभटं कृतबहुप्रहरणपरिग्रहं लग्नम् । परस्परं सैन्यं वर्षितुं विशिखप्राग्भारम् ॥२९२॥
यावत्समरसिंहखचराणां तावत्कुलदेवतया मायया । सहसैव तल्लोकस्य दर्शितं समररङ्गे ॥२९३॥
पतितं शिरःकमलं कनकचूडखचरस्य तस्य ततः सैन्यम् । दूरं दूरं पलायितमात्मानमनायकं ज्ञात्वा ॥२९४॥
तदनु बलेन रहित एकाकी कनकचूडखचरोऽपि । तद्भयभीतो नष्टः सर्वं सुस्थं ततो जातम् ॥२९५॥
अथ शोभने मुहूर्तेऽमन्दानन्दसन्दोहपूर्वम् । पितृभ्यां परिदत्तां परिणयति जयसुन्दरीकन्याम् ॥२९६॥
श्रीसमरसिंहराजस्तया सममेव पुनरपि निजनगरे । आगम्य विषयसुखमुपभुङ्क्ते जनितजनाश्चर्यम् ॥२९७॥

---

१ क ख. सयं । २ क. ख. संनिहि° । ३ ख. पुरव्व, ग. पुरव्व° । ४ क. °पि दि° ।

अह अन्नया य जयसुंदरीवि रयणीए चरिमजामम्मि। चिट्ठइ सुहप्पसुत्ता जा ता पिच्छइ इमं सुमिणं ॥२९८॥
केणवि पहाणपुरिसेण दिव्वालंकारकलियदेहेणं । नियसियदिव्वदुगूलजुयल१हिहणियतिमिरेण ॥२९९॥
किल मज्झ महारयणं पाणिप्पणयीकयंति तं दट्ठुं । विम्हयपवाहवुड्ढंतमाणसा उट्ठिया तयणु ॥३००॥
साहइ पियस्स सोवि हु तयभिमुहं भणइ देवि ! एएण। सुमिणेण पिसुणिया तुह नूणं पुत्तस्स संपत्ती ॥३०१॥
हरिसवियसंतनयणाए पुलयपरिकलियकायलइयाए । एवंति होउ तीए पइणो बहु मन्नियं वयणं ॥३०२॥
अह धम्मकम्मनिम्मवणउज्जया दुगुणजणियसुहविहवा । जयसुंदरीवि गब्भं महग्घसोहग्गमुव्वहइ ॥३०३॥
निरुवमगरिमालंकियपओहराणं सिरिं समक्कमिउं । सामरिसं उयरसिरी पवड्ढए तीए अणुदियहं॥३०४॥
दमदाणदयापमुहा तीए सरीरे विसेसओ वसिया । गब्भगयसुअनिहालणकोऊहलतरलियव्व गुणा॥३०५॥
अह अग्गहणियपमुहं महूसवं अणिहवित्तु नियसमए । पडिपुन्नदोहला सा सुहं पसूया पसन्नमुही ॥३०६॥
पुत्तं तणुप्पहापहयसूइभवणंतरालतमपसरं । नवदिणमणिव पुव्वा आणंदियजणणिमुहकमलं ॥३०७॥
इत्थंतरम्मि तुरियागमणविसंठुलदुकूलकलियाए । वद्धाविओ सहरिसं चेडीए समरसूरनिवो ॥३०८॥
सुयजम्मनिसामणजणियदुगुणहरिसेण नरवरेणावि । दालिद्दवमद्दकरो महापसाओ कओ तीसे ॥३०९॥
वद्धावणयं नियविहवमहिमगरिमाणुरूवयं तयणु । सिरिसमरसीहरन्ना पयट्टियं अइमहारंभं ॥३१०॥
तम्मि य समइक्कंते महाविभूईए मासपज्जंते । नंदिसेणुत्ति नामं रन्ना विहियं नियसुयस्स ॥३११॥

---

अथान्यदा च जयसुन्दर्यपि रजन्याश्चरमयामे । तिष्ठति सुखप्रसुप्ता यावत्तावत् पश्यतीमं स्वप्नम् ॥२९८॥
केनापि प्रधानपुरुषेण दिव्यालङ्कारकलितदेहेन । निजसितदिव्यदुकूलयुगलप्रतिहततिमिरेण ॥२९९॥
किल मह्यं महारत्नं पाणिप्रणयीकृतमिति तद् दृष्ट्वा । विस्मयप्रवाहमज्जन्मानसोत्थिता तदनु ॥३००॥
कथयति प्रियाय सोऽपि च तदभिमुखं भणति देवि ! एतेन । स्वप्नेन कथिता तव नूनं पुत्रस्य संप्राप्तिः॥३०१॥
हर्षविकसन्नयनया पुलकपरिकलितकायलतिकया । एवमिति भवतु तया पत्युर्बहु मतं वचनम् ॥३०२॥
अथ धर्मकर्मनिर्मापनोद्यता द्विगुणजनितसुख (शुभ) विभवा। जयसुन्दर्यपि गर्भमहर्घ्यसौभाग्यमुद्वहति॥३०३॥
निरुपमगरिमालङ्कृतपयोधरयोः श्रियं समाक्रम्य । सामर्षमुदरश्रीः प्रवर्धते तस्या अनुदिवसम् ॥३०४॥
दमदानदयाप्रमुखास्तस्याः शरीरे विशेषत उषिताः । गर्भगतसुतनिभालनकौतूहलतरलिता इव गुणाः ॥३०५॥
अथाग्राह्णिकप्रमुखं महोत्सवमनुभूय निजसमये । परिपूर्णदोहदा सा सुखं प्रसूता प्रसन्नमुखी ॥३०६॥
पुत्रं तनुप्रभाप्रहतसूतिभवनान्तरालतमःप्रसरम् । नवदिनमणिमिव पूर्वानन्दितजननीमुखकमलम् ॥३०७॥
अत्रान्तरे त्वरितागमनविसंस्थुलदुकूलकलितया । वर्धापितः सहर्षं चेट्या समरशूरनृपः ॥३०८॥
सुतजन्मनिशमनजनितद्विगुणहर्षेण नरवरेणापि । दारिद्र्योपमर्दकरो महाप्रसादः कृतस्तस्याः ॥३०९॥
वर्धापनकं निजविभवमहिमगरिमानुरूपकं तदनु । श्रीसमरसिंहराजेन प्रवर्तितमतिमहारम्भम् ॥३१०॥
तस्मिंश्च समतिक्रान्ते महाविभूत्या मासपर्यन्ते । नन्दिषेण इति नाम राज्ञा विहितं निजसुतस्य ॥३११॥

---

१ ख. दुकून । २ क. पत्तडिया, ख. पवट्टए । ३ ख. सुइ. ग. सुय । ४ क एत्थं° । ५ क. अह नं° । ६ क. °सेणना° ।

लालिज्जंतो मद्दणण्हाणाइपराहिं पंचधाईहिं । मन्ने पियरमणोरहईसाइव सोवि वड्ढेइ ॥३१२॥
तस्स य वयणंतरवासिणीए वाणीए मुत्तियलयव्व । जंपंतस्स सहेलं सुहुमा दसणावली सहइ ॥३१३॥
कुरलकुरलीहिं कलिओ तमालदलसामलो अइसणिद्धो।मउलिकमले पहोलइ चिहुरचओ कोमलो तस्स॥३१४॥
अह सो जहिच्छकीलाविलाससुहगहियविग्गहोवचओ।जाओ य अट्ठवच्छरपरियाओ जणियजणयसुहो॥३१५॥
तो विज्जागहणखमो एसो इय निच्छिउं नरिंदेण । उवणीओ विहिपुव्वं लेहायरियस्स पढणत्थं॥३१६॥
असरिसबुद्धिसमिद्धीए सुगुरुभत्तीए उज्जमेण च । सो थोवदिणेहिं समत्थसत्थपरमत्थविऊ जाओ ॥३१७॥
नियपयपयारपूयं कुणमाणो महियलं समणुपत्तो । सो णवजुव्वणलच्छि सव्वंगमकित्तिमाहरणं ॥३१८॥
मिउसुहुमा रोमलया कवोलपालीसु से समुल्लसिया । मुहकमलपरिमलुग्गारलोललीणालिमालव्व ॥३१९॥
कंचणसिलाविसालं वच्छयलं पिहुसमुन्नयं तस्स । अंतोफुरंतगुणगणपणुल्लियं पिव समुव्वहइ ॥३२०॥
अह सो सयंवरागयपहाणपत्थिवसुयाओऽणेगाओ । परिणाविओ नरिंदेण नंदिसेणो विभूईए ॥३२१॥
कइयावि फारफेणानिलयणं दमइ दुद्दमतुरंगं । गुरुवेयविढत्तं नियजसंव लोयाण दरिसंतं ॥३२२॥
बहुहावभावलडहं कइयावि विलासिणीण सविलासं । लासविहिं स पलोयइ गेयरसायन्नणसयण्हो ॥३२३॥
कररुहकिरणमिसेणं दालिद्दजलंजलिव वियरंतो । कइयावि कुणइ मग्गणजणाण सकरेण दाणविहिं ॥३२४॥
मुत्ताहलाण बाहिं अंतो पुण नियगुणाण मालाए । कुणइ सविभूसणाइं कयावि सुकईण हिययाइं ॥३२५॥

---

लाल्यमानो मर्दनस्नानादिपराभिः पञ्चधात्रीभिः । मन्ये पितृमनोरथेर्ष्ययेव सोपि प्रवर्धते ॥३१२॥
तस्य च वदनान्तरवासिन्या वाण्या मौक्तिकलतेव । जल्पतः सहेलं सूक्ष्मा दशनावली राजते ॥३१३॥
कुरलकुरलीभिः कलितस्तमालदलश्यामलोऽतिस्निग्धः। मौलिकमले प्रघूर्णते चिहुरचयः कोमलस्तस्य ॥३१४॥
अथ स यथेच्छक्रीडाविलाससुखगृहीतविग्रहोपचयः । जातश्चाष्टवत्सरपर्यायो जनितजनकसुखः ॥३१५॥
ततो विद्याग्रहणक्षम एष इति निश्चित्य नरेन्द्रेण । उपनीतो विधिपूर्वं लेखाचार्यस्य पठनार्थम् ॥३१६॥
असदृशबुद्धिसमृद्ध्या सुगुरुभक्त्योद्यमेन च । स स्तोकदिनैः समस्तशास्त्रपरमार्थविज्ञातः ॥३१७॥
निजपदप्रचारपूतं कुर्वन् महीतलं समनुप्राप्तः । स नवयौवनलक्ष्मीं सर्वाङ्गीणमकृत्रिमाभरणम् ॥३१८॥
मृदुसूक्ष्मा रोमलता कपोलपाल्योस्तस्य समुल्लसिता । मुखकमलपरिमलोद्गारलोललीनालिमालेव ॥३१९॥
काञ्चनशिलाविशालं वक्षस्तलं पृथुसमुन्नतं तस्य । अन्तःस्फुरद्गुणगणप्रणोदितमिव समुद्वहति ॥३२०॥
अथ स स्वयंवरागतप्रधानपार्थिवसुता अनेकाः । परिणायितो नरेन्द्रेण नन्दिषेणो विभूत्या ॥३२१॥
कदाचिदपि स्फारफेनानिलाननं दाम्यति दुर्दमतुरङ्गम् । गुरुवेगार्जितं निजयश इव लोकान् दर्शयन्तम् ॥३२२॥
बहुहावभावरम्यं कदाचिदपि विलासिनीनां सविलासम् । लास्यविधिं स प्रलोकते गेयरसाकर्णनसतृष्णः ॥३२३॥
कररुहकिरणमिषेण दारिद्र्यजलाञ्जलिमिव वितरन् । कदाचिदपि करोति मार्गणजनानां स्वकरेण दानविधिम् ॥३२४
मुक्ताफलानां बहिरन्तः पुनर्निजगुणानां मालया । करोति सविभूषणानि कदापि सुकवीनां हृदयानि ॥३२५॥

---

१ क. ग. नव । २ क. जोवण, ख. जोव्वण ।

इय वच्चंते काले नियरज्जे ठाविओ विभूईए । सो नंदिसेणकुमरो रन्ना सिरिसमरसीहेण ॥३२६॥
एक्कारस पडिमाओ सयमवि पडिवज्जिऊण विहिपुव्वं । पालेउं कालेण य जइधम्मधुरंधरो होउं ॥३२७॥
सव्वत्थ अपडिबद्धो काउं छट्ठट्ठमाइतवचरणं । पज्जंतकयाणसणो लंतयकप्पे सुरो जाओ ॥३२८॥
एत्तो य नंदिसेणो नराहिवो निहयसयलपडिवक्खं । परिपालइ तं रज्जं साहियनीसेसगढदुग्गं ॥३२९॥
निवपुंगवाण मउलीसु जस्स सासणसिरी सया वसइ । चूडामणिकरमंजरिमिसेणं कयपउमपयरेसु॥३३०॥
तस्स य माणसविप्फुरणरायहंसी ससंकसमवयणा । सयलंतेउरपमुहा ससिप्पहा पिययमा आसि ॥३३१॥
तीए समं चिरसंचियपुन्नचयं नंदिसेणनरवइणो । विसयसुहं सेवंतस्स पइदिणं वोलए कालो ॥३३२॥
अह देवयाए कप्पियविविहोवाइयसएहिं संजाओ । तीसे पुत्तो से नाम ठावियं धणकुमारोत्ति ॥३३३॥
कालेण य सयलकलाकलावकलणक्खमो य संजाओ । तो विहिपुव्वं रन्ना समप्पिओ सो कलागुरुणो ॥३३४॥
तेणावि तस्स अइसुहुमबुद्धिविणएहिं उज्जमेण च । रंजियहियएण कओ सो सयलकलाकलावविऊ॥३३५॥
जय जीव नंद इच्चाइकोमलालावपेसलं वयणं । न तहा हरिसेइ मणं तस्स जहा सुगुरुसिक्खवियं ॥३३६॥
अहन्नया य अज्झावएण सह नंदिसेणनरवइणो । पायवडियानिमित्तं संपत्तो धणकुमारोवि ॥३३७॥
अह सो कयप्पणामो समुचियठाणे सुहासणासीणो । हरिसियहियएण नराहिवेण भणिओ इमं वयणं॥३३८॥
नीईए वच्छ ! भणियं पयाण परिपालणं नरवईणं । तावच्चिय जा न हवइ नियरज्जधुरंधरो पुत्तो ॥३३९॥

---

इति व्रजति काले निजराज्ये स्थापितो विभूत्या । स नन्दिषेणकुमारो राज्ञा श्रीसमरसिंहेन ॥३२६॥
एकादश प्रतिमाः स्वयमपि प्रतिपद्य विधिपूर्वम् । पालयित्वा कालेन च यतिधर्मधुरन्धरो भूत्वा ॥३२७॥
सर्वत्राप्रतिबद्धः कृत्वा षष्ठाष्टमादितपश्चरणम् । पर्यन्तकृतानशनो लान्तककल्पे सुरो जातः ॥३२८॥
इतश्च नन्दिषेणो नराधिपो निहतसकलप्रतिपक्षम् । परिपालयति तद्राज्यं साधितनिःशेषप्राकारदुर्गम् ॥३२९॥
नृपपुङ्गवानां मौलिषु यस्य शासनश्रीः सदा वसति । चूडामणिकरमञ्जरीमिषेण कृतपद्मप्रकरेषु ॥३३०॥
तस्य च मानसविस्फुरणराजहंसी शशाङ्कसमवदना । सकलान्तःपुरप्रमुखा शशिप्रभा प्रियतमाऽऽसीत् ॥३३१॥
तया समं चिरसंचितपुण्यचयं नन्दिषेणनरपतेः । विषयसुखं सेवमानस्य प्रतिदिनं गच्छति कालः ॥३३२॥
अथ देवतायाः कल्पितविविधोपयाचितशतैः संजातः । तस्याः पुत्रस्तस्य नाम स्थापितं धनकुमार इति ॥३३३॥
कालेन च सकलकलाकलापकलनक्षमश्च संजातः । ततो विधिपूर्वं राज्ञा समर्पितः स कलागुरवे ॥३३४॥
तेनापि तस्यातिसूक्ष्मबुद्धिविनयाभ्यामुद्यमेन च । रञ्जितहृदयेन कृतः स सकलकलाकलापवित् ॥३३५॥
जय जीव नन्देत्यादिकोमलालापपेशलं वचनम् । न तथा हर्षयति मनस्तस्य यथा सुगुरुशिक्षितम् ॥३३६॥
अथान्यदा चाध्यापकेन सह नन्दिषेणनरपतेः । पादपतननिमित्तं संप्राप्तो धनकुमारोऽपि ॥३३७॥
अथ स कृतप्रणामः समुचितस्थाने सुखासनासीनः । हर्षितहृदयेन नराधिपेन भणित इदं वचनम् ॥३३८॥
नीतौ वत्स ! भणितं प्रजानां परिपालनं नरपतीनाम् । तावदेव यावन्न भवति निजराज्यधुरन्धरः पुत्रः ॥३३९॥

---

१ क नउरे० ।

ता वच्छ ! तुमं महब्भुयकयचिरवासं करेसु रज्जसिरिं। नियबाहुवज्जपंजरनिवाससुहियं लहु इण्हिं ॥३४०॥
अणुमन्नसु अवियप्पं च मज्झ संजममहारहारुहणं । सिद्धिपुरंधीसरहसपरिरंभणरसियहिययस्स ॥३४१॥
इय पिउवयणं सो निसमिऊण ताडिज्जमाणगलसरणी । गग्गयगिराए लग्गो विन्नविउं धणकुमारोवि॥ ३४२॥
ताय ! न किंपि हु पिच्छामि कारणं तुज्झ तारिसं अहयं । ता कह दुक्करकम्मम्मि मं निउंजेसि इण्हिंपि॥३४३॥
पडिवक्खपक्खकक्खंतरेसु खित्तो न ताय ! मणयंपि । उवसमिओ पजलंतो पयावदावानलो तुज्झ ॥३४४॥
तिहुयणजणनयणमहारसायणं रूवसंपया तुज्झ । अज्जवि कंदप्पमडप्फखंडणे वहइ पंडिच्चं ॥३४५॥
भुयदंडपयंडबलो भुयणेवि न अत्थि तारिसो कोवि। जो तुह लंघइ मणयंपि भूलयापल्लवविलासं॥३४६॥
अज्जवि समत्थसुपसत्थवत्थुवित्थरविभूसिओ तुज्झ। भंडागारोवि हु धणयजक्खविहवं विडंबेइ ॥३४७॥
अज्जवि य महारणकेलिकम्मकुसलो समुज्जमो ताय!। सो कोवि सहइ तुह जं सहिउं सक्कोवि न हु सक्को॥३४८॥
तत्तो य पसीय तुमं पालसु चिरपालियं नियं रज्जं । समयम्मि पुण कुणंतो धम्मं नाहं निवारिस्सं॥३४९॥
एवं धणकुमरेणं विन्नत्तो नंदिसेणनरनाहो । धम्मुज्जमबद्धरई पुणोवि अणुसासिउं लग्गो ॥३५०॥
जह वज्झो रिउवग्गो समग्गसामग्गियाए रहिएहिं। न तरिज्जइ निग्गहिउं तह अंतरसत्तुसंघोवि ॥३५१॥
तन्निग्गहम्मि य पुणो सामग्गी सयलकरणगामस्स । पउणत्तं, तं तरलं जरकडपूयणिभेउत्तत्थं ॥३५२॥
जम्हा तीएकंतो करणग्गामो जहट्ठियं वत्थुं । परिच्छिदिउं न पारइ बाढं परिवत्तियसरूवो ॥३५३॥

---

तस्माद्वत्स ! त्वं मद्भुजकृतचिरवासां कुरु राज्यश्रियम् । निजबाहुवज्रपञ्जरनिवाससुखितां लघ्विदानीम् ॥३४०॥
अनुमन्यस्वाविकल्पं च मम संयममहारथारोहणम् । सिद्धिपुरन्ध्रीसरभसपरिरम्भणरसिकहृदयस्य ॥३४१॥
इति पितृवचनं स निशम्य ताड्यमानगलसरणिः । गद्गदगिरा लग्नो विज्ञपयितुं धनकुमारोऽपि ॥३४२॥
तात ! न किमपि खलु पश्यामि कारणं तव तादृशमहकम् । तस्मात्कथं दुष्करकर्मणि मां नियुङ्क्षे इदानीमपि?॥३४३॥
प्रतिपक्षपक्षकक्षान्तरेषु क्षिप्तो न तात ! मनागपि । उपशान्तः प्रज्वलन् प्रतापदावानलस्तव ॥३४४॥
त्रिभुवनजननयनमहारसायनं रूपसंपत् तव । अद्यापि कन्दर्पगर्वखण्डने वहति पाण्डित्यम् ॥३४५॥
भुजदण्डप्रचण्डबलो भुवनेऽपि नास्ति तादृशः कोऽपि । यस्तव लङ्घते मनागपि भ्रूलतापल्लवविलासम् ॥३४६॥
अद्यापि समस्तसुप्रशस्तवस्तुविस्ताराविभूषितस्तव । भाण्डागारोऽपि धनदयक्षविभवं विडम्बयति ॥३४७॥
अद्यापि च महारणकेलिकर्मकुशलः समुद्यमस्तात ! । स कोऽपि शोभते तव यं सोढुं शक्रोऽपि न हि शक्तः॥३४८॥
ततश्च प्रसीद त्वं पालय चिरपालितं निजं राज्यम् । समये पुनः कुर्वन् ( ? न्तं ) धर्मं नाहं निवारयिष्ये ॥३४९॥
एवं धनकुमारेण विज्ञप्तो नन्दिषेणनरनाथः । धर्मोद्यमबद्धरतिः पुनरप्यनुशासितुं लग्नः ॥३५०॥
यथा बाह्यो रिपुवर्गः समग्रसामग्र्या रहितैः । न शक्यते निग्रहीतुं तथाऽऽन्तरशत्रुसंघोऽपि ॥३५१॥
तन्निग्रहे च पुनः सामग्री सकलकरणग्रामस्य । प्रगुणत्वं, तत्तरलं जराकृतपिशाचीभयत्रस्तम् ॥३५२॥
यस्मात्तयाऽऽक्रान्तः करणग्रामो यथास्थितं वस्तु । परिच्छेत्तुं न शक्नोति बाढं परिवर्तितस्वरूपः ॥३५३॥

---

१ ख. मभीरत्थं । २ क. तीयाक्कं° ।

ता जा पउणत्तं इंदियाण जावाउयं तह बलं च । ता जुत्तो मह काउं धम्मो समयम्मि जह भणियं ॥३५४॥
"जाव न जरकडपूयणि सव्वंगयं गसइ, जाव न रोयभुयंगु उग्गु निद्दउ डसइ।
ताव धम्मि मणु दिज्जउ किज्जउ अप्पहिउ, अज्ज कि कल्लि पयाणउ जिउ निचप्पहिउ ॥३५५॥"
ता वच्छ! तुमं गिण्हसु रज्जसिरिं मज्झ निव्वियप्पमणो। गुरुसासणपरिपालणमरिहं सुकुलप्पसूयाण ॥३५६॥
इय बहुवियड्ढवयणेहिं जाव अणुसासए धणकुमारं। सिरिनंदिसेणराया धम्मुज्जमदढनिबद्धमई ॥३५७॥
ता मुहमेलियकरकोसपिहियपसरंतदंतकरपसरं। उज्जाणपालियाए विन्नत्तो नंदिसेणनिवो ॥३५८॥
देव! मयरंदमंदिरआरामे सुरसमूहनयचलणो। मुणिमंडलपरियरिओ सिरिनंदणजिणवरो पत्तो ॥३५९॥
इय निसमिऊण तीसे दाऊणं पारितोसियं दाणं। कहकहवि अणिच्छंतंपि ठवइ रज्जम्मि धणकुमरं ॥३६०॥
सिरिनंदिसेणराया समग्गसामग्गियाए परिकलिओ। आरामं पइ चलिओ मुणिपहुपयपणमणनिमित्तं ॥३६१॥
पत्तो य कमेण समुल्लसंतसुहभावभावियमणो सो। पंचविहाभिगमेणं जिणुग्गहे संपविट्ठो य ॥३६२॥
ति पयाहिणीकरेउं भत्तिब्भरुल्लसिरबहलपुलयभरो। चूडामणिचुंबियधरणिमंडलो जिणपए नमिउं ॥३६३॥
आणंदविसेसविसप्पमाणबाहुल्ललोयणो तयणु। पिसुणियसुहमणपरिणामपेसलं थुणिउमारद्धो ॥३६४॥
सविणयनमिरसुरेसरचूडामणिमसिणविहियकमवीढ!। तुज्झ नमो सचराचरजीवोवरिविहियनिक्करुण! ॥
अज्ज चिय कयकिच्चो जाओ हं अज्ज सुचिरचिन्नाइं। पुन्नाइंवि उइयाइं तुह दंसणमागओ जमहं ॥३६६॥
पहु वंचिओ म्हि तमहं एत्तियकालं खु मोहराएण। जं तुह पयकमलजुए नहु रमिओ मज्झ मणभमरो ॥३६७॥

---

तस्माद्यावत्प्रगुणत्वमिन्द्रियाणां यावदायुस्तथा बलं च। तावद्युक्तो मम कर्तुं धर्मः समये यथा भणितम् ॥३५४॥
यावन्न जराकृतपिशाची सर्वाङ्गकं ग्रसति, यावन्न रोगभुजङ्ग उग्रो निर्दयो दशति।
तावद्धर्मे मनो दीयतां क्रियतामात्महितमद्य वा कल्ये प्रयाणकं जीव! नित्यप्रथितम् ॥३५५॥
तस्माद्वत्स! त्वं गृहाण राज्यश्रियं मम निर्विकल्पमनाः। गुरुशासनपरिपालनमर्हं सुकुलप्रसूतानाम् ॥३५६॥
इति बहुविदग्धवचनैर्यावदनुशास्ति धनकुमारम्। श्रीनन्दिषेणराजो धर्मोद्यमदृढनिबद्धमतिः ॥३५७॥
तावन्मुखमेलितकरकोशपिहितप्रसरद्दन्तकरप्रसरम्। उद्यानपालिकया विज्ञप्तो नन्दिषेणनृपः ॥३५८॥
देव! मकरन्दमन्दिरारामे सुरसमूहनतचरणः। मुनिमण्डलपरिकरितः श्रीनन्दनजिनवरः प्राप्तः ॥३५९॥
इति निशम्य तस्यै दत्त्वा पारितोषिकं दानम्। कथंकथमप्यनिच्छन्तमपि स्थापयति राज्ये धनकुमारम् ॥३६०॥
श्रीनन्दिषेणराजः समग्रसामग्रिकया परिकलितः। आरामं प्रति चलितो मुनिप्रभुपादप्रणमननिमित्तम् ॥३६१॥
प्राप्तश्च क्रमेण समुल्लसच्छुभभावभावितमनाः सः। पञ्चविधाभिगमेन जिनावग्रहे संप्रविष्टश्च ॥३६२॥
त्रिः प्रदक्षिणीकृत्य भक्तिभरोल्लसमानबहलपुलकभरः। चूडामणिचुम्बितधरणिमण्डलो जिनपादान् नत्वा ॥३६३॥
आनन्दविशेषविसर्पद्बाहुल्यलोचनस्तदनु। कथितशुभमनःपरिणामपेशलं स्तोतुमारब्धः ॥३६४॥
सविनयनम्रसुरेश्वरचूडामणिमसृणविहितक्रमपीठ!। तुभ्यं नमः सचराचरजीवोपरिविहितनिश्चितकरुण! ॥३६५॥
अद्यैव कृतकृत्यो जातोऽहमद्य सुचिरचीर्णानि। पुण्यान्यप्युदितानि तव दर्शनमागतो यदहम् ॥३६६॥

तइं सोमसमे दिट्ठे रहसुल्लसियस्स सायरस्स महं। पुलयभरो मणिनिवहुव्व सहइ बाहिं विणिक्खित्तो ॥३६८॥
कइ पहु! सिवसिरिसंगो मह दुलहो कहसु संपयं होही। वररायहंसकप्पे मणकमले तइ सणाहम्मि? ॥३६९॥
किंपुण सिवसिरिसंगेवि माणसं मज्झ संपयं विमुहं। तुहगुणगणाणुरत्तं सयावि सरणं तुमं महइ ॥३७०॥
इय जिणपहुणो काउं संथवणं नंदिसेणमहिनाहो। भूमंडलमिलियनिडालमंडलो कुणइ पणिवायं॥३७१॥
करजुयलमिलियकोसो वियसियमुहकमलजायसंतोसो। जिणवयणलीणनयणो जहट्ठाणं तयणु उवविट्ठो ॥
दसणकिरणावलीहिं टिविडिक्कंतोव्व दिसिवहुमुहाइं। सिरिसिरिनंदणजिणपुंगवोवि धम्मं कहइ एवं॥३७३॥
भो भो भवभमिराणं अंतररिउगसियसुद्धबुद्धीणं। दुक्कम्मगलच्छणदुत्थियाण जीवाण सयकालं॥३७४॥
पायं सव्वंपि हु कहवि किंपि संपडइ न उण मणुयत्तं। चिंतारयणंव समीहियत्थसंपायणपवीणं ॥३७५॥
कहकहवि दिव्ववसओ लद्धस्सवि मणुयजम्मरयणस्स। जिणवरवयणनिसामणनिसाणसंगो हवइ दुलहो॥३७६॥
न हु देइ विणा इमिणा मलमलिणमिमं तिरोहियसरूवं। सुगुरुकलायपसंसारहियं जीवाण परमत्थं ॥३७७॥
ता नरवरिंद! तुमए समग्गसामग्गियाए संपन्नं। नरभवरयणं पत्तं परमत्थं गिण्हसु इमेणं ॥३७८॥
इय सिरिनंदणजिणपहुपणीयसुवियड्ढदेसणं सोउं। सिरिनंदिसेणराया तयभिमुहं जंपए एवं ॥३७९॥
जयपहु कुणसु पसायं नियदिक्खादाणओ मह इयाणिं। जइ अत्थि जोग्गया जिणवरेण तो जंपियं एवं॥३८०॥
नरवर चिंतारयणस्स जहमिह महग्घस्स कणयमेव पयं। तह दिक्खारयणस्सवि ठाणं तुम्हारिसा चेव ॥३८१॥

---

प्रभो! वञ्चितोऽस्मि तदहमेतावत्कालं हि मोहराजेन। यत्तव पादकमलयुगे न खलु रतो मम मनोभ्रमरः ॥३६७॥
त्वयि सोमसमे दृष्टे रभसोल्लसितस्य सागरस्य मम। पुलकभरो मणिनिवह इव राजते बहिर्विनिष्क्रान्तः॥३६८॥
कथं प्रभो! शिवश्रीसङ्गो मम दुर्लभः कथय सांप्रतं भविष्यति। वरराजहंसकल्पे मनःकमले त्वया सनाथे? ॥३६९॥
किन्तु शिवश्रीसङ्गेऽपि मानसं मम सांप्रतं विमुखम्। त्वद्गुणगणानुरक्तं सदापि शरणं त्वां काङ्क्षति ॥३७०॥
इति जिनप्रभोः कृत्वा संस्तवनं नन्दिषेणमहीनाथः। भूमण्डलमिलितललाटमण्डलः करोति प्रणिपातम् ॥३७१॥
करयुगलमिलितकोशो विकसितमुखकमलजातसंतोषः। जिनवदनलीननयनो यथास्थानं तदनूपविष्टः॥३७२॥
दशनकिरणावलीभिर्मण्डयन्निव दिग्वधूमुखानि। श्रीश्रीनन्दनजिनपुङ्गवोऽपि धर्मं कथयत्येवम्॥३७३॥
भो भो भवभ्रमणशीलानामान्तररिपुग्रसितशुद्धबुद्धीनाम्। दुष्कर्मकलक्षणदुःस्थितानां जीवानां सदाकालम्॥३७४॥
प्रायः सर्वमपि हि कथमपि किमपि संपतति न पुनर्मनुजत्वम्। चिन्तारत्नमिव समीहितार्थसंपादनप्रवीणम्॥३७५॥
कथंकथमपि दैववशतो लब्धस्यापि मनुजजन्मरत्नस्य। जिनवरवचननिशमननिशाणसङ्गो भवति दुर्लभः ॥३७६॥
न हि ददाति विनाऽनेन मलमलिनमिदं तिरोहितस्वरूपम्। सुगुरुमणिकारप्रशंसारहितं जीवेभ्यः परमार्थम् ॥३७७॥
तस्माद् नरवरेन्द्र! त्वया समग्रसामग्रिकया संपन्नम्। नरभवरत्नं प्राप्तं परमार्थं गृहाणानेन ॥३७८॥
इति श्रीनन्दनजिनप्रभुप्रणीतसुविदग्धदेशनां श्रुत्वा। श्रीनन्दिषेणराजस्तदभिमुखं जल्पत्येवम् ॥३७९॥
जगत्प्रभो! कुरुष्व प्रसादं निजदीक्षादानतो ममेदानीम्। यद्यस्ति योग्यता, जिनवरेण ततो जल्पितमेवम्॥३८०॥

---

१ ग °इणामं। २ ख. ग. पयं।

मज्झिमउवरिमगेविज्जगम्मि देवो महिड्ढिओ जाओ। दोहत्थपमाणतणू रायरिसिनंदिसेणुत्ति ॥३९५॥
तत्तो अहमिंदसुरलच्छिसच्छवच्छत्थलम्मि हारोव्व । विलसइ अट्ठावीसं अइराई सुहनिमग्गंगो ॥३९६॥
इय सिरिसुपासचरिए समत्थिओ एस पढमपत्थावो । तित्थयरनामकम्मोववायपरिसूअणागब्भो ॥३९७॥
अह सो आउयविगमे तत्तो चविऊण जम्मि ठाणम्मि । उप्पज्जिही तमेत्तो वोच्छं समयाणुसारेण॥३९८॥

॥ इय सिरिसुपासनाहचरिए पढमो भवो बीओ सुरभवो य समत्तो ॥

---

विधिना मासिकसंलेखनया संलिखितनिजशरीरश्च । पञ्चनमस्कारपरायणश्च मृत्वा समाधिना ॥३९४॥
मध्यमोपरिमग्रैवेयके देवो महर्द्धिको जात । द्विहस्तप्रमाणतनू राजर्षिर्नन्दिषेण इति ॥३९५॥
ततोऽहमिन्द्रसुरलक्ष्मीस्वच्छवक्ष स्थले हार इव । विलसत्यष्टाविंशतिं सागरान् सुखनिमग्नाङ्ग ॥३९६॥
इति श्रीसुपार्श्वचरिते समर्थित एष प्रथमप्रस्ताव. । तीर्थङ्करनामकर्मोपपातपरिसूचनागर्भ. ॥३९७॥
अथ स आयुर्विगमे ततश्च्युत्वा यस्मिन् स्थाने । उत्पत्स्यते तदितो वक्ष्ये समयानुसारेण ॥३९८॥

॥ इति श्रीसुपार्श्वनाथचरिते प्रथमो भवः, द्वितीयः सुरभवश्च समाप्तः ॥

---

१ क. सूयगो ।

सुरगिरिकूवक्खंभं जिणमज्जणसलिलसियवडाडोवं । भवजलहिजाणवत्तं जयइ जए माणुसं खेत्तं ॥१॥
तत्थ य जंबुद्दीवो वरकेवलनाणरयणकोडीहिं । लोयालोयव्वइयरमुज्जोयंतो सया सहइ ॥२॥
तत्थ य खेत्तं भरहं तत्थवि लद्धूणं जत्थ दाहिणयं । मज्झिमखंडं कंडंव जंति भविया जवेण सिवं ॥३॥
तत्थत्थि धन्नधणकणयकलियगुरुगामनयरसंकिन्नो । कासित्ति जणवओ जणमणाण संजणियगुरुहरिसो ॥४॥
तम्मि य मंगलनिलया गुरुवित्ता सूरबुहकविसमेया । अंबरसिरिव्व नवरं अणेयरिसिभूसियपएसा ॥५॥
विहिएक्ककोसियपयं पडिमंदिरकेलिहंसरमणीया । पासायपहापडलच्छलेण जा हसइ अमरपुरिं ॥६॥
फणिवइकमढाहिवभुवणवासिदेवेहिं जीइ सयकालं । पिक्खिज्जइ परिहाविवरनिखित्तदिट्ठीहि वरसोहा ॥७॥
जत्थ य गयणंगणलग्गविमलपायारसिहरनियरेहिं । सकलंकोत्ति निरुद्धो न लहइ चंदोवि हु पवेसं ॥८॥
सा तिगचच्चरगोउरचक्कधवलहरजणियवरसोहा । वाणारसित्ति नयरी वित्थिन्ना अत्थि भुवणयले[1] ॥९॥
जम्मि विसयाणुराओ निवस्स सजडत्तणं पसुवइस्स । परलच्छीअहिलासो हरिस्स पंक्खिसु विरूवत्तं ॥१०॥
अह नवरि तत्थ दोसो जं किर गोसम्मि तरुणमिहुणाणं । केलीसुओ पयंपइ रयणीवीसंभभणियाइं ॥११॥
तत्थत्थि सयलदरियारिनियररमणीण अंसुजलहिम्मि । ण्हवियजसरायहंसो सुपइट्ठो नाम नरनाहो ॥१२॥
जस्स समरेसु रेहइ हयगयमयमिलियपरिमलुग्गारा । दढपरियड्ढियजयसिरिकेसकलावोव्व खग्गलया ॥१३॥
जस्स य चाइत्तं सउणसंकुले रणभरम्मिवि गिहेवि । परलोयसाहणट्ठा रेहइ पयडं चिय जयम्मि ॥१४॥

---

सुरगिरिकूपस्तम्भं जिनमज्जनसलिलसितपटाटोपम् । भवजलधियानपात्रं जयति जगति मानुषं क्षेत्रम् ॥१॥
तत्र च जम्बूद्वीपो वरकेवलज्ञानरत्नकोटीभिः । लोकालोकव्यतिकरमुद्योतयन् सदा राजते ॥२॥
तत्र च क्षेत्रं भारतं तत्रापि लब्ध्वा यत्र दक्षिणकम् । मध्यमखण्डं काण्डमिव यान्ति भविका जवेन शिवम् ॥३॥
तत्रास्ति धान्यधनकनककलितगुरुग्रामनगरसंकीर्णः । काशीति जनपदो जनमनसां संजनितगुरुहर्षः ॥४॥
तस्मिंश्च मङ्गलनिलया गुरुवित्ता शूरबुधकविसमेता । अम्बरश्रीरिव नवरमनेकर्षिभूषितप्रदेशा ॥५॥
विहितैककौशिकपदं प्रतिमन्दिरकेलिहंसरमणीया । प्रासादप्रभापटलच्छलेन या हसत्यमरपुरीम् ॥६॥
फणिपतिकमठाधिपभुवनवासिदेवैर्यस्याः सदाकालम् । प्रेक्ष्यते परिखाविवरक्षिप्तदृष्टिभिर्वरशोभा ॥७॥
यत्र च गगनाङ्गणलग्नविमलप्राकारशिखरनिकरैः । सकलङ्क इति निरुद्धो न लभते चन्द्रोपि हि प्रवेशम् ॥८॥
सा त्रिकचत्वरगोपुरचक्रधवलगृहजनितवरशोभा । वाणारसीति नगरी विस्तीर्णास्ति भुवनतले ॥९॥
यस्यां विषयानुरागो नृपस्य सजडत्वं पशुपतेः । परलक्ष्म्यभिलाषो हरेः पक्षिषु विरूपत्वम् ॥१०॥
अथ नवरं तत्र दोषो यत्किल प्रभाते तरुणमिथुनानाम् । केलिशुकः प्रजल्पति रजनिविश्रम्भभणितानि ॥११॥
तत्रास्ति सकलदृप्तारिनिकररमणीनामश्रुजलधौ । स्नपितयशोराजहंसः सुप्रतिष्ठो नाम नरनाथः ॥१२॥
यस्य समरेषु राजति हतगजमदमिलितपरिमलोद्गारा । दृढपरिकृष्टजयश्रीकेशकलाप इव खड्गलता ॥१३॥
यस्य च त्यागित्वं शकुनसंकुले रणभरेपि गृहेपि । परलोकसाधनार्थं राजति प्रकटमेव जगति ॥१४॥

---

१ क पच्चभि कुलकम् । २ ग. सउणाण य विरूव । ३ ग हु । ४ ग सउन ।

जो विबुहपणयचरणोवि गोत्तभेई न, मेइणिपईवि । न हु मायंगो, पज्जुन्नओवि पडिपुन्नसयलंगो ॥१५॥
मित्ताणं उदयगिरी विबुहचओराण ससहरसमाणो । जो सूरो रिउतमसंतईए पहवो तिवग्गस्स ॥१६॥
केलिकुलंव कलाणं गुणरयणाणं च रोहणगिरिव्व । जो दप्पणुव्व छद्दंसणाण लच्छीए जलहिव्व ॥१७॥
जस्सारिनियररमणीओ लुंटिए भूसणे अंणुसयाओ । वच्छत्थलम्मि पयडंति अविरयं नयणजलहारं ॥१८॥
तस्स य पुहई पुहइव्व पवरावत्ता सुवन्नकलिया य । सुपओहरा सुरयणा य पणइणी अत्थि बहुसस्सा ॥१९॥
कुडिलाणं चिहुराणं जीए सीमंतयस्स सरलस्स । पच्छापुरकरणेणं नीइव्व पदंसिया पइणो ॥२०॥
कलियं वरालएहिं नरवइभवणंव जीए भालयलं । विजियट्ठमीससंकं नीसंकं हरइ हिययाइं ॥२१॥
वियसियकुवलयदलदीहविब्भमं जीए नयणजुयलंपि । अलिपडलेहिं भमुहानिहेण सेविज्जए निच्चं ॥२२॥
जीसे नासावंसो सरलो रेहेइ कित्तिथंभोव्व । विहिणो अनन्नसमरूवपयडणुप्पन्नगव्वस्स ॥२३॥
रइपीईण परुप्परईसासंजणियकलहभीएण । जीसे य सवणदोलाजुयंव मयणेण निम्मवियं ॥२४॥
सोहेइ मुहं जलहिव्व जीए लायन्नसलिलपडिपुन्नं । सुरयणकलियं विद्दुमलयाहरं सस्सिरीयं च ॥२५॥
जीसे य कंबुसमकंठकंदले साहइव्व लोयाणं । रेहातियं जयत्तयरमणीयणविजयपरिसंखं ॥२६॥
जीए तणुम्मि आरूढमयणजोहस्स जुव्वणगयस्स । कुंभत्थलंव रेहइ पीणुन्नयकढिणसिहिणजुयं ॥२७॥
कोमलमुणालनाले जीए रेहंति वाहुजुयलम्मि । कमलाइंव कोमलकरयलाइं सरलंगुलिदलाइं ॥२८॥

---

यो विबुधप्रणतचरणोपि गोत्रभेदी न, मेदिनीपतिरपि । न हि मातङ्गः, प्रद्युम्नकोपि परिपूर्णसकलाङ्गः ॥१५॥
मित्राणामुदयगिरिर्विबुधचकोराणां शशधरसमानः । यः सूरो रिपुतमःसंततेः प्रभवस्त्रिवर्गस्य ॥१६॥
केलिकुलमिव कलानां गुणरत्नानां च रोहणगिरिरिव । यो दर्पण इव षड्दर्शनानां लक्ष्म्या जलधिरिव ॥१७॥
यस्यारिनिकररमण्यो लुण्टिते भूषणेऽनुशयात् । वक्षःस्थले प्रकटयन्त्यविरतं नयनजलधाराम् ॥१८॥
तस्य च पृथिवी पृथिवीव प्रवरावर्त्ता सुवर्णकलिता च । सुपयोधरा सुरत्ना च प्रणयिन्यस्ति बहुशस्या ॥१९॥
कुटिलानां चिहुराणां यस्याः सीमन्तकस्य सरलस्य । पश्चात्पुरःकरणेन नीतिरिव प्रदर्शिता पत्युः ॥२०॥
कलितं वरां(वरना)लकैर्नरपतिभवनमिव यस्या भालतलम् । विजिताष्टमीशशाङ्कं निःशङ्कं हरति हृदयानि॥२१॥
विकसितकुवलयदलदीर्घविभ्रमं यस्या नयनयुगलमपि । अलिपटलैर्भ्रूनिभेन सेव्यते नित्यम् ॥२२॥
यस्या नासावंशः सरलो राजते कीर्तिस्तम्भ इव । विधेरनन्यसमरूपप्रकटनोत्पन्नगर्वस्य ॥२३॥
रतिप्रीत्योः परस्परेर्ष्यासंजनितकलहभीतेन । यस्याश्च श्रवणदोलायुगमिव मदनेन निर्मापितम् ॥२४॥
शोभते मुखं जलधिरिव यस्या लावण्यसलिलपरिपूर्णम् । सुरत्नकलितं विद्रुमलताधरं सश्रीकं च ॥२५॥
यस्याश्च कम्बुसमकण्ठकन्दले कथयतीव लोकानाम् । रेखात्रिकं जगत्त्रयरमणीजनविजयपरिसंख्याम् ॥२६॥
यस्यास्तनावारूढमदनयोधस्य यौवनगजस्य । कुम्भस्थलमिव राजते पीनोन्नतकठिनस्तनयुगम् ॥२७॥
कोमलमृणालनाले यस्या राजन्ति बाहुयुगले । कमलानीव कोमलकरतलानि सरलाङ्गुलिदलानि ॥२८॥

---

१ विबुधाः = देवाः, पण्डिताश्च । २ गोत्रः = पर्वतः, वंशश्च । ३ मेदिनी = पृथिवी, मातङ्गी च । ४ प्रद्युम्नकः = अनङ्गः, प्रकृष्टं द्युम्नं धनं यस्य स च ।

तह नाहिदहो जुव्वणघणेण लायन्नवारिणा भरिओ । न हु निट्ठइ जह उल्लिंचिओवि पियनयणकलसेहिं ॥२९॥
जीसे नियंबबिंबस्स कामकीलायलस्स सिहरंव । सहइ सया तणुमज्झं परिगिज्झं मुट्ठिमज्झेण ॥३०॥
लीलाकमलजुयं पिव रेहइ लच्छीए जीए सच्छायं । कमजुयलं ललियंगुलिकलियं नहकेसररसणाहं ॥३१॥
सुकइव्व सुत्तउत्तीए रयणिनाहोव्व पुन्नजोण्हाए । रयणनिहिव्व सुहाए सहइ निवो तीए दइयाए ॥३२॥
जह नवि खणंपि मयणो रईए परिवज्जिओ रइं लहइ । ससिसेहरोवि गोरीए तह विणा तीए नरनाहो ॥३३॥
तीए समं भुंजंतो पंचपयारंपि विसयसुहमणहं । सुइरंपि गयं कालं न मुणइ दोगुंदुयसुरोव्व ॥३४॥
अह अन्नया य भद्दवयअसियपक्खट्ठमीए रयणीए । लीलाए कंचि वेलं दइएण समं गमेऊण ॥३५॥
सुरसरिपुलिणविसाले पल्लंके हंसतूलियसणाहे । परमसुहेण पसुत्ता जा चिट्ठइ रयणिचरिमम्मि ॥३६॥
मज्झिमउवरिमगेविज्जगाउ तो चविय नंदिसेणनिवो । अवयरिओ तग्गब्भे तो सा चउदस नियइ सुमिणे ॥३७॥
दिप्पंतदंतमुसलं कवोलवियलंतमयजलपवाहं । हिमगिरिधवलुत्तुंगं पिच्छइ सुगयं गयं पढमं ॥३८॥
सिहिगलसामलससिमयूलकुडिलसिंगं तुसारकरधवलं । उन्नयखंधवररयणमालियं नियइ वसहवरं ॥३९॥
दीहरकडारकेसरभासुरखंधं छणिंदुकरधवलं । पंचाणणं नियच्छइ गुंजारुणनयणतेइल्लं ॥४०॥
वरकरिकरग्गसंठियसुवन्नकलसेहिं तह ण्हविज्जंतं । पिच्छइ कमलदलच्छिं लच्छि कमलासणनिसन्नं ॥४१॥
मयरंदविंदुसंदोहलुद्धभसलावलीहिं संवलियं । असमसियकुसुमदामं मणोभिरामं पलोएइ ॥४२॥

---

तथा नाभिह्रदो यौवनघनेन लावण्यवारिणा भृतः । नहि निस्तिष्ठति यथोद्रिक्तोऽपि प्रियनयनकलशैः ॥२९॥
यस्या नितम्बबिम्बस्य कामक्रीडाचलस्य शिखरमिव । राजते सदा तनुमध्यं परिग्राह्यं मुष्टिमध्येन ॥३०॥
लीलाकमलयुगमिव राजते लक्ष्म्या यस्याः सच्छायम् । क्रमयुगलं ललिताङ्गुलिकलितं नखकेसरसनाथम् ॥३१॥
सुकविरिव सूक्तोक्त्या रजनिनाथ इव पूर्णज्योत्स्नया । रत्ननिधिरिव सुधया राजति नृपस्तया दयितया ॥३२॥
यथा नैव क्षणमपि मदनो रत्या परिवर्जितो रतिं लभते । शशिशेखरोऽपि गौर्या तथा विना तया नरनाथः ॥३३॥
तया समं भुञ्जानः पञ्चप्रकारमपि विषयसुखमक्षतम् । सुचिरमपि गतं कालं न जानाति दौगुन्दुकसुर इव ॥३४॥
अथान्यदा च भाद्रपदासितपक्षाष्टम्या रजन्याम् । लीलया काञ्चिद्वेलां दयितेन समं गमयित्वा ॥३५॥
सुरसरित्पुलिनविशाले पल्यङ्के हंसतूलिकासनाथे । परमसुखेन प्रसुप्ता यावत् तिष्ठति रजनिचरमे ॥३६॥
मध्यमोपरिमग्रैवेयकाच्चतश्च्युत्वा नन्दिषेणनृपः । अवतीर्णस्तद्गर्भे ततः सा चतुर्दश पश्यति स्वप्नान् ॥३७॥
दीप्यद्दन्तमुशलं कपोलविगलन्मदजलप्रवाहम् । हिमगिरिधवलोत्तुङ्गं पश्यति सुगतं गजं प्रथमम् ॥३८॥
शिखिगलश्यामलशशिशल्ककुटिलशृङ्गं तुषारकरधवलम् । उन्नतस्कन्धवररत्नमालिकं पश्यति वृषभवरम् ॥३९॥
दीर्घकडारकेसरभासुरस्कन्धं क्षणेन्दुकरधवलम् । पञ्चाननं पश्यति गुञ्जारुणनयनतेजस्कम् ॥४०॥
वरकरिकराग्रसंस्थितसुवर्णकलशैस्तथा स्नप्यमानाम् । पश्यति कमलदलाक्षीं लक्ष्मीं कमलासननिषण्णाम् ॥४१॥
मकरन्दबिन्दुसन्दोहलुब्धभ्रमरावलीभिः संवलितम् । असमसितकुसुमदाम मनोभिरामं प्रलोकते ॥४२॥

---

१ ग. उल्लिंचिज्जन्तोवि हि निट्ठइ पि° । २ नियइ = अन्न यानाति । ३ मुणइ गन = गनिर्गम्म तम् ।

जुण्हुज्जोइयभुवणंतरालमभिरमियकुमुयवणसंडं । ससिमंडलं पलोयइ पविसंतं वयणकमलम्मि ॥४३॥
चक्कंगमिहुणसंघडणपच्चलं दलियतिमिररिउपसरं । पवियासियकमलवणं खणं निहालेइ दिणनाहं ॥४४॥
कणयकमणीयकिंकिणिरवमुहलं सियंसुयपडायं । बहुरयणकलियदंडं महाधयं पिच्छए तत्तो ॥४५॥
अमलामयपडिपुन्नं कुवलयमालोवमालियमुहं च । कणयमयपुण्णकलसं विलसंतं पासए पुरओ ॥४६॥
वररायहंसराईविराइयं मवरमीणकयसोहं । पियपयतलंव पिच्छइ सिरिकलियं पउमसरममलं ॥४७॥
हल्लंतमहल्लुव्विल्लिलहरिमालाविइन्नरयणेहिं । दिप्पंततडसणाहं सुरसरिनाहं तओ नियइ ॥४८॥
चीणंसुसमूसियधयविराइयं कणिरकिंकिणीमालं । मुत्ताहलजालविलासभासुरं पिक्खइ विमाणं ॥४९॥
विप्फुरियफाररविकरकरंवियासेसदिसिमुहं तत्तो । रयणुच्चयं विसालं विणियच्छइ मयसिलिच्छी ॥५०॥
निद्धूमतेयपसरं सुपयाहिणजलिरतरलजालाहिं । उज्जोइयभुवणयलं जलणं सक्खं निरिक्खेइ ॥५१॥
एत्थंतरम्मि सव्वेवि वासवा अवहिनाणभावेणं । चलियासणा मुणेउं जिणवरगब्भावयारमहं ॥५२॥
सत्तट्ठपयाइं उट्ठिऊण सक्कत्थएण तयभिमुहं । धरणियलमिलियवरमउलिमंडला तत्थ वंदंति ॥५३॥
पंचसु कल्लाणेसुं गंतव्वमवस्स जिणवरिंदाणं । तियसाहिवेहिं इय निच्छिऊण सव्वेवि संचलिया ॥५४॥
पिहुवच्छत्थलविलसंतपवरमुत्ताकलावकमणीया । रमणीयकणयकुंडलमंडियगंडत्थलाभोगा ॥५५॥
मणिरयणकिरणभासुरकिरीडपरिकलियमउलिमाला य । नियपणइणीहिं सहिया पत्ता सुपइट्ठनिवभवणं ॥५६॥
तत्थ य हरिसवसुब्भवरोमंचचया पयाहिणीकाउं । देविं विणयप्पणया तत्तो संथुणिउमाढत्ता ॥५७॥

---

ज्योत्स्नोद्योतितभुवनान्तरालमभिरमितकुमुदवनषण्डम् । शशिमण्डलं प्रलोकते प्रविशद् वदनकमले ॥४३॥
चक्राङ्गमिथुनसंघटनप्रत्यलं दलिततिमिररिपुप्रसरम् । प्रविकासितकमलवनं क्षणं निभालयति दिननाथम् ॥४४॥
कनककमनीयकिङ्किणीरवमुखरं सितांशुकपताकम् । बहुरत्नकलितदण्डं महाध्वजं पश्यति ततः ॥४५॥
अमलामृतपरिपूर्णं कुवलयमालोपमालितमुखं च । कनकमयपूर्णकलशं विलसन्तं पश्यति पुरतः ॥४६॥
वरराजहंसराजिविराजितं प्रवरमीनकृतशोभम् । प्रियपादतलमिव पश्यति श्रीकलितं पद्मसरोऽमलम् ॥४७॥
चलन्महोद्वेल्लितलहरीमालावितीर्णरत्नैः । दीप्यत्तटसनाथं सुरसरिन्नाथं ततः पश्यति ॥४८॥
चीनांशुसमुच्छ्रितध्वजविराजितं क्वणनशीलकिङ्किणीमालम् । मुक्ताफलजालविलासभासुरं प्रेक्षते विमानम् ॥४९॥
विस्फुरितस्फाररविकरकरम्बिताशेषदिङ्मुखं ततः । रत्नोच्चयं विशालं पश्यति मृगशावाक्षी ॥५०॥
निर्धूमतेजःप्रसरं सुप्रदक्षिणज्वलनशीलतरलज्वालाभिः । उद्द्योतितभुवनतलं ज्वलनं साक्षाद् निरीक्षते ॥५१॥
अत्रान्तरे सर्वेऽपि वासवा अवधिज्ञानभावेन । चलितासना ज्ञात्वा जिनवरगर्भावतारमहम् ॥५२॥
सप्ताष्टपदान्युत्थाय शक्रस्तवेन तदभिमुखम् । धरणितलमिलितमौलिमण्डलास्तत्र वन्दन्ते ॥५३॥
पञ्चसु कल्याणेषु गन्तव्यमवश्यं जिनवरेन्द्राणाम् । त्रिदशाधिपैरिति निश्चित्य सर्वेऽपि संचलिताः ॥५४॥
पृथुवक्षःस्थलविलसत्प्रवरमुक्ताकलापकमनीयाः । रमणीयकनककुण्डलमण्डितगण्डस्थलाभोगाः ॥५५॥
मणिरत्नकिरणभास्वरकिरीटपरिकलितमौलिमालाश्च । निजप्रणयिनीभिः सहिताः प्राप्ताः सुप्रतिष्ठनृपभवनम् ॥५६॥

मोहंधयारयदूमियसमग्गतइलोयपयडणपयंडं । जिणनवदिणयरमुयरेण उव्वहंतीए तुह नमिमो ॥५८॥
उयरेण धरंतीए नररयणमिमं महप्पहं देवि ! । अहरीभूयमसेसं जयंपि तुह रयणगब्भाए ॥५९॥
तुच्छताइ पसिद्धं कलंकमिह नूणमज्जमवणीयं । अन्नाणवि महिलाणं तुमए जिणगब्भधरणेणं ॥६०॥
देवि ! तुमं चिय अग्गेसरा सि भुवणम्मि पुत्तवंतीणं । भवजलहिजाणवत्तं जिणवरमुयरेण वहमाणी ॥६१॥
इय विणयपवरा विविहं संथुणिऊणं जिणिंदवरजणणिं । जिणनाहं गब्भट्ठियं थुणंति तत्तो य भत्तीए ॥६२॥
सयलसुरासुरकिन्नरविज्जाहरनियरनरवरिंदाणं । सामिय ! सामियभुवणोवमग्गवग्गस्स तुज्झ नमो ॥६३॥
तं निक्कारणकरुणायरो सि जिणनाह ! जमिह अवयरिओ । मज्झिमउवरिमगेविज्जगाओ भव्वाण बोहत्थं ॥६४॥
ता अज्ज मज्झिमोवि हु उक्किट्ठयरो इमो मणुयलोओ । जाओ जिण ! तुह गब्भावयारओ नत्थि संदेहो ॥६५॥
इय वयणेहिं थोऊण जिणवरं भत्तिनिब्भरा इंदा । नंदीसरम्मि काउं जिणमहममरालयं पत्ता ॥६६॥
एयाइं दट्ठूणं सव्वुत्तमचिंतियत्थजणगाइं । वरधेणुकप्पपायवचिंतामणिगुणमहग्घाइं ॥ ६७ ॥
पाहाउयतूररवप्पडिबुद्धा सुमिणदंसणसमुत्थं । हरिसंव अमायंतं वियरइ पुलयच्छलेण बहिं ॥ ६८ ॥
तत्तो नमो जिणाणं इय भणिरी रयणिविरमसमयम्मि । पउरयरहरिसकलिया लीलाए मुयइ पल्लंकं ॥६९॥
तो अच्चेऊण जिणिंदपडिममप्पडिमभत्तिसंजुत्ता । संथुणिऊण य सुविसुद्धपवरमुद्दातियाणुगया ॥७०॥
अह साहेइ कमेणं अब्भुअसुमिणाण वइयरं पइणो । आयन्निअ सोवि तओ पमुइयचित्तो भणइ एवं ॥७१॥

---

तत्र च हर्षवशोद्धूरोमाञ्चचयाः प्रदक्षिणीकृत्य । देवीं विनयप्रणतास्ततः संस्तोतुमारब्धाः ॥५७॥
मोहान्धकारदावितसमग्रत्रैलोक्यप्रकटनप्रचण्डम् । जिननवदिनकरमुदरेणोद्वहन्त्यै तुभ्यं नमः ॥५८॥
उदरेण धरन्त्या नररत्नमिदं महाप्रभं देवि ! । अधरीभूतमशेषं जगदपि त्वया रत्नगर्भया ॥५९॥
तुच्छतायाः प्रसिद्धः कलङ्क इह नूनमद्यापनीतः । अन्यासामपि महिलानां त्वया जिनगर्भधरणेन ॥६०॥
देवि ! त्वमेवाग्रेसरासि भुवने पुत्रवतीनाम् । भवजलधियानपात्रं जिनवरमुदरेण वहन्ती ॥६१॥
इति विनयप्रवरा विविधं संस्तुत्य जिनेन्द्रवरजननीम् । जिननाथं गर्भस्थितं स्तुवन्ति ततश्च भक्त्या ॥६२॥
सकलसुरासुरकिन्नरविद्याधरनिकरनरवरेन्द्राणाम् । स्वामिन् ! शमितभुवनोपसर्गवर्गाय तुभ्यं नमः ॥६३॥
त्वं निष्कारणकरुणाकरोऽसि जिननाथ ! यदिहावतीर्णः । मध्यमोपरिमग्रैवेयकाद् भव्यानां बोधार्थम् ॥६४॥
तस्मादद्य मध्यमोऽपि खलूत्कृष्टतरोऽयं मनुजलोकः । जातो जिन ! तव गर्भावतारतो नास्ति सन्देहः ॥६५॥
इति वचनैः स्तुत्वा जिनवरं भक्तिनिर्भरा इन्द्राः । नन्दीश्वरे कृत्वा जिनमहममरालयं प्राप्ताः ॥ ६६ ॥
एतानि दृष्ट्वा सर्वोत्तमचिन्तितार्थजनकानि । वरधेनुकल्पपादपचिन्तामणिगुणमहार्घाणि ॥ ६७ ॥
प्राभातिकतूर्यरवप्रतिबुद्धा स्वप्नदर्शनसमुत्थम् । हर्षमिवामान्तं वितरति पुलकच्छलेन बहिः ॥ ६८ ॥
ततो 'नमो जिनेभ्यः' इति भणित्री रजनिविरामसमये । प्रचुरतरहर्षकलिता लीलया मुञ्चति पल्यङ्कम् ॥६९॥
ततोऽर्चित्वा जिनेन्द्रप्रतिमामप्रतिमभक्तिसंयुक्ता । संस्तुत्य च सुविशुद्धप्रवरमुद्रात्रिकानुगता ॥ ७० ॥

---

१ ख ग °कप्प । २ ग पय ।

होही एयारिससुमिणदंसणे तुज्झ देवि! वरपुत्तो । नियनिरुवक्कमविक्कमअक्कंतसमग्गरिउचक्को ॥७२॥
इअ भणिए भणइ तओ विअसिअसयवत्तसरिसवयणेणं। एवं होउत्ति जिंणिंदसाहुपायप्पसाएण ॥७३॥
तो अणुमया निवेणं हरिसवसुप्पन्नपुलयकलिअंगी । मयगलमंथरगमणा वच्चइ नियवासभवणम्मि ॥७४॥
राया य पहाए सयलगोसकरणीयजायकयकिच्चो । अत्थाणं दाऊणं बहुविहनिवमंतिपरियरिओ ॥७५॥
वाहरइ सिद्धपुत्ते अट्ठंगनिमित्तसत्थसुविअड्ढे । मुणियजिणवयणसारे विसारए सुविणसत्थेसु ॥७६॥
तो ते विअसियसयवत्तकुसुममालावलंबिवच्छथला । घणसारमीसचंदणविलित्तगत्ता कणयरुइणो ॥७७॥
अक्खयहरियालीकलियमउलिणो सन्निअच्छसियवत्था । पडिहारसूइया जंपिऊण कल्लाणवयणाइं॥७८॥
तो आसणेसु विमलच्छवत्थपच्छाइएसु निवसंति । भूवइणाणुन्नाया, पडिवत्तिपुरस्सरं सव्वे ॥ ७९ ॥
सम्माणिऊण तंबोलपुप्फवत्थाइएहिं रायावि । असमचउद्दससुमिणाण वइयरं साहए तेसिं ॥ ८० ॥
तेवि य विम्हियहियया भणंति एएसिमिक्कमिक्कंपि । बहुपुन्नेहिं दीसइ किंपुण सव्वेसिमुवलंभो ॥८१॥
जं एयाइं जिणवरजणणी अह चक्कवट्टिजणणी वा । संपुन्नाइं पिच्छइ इय भणियं सव्वदंसीहिं ॥८२॥
एत्थंतरम्मि नाणी चारणसमणो समागओ तत्थ । विहिणा पुट्ठो रन्ना सुमिणाण फलं कहइ एवं ॥८३॥
तहाहि;–
अविरलगलंतमयसलिलमलिणगंडयलदंतिदंसणओ । बहुदाणपवित्तकरो गयगामी तुह सुओ होही ॥८४॥

---

अथ कथयति क्रमेणाद्भुतस्वप्नानां व्यतिकरं पत्ये । आकर्ण्य सोऽपि ततः प्रमुदितचित्तो भणत्येवम् ॥७१॥
भविष्यत्येतादृशस्वप्नदर्शनेन तव देवि ! वरपुत्रः । निजनिरुपक्रमविक्रमाक्रान्तसमग्ररिपुचक्रः॥ ७२ ॥
इति भणिते भणति ततो विकसितशतपत्रसदृशवदनेन । एवं भवत्विति जिनेन्द्रसाधुपादप्रसादेन ॥७३॥
ततोऽनुमता नृपेण हर्षवशोत्पन्नपुलककलिताङ्गी । मदकलमन्थरगमना व्रजति निजवासभवने ॥७४॥
राजा च प्रभाते सकलप्रभातकरणीयजातकृतकृत्यः । आस्थानं दत्त्वा बहुविधनृपमन्त्रिपरिकरितः ॥७५॥
आह्वयति सिद्धपुत्रानष्टाङ्गनिमित्तशास्त्रसुविदग्धान् । ज्ञातजिनवचनसारान्विशारदान् स्वप्नशास्त्रेषु ॥७६॥
ततस्ते विकसितशतपत्रकुसुममालावलम्बिवक्षःस्थलाः । घनसारमिश्रचन्दनविलिप्तगात्राः कनकरुचयः ॥७७॥
अक्षतहरितालीकलितमौलय आर्द्राच्छसितवस्त्राः । प्रतिहारसूचिता जल्पित्वा कल्याणवचनानि ॥७८॥
तत आसनेषु विमलाच्छवस्त्रप्रच्छादितेषु निवसन्ति । भूपतिनाऽनुज्ञाताः, प्रतिपत्तिपुरस्सरं सर्वान् ॥७९॥
सम्मान्य तम्बोलपुष्पवस्त्रादिके राजापि । असमचतुर्दशस्वप्नानां व्यतिकरं कथयति तेभ्यः ॥८०॥
तेऽपि च विस्मितहृदया भणन्त्येतेषामेकैकमपि । बहुपुण्यैर्दृश्यते किं पुनः सर्वेषामुपलम्भः ॥८१॥
यदेतान् जिनवरजनन्यथ चक्रवर्तिजननी वा । संपूर्णान् पश्यतीति भाणितं सर्वदर्शिभिः ॥८२॥
अत्रान्तरे ज्ञानी चारणश्रमणः समागतस्तत्र । विधिना पृष्टो राज्ञा स्वप्नानां फलं कथयत्येवम् ॥८३॥
तथाहि;–

---

१ क. विणंद। २ क. सिद्धिपु°। ३ ख. तेविय।

पेवरवलसालिसुंदरवसहुन्नयखंधवंधुरो धीरो। सयलसुरासुरवसहो वसहो तह वसहदंसणओ ॥८५॥
भयरहिओ तेयस्सी दुद्धरिसो•रिउगइंदविंदाणं। भविही किसोयरोवि य पंचाणणदंसणाहिंतो ॥८६॥
सुरवरविहियंसुरगिरिसिरम्मि खीरोयजलहिसलिलेहिं। मज्जणयमणुभविस्सइ सिरिअहिसेयावलोएणं॥८७॥
मुहकमलुब्भवउवएसगंधलुद्धेहिं भवियभमरेहिं। निच्चं निसेवणिज्जो सुमणसमालावलोयणओ ॥८८॥
सारयच्छणससिवयणो भवियचओराण जणियमणहरिसो। ससिदंसणेण होही भवियणकुमुयप्पहासयरो॥८९
वयणंसुजालनिम्महियसयलजणहियमोहतिमिरभरो। कुमयगहतेयहरणो सहस्सकिरणस्स पासणओ॥९०॥
लोयग्गपवरपासायसिहरसंजणियअसमसंसोहो। कित्तिपडायाकलिओ धउव्व सुधयस्स पेच्छणओ ॥९१॥
सिवपुरपत्थियवहुजंतुसत्थपत्थाणमंगलघडोव्व। मणवंछियसिद्धिकरो सच्चविए पुन्नकलसम्मि ॥ ९२ ॥
दुहदाहपिवासियसयलभवियनिव्वुइपयाणदुल्ललिओ। पउमालओ विसालो पउमतडायस्स सुमिणेण॥९३॥
गुणगणरयणाहारो गभीरो पवरसत्तसंजुत्तो। करुणमयरसकलिओ रयणायरदंसणे नूणं ॥ ९४ ॥
वेमाणियसुरथुणणारिहो विमाणाओ इत्थ अवयरइ। उत्तत्तकणयवन्नो पवरविमाणम्मि सच्चविए ॥९५॥
तइलोएवि महग्घो दुलहो लोयाण पुन्नरहियाणं। संजणियभुवणभूसो य रयणरासिस्स दंसणओ ॥९६॥
दहिऊणं कम्मवणं सुक्कज्झाणानलेण सयलंपि। भवियाण निविडजडिमं अवणेइ सिहिम्मि दिट्ठम्मि ॥९७॥
किं वहुणा ता होही सत्तमतित्थंकरो सुओ तुम्ह। धम्मवरचक्कवट्टी-लोयालोयप्पयासयरो ॥ ९८ ॥

---

अविरलगलन्मदसलिलमलिनगण्डतलदन्तिदर्शनतः [1] बहुदानपवित्रकरो गजगामी तव सुतो भविष्यति ॥८४॥
प्रवरबलशालिसुन्दरवृषभोन्नतस्कन्धबन्धुरो धीरः। सकलसुरासुरवृषभो वृषभस्तथा वृषभदर्शनतः ॥८५॥
भयरहितस्तेजस्वी दुर्धर्षो रिपुगजेन्द्रवृन्दानाम्। भविष्यति कृशोदरोऽपि च पञ्चाननदर्शनात् ॥८६॥
सुरवरविहितं सुरगिरिशिरसि क्षीरोदजलधिसलिलैः। मज्जनकमनुभविष्यति श्र्यभिषेकावलोकेन ॥८७॥
मुखकमलोद्भवोपदेशगन्धलुब्धैर्भविकभ्रमरैः। नित्यं निषेवणीयः सुमनोमालावलोकनतः ॥८८॥
शारदक्षणशशिवदनो भविकचकोराणां जनितमनोहर्षः। शशिदर्शनेन भविष्यति भविजनकुमुदप्रहासकरः ॥८९॥
वचनांशुजालनिर्मथितसकलजनहृदयमोहतिमिरभरः। कुमतग्रहतेजोहरणः सहस्रकिरणस्य दर्शनतः ॥ ९० ॥
लोकाग्रप्रवरप्रासादशिखरसंजनितासमसंशोभः। कीर्तिपताकाकलितो ध्वज इव सुध्वजस्य दर्शनतः ॥ ९१ ॥
शिवपुरप्रस्थितबहुजन्तुसार्थप्रस्थानमङ्गलघट इव। मनोवाञ्छितसिद्धिकरो दृष्टे पुण्यकलशे ॥ ९२ ॥
दुःखदाहपिपासितसकलभविकनिर्वृतिप्रदानदुर्ललितः। पद्मालयो विशालः पद्मतडागस्य स्वप्नेन ॥९३॥
गुणगणरत्नाधारो गम्भीरः प्रवरसत्त्वसंयुक्तः। करुणामृतरसकलितो रत्नाकरदर्शने नूनम् ॥ ९४ ॥
वैमानिकसुरस्तवनार्हो विमानादत्रावतरति। उत्तप्तकनकवर्णः प्रवरविमाने दृष्टे ॥ ९५ ॥
त्रैलोक्येऽपि महार्घो दुर्लभो लोकानां पुण्यरहितानाम्। संजनितभुवनभूषश्च रत्नराशेर्दर्शनतः ॥ ९६ ॥
दग्ध्वा कर्मवनं शुक्लध्यानानलेन सकलमपि। भविकानां निबिडजडिमानमपनयति शिखिनि दृष्टे ॥९७॥

---

१ ग पवल।

आयन्निऊणमेवं हरिसेण विसज्जिउं नमंसित्ता । नरवइणा मुणिनाहो गओ य हियइच्छियं ठाणं ॥९९॥
तेसिं च सिद्धपुत्ताण दावियं पारितोसियं-दविणं । आसत्तपुरिससंतइदालिद्दविमद्दसंजणयं ॥१००॥
एत्तो देवीभवणं गंतूणं साहियं महीवइणा । चउदससुमिणाण फलं जह कहियं तेहिं सविसेसं ॥१०१॥
सोऊण सुमिणविवरणमुल्लसियासमपमोयजुत्ताए । सुररमणिसरिसवड्ढंतविब्भमाए तओ तीसे ॥१०२॥
तित्थयरपभावेणं दूरयरविलीणरोयनियराए । परिवड्ढिउमारद्धो गब्भो सह देहकंतीए ॥१०३॥
अह सोहिउं पउत्ता देवी गब्भप्पभावओ अहियं । खीरोयजलहिवेलव्व पवरमुत्ताहलसणाहा ॥१०४॥
अंतरपडिबिंबियउग्गमंतनवतरणिकिरणविच्छुरिया । तियसायलनिम्मलकणयसाणुभित्तिव्व अइरुइरा ॥१०५
अब्भंतरपाउब्भुयअसमससिमंडला नहसिरिव्व । फलिहधरणीव अंतरनिहित्तवररयणपब्भारा ॥१०६॥
सुघणपयोहरमंडलपरिमंडियगयणविमलवच्छयला । उल्लसियबलायावलयहासिरी पाउससिरिव्व ॥१०७॥
इय गब्भट्ठियजिणवरपभावपवड्ढंतकंतसव्वंगा । रेहइ नवकप्पदुमलइयव्व मणोहरा देवी ॥१०८॥
अह सुपइट्ठस्स गिहे इंदाएसेण धणवइप्पमुहा । मुंचंति जक्खनियरा मणिरयणसुवन्नदविणभरं ॥१०९॥
बहुविहमणुन्नभोगंगसंचयं तह पसत्थवत्थाणि । विविहाभरणाणि य किरणजालकलियाणि विकिरंति ॥११०॥
अवणिंति वाउदेवीउ कयवरं तत्थ तम्मि समयम्मि । गंधोययधाराधोरणीए वरिसंति तह मेहा ॥१११॥
सव्वाविरिउसिरीओ मुंचंति समंतओ कुसुमवुट्ठिं । आयरिसं दंसंति य जोइसियाणं पुरंधीओ ॥११२॥

---

किं बहुना तस्माद्भविष्यति सप्तमतीर्थङ्करः सुतस्तव । धर्मवरचक्रवर्ती लोकालोकप्रकाशकरः ॥९८॥
आकर्ण्यैवं हर्षेण विसृज्य नमस्यित्वा । नरपतिना मुनिनाथो गतश्च हृदयेप्सितं स्थानम् ॥९९॥
तेभ्यश्च सिद्धपुत्रेभ्यो दापितं पारितोषिकं द्रविणम् । आसप्तपुरुषसंततिदारिद्र्यविमर्दसंजनकम् ॥१००॥
इतो देवीभवनं गत्वा कथितं महीपतिना । चतुर्दशस्वप्नानां फलं यथा कथितं तैः सविशेषम् ॥१०१॥
श्रुत्वा स्वप्नविवरणमुल्लसितासमप्रमोदयुक्तायाः । सुररमणीसदृशवर्धमानविभ्रमायास्ततस्तस्याः ॥१०२॥
तीर्थकरप्रभावेण दूरतरविलीनरोगनिकरायाः । परिवर्धितुमारब्धो गर्भः सह देहकान्त्या ॥१०३॥
अथ शोभितुं प्रवृत्ता देवी गर्भप्रभावतोऽधिकम् । क्षीरोदजलधिवेलेव प्रवरमुक्ताफलसनाथा ॥१०४॥
अन्तःप्रतिबिम्बितोद्गच्छन्नवतरणिकिरणविच्छुरिता । त्रिदशाचलनिर्मलकनकसानुभित्तिरिवातिरुचिरा ॥१०५॥
आभ्यन्तरप्रादुर्भूतासमशशिमण्डला नभःश्रीरिव । स्फटिकधरणिरिवान्तर्निहितवररत्नप्राग्भारा ॥१०६॥
सुघनपयोधरमण्डलपरिमण्डितगगनविमलवक्षस्तला । उल्लसितबलाकावलयहासवती प्रावृट्श्रीरिव ॥१०७॥
इति गर्भस्थितजिनवरप्रभावप्रवर्धमानकान्तसर्वाङ्गा । राजते नवकल्पद्रुमलतिकेव मनोहरा देवी ॥१०८॥
अथ सुप्रतिष्ठस्य गृहे इन्द्रादेशेन धनपतिप्रमुखाः । मुञ्चन्ति यक्षनिकरा मणिरत्नसुवर्णद्रविणभरम् ॥१०९॥
बहुविधमनोज्ञभोगाङ्गसंचयं तथा प्रशस्तवस्त्राणि । विविधाभरणानि च किरणजालकलितानि विकिरन्ति ॥११०॥
अपनयन्ति वायुदेव्यस्तृणाद्युत्करं तत्र तस्मिन् समये । गन्धोदकधाराधोरण्या वर्षन्ति तथा मेघाः ॥१११॥

---

१ ग. °मेयं ।

वंतरवेमाणियभुवणवासिदेवाण पवररमणीओ। देविं थुणंति भत्तीए सासणं तह पडिच्छंति ॥११३॥
जिणजणणीए पुरओ दिसिदेवीओ दसावि गायंति। वीणावेणुमुयंगाइमहुरझुणिं मणहरं गेयं॥११४॥
किं बहुणा;
जय-जीव-नंद-इच्चाइकोमलालावपेसलाहिं सया। सेविज्जइ चेडीहिंव सुररमणीहिं पुहइदेवी ॥११५॥
पिच्छंती नडनाडयपिच्छणयाइं कयाइ, करुणाए। वियरंती दुत्थियाणं कयावि तवणिज्जपुंजाइं॥११६॥
आयन्नंती य पुराणपुरिसचरियाइं सवणसुहयाइं। कइयावि नयरसोहं पिच्छंती सहियणाणुगया ॥११७॥
कुणमाणी कइयावि य नियबंधुवहूजणस्स परिहासं। कइयावि धम्मसंबद्धकहावियारं निसामिंती॥११८॥
परिवालइ तं गब्भं नो अइउण्हेहिं नाइमहुरेहिं। नो अइतित्तेहिं नाइअंबिलेहिं न कडुएहिं ॥११९॥
नो अइकसायएहिं न याइसीएहिं नाइलवणेहिं। सव्वोउयसुहएहिं आहारेहिं पुहइदेवी ॥१२०॥
संपुन्नम्मि य समए सुपइट्ठमहानिवस्स रज्जम्मि। जणयंती कल्लाणं परिपूरियसयलदोहलया ॥१२१॥
जिट्ठस्स बारसीए सियाए रयणीए दुइयजामम्मि। सत्तमतुलरासीए सुपवित्तम्मि य मुहुत्तम्मि ॥१२२॥
उच्चट्ठाणठिएसु रविमंगलसुक्कबुहरविसुएसु। सोमम्मि विसाहत्थे किंदियठाणट्ठियगुरुम्मि ॥१२३॥
बीयव्व नवससंकं अहिणवमुत्ताहलं सुसुत्तिव्व। सुरगिरिधरव्व नवकप्पपायवं पसविया पुत्तं ॥१२४॥
तं दट्ठूणं तिहुयणदिवायरं तेयकंतिपरिकलियं। पुव्वदिसा विव वियसियमुहकमला रेहए देवी ॥१२५

---

सर्वा अपि ऋतुश्रियो मुञ्चन्ति समन्ततः कुसुमवृष्टिम्। आदर्शं दर्शयन्ति च ज्योतिष्काणां पुरन्ध्रयः ॥११२॥
व्यन्तरवैमानिकभुवनवासिदेवानां प्रवररमण्यः। देवीं स्तुवन्ति भक्त्या शासनं तथा प्रतीच्छन्ति ॥११३॥
जिनजनन्याः पुरतो दिग्देव्यो दशापि गायन्ति। वीणावेणुमृदङ्गादिमधुरध्वनि मनोहरं गेयम् ॥११४॥
किं बहुना;
जय-जीव-नन्देत्यादिकोमलालापपेशलाभिः सदा। सेव्यते चेटीभिरिव सुररमणीभिः पृथिवीदेवी ॥११५॥
पश्यन्ती नटनाटकप्रेक्षणकानि कदाचित्, करुणया। वितरन्ती दुःखितेभ्यः कदापि तपनीयपुञ्जान् ॥११६॥
आकर्णयन्ती च पुराणपुरुषचरितानि श्रवणसुखदानि। कदापि नगरशोभां पश्यन्ती सखीजनानुगता॥११७॥
कुर्वाणा कदापि च निजबन्धुवधूजनस्य परिहासम्। कदापि धर्मसंबद्धकथाविचारं निशाम्यन्ती ॥११८॥
*परिपालयति तं गर्भं नो अत्युष्णैर्नातिमधुरैः। नो अतितिक्तैर्नात्याम्लैर्न कटुकैः ॥११९॥*
नो अतिकषायिकैर्न चातिशीतैर्नातिलवणैः। सर्वर्तुकसुखदैराहारैः पृथिवीदेवी ॥१२०॥
संपूर्णे च समये सुप्रतिष्ठमहानृपस्य राज्ये। जनयन्ती कल्याणं परिपूरितसकलदोहदा ॥१२१॥
ज्येष्ठस्य द्वादश्यां सिताया रजन्या द्वितीययामे। सप्तमतुलाराशौ सुपवित्रे च मुहूर्ते ॥१२२॥
उच्चस्थानस्थितेषु रविमङ्गलशुक्रबुधरविसुतेषु। सोमे विशाखास्थे केन्द्रस्थानस्थितगुरौ ॥१२३॥
द्वितीयेव नवशशाङ्कमभिनवमुक्ताफलं सुशुक्तिरिव। सुरगिरिधरेव नवकल्पपादपं प्रसूता पुत्रम् ॥१२४॥

---

१ ग टाह°। २ ग रामिम्मि।

ऐत्थंतरम्मि सहसा आणंदियसयलतिहुअणाभोयं । मंदो सिसिरो सुरही गयणे पवियंभिओ पवणो ॥१२६॥
सचराचरजंतूणं अइसुहओ गरुयविम्हयकरो य । संभूओ नरएसुवि खणमित्तेणं समुज्जोओ ॥१२७॥
पमज्जियंव धरणीए मंडलं तह पहंजणसुरेहिं । उवसंतरेणुनियरं घणेहिं गंधोदयं वुट्ठं ॥१२८॥
उउदेवीओ कुसुमाण पंचवन्नाण पयरमुवणिंति । समकालमग्गिदेवीओ दीवए तत्थ दीवंति ॥१२९॥
सुपइट्ठनिवइभवणे धणयाएसेण जंभगसुरावि । वररयणकणयवसणाभरणसमूहं च वरिसंति ॥१३०॥
देवेहिं देवीहिं इंतेहिं पडिनियत्तमाणेहिं । वाणारसीवि जाया तव्वेलं अमरनयरिव्व ॥१३१॥
एत्तो य सूइकम्मावसरं मुणिऊण ओहिनाणेणं । अट्ठ दिसाकुमरीओ अहलोगाओ तहिं इंति ॥१३२॥
पवरविमाणारूढा चउसामाणियसहस्सपरियरिया । अणिआहिवेहिं सत्तहिं सत्तहिं अणिएहिं संजुत्ता॥१३३॥
अमरकरिकुंभविब्भमपओहराभरणभूसियसरीरा । जिणजणणिसमीवं तक्खणेण एयाओ संपत्ता ॥१३४॥
तं जहा;—

भोगंकरा भोगवई सुभोगा भोगमालिणी । तोयधारा विचित्ता य पुप्फमाला अणिंदिया ॥१३५॥
ति पयाहिणीकरेउं जिणवरजणणिं पराए भत्तीए । सव्वाओवि समकालं थुणंति कलकोइलरवेणं॥१३६॥
कह विय;
नमिमो तिहुयणरमणीसिरभूसणरयणविब्भमे देवि । पयकमलं कोमलललियअंगुलीपवरदलकलियं ॥१३७॥

---

तं दृष्ट्वा त्रिभुवनदिवाकरं तेजःकान्तिपरिकलितम् । पूर्वदिगिव विकसितमुखकमला राजते देवी ॥१२५॥
अत्रान्तरे सहसाऽऽनन्दितसकलत्रिभुवनाभोगम् । मन्दः शिशिरः सुरभिर्गगने प्रविजृम्भितः पवनः ॥१२६॥
सचराचरजन्तूनामतिसुखदो गुरुविस्मयकरश्च । संभूतो नरकेष्वपि क्षणमात्रेण समुद्द्योतः ॥१२७॥
प्रमार्जितमिव धरण्या मण्डलं तथा प्रभञ्जनसुरैः । उपशान्तरेणुनिकरं घनैर्गन्धोदकं वृष्टम् ॥१२८॥
ऋतुदेव्यः कुसुमानां पञ्चवर्णानां प्रकरमुपनयन्ति । समकालमग्निदेव्यो दीपकांस्तत्र दीपयन्ति ॥१२९॥
सुप्रतिष्ठनृपतिभवने धनपादेशेन जृम्भकसुरा अपि । वररत्नकनकवसनाभरणसमूहं च वर्षन्ति ॥१३०॥
देवैर्देवीभिरायद्भिः प्रतिनिवर्तमानैः । वाणारस्यपि जाता तद्वेलममरनगरीव ॥१३१॥
इतश्च सूतिकर्मावसरं ज्ञात्वावधिज्ञानेन । अष्ट दिक्कुमार्योऽधोलोकात् तत्रायन्ति ॥१३२॥
प्रवरविमानारूढाश्चतुःसामानिकसहस्रपरिकरिताः । अनीकाधिपैः सप्तभिः सप्तभिरनीकैः संयुक्ताः ॥१३३॥
अमरकरिकुम्भविभ्रमपयोधराभरणभूषितशरीराः । जिनजननीसमीपं तत्क्षणेनैताः संप्राप्ताः ॥१३४॥
तद्यथा;—

भोगङ्करा भोगवती सुभोगा भोगमालिनी । तोयधारा विचित्रा च पुष्पमालाऽनिन्दिता ॥१३५॥
त्रिः प्रदक्षिणीकृत्य जिनवरजननीं परया भक्त्या । सर्वा अपि समकालं स्तुवन्ति कलकोकिलरवेण ॥१३६॥
कथमिव;

---

१ क. इत्थ° ।

आसंसारं दससुवि दिसासु परिभमउ निब्भरं देवि। सरयनिसायरहरहसियहारधवलो जसो तुज्झ ॥१३८॥
तुमएच्चिय संपत्ता रेहा मज्झम्मि पुत्तवंतीण। जीए नियउयरेणं उव्वूढो सत्तमजिणिंदो ॥ १३९ ॥
इय सुइरं जिणजणणिं नमिउं जंपंति गुरुपमोएण। न हु देवि! भाइयव्वं जं अम्हे दिसिकुमारीओ ॥१४०॥
एयस्स सयलभुवणिक्कसामिणो जिणवरस्स भत्तीए। नियअहिगारणुरूवं जम्मणमहिमं विहिस्सामो ॥१४१॥
इय अणुजाणावेउं जिणजम्मणभवणचउदिसिं विहियं। जोयणमित्तं खित्तं ववगयतणकट्ठरयपत्तं ॥१४२॥
तक्खणविउव्विएणं संवट्टगवाउणा समग्गंपि। दुग्गंधं अवणेउं जिणजणणीए अदूरम्मि ॥ १४३ ॥
गायंतीउ गुरुहरिसवियसियच्छीओ तत्थ चिट्ठंति। एवं उड्ढदिसाओवि देवीओ इंति एयाओ ॥१४४॥

मेहंकरा मेहवई सुमेहा मेहमालिणी। सुवच्छा वच्छमित्ता य वारिसेणा बलाहगा ॥१४५॥
तो वेउव्वियमेहेण महियलं निहयरेणुयं काउं। सोरब्भगुणायड्ढियभमरउलं पुप्फवरिसं च ॥१४६॥
तित्थयरगुणसमूहं अइमहुरसरेण सवणसुहएण। आसन्नम्मि ठियाओ गायंति गुरुप्पमोएणं ॥१४७॥
अह पोरच्छिमरुयगाओ अट्ठ देवीउ दिसिकुमारीओ। नियपरियणसहियाओ एयाओ आगया तत्थ ॥१४८॥

नंदुत्तरा य नंदा आनंदा नंदिवद्धणा। विजया य वेजयंती जयंती चापराजिया ॥१४९॥
दिणहरबिंबसरिच्छं करे करेऊण दप्पणं विमलं। पुव्वदिसि संठियाओ गायंति गुणे जिणिंदस्स ॥१५०॥
अह दाहिणरुयगाओ एवंचिय अट्ठ दिसिकुमारीओ। मुणियजिणजम्मणाओ एयाउ समागयाउ तहिं ॥१५१॥

---

नमामस्त्रिभुवनरमणीशिरोभूषणरत्नविभ्रमे! देवि!। पादकमलं कोमललिताङ्गुलिप्रवरदलकलितम् ॥१३७॥
आसंसारं दशस्वपि दिक्षु परिभ्राम्यतु निर्भरं देवि!। शरन्निशाकरहरहसितहारधवलं यशस्तव ॥१३८॥
त्वयैव संप्राप्ता रेखा मध्ये पुत्रवतीनाम्। यया निजोदरेणोद्व्यूढः सप्तमजिनेन्द्रः ॥१३९॥
इति सुचिरं जिनजननीं नत्वा जल्पन्ति गुरुप्रमोदेन। न खलु देवि! भेतव्यं यद् वयं दिक्कुमार्यः ॥१४०॥
एतस्य सकलभुवनैकस्वामिनो जिनवरस्य भक्त्या। निजाधिकारानुरूपं जन्ममहं विधास्यामः ॥१४१॥
इत्यनुज्ञाप्य जिनजन्मभवनचतुर्दिक्षु विहितम्। योजनमात्रं क्षेत्रं व्यपगततृणकाष्ठरजःपत्रम् ॥१४२॥
तत्क्षणविकुर्वितेन संवर्तकवायुना समग्रमपि। दुर्गन्धमपनीय जिनजनन्या अदूरे ॥१४३॥
गायन्त्यो गुरुहर्षविकसिताक्ष्यस्तत्र तिष्ठन्ति। एवमूर्ध्वदिशोऽपि देव्य आयन्त्येताः ॥१४४॥

मेघङ्करा मेघवती सुमेघा मेघमालिनी। सुवत्सा वत्समात्रा च वारिषेणा बलाहका ॥१४५॥
ततो विकुर्वितमेघेन महीतलं निहतरेणुकं कृत्वा। सौरभ्यगुणाकृष्टभ्रमरकुलं पुष्पवर्षं च ॥१४६॥
तीर्थकरगुणसमूहमतिमधुरस्वरेण श्रवणसुखदेन। आसन्ने स्थिता गायन्ति गुरुप्रमोदेन ॥१४७॥
अथ पौरस्त्यरुचकादष्ट देव्यो दिक्कुमार्यः। निजपरिजनसहिता एता आगतास्तत्र ॥१४८॥

नन्दोत्तरा च नन्दाऽऽनन्दा नन्दिवर्धना। विजया च वैजयन्ती जयन्ती चापराजिता ॥१४९॥
दिनकरबिम्बसदृशं करे कृत्वा दर्पणं विमलम्। पूर्वदिशि संस्थिता गायन्ति गुणाञ्जिनेन्द्रस्य ॥१५०॥
अथ दक्षिणरुचकादेवमेवाष्ट दिक्कुमार्यः। ज्ञातजिनजन्मान एताः समागतास्तत्र ॥१५१॥

---

१ ग. ३।

समाहारा पइन्ना य सुप्पबुद्धा जसोहरा । लच्छीवई भोगवई चित्तगुत्ता वसुंधरा ॥ १५२ ॥
करकमले कलिऊणं भिंगारं सुरहिसलिलपडिपुन्नं । पहुणो दाहिणपासे ठियाओ गायंति गुणनियरं॥१५३॥
अह पच्छिमरुयगठिया पवरविमाणेण दिसिकुमारीओ । अद्वेव भत्तिभरनिब्भराओ एया पविसंति ॥१५४॥
इलादेवी सुरादेवी पुहई पउमावई (तहा ?) । एगनासाऽनवमिया भद्दाऽसोया य अट्ठमा ॥१५५॥
करकमलकलियसुविसालतालियंटाओ दीहरच्छीओ । पच्छिमदिसाठियाओ थुणंति तित्थयरगुणनिवहं१५६
अह उत्तरिल्लरुयगे वत्थव्वाओ दिसाकुमारीओ । अट्ठेव आगयाओ तरुणतरट्टाओ ऐयाओ ॥१५७॥
वारुणी पुंडरीका य मीसकेसा अलंबुका । आसा सव्वप्पहा चेव हिरिदेवी सिरी तहा ॥१५८॥
करकमलकलियसियचामराओ उत्तरदिसिम्मि देवस्स । नमिऊण पुहइदेविं पुव्वकमेणं च चिट्ठंति ॥१५९॥
अह विदिसिरुयगपरिवासिणीओ चत्तारि दिसिकुमारीओ । चित्ता य चित्तकणया सुतेरसोयामणीनामा १६०
नमिऊण पुहइदेविं ठाउं विदिसासु चउसुवि कमेण । सुंदरपईवहत्था गायंति जिणस्स गुणनिवहं ॥१६१॥
मज्झिमरुयगट्ठिईओ दिसाकुमारीओ इंति चत्तारि । तं जह रुया रुयंसा सुरुया रुयगावईनामा ॥१६२॥
तत्थागंतुं नाहीनालं कप्पंति जिणवरिंदस्स । चउरंगुलाउ उड्ढं खणंति तत्तो य वरविवरं ॥१६३॥
तं तत्थ नाहिनालं ठविऊणं पंचवण्णरयणेहिं । पूरिंति तदुवरिं तो रयंति हरियालगुरुपीढं ॥१६४॥
तयणंतरं च अइमणहराइं कयलीहराइं तिन्नेव । वेउव्विऊण तेसिं च मज्झभागम्मि रम्माइं ॥१६५॥

---

समाहारा प्रदत्ता च सुप्रबुद्धा यशोधरा । लक्ष्मीवती भोगवती चित्रगुप्ता वसुन्धरा ॥१५२॥
करकमले कलयित्वा भृङ्गारं सुरभिसलिलपरिपूर्णम् । प्रभोर्दक्षिणपार्श्वे स्थिता गायन्ति गुणनिकरम् ॥१५३॥
अथ पश्चिमरुचकस्थिताः प्रवरविमानेन दिक्कुमार्यः । अष्टैव भक्तिभरनिर्भरा एताः प्रविशन्ति ॥१५४॥
इलादेवी सुरादेवी पृथिवी पद्मावती । एकनासाऽनवमिका भद्राऽशोका चाष्टमी ॥१५५॥
करकमलकलितसुविशालतालवृन्ता दीर्घाक्ष्यः । पश्चिमदिक्स्थिताः स्तुवन्ति तीर्थकरगुणनिवहम् ॥१५६॥
अथोत्तराहरुचके वास्तव्या दिक्कुमार्यः । अष्टैवागतास्तरुणप्रगल्भा एताः ॥१५७॥
वारुणी पुण्डरीका च मिश्रकेशाऽलम्बुका । आशा सर्वप्रभा चैव ह्रीदेवी श्रीस्तथा ॥१५८॥
करकमलकलितसितचामरा उत्तरदिशि देवस्य । नत्वा पृथिवीदेवीं पूर्वक्रमेण च तिष्ठन्ति ॥१५९॥
अथ विदिग्रुचकपरिवासिन्यश्चतस्रो दिक्कुमार्यः । चित्रा च चित्रकनका सुतेरा-सौदामनीनामानौ ॥१६०॥
नत्वा पृथिवीदेवीं स्थित्वा विदिक्षु चतसृष्वपि क्रमेण । सुन्दरप्रदीपहस्ता गायन्ति जिनस्य गुणनिवहम् ॥१६१॥
मध्यमरुचकस्थितयो दिक्कुमार्य आयन्ति चतस्रः । तद्यथा रुचा रुचांशा सुरुचा रुचकावतीनामा ॥१६२॥
तत्रागत्य नाभिनालं कल्पयन्ति जिनवरेन्द्रस्य । चतुरङ्गुलादूर्ध्वं खनन्ति ततश्च वरविवरम् ॥१६३॥
तत् तत्र नाभिनालं स्थापयित्वा पञ्चवर्णरत्नैः । पूरयन्ति तदुपरि ततो रचयन्ति हरितालगुरुपीठम् ॥१६४॥
तदनन्तरं चातिमनोहराणि कदलीगृहाणि त्रीण्येव । विकुर्व्य तेषां च मध्यभागे रम्याणि ॥१६५॥

---

१ ग. एला° । २ ग. देहाओ । ३ ख. ग हरि° । ४ ख ग. मीर° । ५ क रुया । ६ क रुयं° । ७ क. सुरुया । ८ क. रुय° ।

पंचप्पयारमणिरयणरइयकुट्टिमतलाइं विउलाइं । दारप्पएससंठवियकणयमयपुन्नकलसाइं ॥१६६॥
उद्दामरूवरसालहंजियारेहिराइं विरयंति । उत्तरदाहिणपुव्वासु तिन्नि चउसालभवणाइ ॥१६७॥
तेसिं च मज्झभागे महग्घमणिखंडमंडियतलाइं । नियकिरणजालविरइयसुरिंदकोदंडदंडाइं ॥१६८॥
वरकणयपव्वयसिलावित्थिन्नाइं ठवंति तिन्नेव । सीहासणाइं तत्तो तित्थयर गग्यभत्तीए ॥१६९॥
करयलपुडेण वित्तुं जिणवरजणणिं च दाहिण दिसिम्मि। निसियाविति य वरचाउसालसीहासणे तत्तो॥१७०
अब्भंगंति सरीरं सयपागसहस्सपागतेल्लेहिं । तेसिं पहाणगंधुद्धरेहिं परमप्पमोएण ॥१७१॥
उव्वट्टिऊण उभयं सुगंधउव्वट्टणेण एमेव । पुव्वाभिमुहे चउसालपवरसीहासणे ठविउं ॥१७२॥
गंधोदएण पुप्फोदएण सुद्धोदएण ण्हाविंति । पवरमणिरयणकणयाभरणेहिं तओ विभूसिंति ॥१७३॥
उत्तरदिसिम्मि चउसालविउलसिंहासणे निवेसेउं । संतिनिमित्तं होम करंति गोसीसदारूहिं ॥१७४॥
नियपप्पभावपरिरक्खियस्सवि जिणस्स जीयमेयंति । काऊण पवररक्खापुट्टलियं बंधयंति तओ॥१७५॥
ताडिंति सवणमूले रयणुवले एरिसं वयंतीओ । सत्तकुलपव्वयाऊ अप्पडिहयसासणो हवसु ॥१७६॥
पणयजणपूरियासो दूरयरपलीणरोयसोगो य । इय भणिऊणं जम्मणगेहम्मि ठविंति जिणजणणिं ॥१७७॥
तत्तो महुरस्सरेण गायंति जिणिंदभूरिगुणनिवहं । हरिसेण समल्लियंति पुहइदेवीसमीवम्मि ॥१७८॥
इय जस्स जम्मकिच्चं जिणस्स छप्पन्नदिसिकुमारीहिं । लहुमेव समत्थिज्जइ भत्तीए परमहरिसेणं ॥१७९॥

---

पञ्चप्रकारमणिरत्नरचितकुट्टिमतलानि विपुलानि । द्वारप्रदेशसंस्थापितकनकमयपुण्यकलशानि ॥१६६॥
उद्दामरूपवरशालभञ्जिकाराजमानानि विरचयन्ति । उत्तरदक्षिणपूर्वासु त्रीणि चतुःशालभवनानि ॥१६७॥
तेषां च मध्यभागे महार्घमणिखण्डमण्डिततलानि । निजकिरणजालविरचितसुरेन्द्रकोदण्डदण्डानि ॥१६८॥
वरकनकपर्वतशिलाविस्तीर्णानि स्थापयन्ति त्रीण्येव । सिंहासनानि ततस्तीर्थंकर गुरुभक्त्या ॥१६९॥
करतलपुटेन गृहीत्वा जिनवरजननीं च दक्षिणदिशि । निषादयन्ति च वरचतुःशालसिंहासने ततः ॥१७०॥
अभ्यञ्जन्ति शरीरं शतपाकसहस्रपाकतैलैः । तयोः प्रधानगन्धोद्धुरैः परमप्रमोदेन ॥१७१॥
उद्वर्त्योभयं सुगन्धोद्वर्तनेनैवमेव । पूर्वाभिमुखे चतुःशालप्रवरसिंहासने स्थापयित्वा ॥१७२॥
गन्धोदकेन पुष्पोदकेन शुद्धोदकेन स्नपयन्ति । प्रवरमणिरत्नकनकाभरणैस्ततो विभूषयन्ति ॥१७३॥
उत्तरदिशि चतुःशालविपुलसिंहासने निवेश्य । शान्तिनिमित्तं होमं कुर्वन्ति गोशीर्षदारुभिः ॥१७४॥
निजकप्रभावपरिरक्षितस्यापि जिनस्य जीतमेतदिति[1] । कृत्वा प्रवररक्षापोट्टलिकां बध्नन्ति ततः ॥१७५॥
ताडयन्ति श्रवणमूले रत्नोपलावीदृशं वदन्त्यः । सप्तकुलपर्वतायुरप्रतिहतशासनो भवतात् ॥१७६॥
प्रणतजनपूरिताशो दूरतरप्रलीनरोगशोकश्च । इति भणित्वा जन्मगेहे स्थापयन्ति जिनजननीम् ॥१७७॥
ततो मधुरस्वरेण गायन्ति जिनेन्द्रभूरिगुणनिवहम् । हर्षेण समुपसर्पन्ति पृथिवीदेवीसमीपे ॥१७८॥
इति यस्य जन्मकृत्यं जिनस्य षट्पञ्चाशद्दिक्कुमारीभिः । लघ्वेव समर्थ्यते भक्त्या परमहर्षेण ॥१७९॥

---

१ जीतम् = व्यवहारः ।

एत्थंतरम्मि सोहम्मकप्पसामिस्स सुरवरिंदस्स । सीहासणं पकंपइ तक्कंपेणं तओ सहसा ॥१८०॥
अइविम्हिओ सुरिंदो रोसारुणलोयणो विचिंतेइ । नणु कस्स सग्गलच्छी परंमुही संपयं जाया?॥१८१॥
को वा कयंतदुज्जयकडक्खविक्खेवगोयरं पत्तो । गमणमणो वा सलहुव्व वज्जजालासु को मज्झ?॥१८२॥
को वा निमज्जणमणो अगाहवसणोयहिम्मि दुब्बुद्धी । संचालियं थिरंपि हु जेणं सीहासणं मज्झ॥१८३॥
इय चिंताकुलियमणो दिसिदसयं जा पलोयमाणोवि । न हु किंपि नियइ पुरओ पुणोवि ता चिंतए सक्को॥१८४॥
किं मज्झ चवणकालो अह सोवि न संपयं घडइ जम्हा । कंपेइ नामरतरू न परिमिलायंति कुसुमाणि १८५
अज्जवि य न हु विरज्जइ सचीजणो नेय फुरइ दीणत्तं । न निमेसिणी य दिट्ठी वत्थाणि य नेय मलिणाणि १८६
इय जा अणप्पकुवियप्पसंकुलो नियइ अवहिनाणेण । ता सीहासणकंपिक्ककारणं मुणइ जिणजम्मं॥१८७॥
ता उट्ठेउं सीहासणाउ गंतुं पयाइं सत्तट्ठ । तत्थ ठिओवि हु सक्कत्थएण हरिसेण थुणइ जिणं ॥१८८॥
सिंहासणे निसण्णो पुणोवि चिंतेइ सुरवई एवं । हद्धी अचिंतणीयं पिच्छसु परिचिंतियं पावं ॥१८९॥
तो आणवेइ हरिसेण सुरचमूसामियं तियसनाहो । भो सोहम्मसभाए गंतूण लहुंपि तिखुत्तो ॥१९०॥
मेहोहगहिरघोसं जोयणवित्तं सुघोसवरघंटं । ताडेऊणं महया रवेण घोसेह तह एवं ॥१९१॥
भारहखित्ते सत्तमतित्थयरो संपयं समुप्पन्नो । वाणारसीए सक्को चलिओ से जम्ममहिमत्थं ॥१९२॥
तो भो देवा ! तुब्भे सव्वालंकारभूसिया सव्वे । सव्वेहिं नाडएहिं सव्वबलेणं च संजुत्ता ॥१९३॥

---

अत्रान्तरे सौधर्मकल्पस्वामिनः सुरवरेन्द्रस्य । सिंहासनं प्रकम्पते तत्कम्पेन ततः सहसा ॥१८०॥
अतिविस्मितः सुरेन्द्रो रोषारुणलोचनो विचिन्तयति । ननु कस्य स्वर्गलक्ष्मीः पराङ्मुखी सांप्रतं जाता?॥१८१॥
को वा कृतान्तदुर्जयकटाक्षविक्षेपगोचरं प्राप्तः । गमनमना वा शलभ इव वज्रज्वालासु को मम ? ॥१८२॥
को वा निमज्जनमना अगाधव्यसनोदधौ दुर्बुद्धिः । संचालितं स्थिरमपि हि येन सिंहासनं मम ?॥१८३॥
इति चिन्ताकुलितमना दिग्दशकं यावत् प्रलोकमानोऽपि । न हि किमपि पश्यति पुरतः पुनरपि तावच्चिन्तयति शक्रः॥
किं मम च्यवनकालोऽथ सोऽपि न सांप्रतं घटते यस्मात् । कम्पते नामरतरुर्न परिम्लायन्ति कुसुमानि ॥१८५॥
अद्यापि च न हि विरज्यते शचीजनो नैव स्फुरति दीनत्वम् । न निमेषिणी च दृष्टिर्वस्त्राणि च नैव मलिनानि ॥१८६॥
इति यावदनल्पकुविकल्पसंकुलः पश्यत्यवधिज्ञानेन । तावत्सिंहासनकम्पैककारणं जानाति जिनजन्म ॥१८७॥
तत उत्थाय सिंहासनाद् गत्वा पदानि सप्ताष्ट । तत्र स्थितोऽपि हि शक्रस्तवेन हर्षेण स्तवीति जिनम् ॥१८८॥
सिंहासने निषण्णः पुनरपि चिन्तयति सुरपतिरेवम् । हा धिगचिन्तनीयं पश्य परिचिन्तितं पापम् ॥१८९॥
तत आज्ञपयति हर्षेण सुरचमूस्वामिनं त्रिदशनाथः । भोः सौधर्मसभायां गत्वा लघ्वपि त्रिः ॥१९०॥
मेघौघगभीरघोषां योजनवृत्तां सुघोषावरघण्टाम् । ताडयित्वा महता रवेण घोषयत तथैवम् ॥१९१॥
भारतक्षेत्रे सप्तमतीर्थकरः सांप्रतं समुत्पन्नः । वाराणस्यां शक्रश्चलितस्तस्य जन्ममहिमार्थम् ॥१९२॥
ततो भो देवाः ! यूयं सर्वालङ्कारभूषिताः सर्वे । सर्वैर्नाटकैः सर्वबलेन च संयुक्ताः ॥१९३॥

---

१ ख. °लहोव्व । २ ग. °णवयणं ।

तह सव्वविभूईए आरुहिउं पवरनियविमाणाइं । दिव्वच्छराहिं सहिया सक्कसयासं लहुं एह ॥१९४॥
इय तियसनाहवयणं सोउं विणएण सुरचमूसामी । तुरियगई गंतूणं सोहम्मसभाए तिखुत्तो ॥१९५॥
ताडइ सुघोसघंटं तीसे घणघोसपडिरववसेणं । अन्नाणवि घंटाणं बत्तीसं सयसहस्साइं ॥१९६॥
एगूणगाइं समकालमेव काउं रणज्झणारावं । पारद्धाइं तप्पडिरवोवि समगं समुच्छलिओ ॥१९७॥
एत्थंतरम्मि पंचविहविसयसेवापमत्तचित्तावि । देवा तमेगकालं वज्जिरघंटासरं सोउं ॥१९८॥
चिंतंति किं विफुट्टंतचंडबंभंडभंडयस्स रवो । रयणमयविमाणावलिपडिफलणेणं पवित्थरिओ ॥१९९॥
निसुणिज्जंतो संखुद्धमुद्धहिययाहिं अमररमणीहिं । हा नाह ! रक्ख रक्खत्ति जंपिरीहिं भयवसेणं ॥२००॥
दणुयवइवहहरिसियतियससुहडगलगज्जिभीसणो भुवणे । सव्वत्तोवि वियंभइ घंटाणं रणरणारावो ॥२०१॥
इय चिंताए सिढिलियमाणिणिगाढावगूढकंठम्मि । संजाए सुरनिवहे सव्वत्तो मूढहिययम्मि ॥२०२॥
उवसंते य खणेणं समग्गगंभीरघंटनिग्घोसे । अवहियसुराण सुररायसासणं कहइ एस तओ ॥२०३॥
इय नाउं हरिणगवेसिवयणओ जम्ममज्जणं पहुणो । विप्फुरियपमोयभरा तो संविहिउं समारद्धा ॥२०४॥
गंतूणं मज्जणकेलिदीहियं अह कुणंति मज्जणयं । कप्पूरमीसचंदणरसेण देहं विलिंपंति ॥२०५॥
दूसजुयं निम्मलकोमलं च परिहंति कंतिकमणीयं । कंठपइट्ठियहारा दूरुज्झियकामुयवियारा ॥२०६॥
वरकडयतुडियमणिमउडकिरणविच्छुरियसयलगयणयला । नियरूवमडप्फरहसियकुसुमबाणा तओ चलिया ॥

---

तथा सर्वविभूत्याऽऽरुह्य प्रवरनिजविमानानि । दिव्याप्सरोभिः सहिताः शक्रसकाशं लघ्वेत ॥१९४॥
इति त्रिदशनाथवचनं श्रुत्वा विनयेन सुरचमूस्वामी । त्वरितगतिर्गत्वा सौधर्मसभायां त्रिः ॥१९५॥
ताडयति सुघोषघण्टां तस्या घनघोषप्रतिरववशेन । अन्यासामपि घण्टानां द्वात्रिंशच्छतसहस्राणि ॥१९६॥
एकोनकानि समकालमेव कृत्वा रणज्झणारावम् । प्रारब्धानि तत्प्रतिरवोऽपि समकं समुच्छलितः ॥१९७॥
अत्रान्तरे पञ्चविधविषयसेवाप्रमत्तचित्ता अपि । देवास्तमेककालं वाद्यमानघण्टास्वरं श्रुत्वा ॥१९८॥
चिन्तयन्ति किं विस्फुटच्चण्डब्रह्माण्डभाण्डकस्य रवः । रत्नमयविमानावलिप्रतिफलनेन प्रविस्तीर्णः ॥१९९॥
श्रूयमाण संक्षुब्धमुग्धहृदयाभिरमररमणीभिः । हा नाथ ! रक्ष रक्षेति जल्पित्रीभिर्भयवशेन ॥२००॥
दनुजपतिवधहर्षितत्रिदशसुभटगलगर्जिभीषणो भुवने । सर्वतोऽपि विजृम्भते घण्टानां रणरणारावः ॥२०१॥
इति चिन्तया शिथिलितमानिनीगाढावगूढकण्ठे । संजाते सुरनिवहे सर्वतो मूढहृदये ॥२०२॥
उपशान्ते च क्षणेन समग्रगम्भीरघण्टानिर्घोषे । अवहितसुरान् सुरराजशासनं कथयत्येष ततः ॥२०३॥
इति ज्ञात्वा हरिणगमेषिवचनतो जन्ममज्जनं प्रभोः । विस्फुरितप्रमोदभरास्ततः संविधातुं समारब्धाः ॥२०४॥
गत्वा मज्जनकेलिदीर्घिकामथ कुर्वन्ति मज्जनकम् । कर्पूरमिश्रचन्दनरसेन देहं विलिम्पन्ति ॥२०५॥
दूष्ययुगं निर्मलकोमलं च परिदधति कान्तिकमनीयम् । कण्ठप्रतिष्ठितहारा दूरोज्झितकामुकविकाराः ॥२०६॥
वरकटकत्रुटितमणिमुकुटकिरणविच्छुरितसकलगगनतला । निजरूपगर्वहसितकुसुमबाणास्ततश्चलिताः ॥२०७॥

---

१ ग म मज्ज म° । २ अनुकरणशब्द इति तथैवानुयमानो युक्तः, एवमुत्तरत्रापि ।

उत्तुंगतुरयकुंजरवराहवरहरिणमयरजाणेहिं । आरूढा चीणंसुयचिंधसहस्सोवसोहेहिं ॥२०८॥
केवि विमाणारूढा किंकिणिरणझणियबहिरियंदियंता। केवि हु महसद्दूलसरहहरिहंसवसहगया ॥२०९॥
इय सव्वबलसमेया सहिया नियपणइणीहिं वेगेण । सव्वेवि हरिसेण आगया सुरवइसमीवं ॥२१०॥
एत्थंतरम्मि लंबंतविमलमुत्ताहलावचूलिल्लं । फालिहमणिनिम्मियसालभंजियाघडियवरदारं ॥२११॥
खंभसहस्सनिबद्धं रणंतघंटावलीहिं सुइसुहयं । उब्भडपवणपकंपिरजयप्पडागाइअइपयडं ॥२१२॥
सोलसभेयामलरयणनिम्मियं मज्झिमस्स भुवणस्स। सिहरंव पुव्वकयसुकयसिहरिणो निम्मलफलंव॥२१३॥
तिहुयणपहाणपरमाणुनियरनिव्वत्तियंव विच्छड्डे । जोयणलक्खपमाणं जोयणपणसहस्सउस्सेहं ॥२१४॥
सुरवइवयणससंभमपालयसुरसंचियं वरविमाणं । आरुहिऊणं चलिओ सक्को सह देवकोडीहिं ॥२१५॥
तत्तो सिग्घगईए तिरियं दीवाण मज्झयारेण । नन्दीसरवरदीवे दाहिणपोरच्छिमम्मि नगे ॥२१६॥
रइकरनामम्मि समागंतूण तओ कमेण देवड्ढिं । तं दिव्वं देवजुइं दिव्वं देवाणुभावं च ॥२१७॥
तत्तो विमाणमुवसंहरेवि जेणेव भारहं खित्तं । वाराणसी य जेणं जेण य जिणजम्मभवणं च ॥२१८॥
तेणेव य मग्गेणं आगंतूणं कमेण संपत्तो । सुपइट्ठनिवइभवणे सक्को सह देवदेवीहिं ॥२१९॥
आयाहिणापयाहिणमह काउं दिव्ववरविमाणेणं। तिक्खुत्तं जिणजम्मणभुवणस्स तओ नियविमाणं॥२२०॥
संठविऊणं उत्तरपुरच्छिमे सुहदिसाविभागम्मि। अग्गमहिसीहिं अट्ठहिं सामाणियसहस्सचुलसीहिं॥२२१॥

---

उत्तुङ्गतुरगकुञ्जरवराहवरहरिणमकरयानैः । आरूढाश्चीनांशुकचिह्नसहस्रोपशोभैः ॥२०८॥
केऽपि विमानारूढाः किङ्किणीरणझणितबधिरितदिगन्ताः । केऽपि हि महाशार्दूलशरभहरिहंसवृषभगताः॥२०९॥
इति सर्वबलसमेताः सहिता निजप्रणयिनीभिर्वेगेन । सर्वेऽपि सुरा हर्षेणागताः सुरपतिसमीपम् ॥२१०॥
अत्रान्तरे लम्बमानविमलमुक्ताफलावचूलिकम् । स्फाटिकमणिनिर्मितशालभञ्जिकाघटितवरद्वारम् ॥२११॥
स्तम्भसहस्रनिबद्धं रणद्घण्टावलीभिः श्रुतिसुखदम् । उद्भटपवनप्रकम्पमानजयपताकाद्यतिप्रकटम् ॥२१२॥
षोडशभेदामलरत्ननिर्मितं मध्यमस्य भुवनस्य । शिखरमिव पूर्वकृतसुकृतशिखरिणो निर्मलफलमिव ॥२१३॥
त्रिभुवनप्रधानपरमाणुनिकरनिर्वर्तितमिव विस्तारे । योजनलक्षप्रमाणं योजनपञ्चसहस्रोत्सेधम् ॥२१४॥
सुरपतिवचनससंभ्रमपालकसुरसंचितं वरविमानम् । आरुह्य चलितः शक्रः सह देवकोटिभिः ॥२१५॥
ततः शीघ्रगत्या तिर्यग्द्वीपानां मध्येन । नन्दीश्वरवरद्वीपे दक्षिणपौरस्त्ये नगे ॥२१६॥
रतिकरनाम्नि समागत्य ततः क्रमेण देवर्द्धिम् । तां दिव्यां देवद्युतिं दिव्यं देवानुभावं च ॥२१७॥
ततो विमानमुपसंहृत्य येनैव भारतं क्षेत्रम् । वाराणसी च येन येन च जिनजन्मभवनं च ॥२१८॥
तेनैव च मार्गेणागत्य क्रमेण संप्राप्तः । सुप्रतिष्ठनृपभवने शक्रः सह देवदेवीभिः ॥२१९॥
आदक्षिणप्रदक्षिणामथ कृत्वा दिव्यवरविमानेन । त्रिर्जिनजन्मभवनस्य ततो निजविमानम् ॥२२०॥
संस्थाप्योत्तरपौरस्त्ये शुभदिग्विभागे । अग्रमहिषीभिरष्टाभिः चतुरशीतिसामानिकसहस्रैः ॥२२१॥

---

१ क. ख. °णयणी° । २ क. कुलयं । ३ ख. °णमवि मं° । ४ क ग. बाणारसी ।

संजुत्तो तियसपहू पविसइ तत्थेव जत्थ तित्थयरो। जणणी य, दिट्ठिविसए पुणो पणामं करेमाणो॥२२२॥
सामिं समायरं चिय तिपयाहिणपुव्वयं नमंसेउं। संथुणइ पुहइदेविं सविसेसं पुलइयसरीरो ॥२२३॥
कहं विय ?
जयसि तुमं नियकुलगयणसयलसंपुन्नचंदवरजुंण्हे!। तिहुयणपहाणसीलाइगुणगणाहारवरधरणि! ॥२२४॥
वररयणनियरपरिपूरिअंतरो लहुइओ तए जलही। तिहुअणपसंसणिज्जं जिणवररयणं धरंतीए ॥२२५॥
जणिउं जिणिंदमंतरतमपसरनिरुंभणिक्कदिणनाहं। खज्जोयपसविणी इव कया तए संपयं पुव्वा ॥२२६॥
परममुणीणंपि तुमं जाया आसीसभायणं देवि!। एएणं चिय तुमए भवजन्ही दुत्तरो तरिओ ॥२२७॥
अहरियतिहुयणचिंतामणिजिणवरकुच्छिधारिणीए धुवं। तुह चेव मणुयजम्मो पसंसणिज्जो बुहाणंपि॥२२८॥
इय थोउं जिणजणणिं अवसोवणिदाणपुव्वयं सक्को। ठविऊणं वेउव्वियजिणपडिरूवं जणणिपासे ॥२२९॥
सयमवि पंच सरीरे विउव्विउं धरइ छत्तमेगेण। दोहिं च उभयपासेसु ढालए सेयवरचमरे ॥२३०॥
एक्केणं धरइ पुरो सारयरविमंडलंव दिसिवलयं। उज्जोयंतं वज्जं असंखपडिवक्खविक्खवणं ॥२३१॥
एगेण सुरहिगोसीसचंदणुप्पंकपंडुरे सुयंधे। धरइ जिणं करकमले हरिसवसुल्लसियरोमंचो ॥२३२॥
इय पंचहिं रूवेहिं काउं सव्वंपि नियकायव्वं। बहुदेवदेविकोडीहिं परिवुडो भत्तिभरकलिओ ॥२३३॥
अप्पाणं मन्नंतो समत्थसुपसत्थतित्थजलण्हायं। मंदरसेलाभिमुह चलिओ आखंडलो तत्तो ॥२३४॥

---

संयुक्तस्त्रिदशप्रभु प्रविशति तत्रैव यत्र तीर्थकर। जननी च, दृष्टिविषये पुन प्रणाम कुर्वन् ॥२२२॥
स्वामिन समातृकमेव त्रिप्रदक्षिणापूर्वक नमस्त्विा। संस्तौति पृथिवीदेवीं सविशेष पुलकितशरीर ॥२२३॥
कथमिव ?
जयसि त्व निजकुलगगनसकलसंपूर्णचन्द्रवरज्योत्स्ने!। त्रिभुवनप्रधानशीलादिगुणगणाधारवरधरणि! ॥२२४॥
वररत्ननिकरपरिपूरितान्तरो लघूकृतस्त्वया जलधि। त्रिभुवनप्रशंसनीयं जिनवररत्नं धरन्त्या ॥२२५॥
जनयित्वा जिनेन्द्रमान्तरतम प्रसरनिरोधनैकदिननाथम्। खद्योतप्रसविनीव कृता त्वया साम्प्रतं पूर्वा ॥२२६॥
परममुनीनामपि त्वं जाताऽऽशीर्भाजन देवि!। एतेनैव त्वया भवजलधिर्दुस्तरस्तीर्ण ॥२२७॥
अधरितत्रिभुवनचिन्तामणिजिनवरकुक्षिधारिण्या ध्रुवम्। तवैव मनुजजन्म प्रशंसनीय बुधानामपि ॥२२८॥
इति स्तुत्वा जिनजननीमवस्वापनीदानपूर्वक शक्र। स्थापयित्वा विकुर्वितजिनप्रतिरूपं जननीपार्श्वे ॥२२९॥
स्वयमपि पञ्च शरीराणि विकुर्व्य धरति छत्रमेकेन। द्वाभ्यां चोभयपार्श्वयोर्वीजयति श्वेतवरचामरौ ॥२३०॥
एकेन धरति पुर शारदरविमण्डलमिव दिग्वलयम्। उद्द्योतयद् वज्रमसंख्यप्रतिपक्षविक्षपणम् ॥२३१॥
एकेन सुरभिगोशीर्षचन्दनपङ्कपाण्डुरे सुगन्धे। धरति जिन करकमले हर्षवशोल्लसितरोमाञ्च ॥२३२॥
इति पञ्चभी रूपै कृत्वा सर्वमपि निजकर्त्तव्यम्। बहुदेवदेवीकोटिभि परिवृतो भक्तिभरकलित ॥२३३॥
आत्मान मन्यमान समस्तसुप्रशस्ततीर्थजलस्नानम्। मन्दरशैलाभिमुख चलित आखण्डलस्तत ॥२३४॥

---

१ क जोन्हे। २ क कोमे।

परमेण पमोएणं दिव्वगईए कमेण संपत्तो । तुंगत्तणेण जोयणलक्खपमाणं सुरगिरिंदं ॥२३५॥
जो रेहइ एकपओहरोव्व धरणीए कणयकंतिल्लो । रयणावलीरमणीओ पंडगवणकसिणसिहरो य ॥२३६॥
अमियरमणीयगुणगणसंखारेहव्व सुरवरेहिं कया । रेहंति जत्थ दिसिदंतिदंतउल्लिहणराईओ ॥२३७॥
पिहुलनियंबो संसोहिकणयमयमेहलाइ परिकलिओ । सुपयोहरो विरायइ रुइरो रमणीयणोव्व सया ॥२३८॥
उत्तुंगसिहरसंठियसासयजिणभवणधयपडागाए । वियरियपत्तव्व सया जस्स सिरी रेहइ दिवस्स ॥२३९॥
सव्वत्तो गुरुनिब्भरसलिलपयट्टाहिं गहिरसरियाहिं । निरुवममहिमसमुब्भवकित्तीहिंव सहइ परिकलिओ२४०
इय गरुयगुणनिहाणं तं जाव सुराहिवो समारुहइ । तो पिच्छइ रमणीयं महावणं पंडगभिहाणं ॥२४१॥
कत्थवि उन्नयनवजलयगज्जिपमुइयकलाविकुलकलियं । कत्थवि य किन्नरीगेयसवणतल्लिच्छहरिणकुलं२४२
तो तत्थ पंडुकंबलसिलाए नीहारहारधवलाए । मणिरयणकिरणजलखालियम्मि तवणीयमइयम्मि॥२४३॥
निवसइभिसेयसिंहासणम्मि उच्छंगठवियजिणनाहो । पुव्वाभिमुहो सक्को हरिसवसुप्फुल्लनयणजुओ ॥२४४॥
जिणवरपभावपयलियनियासणा ओहिणा वियाणेउं । जिणजम्ममज्जणमहं ईसाणाईवि सुरवइणो॥२४५॥
सव्वेवि समागंतुं निययसमिद्धीइ तियससेलम्मि । कयजिणपयप्पणामा हरिसेण ठिआ निअट्ठाणे॥२४६॥
तत्तो पढमं भणिया अच्चुयसुरसामिणा निया देवा । भो सिग्घं तित्थयराभिसेयमुवणेह सुपसत्थं॥२४७॥
अट्ठुत्तरं सहस्सं तो ते कलसाण कणयमइयाणं । कलहोयमयाण तहा अट्ठसहस्सं मणिमयाणं ॥२४८॥
कंचणरुप्पमयाणं वरतारयमणिमयाण एमेव । मणिकणयरुप्पमइयाण तह य भोमेयगाणं च ॥२४९॥

---

परमेण प्रमोदेन दिव्यगत्या क्रमेण संप्राप्तः । तुङ्गत्वेन योजनलक्षप्रमाणं सुरगिरीन्द्रम् ॥२३५॥
यो राजत्येकपयोधर इव धरण्याः कनककान्तिकः । रत्नावलीरमणीयः पाण्डुकवनकृष्णशिखरश्च ॥२३६॥
अमितरमणीयगुणगणसंख्यारेखा इव सुरवरैः कृताः । राजन्ति यत्र दिग्दन्तिदन्तोल्लिखनराजयः ॥२३७॥
पृथुनितम्बः संशोभिकनकमयमेखलया परिकलितः । सुपयोधरो विराजते रुचिरो रमणीजन इव सदा ॥२३८॥
उत्तुङ्गशिखरसंस्थितशाश्वतजिनभवनध्वजपताकया । वितीर्णपत्रेव सदा यस्य श्री राजते दिवः ॥२३९॥
सर्वतः प्रवृत्तगुरुनिर्भरसलिलाभिर्गम्भीरसरिद्भिः । निरुपममहिमसमुद्भवकीर्त्तिभिरिव राजते परिकलितः ॥२४०॥
इति गुरुगुणनिधानं तं यावत् सुराधिपः समारोहति । ततः पश्यति रमणीयं महावनं पाण्डुकाभिधानम्॥२४१॥
कुत्राप्युन्नतनवजलदगर्जिप्रमुदितकलापिकुलकलितम् । कुत्रापि च किन्नरीगेयश्रवणतत्परहरिणकुलम् ॥२४२॥
ततस्तत्र पाण्डुकम्बलशिलायां नीहारहारधवलायाम् । मणिरत्नकिरणजलक्षालिते तपनीयमये ॥२४३॥
निवसत्यभिषेकसिंहासन उत्सङ्गस्थापितजिननाथः । पूर्वाभिमुखः शक्रो हर्षवशोत्फुल्लनयनयुगः ॥२४४॥
जिनवरप्रभावप्रचलितनिजासना अवधिना विज्ञाय । जिनजन्ममज्जनमहमीशानादयोऽपि सुरपतयः ॥२४५॥
सर्वेऽपि समागत्य निजकसमृद्ध्या त्रिदशशैले । कृतजिनपादप्रणामा हर्षेण स्थिता निजस्थाने ॥२४६॥
ततः प्रथमं भणिता अच्युतसुरस्वामिना निजा देवाः । भोः शीघ्रं तीर्थकराभिषेकमुपनयत सुप्रशस्तम् ॥२४७॥
अष्टोत्तरं सहस्रं ततस्ते कलशानां कनकमयानाम् । कलधौतमयानां तथाऽष्टसहस्रं मणिमयानाम् ॥२४८॥

एवं रयणमयाणं भिंगाराईण पवरवत्थूणं । पत्तेयं पत्तेयं अट्ठसहस्सं विउव्वित्ता ॥२५०॥
गंतुं खीरसमुद्दं कलसे भरिऊण खीरसलिलेणं । गहियाइ कमलकेरवसयवत्तसहस्सवत्ताइं ॥२५१॥
एवं महंतसुपसत्थतित्थसत्थाण मागहाईणं । पवरनईणं च जलं तहोसहीमट्टियाओ य ॥२५२॥
उत्तरकुरुमाईसुवि कुलगिरिवक्खारनंदणवणेसु । अंतरनईदहेसु य जाणि य कुसुमोसहिफलाइ ॥२५३॥
इय सव्वं चिय तियसा तुरियं संगहिउमागया तत्थ । विणयप्पणया अच्चुयसुराहिवइणो समप्पंति ॥२५४॥
अह सो अच्चुयसक्को दट्ठूणमभिसेयसयलसामग्गिं । जायहरिसो य सिग्घं उट्ठइ नियआसणाउ तओ॥२५५॥
सामाणियसहस्सेहिं दसहिं तहा चउहिं लोगपालेहिं । तिहिं परिसाहिं सत्तहि अणियाहिवईहिं अणिएहिं॥२५६॥
तह तायत्तीसाए तायत्तीसेहिं आयरक्खाण । चत्तालीससहस्सेहिं परिवुडो अच्चुयसुरिंदो ॥२५७॥
तत्तो य विमलतित्थाण खीरजलहीण सलिलपुन्नेहिं । गोसीसचंदणप्पमुहसारवत्थूहिं कलिएहिं ॥२५८॥
विमलकमलपिहाणेहिं पवरसव्वोसहीसणाहेहिं । साहावियवेउव्वियकलसेहिं महप्पमाणेहिं ॥२५९॥
सत्तमजिणस्स तिहुयणनिक्कारणबंधवस्स भत्तीए । जम्माहिसेयमहिमं अच्चुयकप्पाहिवो कुणइ ॥२६०॥
इत्थंतरम्मि जुगवं पलोट्टकलसाण जिणसिरग्गाओ । जलघोरणीओ रेहिंति सिहरिसिहराओ सरियव्व ।२६१।
पहरिसपरवसाहिं दिसिरमणीहिंव अहव खित्ताओ । मुत्तावलीओ सोहंति निम्मलाविरलकंतीओ ॥२६२॥
अहवावि कुणइनिवडिरजणमुद्धरिउंव पुन्नरज्जूओ । अह सुहियजिणजसोजलहिणोव्व कल्लोलमालाओ २६३

---

काञ्चनरूप्यमयाना वरतारकमणिमयानामेवमेव । मणिकनकरूप्यमयाना तथा च भौमेयकाना च ॥२४९॥
एवं रत्नमयाना भृङ्गारादीना प्रवरवस्तूनाम् । प्रत्येक प्रत्येकमष्टसहस्र विकुर्व्य ॥२५०॥
गत्वा क्षीरसमुद्र कलशान् भृत्वा क्षीरसलिलेन । गृहीतानि कमलकैरवशतपत्रसहस्रपत्राणि ॥२५१॥
एवं महासुप्रशस्ततीर्थसार्थाना मागधादीनाम् । प्रवरनदीना च जल तथौषधिमृत्तिकाश्च ॥२५२॥
उत्तरकुर्वादिष्वपि कुलगिरिवक्षस्कारनन्दनवनेषु । अन्तर्नदीद्रहेषु च यानि च कुसुमौषधिफलानि ॥२५३॥
इति सर्वमेव त्रिदशास्त्वरित सगृह्यागतास्तत्र । विनयप्रणता अच्युतसुराधिपतये समर्पयन्ति ॥२५४॥
अथ सोऽच्युतशक्रो दृष्ट्वाऽभिषेकसकलसामग्रीम् । जातहर्षश्च शीघ्रमुत्तिष्ठति निजासनात् तत ॥२५५॥
सामानिकसहस्रैर्दशभिस्तथा चतुर्भिर्लोकपालै । तिसृभि पर्षद्भि सप्तभिरनीकाधिपतिभिरनीकै ॥२५६॥
तथा त्रयस्त्रिंशता त्रायस्त्रिंशैरात्मरक्षाणाम् । चत्वारिंशत्सहस्त्र्या परिवृतोऽच्युतसुरेन्द्र ॥२५७॥
ततश्च विमलतीर्थाना क्षीरजलधीना सलिलपूर्णै । गोशीर्षचन्दनप्रमुखसारवस्तुभि कलितै ॥२५८॥
विमलकमलपिधानै प्रवरसर्वौषधिसनाथै । स्वाभाविकवैक्रयिककलशैर्महाप्रमाणै ॥२५९॥
सप्तमजिनस्य त्रिभुवननिष्कारणबान्धवस्य भक्त्या । जन्माभिषेकमहिमानमच्युतकल्पाधिप करोति ॥२६०॥
अत्रान्तरे युगपत् पर्यन्तकलशाना जिनशिरोऽग्रात् । जलघोरण्यो राजन्ति शिखरिशिखरात् सृता इव ॥२६१॥
प्रहर्षपरवशाभिर्दिग्रमणीभिरिवाथवा क्षिप्ता । मुक्तावल्य शोभन्ते निर्मलाविरलकान्तय ॥२६२॥

---

१ क विओव्वित्ता ।

एवं जिणाभिसेगे पयट्टिए सुरवईहिं'हरिसेण । ताडिज्जंति चउव्विहआउज्जाइं सुरेहिं तओ ॥२६४॥
सघणघणघोसदुंदुहिनिनाउद्धुरं करडिरडरडियपडुपडहरवबंधुरं ।
सरससिंजंतढक्काहुडुक्काउलं महुरगंभीरघुमघुमियवरमद्दलं ॥२६५॥
बुक्कंतबुक्कसंबुक्कसद्दुक्कडं तालझणझणियवरतलिमघोसुब्भडं ।
मुहलकंसालछलछलरवाडंबरं भेरिभंभारवारंभभरियंबरं ॥२६६॥
वेणुवीणासमालवणिरवसुंदरं झल्लरिघोससंमीसखरमुहिसरं ।
पलयकालिव्वसजलघणगज्जियं तत्थ वज्जेइ चाउव्विहवज्जयं ॥२६७॥
गरुयभत्तिब्भरुब्भिन्नरोमंचया थुणहिं तित्थेसरं तत्थ नच्चंतया ।
केवि मुंचंति मंदारसुमणोहरं गंधवसमिलियभसलोहसुमणोहरं ॥२६८॥
केवि मल्लव्व सज्जंति कमदद्दुरं अवरि गायंति सुहकंठरवसुंदरं ।
केवि उत्तालतालाउलं रासयं कुणहिं करनच्चियं अवरि वरहासयं ॥२६९॥
केवि हरिसुद्धरा तियससगलदद्दुरं कुणहिं हयहेसियं केवि सुइबंधुरं ।
केवि गयगज्जियं कुणहिं मयभिंभलं अन्नि मुट्ठीहि पहरंति धरणीयलं ॥२७०॥
केवि फोडिंति वक्करियउक्केरयं केवि कुव्वंति कंठीरवुन्नाययं ।

---

अथवापि कुगतिनिपतनशीलजनमुद्धर्तुमिव पुण्यरज्ज्वः । अथ क्षुब्धजिनयशोजलधेरिव कल्लोलमालाः ॥२६३॥
एवं जिनाभिषेके प्रवर्तिते सुरपतिभिर्हर्षेण । ताड्यन्ते चतुर्विधातोद्यानि सुरैस्ततः ॥२६४॥
सघनघनघोषदुन्दुभिनिनादोद्धुरं करटिरटरटितपटुपटहरवबन्धुरम् ।
सरससिञ्जड्ढक्काहुडुक्काकुलं मधुरगम्भीरघुमघुमितवरमुरजम् ॥२६५॥
बुक्कतम्बुक्कसम्बुक्कशब्दोत्करं तालझणझणितवरतलिमघोषोद्भटम् ।
मुखरकांसालच्छलच्छलरवाडम्बरं भेरीभम्भारवारम्भभृताम्बरम् ॥२६६॥
वेणुवीणासमालपनीरवसुन्दरं झल्लरीघोषसंमिश्रखरमुखीस्वरम् ।
प्रलयकालिकसजलघनगर्जितं तत्र वाद्यते चतुर्विधवाद्यकम् ॥२६७॥
गुरुभक्तिभरोद्भिन्नरोमाञ्चकाः स्तुवन्ति तीर्थेश्वरं तत्र नृत्यन्तः ।
केपि मुञ्चन्ति मन्दारसुमनोभरं गन्धवशमिलितभ्रमरौघसुमनोहरम् ॥२६८॥
केऽपि मल्ला इव सज्जन्ति क्रमदर्दुरमपरे गायन्ति शुभकण्ठरवसुन्दरम् ।
केऽप्युत्तालतालाकुलं रासकं कुर्वन्ति करनर्तितमपरे वरहासकम् ॥२६९॥
केऽपि हर्षोद्धुरास्त्रिदशगलदर्दुरं कुर्वन्ति हयहेषितं केऽपि श्रुतिबन्धुरम् ।
केऽपि गजगर्जितं कुर्वन्ति मदविह्वलमन्ये मुष्टिभिः प्रहरन्ति धरणीतलम् ॥२७०॥
केऽपि स्फोटयन्ति दुर्दिनोत्करं केऽपि कुर्वन्ति कण्ठीरवोन्नादकम् ।

केवि तक्खणिण खीरोयजलसंतियं कलसमुवणिंति तियसा हरियंतियं ॥२७१॥
इय सुरवइसंधिण परिहयविग्घिण जहिं वट्टिज्जइ आयरिण ।
सत्तमजिणमज्जणि तहिं भवभंजणि किं कित्तिज्ज मारिसिण? ॥२७२॥
इय वट्टंते सत्तमतित्थेसरजम्ममज्जणमहम्मि । सव्वेवि सुरिंदा परमहरिसभरपुलइयसरीरा ॥२७३॥
धूवकडुच्छयहत्था सियचमरविसालछत्तसंजुत्ता । सुहपुप्फगंधवावडहत्था य पुरो ठिया तत्तो ॥२७४॥
एवं अच्चुयसक्के विरयम्मि जिणेसरं ण्हवेऊण । नियपरिवाराणुगया आणयपमुहा सुरिंदावि ॥२७५॥
अहिसिंचंति जिणिंदं महाविभूईए अच्चुयवइव्व । तीसंपि नियकमेणं मुत्तुं सोहम्मकप्पपहुं ॥२७६॥
तयणंतरं ठवित्ता ईसाणिंदो जिणं नियंकम्मि । सीहासणे निसीयइ तत्तो सोहम्मसामीवि ॥२७७॥
चउरो चउद्दिसिंपि हु हिमकरहरहाससंखदलधवले । तरुणवसहे विउव्वइ रमणिज्जसरीरकंतिल्ले ॥२७८॥
तेसिंच अट्ठसिंगग्गभायओ अट्ठ सलिलधाराओ । उड्ढंगमाओ घणियं अह पडणे एगिभूयाओ॥२७९॥
काउं जिणुत्तमंगे खिवेइ आणंदवियसियच्छिजुओ । अन्नेहिंवि तह खीरोयकलससहस्सेहिं बहुएहिं॥२८०॥
अहिसिंचइ य कमेणं अह विहिए परममज्जणमहम्मि । सोहम्मवई सुकुमालगंधकासायवत्थेहिं ॥२८१॥
तित्थेसरस्स देहं जयणाए लूहिऊण सव्वत्तो । अच्चइ य सुरहिगोसीसचंदणसंमीसघुसिणेणं ॥२८२॥
मंदारसुरहिसियकुसुमदामनिवहेहिं रयइ वरपूयं । सव्वालंकारेहिं विभूसिऊणं तओ पुरओ ॥२८३॥
सारयससिकरधवलेहिं अक्खएहिं इमे समालिहइ । दप्पणभद्दासणवद्धमाणसिरिवच्छमच्छे य ॥२८४॥

---

केऽपि तत्क्षणेन क्षीरोदजलसत्कं कलशमुपनयन्ति त्रिदशा हर्यन्तिकम् ॥२७१॥
इति सुरपतिसंघेन प्रतिहतविघ्नेन यस्मिन् वृत्यत आदरेण ।
सप्तमजिनमज्जने तस्मिन् भवभञ्जने किं कीर्त्यते मादृशेन ? ॥२७२॥
इति वर्तमाने सप्तमतीर्थेश्वरजन्ममज्जनमहे । सर्वेऽपि सुरेन्द्राः परमहर्षभरपुलकितशरीराः ॥२७३॥
धूपदर्वीहस्ताः सितचामरविशालच्छत्रसंयुक्ताः । शुभपुष्पगन्धव्यापृतहस्ताश्च पुरः स्थितास्ततः ॥२७४॥
एवमच्युतशक्रे विरते जिनेश्वरं स्नपयित्वा । निजपरिवारानुगता आनतप्रमुखाः सुरेन्द्रा अपि ॥२७५॥
अभिषिञ्चन्ति जिनेन्द्रं महाविभूत्याऽच्युतपतिरिव । त्रिंशदपि निजक्रमेण मुक्त्वा सौधर्मकल्पप्रभुम् ॥२७६॥
तदनन्तरं स्थापयित्वेशानेन्द्रो जिनं निजाङ्के । सिंहासने निषीदति ततः सौधर्मस्वाम्यपि ॥२७७॥
चतुरश्चतुर्दिक्ष्वपि हि हिमकरहरहासशङ्खदलधवलान् । तरुणवृषभान् विकुर्वति रमणीयशरीरकान्तिकान् ॥२७८॥
तेषां चाष्टशृङ्गाग्रभागतोऽष्ट सलिलधाराः । ऊर्ध्वङ्गमा गाढमथ पतने एकीभूताः ॥२७९॥
कृत्वा जिनोत्तमाङ्गे क्षिपत्यानन्दविकसिताक्षियुगः । अन्यैरपि तथा क्षीरोदकलशसहस्रैर्बहुभिः ॥२८०॥
अभिषिञ्चति च क्रमेणाथ विहिते परममज्जनमहे । सौधर्मपतिः सुकुमालगन्धकाषायवस्त्रैः ॥२८१॥
तीर्थेश्वरस्य देहं यतनया प्रमार्ज्य सर्वतः । अर्चति च सुरभिगोशीर्षचन्दनसंमिश्रघुसृणेन ॥२८२॥
मन्दारसुरभिसितकुसुमदामनिवहै रचयति वरपूजाम् । सर्वालङ्कारैर्विभूष्य ततः पुरतः ॥२८३॥

तह सत्थियनंदावत्तकलसपज्जंतमंगले अट्ठ । मुयइ तओ बहुविहकुसुमनियरमाजाणुमित्तं च ॥२८५॥
तत्तो णाणामणिभत्तिचित्तदंडेण वइरमइएण । सुकडच्छुएण गंधाभिराममुक्खिवइ वरधूयं ॥२८६॥
पजलंतदीवियाचक्कवालमारत्तियं मणभिरामं । उत्तारइ वरमंगलनिलयं तह मंगलपईवं ॥२८७॥
एवं च सव्वकायव्ववित्थरे वित्तयम्मि तव्वेलं । जय-जय-जयाइयम्मि चारणमुणिपुंगवगणेण ॥२८८॥
हरिसुत्तालनमिरसिरवियलियकुसुमच्चियधरायलं । नच्चिरकरमुणालवलयावलिकलयलरवरमाउलं ॥२८९॥
उब्भडभरहभावभरनच्चणवियलियहारअच्चियं। भत्तिभरेण तयणु जिणमज्जणि सयलसुरेहिं नच्चियं॥२९०॥
इय नच्चिऊण परमप्पमोयभरनिब्भराए भत्तीए । भयवंतं संथोउं एवं सव्वे समारद्धा ॥२९१॥
जय नीसेसअणोरपारभवसायरतारण ! । तिहुयणपणमियपायकमल ! निरुवमसुहकारण ! ॥२९२॥
मयणहरिणसंहरणतरुणहरिणारिपरक्कम ! । मुणिमाणसपरिसरणहंस ! तइलोयनयक्कम ! ॥२९३॥
सिरिविल्लहलवियसट्टकमलकोमलपयकरयल ! । हिमकणहिमकरकिरणसरिसजसधवलियमहीयल ! ॥२९४॥
सरलनयणजुयपसरतुलियवियसियपंकयदल ! । भवभयतावियहियनवजलहरसीयल ! ॥२९५॥
तमभरपसरनिरुंभणिक्कदिवसयरसमप्पह ! । सरणागयदढगूढवज्जपंजर ! हयकुप्पह ! ॥ २९६ ॥
उज्जोइयभुवणयल ! मोहकरिकुंभवियारण ! । जय जिणनाह ! समत्थवत्थुपरमत्थवियारण ! ॥२९७॥
भारहखित्तु पवित्तु तं जि जहिं तुहुं उप्पन्नउ । सा जणणी सकयत्थ जीएं तुहुं उयरुप्पन्नउ ॥२९८॥

---

शारदशशिकरधवलैरक्षतैरिमान् समालिखति । दर्पणभद्रासनवर्धमानश्रीवत्समत्स्यांश्च ॥२८४॥
तथा स्वस्तिकनन्दावर्तकलशपर्यन्तमङ्गलान्यष्ट । मुञ्चति ततो बहुविधकुसुमनिकरमाजानुमात्रं च ॥२८५॥
ततो नानाविधमणिभक्तिचित्रदण्डया वज्रमय्या । सुदर्व्या गन्धाभिराममुत्क्षिपति वरधूपम् ॥२८६॥
प्रज्वलद्दीपिकाचक्रवालमारात्रिकं मनोऽभिरामम् । उत्तारयति वरमङ्गलनिलयं तथा मङ्गलप्रदीपम् ॥२८७॥
एवं च सर्वकर्तव्यविस्तारे वृत्ते तद्वेलम् । जय-जय-जयादिके चारणमुनिपुङ्गवगणेन ॥२८८॥
हर्षोत्तालनम्रशिरोविगलितकुसुमार्चितधरातलम्। नर्तनशीलकरमृणालवलयावलिकलकलरवरमाकुलम् ॥२८९॥
उद्भटभरतभावभरनर्तनविचलितहारार्चितम् । भक्तिभरेण तदनु जिनमज्जने सकलसुरैर्नर्तितम् ॥२९०॥
इति नर्तित्वा परमप्रमोदभरनिर्भरया भक्त्या । भगवन्तं संस्तोतुमेवं सर्वे समारब्धाः ॥२९१॥
जय निःशेषानादिपारभवसागरतारण ! । त्रिभुवनप्रणतपादकमल ! निरुपमसुखकारण ! ॥२९२॥
मदनहरिणसंहरणतरुणहरिणारिपराक्रम ! । मुनिमानसपरिसरणहंस ! त्रैलोक्यनतक्रम ! ॥२९३॥
श्रीविलासिविकसितकमलकोमलपादकरतल ! । हिमकणहिमकरकिरणसदृशयशोधवलितमहीतल! ॥२९४॥
सरलनयनयुगप्रसरतुलितविकसितपङ्कजदल ! । भवभयतापितभविकहृदयनवजलधरशीतल ! ॥२९५॥
तमोभरप्रसरनिरोधनैकदिवसकरसमप्रभ ! । शरणागतदृढगूढवज्रपञ्जर ! हतकुपथ ! ॥२९६॥
उद्द्योतितभुवनतल ! मोहकरिकुम्भविदारण ! । जय जिननाथ ! समस्तवस्तुपरमार्थवितारण ! ॥२९७॥
भारतक्षेत्रं पवित्रं तदद्य यस्मिंस्त्वमुत्पन्नः । सा जननी स्वकृतार्था यस्यास्त्वमुदरोत्पन्नः ॥२९८॥

सच्चउं सोज्जि जहत्थु होइ सुपइट्ठनरेसरु। जसु घरि चिंतामणिसरिच्छु तुहुं जाउ जिणेसरु ॥२९९॥
इय थोऊण जिणिंदं इंदा नंदीसरे जिणे नमिउं। नियनियठाणेसु गया सोहम्मवईवि पुण इत्तो॥३००॥
उत्तत्तकंचणरुइं गहिउं करसंपुडेण जिणनाहं। वच्चइ जिणवरजम्मणघरम्मि परमप्पमोएण ॥३०१॥
तत्थ य पडिरूवं तह अवसोवणिमवणिऊण वेगेण। पुहइजणणीसमीवे सुयरयणं मुयइ नमिऊण ॥३०२॥
एगं कुंडलजुयलं पवरं तह देवदूसजुयलं च। ऊसीसगमूलम्मि ठवेइ पुरओ जिणिंदस्स ॥३०३॥
सिरिदामगंडं च एगं पणवन्नियरयणकिरणरमणिज्जं। लंबंतपवरमुत्ताहलावचूलं कणयमइयं ॥३०४॥
मुंचइ दिट्ठिपहम्मि अभिरमणट्ठाइं जमवलोयंतो। तित्थेसरो सुहेणं सचक्खुविक्खेवणं कुणइ ॥३०५॥
आणवइ तओ सक्को वेसमणं भद्द! जह लहुं चेव। उवणय जिणजम्महरे बत्तीसं सुवन्नकोडीओ ॥३०६॥
तह चेव हिरन्नस्सवि कोडीओ तह य नंदभद्दाणं। पत्तेयं बत्तीसं अन्नाणि य विविहवत्थूणि ॥३०७॥
सोवि हु तहत्ति सिग्घं जंभगदेवेहिं सव्वमुवणेइ। तत्तो पुणोवि सक्को उग्घोसावेइ सव्वत्थ ॥३०८॥
जह भो देवा सव्वे देवीओवि हु सुणंतु एक्कमणा। जो किर जिणस्स जिणवरजणणीए वावि नियचित्ते॥३०९॥
असिवमणिट्ठं काउं चिंतेही तस्स उत्तमंगं च। फुडिही सहस्सहा चिय अज्जगतरुमंजरिव्व लहुं ॥३१०॥
एवं काऊण विहिं भयवंतं पणमिऊण भत्तीए। उप्पइउं सो नंदीसरम्मि गंतुं गओ सग्गं ॥३११॥
अह उग्गयम्मि सूरे वियलियतिमिरासु सयलआसासु। तह वज्जिएसु मंगलतूरेसु यं गहिरसद्देसु ॥३१२॥

---

सत्यं सोऽद्य यथार्थो भवति सुप्रतिष्ठनरेश्वरः। यस्य गृहे चिन्तामणिसदृक्षस्त्वं जातो जिनेश्वरः ॥२९९॥
इति स्तुत्वा जिनेन्द्रमिन्द्रा नन्दीश्वरे जिनान् नत्वा। निजनिजस्थानेषु गताः सौधर्मपतिरपि पुनरितः ॥३००॥
उत्तप्तकाञ्चनरुचिं गृहीत्वा करसंपुटेन जिननाथम्। व्रजति जिनवरजन्मगृहे परमप्रमोदेन ॥३०१॥
तत्र च प्रतिरूपं तथाऽवस्वापनीमपनीय वेगेन। पृथिवीजननीसमीपे सुतरत्नं मुञ्चति नत्वा ॥३०२॥
एकं कुण्डलयुगलं प्रवरं तथा देवदूष्ययुगलं च। उच्छीर्षकमूले स्थापयति पुरतो जिनेन्द्रस्य ॥३०३॥
श्रीदामगण्डं चैकं पञ्चवर्णिकरत्नकिरणरमणीयम्। लम्बमानप्रवरमुक्ताफलावचूलं कनकमयम् ॥३०४॥
मुञ्चति दृष्टिपथेऽभिरमणार्थं यदवलोकमानः। तीर्थेश्वरः सुखेन स्वचक्षुर्विक्षेपणं करोति ॥३०५॥
आज्ञपयति ततः शक्रो वैश्रमणं भद्र! यथा लघ्वेव। उपनय जिनजन्मगृहे द्वात्रिंशतं सुवर्णकोटीः ॥३०६॥
तथैव हिरण्यस्यापि कोटीस्तथा च नन्दभद्राणाम्। प्रत्येकं द्वात्रिंशतमन्यानि च विविधवस्तूनि ॥३०७॥
सोऽपि हि तथेति शीघ्रं जृम्भकदेवैः सर्वमुपनयति। ततः पुनरपि शक्र उद्घोषयति सर्वत्र ॥३०८॥
यथा भो देवाः सर्वे देव्योऽपि खलु शृण्वन्त्वेकमनसः। यः किल जिनस्य जिनवरजनन्या वापि निजचित्ते॥३०९॥
अशिवमनिष्टं कर्तुं चिन्तयिष्यति तस्योत्तमाङ्गं च। स्फुटिष्यति सहस्रधैवार्जकतरुमञ्जरीव लघु ॥३१०॥
एवं कृत्वा विधिं भगवन्तं प्रणम्य भक्त्या। उत्पत्य स नन्दीश्वरं गत्वा गतः स्वर्गम् ॥३११॥
अथोद्गते सूरे विगलिततिमिरासु सकलाशासु। तथा वादितेषु मङ्गलतूरेषु च गम्भीरशब्देषु ॥३१२॥

---

१ क ख. °द्दा य। २ ग. °वणिय।

पिच्छेइ पुहइदेवी पंचनमुक्कारसरणपडिबुद्धा । गोसीससुरहिचंदणविलित्तगत्तं निर्य पुत्तं ॥३१३॥
तह पवरसुरहिमंदारमंजरीगंधलुद्धभसलेहिं । सामलियसरीरं देहकंतिकब्बुरियजम्मगिहं ॥३१४॥
इत्तो सुपइट्ठनिवो अइमहमिगधाविरीहिं चेडीहिं । वद्धाविओ सहरिसं देवीए पुत्तजम्मेण ॥३१५॥
तो ताण पमोएणं अवणियदासत्तणाण दाऊणं । इच्छाहियदविणभरं सुयजम्ममहूसवं कुणइ ॥३१६॥
तंहाहि;—
गोउरचउम्मुहचच्चरचउक्करायंतरायमग्गेसु । संमज्जिएसु कुंकुमविइन्नछडएसु सव्वत्थ ॥३१७॥
उच्छलियबहलपरिमलमिलंतलोलालिमुहलझंकारा । असमकुसुमोवयारा विच्छित्तीए रइज्जंति ॥३१८॥
कणयमयधूवघडियाउ अगरघणसारधूवधूमेणं । अंधारियआसाओ ठाणे ठाणे ठविज्जंति ॥३१९॥
पालंबियमुत्तावलिवलए चमरावचूलसोहिल्ले । उत्तुंगथोरथंभावणद्धवरसालहंजीए ॥३२०॥
पवणवसकणिरकिंकिणिचियडपडायासहस्सरमणीए । सहरिसनच्चिरगाइरतरुणीपणजणियमाहप्पे ॥३२१॥
संचिज्जंति लहुं चिय मंचे तारयरतारियातरले । पडिभवणदुवारं तह मुंचंति य पुन्नकलसे य ॥३२२॥
नच्चंति तरुणिसविलासलासियासेसलोयनयणाइं । मंगलतुमुलदिसाइं वद्धावणयाइं किज्जंति ॥३२३॥
हट्टालयगोउरपासायमुहेसु अइमहल्लाओ । वंदणमालाओ तहा सरसदलाओ निबज्झंति ॥३२४॥
उज्झिज्जंति सलीलं मुसलाइं तह य जुयसहस्साइं । मोयाविज्जंति रिणाहिदायगा दिन्नदेयधणा ॥३२५॥

---

पश्यति पृथिवीदेवी पञ्चनमस्कारशरणप्रतिबुद्धा । गोशीर्षसुरभिचन्दनविलिप्तगात्रं निजं पुत्रम् ॥३१३॥
तथा प्रवरसुरभिमन्दारमञ्जरीगन्धलुब्धभ्रमरैः । श्यामलितशरीरं देहकान्तिकर्बुरितजन्मगृहम् ॥३१४॥
इतः सुप्रतिष्ठनृपोऽतिमहमिकाधावित्रीभिश्चेटीभिः । वर्धापितः सहर्षं देव्याः पुत्रजन्मना ॥ ३१५ ॥
ततस्तेभ्यः प्रमोदेनापनीतदासत्वेभ्यो दत्त्वा । इच्छाधिकद्रविणभरं सुतजन्ममहोत्सवं करोति ॥३१६॥
तथाहि;—
गोपुरचतुर्मुखचत्वरचतुष्कराजद्राजमार्गेषु । संमार्जितेषु कुङ्कुमविकीर्णपथेषु सर्वत्र ॥३१७॥
उच्छलितबहलपरिमलमिलल्लोलालिमुखरझङ्काराः । असमकुसुमोपचारा विच्छित्तौ रच्यन्ते ॥३१८॥
कनकमयधूपघटिका अगुरुघनसारधूपधूमेन । अन्धारिताशाः स्थाने स्थाने स्थाप्यन्ते ॥३१९॥
प्रालम्बितमुक्तावलिवलयाश्चामरावचूलशोभनशीलाः । उत्तुङ्गस्थूलस्तम्भावनद्धवरशालभञ्जिकाः ॥३२०॥
पवनवशक्वणनशीलकिङ्किणीविततपताकासहस्ररमणीयाः । सहर्षनर्तकगायकतरुणीजनजनितमाहात्म्याः ॥३२१॥
संचीयन्ते लघ्वेव मञ्चास्तारतरतारिकातरलाः । प्रतिभवनद्वारं तथा मुच्यन्ते च पूर्णकलशाश्च ॥३२२॥
नृत्यन्ति तरुणीसविलासलासिताशेषलोकनयनानि । मङ्गलतुमुलदिशि वर्धापनकानि क्रियन्ते ॥३२३॥
हट्टालकगोपुरप्रासादमुखेष्वतिमहत्यः । वन्दनमालास्तथा सरसदला निबध्यन्ते ॥३२४॥
उज्झ्यन्ते सलीलं मुसलानि तथा च युगसहस्राणि । मोच्यन्ते ऋणाभिदायका दत्तदेयधनाः ॥३२५॥

---

१ क °पमि। २ क तथाहि।

मुच्चंति चारगाओ धणियं अवराहकारिणोवि जणा। कीरंति विसंठुलविब्भमाओ तह छणपवित्तीओ॥३२६॥
तहाहि;-
नच्चंतमयाउरतरुणिगलियसारसणल्हसियपरिहाणा। परिहाणल्हसणपहसिरविडजणकोलाहलाउलिया३२७
आउलियधणाकंखिरमग्गणगणदिज्जमाणविउलधणा। धणवियरणरित्तनिहाणखित्तवेसमणतवणीया॥३२८
तवणीयदंडऊसियचीणंसुयधयसहस्सरमणीया। रमणीयरमणिसहरिसपारंभियचच्चरीगीया॥३२९॥
गीयगुणनिउणगायणमहुरस्सरपूरियाखिलदिसोहा। सोहंतपउरवहुयणसायरकीरंतमंगल्ला॥३३०॥
मंगल्लहेउजिणवरपडिमावइट्ठअट्ठविहपूया। पूयापिच्छणपमुइयसावयगिज्जंतगुणनिवहा॥३३१॥
इय वाणारसिनयरी सबाहिरब्भंतरा सुरपुरीव। जाया समुचियपडिवत्तीसुंदरा सुइररमणीया॥३३२॥
अह नवरिमणुचियमिणं जमिह करा जणवयाण छिज्जंति। अविसेसियभिच्चनरेसरंव तह हवइ निवभवणं॥
एवं पवट्टमाणे नयरीए महूसवम्मि नरनाहो। सुपइट्ठो कयण्हाणो पवरालंकारलंकरिओ॥३३४॥
नियसियमहग्घवत्थो गंतूणत्थाणभूमिमुवविट्ठो। एत्थंतरम्मि सामंतमंतिपमुहा विसिट्ठजणा॥३३५॥
आगंतूण नमिऊण पायपउमाइं भणिउमारद्धा। देव! सरीरारोगत्तणेण सत्तूण विजएणं॥३३६॥
तह रज्जवित्थरेणं धणागमेणं च सव्वहा तुम्हे। वद्धाविज्जह जेसिं तिहुयणचूडामणिसरिच्छो॥३३७॥
नियकुलनहयलसंपुन्नपुन्निमाचंदमंडलसमाणो। एरिसपुत्तो जाओ इय भणिऊण तओ सव्वे॥३३८॥

---

मुच्यन्ते चारकाद् बाढमपराधकारिणोऽपि जनाः। क्रियन्ते विसंस्थुलविभ्रमास्तथा क्षणप्रवृत्तयः॥३२६॥
तथाहि;—
नृत्यन्मदातुरतरुणीगलितस्वरसनास्रस्तपरिधाना। परिधानस्रंसनप्रहसमानविटजनकोलाहलाकुलिता॥३२७॥
आकुलितधनाकाङ्क्षनशीलमार्गणगणदीयमानविपुलधना। धनवितरणरिक्तनिधानक्षिप्तवैश्रमणतपनीया-॥३२८॥
तपनीयदण्डोच्छ्रितचीनांशुकध्वजसहस्ररमणीया। रमणीयरमणीसहर्षप्रारब्धचर्चरीगीता॥३२९॥
गीतगुणनिपुणगायनमधुरस्वरपूरिताखिलदिगोघा। शोभमानपौरबहुजनसादरक्रियमाणमाङ्गल्या॥३३०॥
माङ्गल्यहेतुजिनवरप्रतिमोपदिष्टाष्टविधपूजा। पूजादर्शनप्रमुदितश्रावकगीयमानगुणनिवहा॥३३१॥
इति वाराणसीनगरी सबहिरभ्यन्तरा सुरपुरीव। जाता समुचितप्रतिपत्तिसुन्दरा सुचिररमणीया॥३३२॥
अथ नवरमनुचितमिदं यदिह करा जनपदानां छिद्यन्ते। अविशेषितभृत्यनरेश्वरमिव तथा भवति नृपभवनम्॥
एवं प्रवर्तमाने नगर्यां महोत्सवे नरनाथः। सुप्रतिष्ठः कृतस्नानः प्रवरालंकारालंकृतः॥३३४॥
निवासितमहार्घवस्त्रो गत्वाऽऽस्थानभूमिमुपविष्टः। अत्रान्तरे सामन्तमन्त्रिप्रमुखा विशिष्टजनाः॥३३५॥
आगत्य नत्वा पादपद्मे भणितुमारब्धाः। देव! शरीरारोगत्वेन शत्रूणां विजयेन॥३३६॥
तथा राज्यविस्तरेण धनागमेन च सर्वथा यूयम्। वर्धाप्यध्वे येषां त्रिभुवनचूडामणिसदृक्षः॥३३७॥
निजकुलनभस्तलसंपूर्णपूर्णिमाचन्द्रमण्डलसमानः। ईदृशपुत्रो जात इति भणित्वा ततः सर्वे॥३३८॥

---

१ ग °मंतल। २ ग भव°। ३ क गाविय। ४ क, ख जिग।

पवरकरितुरयभूसणमणिवसणाईणि निवइणो पुरओ । उवढोइंति सहेलं सम्माणेउं निवइणावि॥३३९॥
तंबोलवत्थकुसुमालंकारपयाणपुव्वयं सव्वे । बहुविहविहियपसाया विसज्जिया नियय़ठाणेसु ॥३४०॥
तत्तो नियसुयदंसणसमूसुओ समुवलब्भ पत्थावं । सुपइट्ठो अत्थाणाओ समुट्ठिओ गरुयहरिसेण ॥३४१॥
पत्तो कमेण मणिमयकुट्टिमतललिहियसेत्थियं विउलं । उब्भियहिरण्णमुसलं सुविहियरक्खापरिक्खेवं ॥
दारपएसनिवेसियसियकमलपहाणपुन्नजलकलसं । जिणवरजम्मणभवणं तत्थ य दिट्ठो य जिणनाहो॥३४३॥
सारयसहस्सकिरणोव्व रयणरासिव्व तेयपुंजोव्व । उज्जोयंतो भवणं देहपहाए समग्गंपि ॥३४४॥
तं दट्ठूण चिंतिउमाढत्तो नरवई अहो अपुव्वा । एयस्स पढमजायस्स कावि कंती सरीरस्स ॥३४५॥
तह य अविभावणिज्जं लायन्नं रूवसंपया असमा । निम्मेरं सुंदेरं तह य अभग्गं च सोहग्गं ॥३४६॥
ता सयलपुन्नपब्भारसायरं मम कुलं, जहिं एयं । संपुन्नलक्खणधरं पाउब्भूयं तणयरयणं ॥३४७॥
इय एवमाइ संचिंतिऊण सुपइट्ठनरवई तत्तो । पढमदिणे ठिइवडियं करेइ तित्थाहिवस्स तओ ॥३४८॥
तइयम्मि दिणे दंसंति उम्मुहं मंडलाई रविससिणो । संपत्तो य कमेणं परमपमोएण छट्ठदिणो ॥३४९॥
अविणट्ठलट्ठपंचिंदियाहिं जीवंतपाणनाहाहिं । नीरोगअंगुवंगाहिं राया कुलवुड्ढियाहिं च ॥३५०॥
घणकुंकुमपंकलित्तवयणकमलाहिं रूववंतीहिं । कंबुसमकंठकंदलअवलंबियसुरहिमालाहिं ॥३५१॥
अच्चंतजायमाणससंतोसो नरवरिंदसुपइट्ठो । कुलविलयाहिं जागरमहूसवं तो पयट्टेइ ॥३५२॥

---

प्रवरकरितुरगभूषणमणिवसनादीनि नृपतेः पुरतः । उपढौकन्ते सहेलं, सम्मान्य नृपतिनापि ॥३३९॥
ताम्बूलवस्त्रकुसुमालङ्कारप्रदानपूर्वकं सर्वे । बहुविधविहितप्रसादाः विसर्जिता निजकस्थानेषु ॥३४०॥
ततो निजसुतदर्शनसमुत्सुकः समुपलभ्य प्रस्तावम् । सुप्रतिष्ठ आस्थानात्समुत्थितो गुरुहर्षेण ॥३४१॥
प्राप्तः क्रमेण मणिमयकुट्टिमतललिखितस्वस्तिकं विपुलम् । ऊर्ध्वीकृतहिरण्यमुशलं सुविहितरक्षापरिक्षेपम् ॥
द्वारप्रदेशनिवेशितसितकमलप्रधानपूर्णजलकलशम् । जिनवरजन्मभवनं तत्र च दृष्टश्च जिननाथः ॥३४३॥
शारदसहस्रकिरण इव रत्नराशिरिव तेजःपुञ्ज इव । उद्द्योतयन् भवनं देहप्रभया समग्रमपि ॥३४४॥
तं दृष्ट्वा चिन्तयितुमारब्धो नरपतिरहो ! अपूर्वा । एतस्य प्रथमजातस्य कापि कान्तिः शरीरस्य ॥३४५॥
तथा चाविभावनीयं लावण्यं रूपसंपदसमा ! निर्मर्यादं सौन्दर्यं तथा चाभग्नं च सौभाग्यम् ॥३४६॥
तस्मात्सकलपुण्यप्राग्भारसागरो मम कुलं, यस्मिन्नेतत् । संपूर्णलक्षणधरं प्रादुर्भूतं तनयरत्नम् ॥३४७॥
इत्येवमादि संचिन्त्य सुप्रतिष्ठनरपतिस्ततः । प्रथमदिने स्थितिपतितं करोति तीर्थाधिपस्य ततः ॥३४८॥
तृतीयस्मिन्दिने दर्शयन्त्युन्मुखं मण्डले रविशशिनोः । संप्राप्तश्च क्रमेण परमप्रमोदेन षष्ठदिनः ॥३४९॥
अविनष्टमनोहरपञ्चेन्द्रियाभिर्जीवत्प्राणनाथाभिः । नीरोगाङ्गोपाङ्गाभी राजा कुलवृद्धिकाभिश्च ॥३५०॥
घनकुङ्कुमपङ्कलिप्तवदनकमलाभी रूपवतीभिः । कम्बुसमकण्ठकन्दलावलम्बितसुरभिमालाभिः ॥३५१॥
अत्यन्तजातमानससंतोषो नरवरेन्द्रसुप्रतिष्ठः । कुलवनिताभिर्जागरमहोत्सवं ततः प्रवर्तयति ॥३५२॥

---

१ ग. °णाउ उट्ठि° । २ क ग. सु°ण° ।

एक्कारसम्मि दिवसे समागए सूइकम्ममुवणिंति । जहभणियविहाणेणं, पत्ते बारसमदियहम्मि ॥३५३॥
नाणाविहवंजणखंडखज्जखज्जूरपाणयसमेयं । बहुसालिसूयसहियं निव्वत्तावेइ रसवइयं ॥३५४॥
तयणंतरं च नियखत्तियाण तह पुरपहाणलोयाणं । तं भोयणं पणामइ बहुमाणपुरस्सरं तत्तो ॥३५५॥
आयंताण खणेणं वीसत्थाणं सुहासणगयाणं । सम्माणियाण तेसिं पुरओ सुपइट्ठनरनाहो ॥३५६॥
भणइ य भो भो खत्तियपहाणपुरिसा ! ममेस संकप्पो । आसी पुव्वंपि जहा जद्दिवसं एस गब्भम्मि॥३५७॥
पुहईदेवीए सुओ संकंतो तद्दिणाओ अहिययरं । संजाया सुहपासा तत्तो एयस्स जुत्तमिणं ॥३५८॥
नामं सुपासकुमारो तुम्हाणवि संगइं जइ गमेइ । तो उवलक्खियभावेहिं तेहिं इय नरवई भणिओ ॥३५९॥
एयं चिय खलु जुत्तं, गुणनिप्फन्नम्मि विज्जमाणम्मि । नामम्मि कीस कीरइ अजहट्ठियकप्पणं तत्तो ॥३६०॥
इय जंपिरेहिं तेहिं जयगुरुणो सिरिसुपासनामंति । परितुट्ठेहिं पइट्ठियमह वित्ते नामकरणम्मि ॥३६१॥
सुरसंकामियकामियरसाए निययंगुलीए पाणेण । कयभोयणकायव्वो पंचहिं धाईहिं परियरिओ ॥३६२॥
सारिज्जंतो अंतेउरेण हत्थाउ हत्थकमलम्मि । अम्मापियरेहिं तहा कारिज्जंतो य चंकमणं ॥३६३॥
हासिज्जंतो बहुखुज्जवामणाईहिं कयवियारेहिं । सग्गाहिवाससरिसं तियसेहिं य उवयरिज्जंतो॥३६४॥
जोइज्जंतो विहियंजसाहि हरिसाउ पुरपुरंधीहिं । इय सो लालिज्जंतो पढमिल्लुब्भिन्नदसणजुओ॥३६५
परिवड्ढिउमारद्धो कुलगिरिकुहरग्गउव्व कप्पतरू । पडिपुन्नसयलदेहावयवो य कमेण संजाओ ॥३६६॥

एकादशे दिवसे समागते सूतिकर्मोपनयन्ति । यथाभणितविधानेन, प्राप्ते द्वादशदिवसे ॥३५३॥
नानाविधव्यञ्जनखण्डखाद्यखर्जूरपानकसमेताम् । बहुशालिसूपसहिता निर्वर्तयति रसवतिका(तीं)म् ॥३५४॥
तदनन्तर च निजक्षत्रियेभ्यस्तथा पुरप्रधानलोकेभ्य । तद् भोजनमर्पयति बहुमानपुरस्सरं तत ॥३५५॥
आगच्छता क्षणेन विश्वस्ताना सुखासनगतानाम् । सम्मानिताना तेषा पुरत सुप्रतिष्ठनरनाथ ॥३५६॥
भणति च भो भो क्षत्रियप्रधानपुरुषा ! ममैष सङ्कल्प । आसीत्पूर्वमपि यथा यद्दिवस एष गर्भे ॥३५७॥
पृथिवीदेव्या सुत संक्रान्तस्तद्दिनादधिकतरम् । संजाता शुभपार्श्वास्तत एतस्य युक्तमिदम् ॥३५८॥
नाम सुपार्श्वकुमारो युष्माकमपि संगतिं यदि गमयति । तत उपलक्षितभावैस्तैरिति नरपतिर्भणित ॥३५९॥
एतदेव खलु युक्त गुणनिष्पन्ने विद्यमाने । नाम्नि कस्मात् क्रियतेऽयथास्थितकल्पन तत ॥३६०॥
इति जल्पितृभिस्तैर्जगद्गुरो श्रीसुपार्श्वनामेति । परितुष्टै प्रतिष्ठितमथ वृत्ते नामकरणे ॥३६१॥
सुरसङ्क्रामितकामितरसाया निजकाङ्गुल्या पानेन । कृतभोजनकर्तव्य पञ्चभिर्धात्रीभि परिकरित ॥३६२॥
सार्यमाणोऽन्त पुरेण हस्ताद्धस्तकमले । मातापितृभ्या तथा कार्यमाणश्च चङ्क्रमणम् ॥३६३॥
हास्यमानो बहुकुब्जवामनादिभि कृतविकारै । स्वर्गाधिवाससदृश त्रिदशैश्चोपचर्यमाण ॥३६४॥
दृश्यमानो विहिताञ्जसाभिर्हर्षात् पुरपुरन्ध्रीभि । इति स लाल्यमान प्राथमिकोद्भिन्नदशनयुत ॥३६५॥
परिवर्धितुमारब्ध कुलगिरिकुहरोद्गत इव कल्पतरु । परिपूर्णसकलदेहावयवश्च क्रमेण सजात ॥३६६॥

१ क °गय ग °म । २ ख नव कप्ह । ३ क °कमिण । ४ क सेहिं ।

देसूणअट्ठवच्छरपज्जायं जणियजणमणाणंदं। पत्तो य कुमारत्तं रूवसिरीवासतामरसं ॥३६७॥
तथाहि;—
ताविच्छगुच्छसच्छहकुंचियकेसेहिं सहइ तस्स मुहं। वियसियनवारविंदं लीणेहिं व भमरविंदेहिं॥३६८॥
जणमणकुरंगसंजमणवागुरापासविब्भममउव्वं। जस्स सवणाण जुअलं सोहग्गमडप्फरं वहइ ॥३६९॥
रेहइ कंठो सुपडिग्गहोव्व पडिपुन्नवयणकलसस्स। आगामियजोव्वणसंपवेसवरमंगलकरस्स ॥३७०॥
जंपंतस्स य लीलाए जस्स सियदसणकिरणरिंछोली। हारावलिव्व रेहइ विग्गहलायन्नलच्छीए ॥३७१॥
अह सहइ विसालं सत्थलसमुब्भवं भुयअसोयलयजुयलं। नहकिरणपुप्फियं पाणिपल्लवारुणिमरमणीयं३७२
जस्स य विसालवच्छत्थलुब्भवो सुहफलो य सिरिवच्छो। सच्चं सिरिवच्छो इव जणमणपवियंभियविलासो॥
सो सहइ उरेणं उन्नएण तह कडियलेण पीणेण। परितणुणा उयरेणं कंठीरववरकिसोरोव्व ॥३७४॥
सेविज्जइ कमकमलं नहमणिनियरच्छलेण जस्स सया। सोहग्गमग्गिरीहिं निम्मलनक्खत्तपंतीहिं॥३७५॥
किं बहुणा सव्वावयवसुंदरो सयललक्खणजुओ य। कस्स न नयणाणंदं जणेइ सुहओ स दिट्ठोवि॥३७६॥
आगब्भाओवि वरनाणरयणदीवत्तई तिहुयणंपि। उज्जोयंती जाया कयकिच्चा जस्स जयगुरुणो॥३७७॥
कह चंदो सलहिज्जइ जस्स न विमलाओ हुंति सोलसवि। फुरियाउ इमस्स पुणो कलाओ बावत्तरीओवि।
बालोवि हु सुकईणं जो गुरुमणविम्हयं सया जणेइ। रसभावसुंदराइं विरयंतो ललियकव्वाइं ॥३७९॥
अत्थक्कतक्कसंपक्ककक्कसाणं पहाणविउसाण। अक्खिवइ मणं विसमत्थसत्थसुहुमत्थकहणेण ॥३८०॥

---

देशोनाष्टवत्सरपर्यायं जनितजनमनआनन्दम्। प्राप्तश्च कुमारत्वं रूपश्रीवासतामरसम् ॥३६७॥
तथाहि;—
तापिच्छगुच्छसदृशकुञ्चितकेशै राजते तस्य मुखम्। विकासितनवारविन्दं लीनैरिव भ्रमरवृन्दैः ॥३६८॥
जनमनःकुरङ्गसंयमनवागुरापाशविभ्रममपूर्वम्। यस्य श्रवणयोर्युगलं सौभाग्यगर्वं वहति ॥३६९॥
राजते कण्ठः सुप्रतिग्रह इव परिपूर्णवदनकलशस्य। आगामिकयौवनसंप्रवेशवरमङ्गलकरस्य ॥३७०॥
जल्पतश्च लीलया यस्य सितदशनकिरणपङ्क्तिः। हारावलिरिव राजते विग्रहलावण्यलक्ष्म्याः ॥३७१॥
अथ राजते विशालं सत्स्थलसमुद्भवं भुजाशोकलतायुगलम्। नखकिरणपुष्पितं पाणिपल्लवारुणिमरमणीयम् ॥३७२॥
यस्य च विशालवक्षःस्थलोद्भवः शुभफलश्च श्रीवत्सः। सत्यं श्रीवत्स इव जनमनःप्रविजृम्भितविलासः॥३७३॥
स राजते उरसोन्नतेन तथा कटीतलेन पीनेन। परितनुनोदरेण कण्ठीरववरकिशोर इव ॥३७४॥
सेव्यते क्रमकमलं नखमणिनिकरच्छलेन यस्य सदा। सौभाग्यमार्गयित्रीभिर्निर्मलनक्षत्रपङ्क्तिभिः ॥३७५॥
किं बहुना सर्वावयवसुन्दरः सकललक्षणयुतश्च। कस्य न नयनानन्दं जनयति सुभगः स दृष्टोऽपि ॥३७६॥
आगर्भादपि वरज्ञानरत्नदीपत्रयी त्रिभुवनमपि। उद्द्योतयन्ती जाता कृतकार्या यस्य जगद्गुरोः ॥३७७॥
कथं चन्द्रः श्लाघ्येत यस्य न विमला भवन्ति षोडशापि। स्फुरिता अस्य पुनः कला द्वासप्ततिरपि ॥३७८॥
बालोऽपि खलु सुकवीनां यो गुरुमनोविस्मयं सदा जनयति। रसभावसुन्दराणि विरचयन्ललितकाव्यानि॥३७९॥

उवणीयतरुणिमणनयणविब्भमं संभवंतनवसोहं । अंतरियकुमारत्तं तत्तो पत्तो स तारुण्णं ॥३८१॥
हेलाए कुसुमचावस्स चंगिमं निज्जिऊण धरणियले । वियरंतो अच्चिज्जइ लोएहिं नयणकमलेहिं ॥३८२॥
पोढपुरसुंदरीणं गुणगणसंदाणियाणिव मणाणि । तम्मि वयंते अणुधाविराइं वलिराइं वलमाणे ॥३८३॥
तद्देहदीहियाए पिज्जंतंपि हु न माइ लायन्नं । तण्हाउरतरुणीहिं वियसियनयणंजलिउडाहिं ॥३८४॥
सो समसीलवएहिं संजुत्तो पवररायतणएहिं । कीलेइ लडहजोव्वणविलासवसमंथरं कुमरो ॥३८५॥
कइयावि गीयगोट्ठीवियड्ढपरिसासु सरवियारेण । हाहाहूहूपमुहाणमवि इमो जणइ अच्छरियं॥३८६॥
कइयावि किंनरीणं रहम्मि अणुभावमउलियच्छिजुओ । नियसुचरियसंमीसं निसुणइ कलकागलीगीयं॥३८७॥
कइयावि धणुपरिस्समविणिस्सहो दीहियासु मज्जेइ । मज्जिरवारविलासिणिमुहजणियसरोयसंकासु॥३८८॥
कइयावि सहइ रेवंतरेहिरो तुरयवाहियालीसु । नीसंदिरसेयजलाविलोव्व लायन्नकंतीहिं ॥३८९॥
कइयावि पायपयडणथिरासणो दुद्दमाण दंतीण[1] कुंभत्थलसाणनिसाणियंकुसो खलइ मयपसरं॥३९०॥
एमेव कहवि लीलावसेण जं किंपि तस्स गुणनिहिणो । परमत्थं पिव सिक्खइ चरियलवं तंपि विउसजणो॥
इय कीलीए कालं गमेइ जसपसरधवलियदिसोहो । निस्सीमथाममइवसविभावियासेसविन्नाणो ॥३९२॥
अह तस्स ठिइनिमित्तं सुरेहिं रइओ सिरग्गलिहियनहो[2] । कणयमणिविड्डुरिल्लो मेरुव्व महंतपासाओ ॥
भोअणविलासमज्जणमंडवपरिमंडिओ मणभिरामो । जो पयडं आखंडलविमाणमाणंपि खंडेइ ॥३९४॥

---

अनवसरतर्कसंपर्ककर्कशानां प्रधानविदुषाम् । आक्षिपति मनो विषमार्थशास्त्रसूक्ष्मार्थकथनेन ॥३८०॥
उपनीततरुणीमनोनयनविभ्रमं संभवन्नवशोभम् । अन्तरितकुमारत्वं ततः प्राप्तः स तारुण्यम् ॥३८१॥
हेलया कुसुमचापस्य चङ्गिमानं निर्जित्य धरणीतले । विचरन्नर्च्यते लोकैर्नयनकमलैः ॥३८२॥
प्रौढपुरसुन्दरीणां गुणगणसंदानितानीव मनांसि । तस्मिन् व्रजन्त्यनुधावितॄणि वलितॄणि वलति ॥३८३॥
तद्देहदीर्घिकायां पीयमानमपि हि न माति लावण्यम् । तृष्णातुरतरुणीभिर्विकसितनयनाञ्जलिपुटाभिः ॥३८४॥
स समशीलवयस्कैः संयुक्तः प्रवरराजतनयैः । क्रीडति रम्ययौवनविलासवशमन्थरं कुमारः ॥३८५॥
कदापि गीतगोष्ठीविदग्धपर्षत्सु स्वरविचारेण । हाहाहूहूप्रमुखाणामप्ययं जनयत्याश्चर्यम् ॥३८६॥
कदापि किंनरीणां रहस्यनुभावमुकुलिताक्षियुगः । निजसुचरितसंमिश्रं शृणोति कलकाकलीगीतम् ॥३८७॥
कदापि धनुःपरिश्रमविनिस्सहो दीर्घिकासु मज्जति । मज्जनशीलवारविलासिनीमुखजनितसरोजशङ्कासु॥३८८॥
कदापि राजते रयवद्राजिता तुरगवाहिकाऽऽलीषु । निःस्यन्दितृस्वेदजलाविल इव लावण्यकान्तिभिः॥३८९॥
कदापि पादप्रकटनस्थिरासनो दुर्दमानां दन्तिनाम् । कुम्भस्थलशाणनिशाणिताङ्कुशः स्खलयति मदप्रसरम् ॥
एवमेव कथमपि लीलावशेन यः कोऽपि तस्य गुणनिधेः । परमार्थमिव शिक्षते चरितलवं तमपि विद्वज्जनः ॥
इति केल्यां कालं गमयति यशःप्रसरधवलितदिगोघः । निस्सीमस्थाममतिवशविभाविताशेषविज्ञानः ॥३९२॥
अथ तस्य स्थितिनिमित्तं सुरैः रचितः शिरोऽग्रलिखितनभः । कनकमणिवैडूर्यवान् मेरुरिव महाप्रासादः ॥३९३॥

---

१ क °ण्ण । २ क ग. पाद । ३ क सिरग्गगिदि° ।

तत्थेव ठिओ जं किंपि सुंदरं सो विभावए हिअए। तं किंकरव्व देवा सव्वंपि हु तस्स उवणिंति ॥३९५॥
अह अन्नया य सुपइट्ठनरवई जाव चिट्ठइ निविट्ठो। अत्थाणे नमिऊणं ता पडिहारीए विण्णत्तो॥३९६॥
देव ! दुवारे अमरावईओ रिउमद्दणस्स वरदूओ। नरनाहं दट्ठुमणो ता करणिज्जं समाइससु ॥३९७॥
तो रन्ना भूसन्नाणुमयपवेसेण तेण सहसावि। निग्गंतूणं करवालभासुरा पुणरवि पविट्ठा ॥३९८॥
सोवि महीयलगयमउलिमंडलो पणमिऊण नरनाहं। तक्खणमुवणीए विट्ठरम्मि साणंदमुवविट्ठो ॥३९९॥
अह सरलाए संभूसिऊण दिट्ठीए सायरं पुट्ठो। जह कुसलं तुह पहुणो को वाऽऽगमणम्मि तुह हेऊ?॥४००॥
विणओणएण सिररइयअंजलिं अह नरेण पडिभणियं। देवपसाएण सया कुसलं चिय सामिसालस्स॥४०१॥
आगमणकारणं पुण रणभरसोंडीर ! निसुणसु ममेयं। जेणं तुम्ह सयासे नियपहुणा पेसिओ अहयं ॥४०२॥
अत्थि इह अम्ह पहुणो देवी नामेण चंदवयणत्ति। सयलावरोहसिररयणविब्भमा विब्भमब्भहिया ॥४०३॥
तीसे य सुया पवरा सोमा नामेण गुणमहग्घविया। अहिदेवयव्व सोहग्गयाए सव्वंगरमणीया ॥४०४॥
अह जोव्वणं पवन्ना कलाकलावेण सह सरीरेण। ससंहरकलव्व पइदिणपवड्ढसविसेसलायन्ना ॥४०५॥
जत्तो विलोलपम्हलधवलाइं वलंति तारनयणाइं। तत्तो चिय पंचसरो कुंडलियधणू पहावेइ ॥४०६॥
सा चंदकलाओ चुन्निऊण आलोडिऊण अमएणं। मन्ने अणंगसंजीवणोसही निम्मिया विहिणा ॥४०७॥
एयं मणुन्नं एयं च सुंदरं सलहणिज्जमेयंति। इय भाविन्तो तत्तिं न लहइ लोओ तयंगेसु ॥४०८॥

---

भोजनविलासमज्जनमण्डपपरिमण्डितो मनोऽभिरामः। यः प्रकटमाखण्डलविमानमानमपि खण्डयति ॥३९४॥
तत्रैव स्थितो यत्किमपि सुन्दरं स विभावयति हृदये। तत् किङ्करा इव देवाः सर्वमपि हि तस्योपनयन्ति ॥३९५॥
अथान्यदा च सुप्रतिष्ठनरपतिर्यावत्तिष्ठति निविष्टः। आस्थाने नत्वा तावत्प्रतीहार्या विज्ञप्तः ॥३९६॥
देव ! द्वारेऽमरावतीतो रिपुमर्दनस्य वरदूतः। नरनाथं द्रष्टुमनास्तस्मात्करणीयं समादिश ॥३९७॥
ततो राज्ञा भ्रूसंज्ञानुमतप्रवेशेन तेन सहसापि। निर्गत्य करवालभासुरा पुनरपि प्रविष्टा॥३९८॥
सोऽपि महीतलगतमौलिमण्डलः प्रणम्य नरनाथम्। तत्क्षणमुपनीते विष्टरे सानन्दमुपविष्टः ॥३९९॥
अथ सरलया संभूष्य दृष्ट्या सादरं पृष्टः। यथा कुशलं तव प्रभोः को वाऽऽगमने तव हेतुः ? ॥४००॥
विनयावनतेन शिरोरचिताञ्जल्यथ नरेण प्रतिभणितम्। देवप्रसादेन सदा कुशलमेव स्वामिशालस्य(?) ॥४०१॥
आगमनकारणं पुना रणभरशौण्डीर ! शृणु ममैतत्। येन युष्माकं सकाशे निजप्रभुणा प्रेषितोऽहकम् ॥४०२॥
अस्तीहास्माकं प्रभोर्देवी नाम्ना चन्द्रवदनेति। सकलावरोधशिरोरत्नविभ्रमा विभ्रमाभ्यधिका ॥४०३॥
तस्याश्च सुता प्रवरा सोमा नाम्ना गुणमहार्घिता। अधिदेवतेव सौभाग्यस्य सर्वाङ्गरमणीया ॥४०४॥
अथ यौवनं प्रपन्ना कलाकलापेन सह शरीरेण। शशधरकलेव प्रतिदिनप्रपन्नसविशेषलावण्या ॥४०५॥
यतो विलोलपक्ष्मधवले वलतस्तारनयने। तत एव पञ्चशरः कुण्डलितधनुः प्रधावति ॥४०६॥
सा चन्द्रकलाश्चूर्णयित्वाऽऽलोड्यामृतेन। मन्येऽनङ्गसंजीवनौषधिर्निर्मिता विधिना ॥४०७॥
एतन्मनोज्ञमेतच्च सुन्दरं श्लाघनीयमेतदिति। इति भावयंस्तृप्तिं न लभते लोकस्तदङ्गेषु ॥४०८॥

कंचीविसयाओ कुंतलम्मि तत्तो य मज्झदेसम्मि। जुवदिट्ठीओ तयंगे पहियव्व चिरं पयट्टंति ॥४०९॥
अह अन्नया य सा सहयरीहिं सहिया गया निउज्जाणं। निसुणइ गिज्जंतं किंनरीहिं गाहाजुयं एयं॥४१०॥
सिरिसुपइट्ठनराहिवविसालकुलगयणभूसणससंको। सयलकलाकलहंसीलीलाकमलायरो कुमरो ॥४११॥
नामेण सुपासो सयलसुहयसिरसेहरो गुणाणुयही। तरुणियणहिययहरणो धन्नाए इमो वरो होही ॥४१२॥
सा एयं निसुणंती कुमारगुणकित्तणं तहिं बाला। ईसाइएण नूणं मयणेण सरेहिं संविद्धा ॥४१३॥
तत्तो य तेहिं सा कीलियव्व सुत्तव्व अहव मत्तव्व। गाढं निमीलियनयणा मुच्छाविहलंघला जाया४१४
गयचेयन्ना न सहीणं उत्तरं देइ किंपि पुट्ठावि। ताओवि संभंताओ चिंतंति अहो किमेयंति ॥४१५॥
अइउसिणूसासेहिं देहे दाहोत्ति मन्नमाणीओ। कमलिणिदलेहिं सेज्जं विरयंति कहंति य पिऊणं॥४१६॥
हा दिव्व ! कहमकंडे मह दंडो पाडिओ तए सहसा। इच्चाइ पलवमाणी समागया चंदवयणावि ॥४१७॥
तत्तो य देहदाहस्स कारणं पुच्छिओ सहीवग्गो। सव्वोवि जा न साहइ ता निग्गंतूण एगंते ॥४१८॥
पुट्ठा वियक्खणा नाम सहयरी, तीइ साहियं सव्वं। जह सिरिसुपासकुमरेऽणुरत्तचित्ता इमा नूणं ॥४१९॥
जं उज्जाणे एयाए निसुणिओ किंनरीए गिज्जंतो। सो सिरिसुपासकुमरो एयावत्था तओ जाया॥४२०॥
तो देवी गंतूणं साहइ सव्वंपि वइयरं रन्नो। तेणवि पहिट्ठहियएण जंपियं वयणमेयंति ॥४२१॥
जइ पुव्वंपि ममेसो संकप्पो आसि जह इमा धूया। देया सुपासकुमरस्स संपयं लट्ठयं विहिणा ॥४२२॥

---

काञ्चीविषयात्कुन्तले ततश्च मध्यदेशे। युवदृष्टयस्तदङ्गे पथिका इव चिरं प्रवर्तन्ते ॥४०९॥
अथान्यदा च सा सहचरीभिः सहिता गता निजोद्याने। शृणोति गीयमानं किन्नरीभिर्गाथायुगमेतत् ॥४१०॥
श्रीसुप्रतिष्ठनराधिपविशालकुलगगनभूषणशशाङ्कः। सकलकलाकलहंसीलीलाकमलाकरः कुमारः ॥४११॥
नाम्ना सुपार्श्वः सकलसुभगशिरःशेखरो गुणानामुदधिः। तरुणीजनहृदयहरणो धन्याया अयं वरो भविष्यति॥४१२॥
सैतच्छृण्वती कुमारगुणकीर्तनं तस्मिन् बाला। ईर्ष्यायितेन नूनं मदनेन शरैः संविद्धा ॥४१३॥
ततश्च तैः सा कीलितेव सुप्तेवाथवा मत्तेव। गाढनिमीलितनयना मूर्च्छाविशृङ्खला जाता ॥४१४॥
गतचैतन्या न सखीनामुत्तरं ददाति किमपि पृष्टापि। ता अपि संभ्रान्ताश्चिन्तयन्ति अहो किमेतदिति ? ॥४१५॥
अत्युष्णोच्छ्वासैर्देहे दाह इति मन्यमानाः। कमलिनीदलैः शय्यां विरचयन्ति कथयन्ति च पितरौ ॥४१६॥
हा दैव ! कथमकाण्डे मम दण्डः पातितस्त्वया सहसा। इत्यादि प्रलपन्ती समागता चन्द्रवदनापि ॥४१७॥
ततश्च देहदाहस्य कारणं पृष्टः सखीवर्गः। सर्वोऽपि यावन्न कथयति तावन्निर्गत्यैकान्ते ॥४१८॥
पृष्टा विचक्षणा नाम सहचरी, तया कथितं सर्वम्। यथा श्रीसुपार्श्वकुमारेऽनुरक्तचित्तेयं नूनम् ॥४१९॥
यदुद्याने एतया श्रुतः किन्नर्या गीयमानः। स श्रीसुपार्श्वकुमार एतदवस्था ततो जाता ॥४२०॥
ततो देवी गत्वा कथयति सर्वमपि व्यतिकरं राज्ञे। तेनापि प्रहृष्टहृदयेन जल्पितं वचनमेतदिति ॥४२१॥
यथा पूर्वमपि ममैष संकल्प आसीद्यथेयं दुहिता। देया सुपार्श्वकुमाराय सांप्रतं मनोहरं विधिना ॥४२२॥

---

१ ख पंचं।

सयमेव कयं, ता एत्थ उज्जमं सिग्घमेव काहामो । इय गंतूणं साहसु दुहियाए देवि ! दुहियाए ॥४२३॥
तत्तो य हरिसियाए आगंतूणं इमम्मि वुत्तंते । कहिए देवीए तओ सा किंचि सचेयणा जाया ॥४२४॥
तं चेव पुणो परमक्खरंव गाहाजुयं विचिंतंती । एगंतठिया चिट्ठइ लज्जइ दिट्ठेवि सहिवग्गे ॥४२५॥
अवरं च;
भुंजइ नय आहारं न कुणइ ण्हाणं नयावि सिंगारं। तंबूलंपि न गिण्हइ न य नियसइ चारुवत्थाणि॥४२६॥
नो दिट्ठीइवि पिच्छइ रूवाइं महानरिंदकुमराणं। दूयाणीयाइं चित्तपट्टियासुंपि लिहियाइं ॥४२७॥
किं बहुणा;
एवं तणुअंगीए भिन्नाए निसियमयणबाणेहिं ? सरणं सुपासकुमरो मरणं वा देव ! न हु अन्नं ॥४२८॥
एयावत्थं तं पासिऊण तह मंतिऊण मंतियणं । रिउमद्दणेण रण्णा मइसायरमंतिणा सहिया ॥४२९॥
सोमा नामेण सुया सयंवरा सिरिसुपासकुमरस्स । संपेसिया तहा हं मइसायरमंतिणा पुरओ ॥४३०॥
कहिउं तुम्ह समीवे वइयरमेवं निरूविओ देव ! । एत्तो तुमं पमाणं इय भणिउं ठाइ तुण्हिक्को ॥४३१॥
तो भणियं नरवइणा सम्मं आलोइऊण साहिस्सं । वच्चसु नियआवासे तुमंति सम्माणिओ रण्णा॥४३२॥
वच्चइ नियआवासे सो, एत्तो नरवईवि साहेइ । पुहवीपियाए सव्वं तो पभणइ सावि परितुट्ठा॥४३३॥
देव ! मए पत्ताइं सुहाइं सव्वाइं अणणुभूयाइं । तुह पायपसाएणं एत्तियमेत्तेण हीणाइं ॥४३४॥

---

स्वयमेव कृतं, तस्मादत्रोद्यमं शीघ्रमेव करिष्यामः । इति गत्वा कथय दुःखितां देवि ! दुहितरम् ॥४२३॥
ततश्च हर्षितयाऽऽगत्यास्मिन् वृत्तान्ते । कथिते देव्या ततः सा किञ्चित् सचेतना जाता ॥४२४॥
तदेव पुनः परमाक्षरमिव गाथायुगं विचिन्तयन्ती । एकान्तस्थिता तिष्ठति लज्जति दृष्टेऽपि सखीवर्गे ॥४२५॥
अपरञ्च;
भुङ्क्ते न चाहारं न करोति स्नानं न चापि शृङ्गारम्। ताम्बूलमपि न गृह्णाति न च निवसति चारुवस्त्राणि॥४२६॥
नो दृष्ट्यापि पश्यति रूपाणि महानरेन्द्रकुमाराणाम् । दूतानीतानि चित्रपट्टिकास्वपि लिखितानि ॥४२७॥
किं बहुना;
एवं तन्वङ्ग्या भिन्नाया निशितमदनबाणैः । शरणं सुपार्श्वकुमारो मरणं वा देव ! न त्वन्यत् ॥४२८॥
एतदवस्थां तां दृष्ट्वा तथा मन्त्रयित्वा मन्त्रिजनेन । रिपुमर्दनेन राज्ञा मतिसागरमन्त्रिणा सहिता ॥४२९॥
सोमा नाम्ना सुता स्वयंवरा श्रीसुपार्श्वकुमाराय । संप्रेषिता तथाऽहं मतिसागरमन्त्रिणा पुरतः ॥४३०॥
कथयितुं युष्माकं समीपे व्यतिकरमेवं निरूपितो देव ! । इतो यूयं प्रमाणमिति भणित्वा तिष्ठति तूष्णीकः॥४३१॥
ततो भणितं नरपतिना सम्यगालोच्य कथयिष्यामि । व्रज निजकावासे त्वमिति संमानितो राज्ञा ॥४३२॥
व्रजति निजकावासे सः, इतो नरपतिरपि कथयति । पृथिवीप्रियायै सर्वं ततः प्रभणति सापि परितुष्टा ॥४३३॥
देव ! मया प्राप्तानि सुखानि सर्वाण्यननुभूतानि । त्वत्पादप्रसादेनैतावन्मात्रेण हीनानि ॥४३४॥
यदि पुनः कथमप्येतं वीवाहमहोत्सवं पश्यामि । संप्रति सुपार्श्वकुमारस्य देव ! ततो भवामि कृतकृत्या ॥४३५॥

जइ पुण कहंपि एयं वीवाहमहूसवंपि पिच्छामि। संपइ सुपासकुमरस्स देव! ता होमि कयकिच्चा ॥४३५॥
तो नरवइणा भणियं जइ एवं देवि! ता तुमं सिग्घं। वच्चसु कुमरसमीवं वीवाहत्थं च पन्नवसु ॥४३६॥
तत्तो य पुहइदेवी वच्चइ कंचुइजणेण परियरिया। पासे सुपासकुमरस्स सोवि दट्ठूण तं इंतिं ॥४३७॥
अणुगमइ अभिमुहं चिय सत्तट्ठ पयाइं तहय कारवइ। आसणदाणप्पमुहं पडिवत्तिं तह य नमिऊणं॥४३८॥
भालयलमिलियकरकमलसंपुडो विन्नवेइ कुमरोवि। संपइ तुम्हागमणे अम्मो! किं कारणं कहसु?॥४३९॥
पुहइजणणीए भणियं पुत्ताहं पेसियम्हि देवेण। तुह वीवाहमहूसवदंसणउक्कंठिओ जम्हा ॥४४०॥
देवो इयरजणोवि य, तह मज्झवि एत्तियं च दूमेइ। संपइ अपत्तपुव्वं पत्ताइं सुहाइं अन्नाइं ॥४४१॥
तुज्झ पसाएणन्ने पडिपुन्ना जं मणोरहा सव्वे। ता पडिवज्जउ कुमरो वीवाहमहूसवं काउं ॥४४२॥
तं सुच्चा कुमरोवि हु पभणइ अम्मो! न मुणह मह चित्तं। नवि याणह विसयसुहं गिहवासंपि हु सदुक्खफलं ॥
जेणं विवाहविसए एवं उल्लवह, तीए तो भणियं। मुणिमो सव्वं किंपुण अलंघणिज्जं च पिउवयणं॥४४४॥
न हु तुम्हाणं पच्छिमवएवि दुलहो हु गिहपरिच्चाओ। पडिकूलिस्सइ देवो पडिपुन्नमणोरहो न तुमं ॥४४५॥
तो भणियं कुमरेणं पडिवज्जिज्जइ कहं इमं अम्मो!। पढमं चिय पयडिज्जइ विवाहसमए जहिं एयं ॥४४६॥
चउमंडलगावत्तणच्छलेण संसारचउगइब्भमणं। घयमहुहुणणमिसेणं कारिज्जइ सयलगुणदहणं॥४४७॥
किणणत्थं कम्मकयाणगस्स पढमंपि हत्थसन्नव्व। कन्नापाणिग्गहकइयवेण दाविज्जए तत्थ ॥४४८॥

---

ततो नरपतिना भणितं यद्येवं देवि! ततस्त्वं शीघ्रम्। व्रज कुमारसमीपं वीवाहार्थं च प्रज्ञपय ॥४३६॥
ततश्च पृथिवीदेवी व्रजति कञ्चुकिजनेन परिकरिता। पार्श्वे सुपार्श्वकुमारस्य सोऽपि दृष्ट्वा तामायतीम्॥४३७॥
अनुगच्छत्यभिमुखमेव सप्ताष्ट पदानि तथा च कारयति। आसनदानप्रमुखां प्रतिपत्तिं तथा च नत्वा ॥४३८॥
भालतलमिलितकरकमलसंपुटो विज्ञपयति कुमारोऽपि। संप्रति तवागमनेऽम्ब! किं कारणं कथय ॥४३९॥
पृथिवीजनन्या भणितं पुत्राहं प्रेषितास्मि देवेन। तव वीवाहमहोत्सवदर्शनोत्कण्ठितो यस्मात् ॥४४०॥
देव इतरजनोऽपि च, तथा ममाप्येतावच्च दावयति। संप्रत्यप्राप्तपूर्वं प्राप्तानि सुखान्यन्यानि ॥४४१॥
तव प्रसादेनान्ये परिपूर्णा यन्मनोरथाः सर्वे। ततः प्रतिपद्यतां कुमारो वीवाहमहोत्सवं कर्तुम् ॥४४२॥
तत् श्रुत्वा कुमारोऽपि हि प्रभणत्यहो न जानीथ मम चित्तम्। नापि जानीथ विषयसुखं गृहवासमपि च सदुःखफलम्॥
येन वीवाहविषय एवमुल्लपथ, तया ततो भणितम्। जानीमः सर्वं किंपुनरलङ्घनीयं च पितृवचनम् ॥४४४॥
न खलु युष्माकं पश्चिमवयस्यपि दुर्लभो हि गृहपरित्यागः। प्रतिकूलयिष्यति देवः परिपूर्णमनोरथो न त्वाम्॥४४५॥
ततो भणितं कुमारेण प्रतिपद्येत कथमिदमम्ब!। प्रथममेव प्रकट्यते विवाहसमये यस्मिन्नेतत् ॥४४६॥
चतुर्मण्डलकावर्तनच्छलेन संसारचतुर्गतिभ्रमणम्। घृतमधुहवनमिषेण कार्यते सकलगुणदहनम् ॥४४७॥
क्रयार्थं कर्मक्रयाणकस्य प्रथममपि हस्तसंज्ञेव। कन्यापाणिग्रहकैतवेन दाप्यते तत्र ॥४४८॥
चतुर्दिक्ष्वप्ययशस्तरगीगीयमानमङ्गलच्छलेन। भाव्यते किं बहुना यदिह सूक्ष्मबुद्ध्या ॥४४९॥

---

१ क. दुक्ख।

चाउद्दिसिंपि अजसो तरुणीगिज्जंतमंगलच्छलेणं । भाविज्जइ किं बहुणा जं जं इह सुहुमबुद्धीए ॥४४९॥
चिंतिज्जइ तं सव्वं रोमुद्धोसं जणेइ मह अम्मो ! । ता मुंचसु पडिबंधं अणुजाणह मं वयग्गहणे॥४५०॥
एवं भणिए पहुणा जंपइ देवी कुमार ! किं जुत्तो ।तुम्हारिसाण काउं अम्मापिउपत्थणाभंगो ? ॥४५१॥
इय भणिए देवीए महोवरोहेण निरहिलासोवि । पडिवज्जइ कहकहवि हु कुमरो काउं विवाहमहं॥४५२॥
तो परितुट्टा देवी साहइ गंतूण निययनाहस्स । एत्थंतरम्मि सुपइट्ठरायमत्थाणमुववि‍ट्ठं ॥४५३॥
करकलियकमलदंडा भालयलनिलीणअंजलिपुडा य। पडिहारी सुक्करिसं नमिउं विन्नविउमारद्धा॥४५४॥
रिउमद्दणस्स रन्नो मंती मइसाअरोत्ति विक्खाओ । चिट्ठइ तुम्हाणं दंसणूसुओ दारदेसम्मि ॥४५५॥
तत्थ य को आएसो तो भणियं राइणा पवेसेहिं ।-सिग्घं चिय जं देवो समाणवेइत्ति भणिऊण॥४५६॥
सो तीए ऽणुन्नाओ पविसेउं पणमिऊण नरनाहं । दिन्नासणो निविट्ठो पुट्ठो सो उचियपत्थावे ॥४५७॥
सागयवयणं तेणावि संलत्तं तं तुह पसाएण । तत्तो य सोवि साहइ जह तुह मित्तेण नरवइणा ॥४५८॥
रिउमद्दणेण रन्ना नियकन्ना सिरिसुपासकुमरस्स । सोमा नामेण वराय सयंवरा पेसिया देव ! ॥४५९॥
एत्तो तुमं पमाणंति जंपिए निवइणावि तो तीसे । दावाविओ विसालो निवासहेउं सुपासाओ ॥४६०॥
तह पेसिया रसवई सयला तक्कालउचियपडिवत्ती । कारविया तो मंती विसज्जिओ नियय‌आवासे॥४६१॥
तो तेण समारद्धो काउं वीवाहुवक्कमो तत्थ । बंधाविया य मंचा दिन्नाइं आसणाइं तहिं ॥४६२॥
विविहेसु कम्मेसु निरुविया किंकरा तओ विहियं । वरवेइगाविमाणं रंभाखंभुब्भियपडायं ॥४६३॥

---

चिन्त्यते तत् सर्वं रोमोद्धर्षं जनयति ममाम्ब ! । तस्मान्मुञ्च प्रतिबन्धमनुजानीहि मां व्रतग्रहणे ॥४५०॥
एवं भणिते प्रभुणा जल्पति देवी कुमार ! किं युक्तः । युष्मादृशानां कर्तुं मातापितृप्रार्थनाभङ्गः ? ॥४५१॥
इति भणिते देव्या महोपरोधेन निरभिलाषोऽपि । प्रतिपद्यते कथंकथमपि हि कुमारः कर्तुं विवाहमहम् ॥४५२॥
ततः परितुष्टा देवी कथयति गत्वा निजकनाथम् । अत्रान्तरे सुप्रतिष्ठराजमास्थानमुपविष्टम् ॥४५३॥
करकलितकमलदण्डा भालतलनिलीनाञ्जलिपुटा च । प्रतीहारी सोत्कर्षं नत्वा विज्ञपयितुमारब्धा ॥४५४॥
रिपुमर्दनस्य राज्ञो मन्त्री मतिसागर इति विख्यातः । तिष्ठति युष्माकं दर्शनोत्सुको द्वारदेशे ॥४५५॥
तत्र च क आदेशस्ततो भणितं राज्ञा प्रवेशय । शीघ्रमेव यद् देवः समाज्ञपयतीति भणित्वा ॥४५६॥
स तयाऽनुज्ञातः प्रविश्य प्रणम्य नरनाथम् । दत्तासनो निविष्टः पृष्टः स उचितप्रस्तावे ॥४५७॥
स्वागतवचनं तेनापि संलप्तं तत् तव प्रसादेन । ततश्च सोऽपि कथयति यथा तव मित्रेण नरपतिना ॥४५८॥
रिपुमर्देनेन राज्ञा निजकन्या श्रीसुपार्श्वकुमाराय । सोमा नाम्ना वराय स्वयंवरा प्रेषिता देव ! ॥४५९॥
इतो यूयं प्रमाणमिति जल्पिते नृपतिनापि ततस्तस्मै । दापितो विशालो निवासहेतोः सुप्रासादः ॥४६०॥
तथा प्रेषिता रसवती सकला तत्कालोचितप्रतिपत्तिः । कारिता ततो मन्त्री विसर्जितो निजकावासे ॥४६१॥
ततस्तेन समारब्धः कर्तुं वीवाहोपक्रमस्तत्र । बन्धिताश्च मञ्चा दत्तान्यासनानि तत्र ॥४६२॥
विविधेषु कर्मसु निरूपिताः किङ्करास्ततो विहितम् । वरवेदिकाविमानं रम्भास्तम्भोर्ध्वीकृतपताकम् ॥४६३॥

मरगयमणिपरिमंडियवरकंचणकलसविरयणाकलियं। सव्वत्थ निवेसियरयणकिरणपडिहणियतमपसरं ॥
एवं तक्कालोचियमन्नंपि हु सव्वहावि काऊण। मइसायरेण तत्तो कहाविअं निवइणो एअं ॥४६५॥
जह संपइ सुपसत्थे हत्थग्गहणे मुहुत्तमइनियड। तो कुमरं घित्तूणं तुब्मे आगच्छह इहति ॥४६६॥
रन्नावि पुहइदेवी भणिया सिग्घं करेह कुमरस्स। पुंखणगाइविहाणं संपइ सुमुहुत्तमासन्नं ॥४६७॥
तो सव्वाउ देवीउ गुरुप्पमोएण वहुप्पयारेहिं। पुंखेऊणं मंगलपुरस्सरं ण्हवहिं वरकुमरं ॥४६८॥
तत्तो य नियमावहिं महग्घमुल्लाइं सियदुगुल्लाइ। कायव्वविहिं सव्वं कारावहिं तह य सेसंपि ॥४६९॥
तं जहा;—
गोसीसचंदणुप्पंकलित्तगत्तो विरायए कुमरो। सारयससंकजोण्हाए धवलिओ कणयसेलोव्व ॥४७०॥
मंदारकुसुमगुच्छेहिं छाइओ जस्स कुंतलकलावो। कसिणो रेहइ ताराविराइओ नहविभागोव्व ॥४७१॥
सव्वत्थारोवियरयणरुइरआहरणभूसियसरीरो। देवो रोहणसेलोव्व जंगमत्तं गओ सहइ ॥४७२॥
किं बहुणा;—
सहावियंपि रूवं न जस्स सक्कोवि साहिउं तरइ। किं पुण कणयविभूसणभूसियदेहस्स तस्स तया?॥४७३॥
एव कयकायव्वे कुमरम्मि निवेइयं नरिंदस्स। तेणवि नियया पुरिसा निरूविया जह लहुं तुब्मे ॥४७४॥
मेलेह नायखत्तियवग्गं सयलंपि तह पयट्टेह। नयरीमहूसव तह कुमरस्स समप्पह पहाणं ॥४७५॥

---

मरकतमणिपरिमण्डितवरकाञ्चनकलशविरचनाकलितम्। सर्वत्र निवेशितरत्नकिरणप्रतिहततमःप्रसरम् ॥४६४॥
एवं तत्कालोचितमन्यदपि खलु सर्वथापि कृत्वा। मतिसागरेण ततः कथितं नृपतेरेवम् ॥४६५॥
यथा सम्प्रति सुप्रशस्ते हस्तग्रहणे मुहूर्तमतिनिकटम्। ततः कुमारं गृहीत्वा यूयमागच्छतेहेति ॥४६६॥
राज्ञापि[1] पृथिवीदेवी भणिता शीघ्रं कुरुत कुमारस्य। पुङ्खनकादिविधानं सम्प्रति सुमुहूर्तमासन्नम् ॥४६७॥
ततः सर्वा देव्यो गुरुप्रमोदेन बहुप्रकारैः। पुङ्खयित्वा मङ्गलपुरस्सरं स्नपयन्ति वरकुमारम् ॥४६८॥
ततश्च निवासयन्ति महार्घमूल्यानि सितदुकूलानि। कर्तव्यविधिं सर्वं कारयन्ति तथा च शेषमपि ॥४६९॥
तद्यथा,—
गोशीर्षचन्दनकर्दमलिप्तगात्रो विराजते कुमारः। शारदशशाङ्कज्योत्स्नया धवलितः कनकशैल इव ॥४७०॥
मन्दारकुसुमगुच्छैश्छादितो यस्य कुन्तलकलापः। कृष्णो राजति ताराविराजितो नभोविभाग इव ॥४७१॥
सर्वत्रारोपितरत्नरुचिराभरणभूषितशरीरः। देवो रोहणशैल इव जङ्गमत्वं गतो राजते ॥४७२॥
किं बहुना;—
स्वाभाविकमपि रूपं न यस्य शक्रोऽपि कथयितुं शक्नोति। किं पुनः कनकविभूषणभूषितदेहस्य तस्य तदा[2]? ॥
एवं कृतकर्तव्ये कुमारे निवेदितं नरेन्द्राय। तेनापि निजकाः पुरुषा निरूपिता यथा लघु यूयम् ॥४७४॥
मेलयत ज्ञातक्षत्रियवर्गं सकलमपि तथा प्रवर्तयत। नगरीमहोत्सवं तथा कुमाराय समर्पयत प्रधानम् ॥४७५॥

---

१ ग ण्हाविय तत्तो। २ ख तकु। ३ क कुमारो।

जयकुंजरं महंतं जेणं गम्मइ विवाहठाणम्मि । जं आणवेइ देवो इय भणिऊणं गया पुरिसा ॥४७६॥
रायाएसो सव्वोवि साविओ तेहिं जह समाइट्ठो । इत्तो धवलपसाहियसिंधुरखंधं समारूढो ॥४७७॥
पवणपणच्चिरधयवडसोहियमणहररहावरुद्धेण । उब्भडसिंगारेणं परियरिओ रायलोएणं ॥४७८॥
हरिसपरव्वसनच्चंततरुणिविंदावरुद्धरायपहो । वज्जंतसयलमंगलतूररवाऊरियदियंतो ॥४७९॥
सुपइट्ठपयावइणाऽणुगम्ममाणो सुपासवरकुमरो । थुव्वंतो आसीसासएहिं कुलथेरनारीहिं ॥४८०॥
पायारभवणतलसंठिएणं लोएण मुद्धलोयस्स । दंसिज्जंतो अंगुलिसहस्सेहिं कमेण संपत्तो ॥४८१॥
वीवाहमंडवे अह पडिहारजणेण दारदेसम्मि । पडिरुद्धे इयरजणे परियरिओ रायलोएण ॥४८२॥
अब्भिंतरे पविट्ठो कुमरो एत्थंतरम्मि लहुमेव । सोमावि तओ विविहं पसाहिया विविहलोएण ॥४८३॥
तहाहि;–
मणिमयकुंडलजुयलं तीसे सवणंतरेसु रेहेइ । तक्कालागयवम्महनरवइरहचक्कजुयलंव ॥४८४॥
लोलंतो जीसे कंठकंदले सहइ नवसरो हारो । वयणरयणियरसंकाए आगओ तारयगणोव्व ॥४८५॥
जीसे नियंबबिंबे बद्धा पणवण्णरयणमयकंची । रेहइ हरिधणुरेहव्व गयणदेसम्मि वित्थिण्णे ॥४८६॥
हियर्यम्मि अमायंतुव्व झरइ जीसे कुमारअणुराओ । जावयरसरंजियचरणजुयलपडिबिंबकवडेणं ॥४८७॥
सा सविसेसपसाहणसाहिया मत्तकुंजरगईए । मंजीरमंजुसिंजणसवणागयहंसखलियगई ॥४८८॥

---

जयकुञ्जरं महान्तं येन गम्यते विवाहस्थाने । यदाज्ञपयति देव इति भणित्वा गताः पुरुषाः ॥४७६॥
राजादेशः सर्वोऽपि श्रावितस्तैर्यथा समादिष्टः । इतो धवलप्रसाधितसिन्धुरस्कन्धं समारूढः ॥४७७॥
पवनप्रनर्तनशीलध्वजपटशोभितमनोहररथावरुद्धेन । उद्भटशृङ्गारेण परिकरितो राजलोकेन ॥४७८॥
हर्षपरवशनृत्यत्तरुणीवृन्दावरुद्धराजपथः । वाद्यमानसकलमङ्गलतूररवापूरितदिगन्तः ॥४७९॥
सुप्रतिष्ठप्रजापतिनाऽनुगम्यमानः सुपार्श्ववरकुमारः । स्तूयमान आशीःशतैः कुलस्थविरनारीभिः ॥४८०॥
प्राकारभवनतलसंस्थितेन लोकेन मुग्धलोकस्य । दर्श्यमानोऽङ्गुलिसहस्रैः क्रमेण संप्राप्तः ॥४८१॥
वैवाहमण्डपेऽथ प्रतिहारजनेन द्वारदेशे । प्रतिरुद्धे इतरजने परिकरितो राजलोकेन ॥४८२॥
अभ्यन्तरे प्रविष्टः कुमारोऽत्रान्तरे लघ्वेव । सोमापि ततो विविधं प्रसाधिता विविधलोकेन ॥४८३॥
तथाहि;—
मणिमयकुण्डलयुगलं तस्याः श्रवणान्तरयो राजते । तत्कालागतमन्मथनरपतिरथचक्रयुगलमिव ॥४८४॥
लोलन् यस्याः कण्ठकन्दले राजते नवसरो हारः । वदनरजनिकरशङ्कयाऽऽगतस्तारकागण इव ॥४८५॥
यस्या नितम्बबिम्बे बद्धा पञ्चवर्णरत्नमयकाञ्ची । राजते हरिधनूरेखेव गगनदेशे विस्तीर्णे ॥४८६॥
हृदयेऽमान्निव क्षरति यस्याः कुमारानुरागः । यावकरसरञ्जितचरणयुगलप्रतिबिम्बकपटेन ॥४८७॥
सा सविशेषप्रसाधनसाधिता मत्तकुञ्जरगत्या । मञ्जीरमञ्जुशिञ्जनश्रवणागतहंसस्खलितगतिः ॥४८८॥

---

१ ग. रत्नाणी । २ क. °वर महादरं° । ३ क. ठेम ।

चलिया चेडीचक्केण परिवुडा नरवरिंदतणयावि । पत्ता वंदणमालाकलिए वरवेइगाभवणे ॥४८९॥
तत्तो य तक्खणागयमाहणपारद्धहुणणकम्मम्मि । तत्थेव समारद्धं पाणिग्गहणं महिड्ढीए ॥४९०॥
एत्थंतरम्मि सहरिसतरुणियणारद्धमंगलसणाहो । उवयारो सयणाणं दोहिंवि पक्खेहिं कारविओ ॥४९१॥
दावावियाइं कुंकुमविलेवणाइं सुगंधमीसाइं । तह असमकुसुमदामाइं सपरिमला तह य पडवासा ॥४९२॥
तह पवरनागवल्लीदलाइं कप्पूरपूरकलियाइं । उल्लयपूगफलाइं वत्थाइं तह य विविहाइं ॥४९३॥
वरतुरयमंदुराओ तह कंबुप्पमुहखित्तजायाओ । तह मंदभद्दजाईउ करिघडाओ महंताओ ॥४९४॥
एत्थंतरम्मि कन्नावराण जलणे हुणिज्जमाणम्मि । चउमंडलपरिभमणं समत्थियं गुरुपमोएण ॥४९५॥
मइसायरेण ताहे कन्नाए पाणिमोयणनिमित्तं । बत्तीसं कोडीओ रुप्पसुवन्नाण दिन्नाओ ॥४९६॥
तह मणितिरीडपमुहं आभरणं तह य कणयरत्थाइं । तह पवरदुकूलाइं दिन्नाइं सुपासकुमरस्स ॥४९७॥
सुपइट्ठनरिंदेणवि हरिसभरुब्भिज्जमाणपुलएण । वहुआए दिन्नाइं वत्थाहरणाइं विविहाइं ॥४९८॥
एवं परितोसकरे वीवाहमहूसवे निवित्तम्मि । कयभोयणसक्कारे चलिए ठाणेसु लोयम्मि ॥४९९॥
मइसायरेवि नियनयरमुवगए सिरिसुपासकुमरोवि । अह सोमाए सहिओ संचलिओ नियगिहाभिमुहं ॥५००॥
मंगलतूररवेहिं वंदियणुग्घुट्ठजयजयरवेणं । बहिरिंतो दिसिवलयं सुपहाणकरेणुयारूढो ॥५०१॥
तद्दंसणूसुओ पुरजणोवि पायारभवणमालेसु । [5]पिंडिज्जइ अन्नोन्नं बाहेंतो अंगुवंगाइं ॥५०२॥

---

चलिता चेटीचक्रेण परिवृता नरवरेन्द्रतनयापि । प्राप्ता वन्दनमालाकलिते वरवेदिकाभवने ॥४८९॥
ततश्च तत्क्षणागतब्राह्मणप्रारब्धहवनकर्मणि । तत्रैव समारब्धं पाणिग्रहणं महद्धर्या ॥४९०॥
अत्रान्तरे सहर्षतरुणीजनारब्धमङ्गलसनाथः । उपचारः स्वजनानां द्वाभ्यामपि पक्षाभ्यां कारितः ॥४९१॥
दापितानि कुङ्कुमविलेपनानि सुगन्धमिश्राणि । तथाऽसमकुसुमदामानि सपरिमलास्तथा च पटवासाः ॥४९२॥
तथा प्रवरनागवल्लीदलानि कर्पूरपूरकलितानि । आर्द्रपूगफलानि वस्त्राणि तथा च विविधानि ॥४९३॥
वरतुरगमन्दुरास्तथा कम्बुप्रमुखक्षेत्रजाताः । तथा मन्दभद्रजात्य: करिघटा महत्यः ॥४९४॥
अत्रान्तरे कन्यावरयोर्ज्वलने हूयमाने । चतुर्मण्डलपरिभ्रमणं समर्थितं गुरुप्रमोदेन ॥४९५॥
मतिसागरेण तदा कन्यायाः पाणिमोचननिमित्तम् । द्वात्रिंशत् कोट्यो रूप्यसुवर्णयोर्दत्ताः ॥४९६॥
तथा मणिकिरीटप्रमुखमाभरणं तथा च कनकरथ्यादि । तथा प्रवरदुकूलानि दत्तानि सुपार्श्वकुमाराय ॥४९७॥
सुप्रतिष्ठनरेन्द्रेणापि हर्षभरोद्भिद्यमानपुलकेन । वध्वै दत्तानि वस्त्राभरणानि विविधानि ॥४९८॥
एवं परितोषकरे विवाहमहोत्सवे निर्वृत्ते । कृतभोजनसत्कारे चलिते स्थानेषु लोके ॥४९९॥
मतिसागरेऽपि निजनगरमुपगते श्रीसुपार्श्वकुमारोऽपि । अथ सोमया सहितः संचलितो निजगृहाभिमुखम् ॥५००॥
मङ्गलतूररवैर्बन्दिजनोद्घुष्टजयजयरवेण । बधिरयन् दिग्वलयं सुप्रधानकरेणुकारूढः ॥५०१॥
तद्दर्शनोत्सुकः पुरजनोऽपि प्राकारभवनमालासु । पिण्ड्यतेऽन्योन्यं बाधमानोऽङ्गोपाङ्गानि ॥५०२॥

---

१ ग पत्ता° । २ क. ग वंइ° । ३ ग कंबोजप्प° । ४ ग रुप्पमयमंडं । ५ ग पीडि° ।

एवं च कुमरदंसणउक्कंठाचत्तगेहकम्माणं । रेहंति इत्थमालावविब्भमा पुरपुरंधीणं ॥५०३॥
निंदइ नियंबबिंबस्स अत्तणो कावि अइमहंतंपि । तुरियं कुमाररूवस्स दंसणे गंतुमतरंती ॥५०४॥
आकरिसिऊण निययं कावि हु अद्धप्पसाहियं पायं । सहरिसहियया वच्चइ कुमाररूवं पलोएउं॥५०५॥
पीणघणत्थणभारेण निच्छणंती पए पए कावि । कुणमाणी गइभेअं हसिज्जए तरुणलोएणं ॥५०६॥
कावि हु कुंकुमसंकाए नियमुहं कज्जलेण मंडेउं । उत्तालमणा धावइ जणं हसंतंपि न गणेइ ॥५०७॥
कावि हु पभणइ एसो तिलोयपुज्जो मणोभवो देवो । कह अन्नहा निइज्जइ पट्ठीए इमस्स रइदेवी ? ॥५०८॥
अन्ना पभणइ मुद्धे ! मा जंपह एरिसं जओ तत्थ । अंगं पिईसरेणं दड्ढं कंती पुणो दूरे ॥५०९॥
तो भणइ हले ! सक्को एसो एसा सई य तस्स पिया । इयरावि भणइ बाले ! नूणं मइविब्भमो तुज्झ ॥५१०॥
जं तस्स लोयणेहिं सव्वत्तो दूसियं सरीरंपि । नूणं सुपासकुमरो एसो, सोमा पुणो एसा ॥५११॥
रयणावलीव एयाए बाहुलइया सुपासकुमरस्स । कंठयले विलुलिस्सइ ता एसच्चिय जए धन्ना ॥५१२॥
अन्ना भणइ सवत्तीए दूसिया होउ कह इमा धन्ना? । तइलोईए इमीइवि जं पई एस दुण्हंपि ॥५१३॥
एवं वियड्ढतरुणीयणस्स वयणाइं सो निसामिंतो । पत्तो भवणदुवारे अवयरइ करेणुयाए तओ ॥५१४॥
तत्थ य वारविलासिणिविहियाइं विविहमंगलसयाइं । अणुमन्निउं नमंसइ अम्मापिउपायकमलाइं ॥५१५॥
तत्थवि य पमोएणं दिव्वं विसयसुहमणुहवंतस्स । अणुवमियपुन्नपगरिसपुज्जंतसमीहियत्थस्स ॥५१६॥

---

एवं च कुमारदर्शनोत्कण्ठात्यक्तगेहकर्मणाम् । राजन्तीत्यमालापविभ्रमाः पुरपुरन्ध्रीणाम् ॥५०३॥
निन्दति नितम्बबिम्बमात्मनः काप्यतिमहान्तमपि । त्वरितं कुमाररूपस्य दर्शने गन्तुमशक्नुवती ॥५०४॥
आकृष्य निजकं कापि स्वल्पार्धप्रसाधितं पादम् । सहर्षहृदया व्रजति कुमाररूपं प्रलोकितुम् ॥५०५॥
पीनघनस्तनभारेण स्खलन्ती पदे पदे कापि । कुर्वाणा गतिभेदं हस्यते तरुणलोकेन ॥५०६॥
कापि खलु कुङ्कुमशङ्कया निजमुखं कज्जलेन मण्डयित्वा । उत्तालमना धावति जनं हसन्तमपि न गणयति॥५०७॥
कापि खलु प्रभणत्येष त्रिलोकपूज्यो मनोभवो देवः । कथमन्यथा दृश्यते पृष्ठेऽस्य रतिदेवी ? ॥५०८॥
अन्या प्रभणति मुग्धे ! मा जल्पेदृशं यतस्तत्र । अङ्गमपीश्वरेण दग्धं कान्तिः पुनर्दूरे ॥५०९॥
ततो भणति हले ! शक्र एष एषा शची च तस्य प्रिया । इतरापि भणति बाले ! नूनं मतिविभ्रमस्तव ॥५१०॥
यत्तस्य लोचनैः सर्वतो दूषितं शरीरमपि । नूनं सुपार्श्वकुमार एषः, सोमा पुनरेषा ॥५११॥
रत्नावलीवैतस्या बाहुलतिका सुपार्श्वकुमारस्य । कण्ठतले विलोठिष्यति तस्मादेषैव जगति धन्या ॥५१२॥
अन्या भणति सपत्न्या दूषिता भवतु कथमियं धन्या ? । त्रिलोक्या अस्या अपि यत् पतिरेष द्वयोरपि ॥५१३॥
एवं विदग्धतरुणीजनस्य वचनानि स निशामयन् । प्राप्तो भवनद्वारेऽवतरति करेणुकायास्ततः ॥५१४॥
तत्र च वारविलासिनीविहितानि विविधमङ्गलशतानि । अनुमन्य नमस्यति मातापितृपादकमलानि ॥५१५॥
तत्रापि च प्रमोदेन दिव्यं विषयसुखमनुभवतः । अनुपमितपुण्यप्रकर्षपूर्यमाणसमीहितार्थस्य ॥५१६॥

---

१ क ॥१८।

सुरवइनिउत्तसुरगणउवणीयाभरणगंधवत्थस्स । ववगयरोगायंकस्स दलियमयणाइरिउवग्गस्स ॥५१७॥
कइयावि हु सेवागयतुंबुरुपारद्धपंचमुग्गारं । नच्चंतसुरवहुजणं पिच्छणयं पिच्छमाणस्स ॥५१८॥
कइयावि जणयजणणीसमीवगमणेण तह य कइयावि । विसयम्मि जणविवाए निन्नयकरणम्मि निरयस्स ॥
वोलिंति वासरा इय वरिसेसुं कित्तिएसुवि गएसु । अह अन्नया य सुपइट्ठनरवई आउसेसम्मि ॥५२०॥
ठावइ सुपासकुमरं विहीए रज्जे अणिच्छमाणंपि । सयमवि पउमप्पहजिणपणीयधम्माणुसारेण ॥५२१॥
पज्जंताणसणविहिं काउं ईसाणदेवलोगम्मि । संपत्तो पुहवी पुण पत्ता मोक्खे जओ भणियं ॥५२२॥
नागेसुं उसभपिया सेसाणं सत्त जंति ईसाणे । अट्ठ य सणंकुमारे माहिंदे अट्ठ अणुकमसो ॥५२३॥
आइजिणाणट्ठण्हं गयाओ मोक्खम्मि अट्ठ जणणीओ । अट्ठ य सणंकुमारे माहिंदे अट्ठ वच्चंति ॥५२४॥
एत्तो साहियनीसेसविसमदुग्गं सुपासरायावि । रज्जं परिपालइ दलियसयलदरियारिमाहप्पं ॥५२५॥
इय समइक्कंतेसुं बहुएसुं वच्छरेसुं गब्भवई[1] । सोमादेवी जाया कालक्कमेणं पसूया य ॥५२६॥
सुकुमालपायकरयलनिरुवमरूवोवसोहियसरीरं । तणुकंतिपसरधवलियजम्मणभवणं सुहं पत्तं ॥५२७॥
उचियसमए य सिरिसेहरोत्ति नामं महाविभूईए । तस्स कयं तो सोवि हु पंचहिं धाईहिं परियरिओ ॥५२८॥
परिवड्ढिउमारद्धो सयंवराहिं कलाहिं सयलाहिं । आगंतूणं वरिओ विणा पयत्तंपि, एत्तो य ॥५२९॥
जा सिरिसुपासराया चिट्ठइ भवणस्स उवरि उवविट्ठो । ता पिच्छइ विच्छायंगयणे रविमंडलं सहसा ॥५३०॥

---

सुरपतिनियुक्तसुरगणोपनीताभरणगन्धवस्त्रस्य । व्यपगतरोगातङ्कस्य दलितमदनारिवर्गस्य ॥५१७॥
कदापि खलु सेवागततुम्बुरुप्रारब्धपञ्चमोद्गारम् । नृत्यत्सुरवधूजनं प्रेक्षणकं पश्यतः ॥५१८॥
कदापि जनकजननीसमीपगमनेन तथाच कदापि । विषये जनविवादे निर्णयकरे निरतस्य ॥५१९॥
गच्छन्ति वासरा इति वर्षेषु कियत्स्वपि गतेषु । अथान्यदा च सुप्रतिष्ठनरपतिरायुःशेषे ॥५२०॥
स्थापयति सुपार्श्वकुमारं विधिना राज्येऽनिच्छन्तमपि । स्वयमपि पद्मप्रभजिनप्रणीतधर्मानुसारेण ॥५२१॥
पर्यन्तानशनविधिं कृत्वेशानेदेवलोके । संप्राप्तः पृथिवी पुनः प्राप्ता मोक्षं यतो भणितम् ॥५२२॥
नागेषु ऋषभपिता शेषाणां सप्त यान्तीशाने । अष्ट च सनत्कुमारे माहेन्द्रेऽष्टानुक्रमशः ॥५२३॥
आदिजिनानामष्टानां गता मोक्षेऽष्ट जनन्यः । अष्ट च सनत्कुमारे माहेन्द्रेऽष्ट व्रजन्ति ॥५२४॥
इतः साधितनिःशेषविषमदुर्गं सुपार्श्वराजोऽपि । राज्यं परिपालयति दलितसकलदृप्तारिमाहात्म्यम् ॥५२५॥
इति समतिक्रान्तेषु बहुकेषु वत्सरेषु गर्भवती । सोमादेवी जाता कालक्रमेण प्रसूता च ॥५२६॥
सुकुमालपादकरतलनिरुपमरूपोपशोभितशरीरम् । तनुकान्तिप्रसरधवलितजन्मभवनं सुखं प्राप्तम् ॥५२७॥
उचितसमये च श्रीशेखर इति नाम महाविभूत्या । तस्य कृतं ततः सोऽपि हि पञ्चभिर्धात्रीभिः परिकरितः ॥५२८॥
परिवर्धितुमारब्धः स्वयंवराभिः कलाभिः सकलाभिः । आगत्य वृतो विना प्रयत्नमपि, इतश्च ॥५२९॥
यावत् श्रीसुपार्श्वराजास्तिष्ठति भवनस्योपर्युपविष्टः । तावत्पश्यति निच्छायं गगने रविमण्डलं सहसा ॥५३०॥

---

1 ग इत्तो।

करवत्तसरिसदाढाकडप्पदुप्पिच्छराहुणा घत्थं । थेरीणवि उड्ढमुहाण कामममवलोयणिज्जं च ॥५३१॥
तह सहरिसपरिधाविरतिमिरमहारक्खसेण दुट्ठेण । कवलिज्जंतं पिच्छइ गयणपएसं समग्गंपि ॥५३२॥
एत्थंतरम्मि माहणकुडुंविणीणं सपुत्तगहियाणं । मुंचसु सूरं राहुत्ति पुक्करंतीण हलवोलं ॥५३३॥
सोऊण खिवइ दिट्ठिं धरणीयले ताव चक्कमिहुणाइं । दोसंधयारसंकाए विहडमाणाइं पिच्छेइ ॥५३४॥
तह य विडंविज्जंताइं कोसिएहिं वणेसु लीणाइं । संकुइयअंगुवंगाइं वायसीणं सरीराइं ॥५३५॥
तह अग्गिहोत्तिएहिं मंतपवित्तेहिं महुघयाईहिं । तम्मोयणानिमित्तं हुणिज्जमाणस्स जलणस्स ॥५३६॥
धूमपडलेण संछाइयम्मि गयणम्मि मेहसंकाए । धुयपक्खउडं पिच्छइ हंसउलं माणसे चलियं ॥५३७॥
तह मेहागमसंसियआगमणाणं पईण मुद्धाओ । मग्गमवलोयमाणीउ नियइ पाउसियदइयाओ ॥५३८॥
तत्तो खणमेत्तेणं धूमेणं मीणउव्व उव्वमइ । राहू रविणो विंवं सभुत्तिछेयम्मि तत्तो य ॥५३९॥
सुत्थावत्थं जायं भुवणं सचराचरंपि जा नियइ । ता खिवइ पुणो दिट्ठिं राया गयणंगणाभिमुहं ॥५४०॥
तत्थ य वियलियतिमिरं दिसाण चक्कं समग्गलपयावं । अच्छीहिं दुप्पिच्छं तेएणं नियइ रविविंवं ॥५४१॥
तो तक्खणप्पणट्ठं तक्खणदिट्ठं च पासिउं राया । खणिगत्तभावणं चिय भावेउं सो समारद्धो ॥५४२॥
जइ एसो सूरोवि हु गसिज्जए राहुणा हढेणावि । तह पाणिणो गसिज्जंति मच्चुणा नूण संसारे ॥५४३॥
तह एयम्मिवि सोक्खं जं किंपि हु तंपि दुक्खपरिकलियं । चउसुवि गईसु, लोया तहवि हु एयम्मि वामूढा ॥५४४॥

---

करपत्रसदृशदंष्ट्रानिकरदुर्दर्शराहुणा ग्रस्तम् । स्थविराणामप्यूर्ध्वमुखानां काममवलोकनीयं च ॥५३१॥
तथा सहर्षपरिधावनशीलतिमिरमहाराक्षसेन दुष्टेन । कवल्यमानं पश्यति गगनप्रदेशं समग्रमपि ॥५३२॥
अत्रान्तरे ब्राह्मणकुटुम्बिनीनां स्वपुत्रगृहीतानाम् । मुञ्च सूरं राहो ! इति पूत्कुर्वतीनां तुमुलम् ॥५३३॥
श्रुत्वा क्षिपति दृष्टिं धरणीतले तावच्चक्रमिथुनानि । दोषान्धकारशङ्कया विघटमानानि पश्यति ॥५३४॥
तथा च विडम्ब्यमानानि कौशिकैर्वनेषु लीनानि । संकुचिताङ्गोपाङ्गानि वायसीनां शरीराणि ॥५३५॥
तथाग्निहोत्रिकैर्मन्त्रपवित्रैर्मधुघृतादिभिः । तन्मोचनानिमित्तं हूयमानस्य ज्वलनस्य ॥५३६॥
धूमपटलेन संछादिते गगने मेघशङ्कया । धुतपक्षपुटं पश्यति हंसकुलं मानसे चलितम् ॥५३७॥
तथा मेघागमशंसितागमनानां पतीनां मुग्धाः । मार्गमवलोकमानाः पश्यति प्रावृषिकदयिताः ॥५३८॥
ततः क्षणमात्रेण धूमेन मीनक इवोद्वमति । राहू रवेर्विम्बं स्वभुक्तिच्छेदे ततश्च ॥५३९॥
सुस्थावस्थं जातं भुवनं सचराचरमपि यावत् पश्यति । तावत् क्षिपति पुनर्दृष्टिं राजा गगनाङ्गणाभिमुखम् ॥५४०॥
तत्र च विगलिततिमिरं दिशां चक्रं समर्गलप्रतापम् । अक्षिभ्यां दुर्दर्शं तेजसा पश्यति रविबिम्बम् ॥५४१॥
ततस्तत्क्षणप्रनष्टं तत्क्षणदृष्टं च दृष्ट्वा राजा । क्षणिकत्वभावनामेव भावयितुं स समारब्धः ॥५४२॥
यथैष सूरोऽपि खलु ग्रस्यते राहुणा हठेनापि । तथा प्राणिनो ग्रस्यन्ते मृत्युना नूनं संसारे ॥५४३॥
तथैतस्मिन्नपि सौख्यं यत् किमपि हि तदपि दुःखपरिकलितम् । चतसृष्वपि गतिषु, लोकास्तथाप्येतस्मिन्व्यामूढाः ॥

---

१ म. धुय, ग. धुव । २ म. ग. मीणिउ । ३ ग. चउगुण ।

दुक्खं सहंति पत्ता तरुणीणं नयणवागुराविसयं। मयणमहावारद्धियनिसायबाणावलीविद्धा ॥५४५॥
तत्तो अपारसंसारदुक्खदवानलम्मि ते नूणं। अपरित्ताणा पुणरवि इंधणकप्पच्चिय हवंति ॥५४६॥
ता एयाओ कारागाराओव जुज्जए पलाएउं। भंजेऊणं इण्हिं पुत्तवहूनेहनियडाइं ॥५४७॥
एत्थंतरम्मि कंपियसिंहासणा ओहिनायनियकिच्चा। नरवरसुपासपासं समागया लहु इमे तियसा।५४८।
सारस्सयमाइच्चा वण्हिवरुणा य गद्दतोया य। तुसिया अव्वावाहा अग्गिच्चा चेवरिट्ठा य ॥५४९॥
नमिरुत्तमंगवियलंतसुरहिमंदारकुसुमसंघाया। विणएणं जिणनाहं थोउं एवं समारद्धा ॥५५०॥
जयसि तुमं भुवणावलिसरोजवणसंडचंडमायंड !। वम्महमयंधसिंधुरकुंभयडवियारणमयंद ! ॥५५१॥
मुत्तिवहूकंठग्गहउक्कंठिय! मलियमोहमाहप्प!। तुज्झ नमो तिहुयणरक्खणक्खणिय! परमकारुणिय!॥५५२।
इय थोऊणं पभणंति तुह पुरो देव! अम्ह का गणणा। खज्जोयाणव सूरस्स दूररुद्धंधयारस्स?॥५५३॥
तहवि निययाहिगाराणुरूवमम्हेवि किंपि विन्नविमो। सुमरणमित्तनिमित्तं तुह पुरओ न उण उवएसो ॥५५४॥
पव्वज्जं पडिवज्जसु भवदुहवणदहणजलणजालोलिं। तह य पयट्टसु सिग्घं अणत्थनिम्मंथणं तित्थं ॥५५५॥
तह पहु! पयंडपासंडिदेसणातिमिरनियरअंतरियं। पयडसु सिवमग्गं विमलनाणरयणप्पईवेण ॥५५६॥
ईय लोगंतियदेवोवएसदुगुणप्पवड्ढिउल्लासो। सुविसेसं संजाओ सिद्धिवहूसंगमासंसी ॥५५७॥
एवं विन्नविऊणं गएसु तेसुं सुपासनरनाहो। वारसियमहादाणं दाउं परिचिंतए जाव ॥५५८॥

---

दुःखं सहन्ते प्राप्तास्तरुणीनां नयनवागुराविषयम्। मदनमहाव्याधनिशातबाणावलीविद्धाः ॥५४५॥
ततोऽपारसंसारदुःखदावानले ते नूनम्। अपरित्राणाः पुनरपीन्धनकल्पा एव भवन्ति ॥५४६॥
तस्मादेतस्मात् कारागारादिव युज्यते पलायितुम्। भङ्क्त्वेदानीं पुत्रवधूस्नेहनिगडान् ॥५४७॥
अत्रान्तरे कम्पितसिंहासना अवधिज्ञातनिजकृत्याः। नरवरसुपार्श्वपार्श्वं समागता लघ्विमे त्रिदशाः॥५४८॥
सारस्वतादित्या वह्निवरुणाश्च गर्दतोयाश्च। तुषिता अव्याबाधा आग्नेयाश्चैवारिष्टाश्च ॥५४९॥
नम्रोत्तमाङ्गविगलत्सुरभिमन्दारकुसुमसंघाताः। विनयेन जिननाथं स्तोतुमेवं समारब्धाः ॥५५०॥
*जयसि त्वं भुवनावलिसरोजवनषण्डचण्डमार्तण्ड! मन्मथमदान्धसिन्धुरकुम्भतटविदारणमृगेन्द्र! ॥५५१॥*
मुक्तिवधूकण्ठग्रहोत्कण्ठित! मर्दितमोहमाहात्म्य!। तुभ्यं नमस्त्रिभुवनरक्षणाक्षणिक! परमकारुणिक!॥५५२॥
*इति स्तुत्वा प्रभणन्ति तव पुरो देव! अस्माकं का गणना। खद्योतानामिव सूर्यस्य दूररुद्धान्धकारस्य?॥५५३॥*
तथापि निजकाधिकारानुरूपं वयमपि किमपि विज्ञपयामः। स्मरणमात्रनिमित्तं तव पुरतो न पुनरुपदेशः ॥५५४॥
प्रव्रज्यां प्रतिपद्यस्व भवदुःखवनदहनज्वलनज्वालालिम्। तथा च प्रवर्तय शीघ्रमनर्थनिर्मन्थनं तीर्थम् ॥५५५॥
तथा प्रभो! प्रचण्डपाषण्डिदेशनातिमिरनिकरान्तरितम्। प्रकटय शिवमार्गं विमलज्ञानरत्नप्रदीपेन ॥५५६॥
इति लोकान्तिकदेवोपदेशद्विगुणप्रवर्धितोल्लासः। सविशेषं संजातः सिद्धिवधूसंगमाशंसी ॥५५७॥
एवं विज्ञप्य गतेषु तेषु सुपार्श्वनरनाथः। वार्षिकमहादानं दातुं परिचिन्तयति यावत् ॥५५८॥

---

1 क °हिनाय।

ता तक्खणंपि चलियं सीहासणममलरयणपहपयडं। सोहम्मदेवलोए सुहासणत्थस्स सक्कस्स ॥५५९॥
तच्चलणाणंतरं अवहिणा य नाऊण जिणमणवियप्पं। सो सत्तट्ठ पयाइं उट्ठिय गंतूण तयभिमुहं ॥५६०॥
थोऊण जिणं चिंतिउमारद्धो जह सुपासजिणनाहो। इच्छइ दाणं दाउं आवरिसं तस्स तो मज्झ ॥५६१॥
जुज्जइ धणसंपत्तिं काउं, इय तक्खणंपि वेसमणं। आणवइ जहा निक्खमणदाणजोगं जिणगिहम्मि ॥५६२॥
खिवसु पभूयं कणगं, इय सोउं सक्कसासणं सोवि। आणवइ जंभगसुरे पडिच्छिउं तेवि विणएण ॥५६३॥
जिणमंदिरम्मि वरिसंति कणयरासिं तओ य भयवंपि। चच्चरचउक्कचउमुहमहापहप्पमुहठाणेसु ॥५६४॥
अणविक्खियमुहमणिवारियं च वरवरियघोसणापुव्वं। सव्वाण विएगत्थं पत्थणउत्ताणियकराणं ॥५६५॥
अणुदियहं दावावइ कणयं, तस्सावि दिज्जमाणस्स। दिवसे दिवसे दिज्जइ अडलक्खहिया कणयकोडी ॥५६६॥
अह नवपरिणयलवलीफलभरधवलाए धवलिया तस्स। अणवरयकणयदाणुब्भवाए कित्तीए दिसिनिवहा ॥
तत्तो य दूरदेसा केसुवि इंतेसु मग्गणगणेसुं। अन्नेसुं च हिरण्णं गहिऊण नियत्तमाणेसु ॥५६८॥
रुंदासुवि रत्थासुं वाणारसिपुरवरीए मज्झम्मि। दुक्खेण भमइ लोओ निद्दयनिद्दलियवच्छयलो ॥५६९॥
एत्थ तवणिज्जपुंजे एत्थ य वत्थे पवित्थरह सिग्घं। एत्थ य रयणुक्केरं मग्गणजोग्गं निवेसेह ॥५७०॥
इह करितुरयरहाई ठावह विरएह एत्थ विउलाओ। भोअणसालाउ तहा आहारत्थं विदेसीणं ॥५७१॥
एवं दाणनिमित्तं निउत्तपुरिसाण वच्छरं जाव। अणिसं समाइसंताण किं करे हवइ उल्लावो ॥५७२॥

---

तावत् तत्क्षणमपि चलितं सिंहासनममलरत्नप्रभाप्रकटम्। सौधर्मदेवलोके सुखासनस्थस्य शक्रस्य ॥५५९॥
तच्चलनानन्तरमवधिना च ज्ञात्वा जिनमनोविकल्पम्। स सप्ताष्ट पदानि उत्थाय गत्वा तदभिमुखम् ॥५६०॥
स्तुत्वा जिनं चिन्तयितुमारब्धो यथा सुपार्श्वजिननाथः। इच्छति दानं दातुमावर्षं तस्य ततो मम ॥५६१॥
युज्यते धनसंपत्तिं कर्तुमिति तत्क्षणमपि वैश्रमणम्। आज्ञपयति यथा निष्क्रमणदानयोग्यं जिनगृहे ॥५६२॥
क्षिप प्रभूतं कनकम्, इति श्रुत्वा शक्रशासनं सोऽपि। आज्ञपयति जृम्भकसुरान् प्रत्येष्टुं तेऽपि विनयेन ॥५६३॥
जिनमन्दिरे वर्षन्ति कनकराशिं ततश्च भगवानपि। चत्वरचतुष्कचतुर्मुखमहापथप्रमुखस्थानेषु ॥५६४॥
अनवेक्षितमुखमनिवारितं च वरवरिकाघोषणापूर्वम्। सर्वेभ्यो विवेकार्थं प्रार्थनोत्तानितकरेभ्यः ॥५६५॥
अनुदिवसं दाप्यते कनकं, तस्यापि दीयमानस्य। दिवसे दिवसे दीयतेऽष्टलक्षाधिका कनककोटिः ॥५६६॥
अथ नवपरिणयलवलीफलभरधवलया धवलितास्तस्य। अनवरतकनकदानोद्भवया कीर्त्या दिङ्निवहाः ॥५६७॥
ततश्च दूरदेशात् केष्वप्यायत्सु मार्गणगणेषु। अन्येषु च हिरण्यं गृहीत्वा निवर्तमानेषु ॥५६८॥
विशालास्वपि रथ्यासु वाराणसीपुरवराया मध्ये। दुःखेन भ्रमति लोको निर्दयनिर्दलितवक्षस्तलः ॥५६९॥
अत्र तपनीयपुञ्जानत्र च वस्त्राणि प्रविस्तृणीत शीघ्रम्। अत्र च रत्नोत्करं मार्गणयोग्यं निवेशयत ॥५७०॥
इह करितुरगरथादीन् स्थापयत विरचयतात्र विपुलाः। भोजनशालास्तथाऽऽहारार्थं विदेशिनाम् ॥५७१॥
एवं दाननिमित्तं नियुक्तपुरुषाणां वत्सरं यावत्। अनिशं समादिशतां किं कुर्वे भवत्युल्लापः ॥५७२॥

---

१ ग. °भराइदवहि°।

तिन्नेव य कोडिसया अट्ठासीयं च हुंति कोडीओ। असियं च सयसहस्सा सव्वंको वइयकणयस्स॥५७३॥
इय आवरिसं कंचणवरिसेणं तप्पिऊण भवणंपि। निम्मग्गणं विहेउं सद्दावइ मंतिणो राया॥५७४॥
तह तलवरसेणाहिवकोसाहिवमंडलीयसामंते। नयरीपहाणलोएण संजुए, ताण पच्चक्खं॥५७५॥
ठविउं सव्वंगंपि हु कुमारे सिरिसेहरम्मि नियरज्जं। नीइत्ति दंतकंति विरयंतो भणइ वयणमिणं॥५७६॥
तुम्हाण एस सामी देवाणुपियाणुमन्नह इयाणिं। मं सव्वविरइग्गहणे, तेवि हु सोऊण विम्हइया॥५७७॥
जंपंति वज्जमइया सवणा अम्हाण नूण जे अज्ज। बहिरत्तणं न पत्ता इमाए वयणासणीए लहुं॥५७८॥
इय एवमाइसकलुणवयणाणि पयंपिरा कहकहंपि। अणुमन्नंति नरिंदं गुरुनिब्बंधेण जंपंतं॥५७९॥
अह सिरिसेहरराया नयणंसुनिवायमइलियकवोलो। चलणेसु निवडिऊणं विन्नवइ कहंपि जयगुरुणो॥५८०॥
जइवि परिक्खीणमोहा तुब्भे विरया य सव्वविरईए। तहवि हु निक्खमणमहं पडिवज्जह मज्झ पसिऊण॥५८१॥
तस्सुवरोहेण इमं पडिसुणइ सुपासजिणवरो तत्तो। सिरिसेहरनिवआणापवत्तिया वेत्तिआ तुरियं॥५८२॥
अट्ठुत्तरं सहस्सं सुवन्नकलसाण तत्थ आणिंति। सुपसत्थतित्थसलिलं दिव्वाओ तहोसहीओ य॥५८३॥
घणसारमीसचंदणपमुहाइं विलेवणाइं सुरहीणि। जिणमज्जणत्थमुवणिंति तत्थ, एत्थन्तरे ताव॥५८४॥
बत्तीसंपि सुरिंदा कंपियसीहासणा मुणेऊण। ओहीए परमत्थं पवरविमाणेसु आरूढा॥५८५॥
वियसियसयपत्तविसाललोयणा जोव्वणुब्भडविलासा। बहुदेवकोडिकोडीहिं परिवुडा चारुरूवधरा॥५८६॥

---

त्रीण्येव च कोटिशतान्यष्टाशीतिश्च भवन्ति कोट्यः। अशीतिश्च शतसहस्राणि सर्वाङ्को व्ययितकनकस्य॥५७३॥
इत्यावर्षं काञ्चनवर्षेण तर्पयित्वा भवनमपि। निर्मार्गणं विधाय शब्दाययति मन्त्रिणो राजा॥ ५७४॥
तथा तलवरसेनाधिपकोशाधिपमण्डलिकसामन्तान्। नगरीप्रधानलोकेन संयुतान्, तेषां प्रत्यक्षम्॥ ५७५॥
स्थापयित्वा सर्वाङ्गमपि हि कुमारे श्रीशेखरे निजराज्यम्। नीतिरिति दन्तकान्ति विरचयन्भणति वचनमिदम्॥
युष्माकमेष स्वामी देवानुप्रियाः! अनुमन्यध्वमिदानीम्। मां सर्वविरतिग्रहणे, तेऽपि खलु श्रुत्वा विस्मिताः॥
जल्पन्ति वज्रमया श्रवणा अस्माकं नूनं येऽद्य। बाधिरत्वं न प्राप्ता अनेन वचनाशनिना लघु॥५७८॥
इत्येवमादिसकरुणवचनानि प्रजल्पितारः कथंकथमपि। अनुमन्यन्ते नरेन्द्रं गुरुनिर्बन्धेन जल्पन्तम्॥५७९॥
अथ श्रीशेखरराजो नयनाश्रुनिपातमलिनितकपोलः। चरणयोर्निपत्य विज्ञपयति कथमपि जगद्गुरून्॥५८०॥
यद्यपि परिक्षीणमोहा यूयं विरताश्च सर्वविरत्याः। तथापि खलु निष्क्रमणमहं प्रतिपद्यध्वं मम प्रसीद॥५८१॥
तस्योपरोधेनेमं प्रतिशृणोति सुपार्श्वजिनवरस्ततः। श्रीशेखरनृपाज्ञाप्रवर्तिता वैत्रिकास्त्वरितम्॥५८२॥
अष्टोत्तरं सहस्रं सुवर्णकलशानां तत्रानयन्ति। सुप्रशस्ततीर्थसलिलं दिव्यास्तथौषधीश्च॥५८३॥
घनसारमिश्रचन्दनप्रमुखानि विलेपनानि सुरभीणि। जिनमज्जनार्थमुपनयन्ति तत्र, अत्रान्तरे तावत्॥५८४॥
द्वात्रिंशदपि सुरेन्द्राः कम्पितसिंहासना ज्ञात्वा। अवधिना परमार्थं प्रवरविमानेष्वारूढाः॥५८५॥
विकसितशतपत्रविशाललोचना यौवनोद्भटविलासाः। बहुदेवकोटिकोटिभिः परिवृताश्चारुरूपधराः॥५८६॥

---

१ ग मत्तगं। २ क ग मविर°। ३ ख ग. °रिभीण। ४ क वरिया, ग परिया°।

पडुपडहसंखकाहलमुइंगतलिमाइतूरघोसेण । बहिरियबंभंडा जिणवरिंदपासं समल्लीणा ॥५८७॥
जयपहुणो पयपउमं तिपयाहिणपुव्वगं पणमिऊण । भवणंगणे निसन्ना जिणपयविन्नाससुपइत्ते ॥५८८॥
अह अच्चुयसक्केणं नियदेवा पभणिया जहा सिग्घं । निव्वत्तेह समग्गं निक्खमणभिसेयसामग्गिं ॥५८९॥
जिणवरदिक्खासमउत्ति एयमायन्निउं कयपणामा । पवरकणयाइकलसे खीरोयजलेण पडिपुन्ने ॥५९०॥
सुगुयंधपुप्फपडलाइं तहय अन्नं च जंपि पाउग्गं । सुपहाणवत्थुनिवहं अच्चुयसक्कस्स उवणिंति ॥५९१॥
तत्तो अच्चुयतियसाहिवोवि देवेहिं परिगओ तेहिं । कणयाइमहाकुंभेहिं अट्ठसाहस्ससंखेहिं ॥५९२॥
दिव्वोसहिमीसेहिं मंदिरमंदरट्ठियं जिणवरिंदं । हरिसुल्लसंतदेहो अहिसिंचइ गरुयभत्तीए ॥५९३॥
एवं सुराहिवइणो सेसावि हु चंदसूरपज्जंता । मज्जंति जिणं तो तेसु संठिएसुं सठाणम्मि ॥५९४॥
सिरिसेहरनरनाहो विणयपरो अप्पमत्तचित्तो य । भत्तीए दुकूलंचलनिम्मियमुहकोसविन्नासो ॥५९५॥
पुव्वुवणीएहिं तेहिं कणयाइमएहिं कलससहस्सेहिं । तित्थजलपूरिएहिं मज्जेइ जिणं जएक्कपहुं ॥५९६॥
एवं च वट्टमाणे जिणवरमज्जणमहूसवे तत्थ । केवि सुरिंदा चालिंति उभयपक्खेसु सियचमरे ॥५९७॥
केवि हु धवलिमनिज्जियससियसयवत्ताइं आयवत्ताइं । धारिंति ठवंति पुरो अखंपणं दप्पणं केवि ॥५९८॥
उप्पाडेंति य डज्झंतअगुरुघणसारधूवधूमेण । अंधारियदिसिवलयं वरधूवकडच्छुयं केवि ॥५९९॥
पणवन्नकुसुममालाउ परिमलामिलियभसलमालाओ । केवि पयरंति अन्ने य पज्जुवासिंति भयवंतं ॥६००॥
अह निव्वत्ते मज्जणमहम्मि सिरिसेहरेण नरवइणा । सीहासणमन्नयरं ठावियमह उत्तराभिमुहं ॥६०१॥

---

पटुपटहशङ्खकाहलमृदङ्गतलिमादितूर्यघोषेण । बधिरितब्रह्माण्डा जिनवरेन्द्रपार्श्वं समालीनाः ॥५८७॥
जगत्प्रभोः पादपद्मं त्रिप्रदक्षिणापूर्वकं प्रणम्य । भवनाङ्गणे निषण्णा जिनपादविन्याससुपवित्रे ॥५८८॥
अथाच्युतशक्रेण निजदेवाः प्रभणिता यथा शीघ्रम् । निर्वर्तयत समग्रां निष्क्रमणाभिषेकसामग्रीम् ॥५८९॥
जिनवरदीक्षासमय इत्येवमाकर्ण्य कृतप्रणामाः । प्रवरकनकादिकलशान् क्षीरोदजलेन परिपूर्णान् ॥५९०॥
सुसुगन्धपुष्पपटलानि तथान्यं च यदपि प्रायोग्यम् । सुप्रधानवस्तुनिवहमच्युतशक्रमुपनयन्ति ॥५९१॥
ततोऽच्युतत्रिदशाधिपोऽपि देवैः परिगतस्तैः । कनकादिमहाकुम्भैरष्टसहस्रसंख्यैः ॥५९२॥
दिव्यौषधिमिश्रैर्मन्दिरमन्दरस्थितं जिनवरेन्द्रम् । हर्षोल्लसद्देहोऽभिषिञ्चति गुरुभक्त्या ॥५९३॥
एवं सुराधिपतयः शेषा अपि हि चन्द्रसूरपर्यन्ताः । मज्जयन्ति जिनं ततस्तेषु संस्थितेषु स्वस्थाने ॥५९४॥
श्रीशेखरनरनाथो विनयपरोऽप्रमत्तचित्तश्च । भक्त्या दुकूलाञ्चलनिर्मितमुखकोशविन्यासः ॥५९५॥
पूर्वोपनीतैस्तैः कनकादिमयैः कलशसहस्रैः । तीर्थजलपूरितैर्मज्जयति जिनं जगदेकप्रभुम् ॥५९६॥
एवं च वर्तमाने जिनवरमज्जनमहोत्सवे तत्र । केऽपि सुरेन्द्राश्चालयन्त्युभयपक्षयोः सितचामरान् ॥५९७॥
केऽपि हि धवलिमनिर्जितशशिशतपत्राण्यातपत्राणि । धारयन्ति स्थापयन्ति पुरोऽमलं दर्पणं केऽपि ॥५९८॥
उत्पादयन्ति च दह्यमानागुरुघनसारधूपधूमेन । अन्धकारितदिग्वलयं वरधूपदर्वी केऽपि ॥५९९॥
पञ्चवर्णकुसुममालाः परिमलमिलितभ्रमरमालाः । केऽपि प्रकुर्वन्त्यन्ये च पर्युपासते भगवन्तम् ॥६००॥

तत्थ ठियं च जिणिंदं ण्हविऊणं सेयपीयकलसेहिं । पुव्वाभिमुहे सीहासणम्मि निसियावए तत्तो ॥६०२॥
तत्थट्ठियस्स सुउमालगंधकासाइलूहियंगस्स । गोसीससुरहिचंदणचच्चियदेहस्स देवस्स ॥६०३॥
परिहियफलिहुज्जलदेवदूसजुयलस्स वच्छदेसम्मि । घोलंतविमलनिच्चलनवमुत्ताहलकलावस्स ॥६०४॥
मणिमंडियकुंडलजुयलकिरणकब्बुरियगंडभायस्स । रयणमयमउडमंडियमुद्धस्स सुपासनाहस्स ॥६०५॥
नमिऊण चलणजुयलं पुणोवि धरणियलनिहियसिरकमला । आसीसाहिं थुणिउं सुरासुरिंदा समारद्धा ॥
कहं विय ?
विजयसु कुतित्थसत्थं दलसु महामोहमल्लमाहप्पं । उच्छिंदसु मिच्छत्तं मुत्तिपहं पयडसु जणाणं ॥६०७॥
पालसु सुसमणधम्मं सयलंतरसत्तुसिन्ननिम्महणं । कुणसु जयस्सवि अजयं रइप्पियं जयसु ते नाह ! ॥६०८॥
इय थोउं भुवणगुरुं हरिसियहियएहिं सव्वसक्केहिं । ससुरासुरमणुएहिं पुरओ य पयट्टियं नट्टं ॥६०९॥
एत्थंतरम्मि भाविरनियपिउगुरुविरहग्गिदूमियमणेण । सिरिसेहरेण भणिया नियपुरिसा भो जहा सिग्घं ॥
तिजयपहुणो निमित्तं चंदणरसलिहियसत्थियपसत्थं । मज्झनिवेसियमणिमयसपायपीढासणसणाहं ॥६११॥
रंगंतविविहचिंधं मणोरमानामियं महासिवियं । निव्वत्तहत्ति तेवि हु सोऊणं सामिणो वयणं ॥६१२॥
निव्वत्तंति तहच्चिय सव्वं एत्थंतरम्मि सक्केण । हरिसुल्लसंतहियएण नियसुरा एवमाणत्ता ॥६१३॥
भो भो महग्घमणिखंडमंडियं मुक्कसुत्तिओचूलं । तुम्हे मणोरमाए सहस्सनरवाहिणिं सिवियं ॥६१४॥

---

अथ निर्वृत्ते मज्जनमहे श्रीशेखरेण नरपतिना । सिंहासनमन्यनरत् स्थापितमथोत्तराभिमुखम् ॥६०१॥
तत्र स्थितं च जिनेन्द्रं स्नपयित्वा श्वेतपीतकलशैः । पूर्वाभिमुखे सिंहासने निषादयति ततः ॥६०२॥
तत्र स्थितस्य सुकुमालगन्धकाषायिकलूषिताङ्गस्य । गोशीर्षसुरभिचन्दनचर्चितदेहस्य देवस्य ॥६०३॥
परिहितस्फटिकोज्ज्वलदेवदूष्ययुगलस्य वक्षोदेशे । घूर्णमानविमलनिश्चलनवमुक्ताफलकलापस्य ॥६०४॥
मणिमण्डितकुण्डलयुगलकिरणकर्बुरितगण्डभागस्य । रत्नमयमुकुटमण्डितमूर्ध्नः सुपार्श्वनाथस्य ॥६०५॥
नत्वा चरणयुगलं पुनरपि धरणीतलनिहितशिरःकमलाः । आशीर्भिः स्तोतुं सुरासुरेन्द्राः समारब्धाः ॥६०६॥
कथमिव ?
विजयस्व कुतीर्थसार्थं दलय महामोहमल्लमाहात्म्यम् । उच्छिन्द्धि मिथ्यात्वं मुक्तिपथं प्रकटय जनानाम् ॥६०७॥
पालय सुश्रमणधर्मं सकलान्तरशत्रुसैन्यनिर्मन्थनम् । कुरुष्व जगतोऽप्यजय्यं रतिप्रियं जय त्वं नाथ ! ॥६०८॥
इति स्तुत्वा भुवनगुरुं हर्षितहृदयैः सर्वशक्रैः । ससुरासुरमनुजैः पुरतश्च प्रवर्तितं नाट्यम् ॥६०९॥
अत्रान्तरे भाविनिजपितृगुरुविरहाग्निद्रावितमनसा । श्रीशेखरेण भणिता निजपुरुषा भो यथा शीघ्रम् ॥६१०॥
त्रिजगत्प्रभोर्निमित्तं चन्दनरसलिखितस्वस्तिकप्रशस्तम् । मध्यनिवेशितमणिमयसपादपीठासनसनाथम् ॥६११॥
रङ्गद्विविधचिह्नां मनोरमानामिकां महाशिविकाम् । निर्वर्तयतेति तेऽपि हि श्रुत्वा स्वामिनो वचनम् ॥६१२॥
निर्वर्तयन्ति तथैव सर्वमत्रान्तरे शक्रेण । हर्षोल्लसद्धृदयेन निजसुरा एवमाज्ञप्ताः ॥६१३॥
भो भो महार्घमणिखण्डमण्डितां मुक्ताशुक्तचवचूलाम् । तुम्यं मनोरमया सहस्रनरवाहिनीं शिविकाम् ॥६१४॥

रइऊणं खिवह लहुं मज्झम्मि मणोरमाए सिवियाए।तेवि हु सक्काएसं तहत्ति कुव्वंति संतुट्ठा ॥६१५॥
अह सिरिसुपासनाहो सयलालंकारलंकियसरीरो । कयछट्ठतवोकम्मो तियसाहिवईहिं विन्नत्तो ॥६१६॥
उट्ठेऊणं सीहासणाओ तमणुप्पयाहिणीकाउं । आरुहइ महासिवियं मणोरमं तीए मज्झम्मि ॥६१७॥
पुव्वाभिमुहे मणिरयणमइयसीहासणम्मि उवविट्ठो । तत्तोवि अम्मधाईवि वामपासं निसण्णा से ॥६१८॥
कुलमयहरियावि तहा सुइभूया गहियपवरनेवत्था । गहिऊण साडयं हंसलक्खणं दाहिणे पासे ॥६१९॥
भद्दासणे निसन्ना तहा य सामिस्स पच्छिमदिसाए । वरतरुणी सियच्छत्तं धरमाणी ठाइ अन्निका॥६२०॥
तह चलिरधवलचामरजुयलं गहिऊण दोसु पासेसुं । वरवारसुंदरीओ हवंति सिंगारपवराओ ॥६२१॥
उत्तरपुरत्थिमम्मि भागम्मि विलासिणी हवइ अन्ना । गहिऊणं भिंगारं सुरकरिकरनालगागारं ॥६२२॥
एवं दाहिणपोरत्थिमम्मि भागम्मि सुंदरी एगा । गहिऊण तालविंटं करकमले ठाइ हरिसेण ॥६२३॥
तह पिट्ठओ य वेरुलियमइयदंडाइं आयवत्ताइं । धारिंति सुरिंदा सरयपुन्नचंदप्पगासाइं ॥६२४॥
तह दोसुवि पासेसुं सिवियाए ठिया सिएहिं चमरेहिं।सोहम्मीसाणिंदा वीयंति सुपासजिणयंदं॥६२५॥
एत्थंतरम्मि नियसियसियवत्था समवया पवररूवा। निरुवहयंगा बलसालिणो य कयसव्वकायव्वा ॥६२६॥
रोमंचंचियदेहा सहस्ससंखा नरा महासिवियं । तं सिरिसेहरनरवरवयणेणं उक्खिवंति लहुं ॥६२७॥
वच्चंतीए तीए सोहम्मीसाणनायगा दोवि । दाहिणउत्तरवाहुं गिण्हंति गुरुप्पमोएण ॥६२८॥
सिवियाए दाहिणुत्तरहिट्ठिमवाहाओ दोवि असुरिंदा।चमरवलिनामधेया हरिसेण समुव्वहंति तओ॥६२९॥

---

रचयित्वा क्षिपत लघु मध्ये मनोरमायाः शिबिकायाः । तेऽपि खलु शक्रादेशं तथेति कुर्वन्ति संतुष्टाः ॥६१५॥
अथ श्रीसुपार्श्वनाथः सकलालंकारालंकृतशरीरः । कृतषष्ठतपःकर्मा त्रिदशाधिपतिभिर्विज्ञप्तः ॥६१६॥
उत्थाय सिंहासनात् तामनुप्रदक्षिणीकृत्य । आरोहति महाशिबिकां मनोरमां तस्या मध्ये ॥६१७॥
पूर्वाभिमुखे मणिरत्नमयसिंहासन उपविष्टः । ततोऽप्यम्बाधात्र्यपि वामपार्श्वे निषण्णा तस्य ॥६१८॥
कुलमहत्तरापि तथा शुचिभूता गृहीतप्रवरनेपथ्या । गृहीत्वा शाटकं हंसलक्षणं दक्षिणे पार्श्वे ॥६१९॥
भद्रासने निषण्णा तथा च स्वामिनः पश्चिमदिशि । वरतरुणी सितच्छत्रं धरमाणा तिष्ठत्यन्यैका ॥६२०॥
*तथा चलनशीलधवलचामरयुगलं गृहीत्वा द्वयोः पार्श्वयोः । वरवारसुन्दर्यो भवन्ति शृङ्गारप्रवराः ॥६२१॥*
उत्तरपौरस्त्ये भागे विलासिनी भवत्यन्या । गृहीत्वा भृङ्गारं सुरकरिकरनालकाकारम् ॥६२२॥
एवं दक्षिणपौरस्त्ये भागे सुन्दर्येका । गृहीत्वा तालवृन्तं करकमले तिष्ठति हर्षेण ॥६२३॥
तथा पृष्ठतश्च वैडूर्यमयदण्डान्यातपत्राणि । धारयन्ति सुरेन्द्राः शरत्पूर्णचन्द्रप्रकाशानि ॥६२४॥
तथा द्वयोरपि पार्श्वयोः शिबिकायाः स्थिताः सितैश्चामरैः । सौधर्मेशानेन्द्रौ वीजयतः सुपार्श्वजिनचन्द्रम् ॥६२५॥
अत्रान्तरे निवसितसितवस्त्राः समवयसः प्रवररूपाः । निरुपहताङ्गा बलशालिनश्च कृतसर्वकर्तव्याः ॥६२६॥
रोमाञ्चाञ्चितदेहाः सहस्रसंख्या नरा महाशिबिकाम् । तां श्रीशेखरनरवरवचनेनोत्क्षिपन्ति लघु ॥६२७॥
व्रजन्त्यास्तस्याः सौधर्मेशाननायकौ द्वावपि । दक्षिणोत्तरबाहुं गृह्णीतो गुरुप्रमोदेन ॥६२८॥

भवणवइवाणमंतरजोइसवेमाणिया सुरसमूहा। अवसेसावि हु सिवियं जहारिहं उक्खिवंति तहा ॥६३०॥
किं बहुणा ?
पुव्वं उक्खित्ता नरवरेहिं पुलऊससंतगत्तेहिं। पच्छा वहंति सिवियं असुरिंदसुरिंदनागिंदा ॥६३१॥
भवणाओ नीहरंते जिणम्मि चाउव्विहेहिं देवेहिं। इंतेहिं य जंतेहि य कहमिव उब्भासियं गयणं ॥६३२॥
सिद्धत्थचूयचंपयकेसरकणियारकुरुवगवणंव। कुसुमभरेहिंव सोहइ नहंगणं तियसविंदेहिं ॥६३३॥
वरपडहभेरिझल्लरिदुंदुहिसंखाइतूरनिग्घोसो। धरणियले गयणयले पयट्टिओ मणुयदेवेहिं ॥६३४॥
एवं च वच्चमाणस्स तिजयबंधुस्स आणुपुव्वीए। सत्थियपमुहा अट्ठवि मंगलगा पट्टिया पुरओ ॥६३५॥
तत्तो संपुन्नकलसा भिंगारा तह य वेजयंतीओ। तह दिव्वमायवत्तं पलंबकोरिंटमालिल्लं ॥६३६॥
सीहासणं च निम्मलमणिमयपयपीढसंजुयं विउलं। संचलियं तह पुरओ नरधरियं पाउयाजुयलं ॥६३७॥
रविरहतुरयसमाणं चामीयरमयखलीणजुत्ताणं। नरखित्ताणं पट्ठियमट्ठसयं जच्चतुरयाणं ॥६३८॥
तह य पगिट्ठाण पुरो अट्ठसयं कुंजराण मत्ताणं। आरोहपउत्ताणं सत्तंगपइट्ठियाणं च ॥६३९॥
जुत्तियतुरंगमाणं रहाण करकलियआउहाणं च। सुहडाणं अट्ठसयं पत्तेयं पट्ठियं तत्तो ॥६४०॥
रहगयहयअणियाइं पुरओ संपट्ठियाइं वेगेण। तह पायत्ताणीयं अमुणियसंखं असंखबलं ॥६४१॥
तयणंतरं च गरुयत्तणेण गयणंपि परिमिणंतोव्व। सुरपाणिपरिग्गहिओ माहिंदझओ अइविलोलो ॥६४२॥

---

शिबिकाया दक्षिणोत्तराधस्तनबाहू द्वावप्यसुरेन्द्रौ। चमरवलिनामधेयौ हर्षेण समुद्वहतस्ततः ॥६२९॥
भवनपतिवानव्यन्तरज्योतिषवैमानिकाः सुरसमूहाः। अवशेषा अपि हि शिबिकां यथार्हमुत्क्षिपन्ति तथा ॥६३०॥
किं बहुना ?
पूर्वमुत्क्षिप्ता नरवरैः पुलकोच्छ्वसद्गात्रैः। पश्चाद् वहन्ति शिबिकामसुरेन्द्रसुरेन्द्रनागेन्द्राः ॥६३१॥
भवनाद् निःसरति जिने चतुर्विधैर्देवैः। आयद्भिश्च याद्भिश्च कथमिवोद्भासितं गगनम् ॥६३२॥
सिद्धार्थचूतचम्पककेशरकर्णिकारकुरुबकवनमिव। कुसुमभरैरिव शोभते नभोऽङ्गणं त्रिदशवृन्दैः ॥६३३॥
वरपटहभेरीझल्लरीदुन्दुभिशङ्खादितूरनिर्घोषः। धरणीतले गगनतले प्रवर्तितो मनुजदेवैः ॥६३४॥
एवं च व्रजतस्त्रिजगद्बन्धोरानुपूर्व्या। स्वस्तिकप्रमुखान्यष्टापि मङ्गलकानि प्रस्थितानि पुरतः ॥६३५॥
ततः संपूर्णकलशा भृङ्गारास्तथा च वैजयन्त्यः। तथा दिव्यमातपत्रं प्रलम्बकुरण्टमालावत् ॥६३६॥
सिंहासनं च निर्मलमणिमयपादपीठसंयुतं विपुलम्। संचलितं तथा पुरतो नरधृतं पादुकायुगलम् ॥६३७॥
रविरथतुरगसमानां चामीकरमयखलीनयुक्तानाम्। नरक्षिप्तानां प्रस्थितमष्टशतं जात्यतुरगाणाम् ॥६३८॥
तथा च प्रकृष्टानां पुरोऽष्टशतं कुञ्जराणां मत्तानाम्। आरोहप्रयुक्तानां सप्ताङ्गप्रतिष्ठितानां च ॥६३९॥
यौक्त्रिकतुरङ्गमाणां रथानां करकलितायुधानां च। सुभटानामष्टशतं प्रत्येकं प्रस्थितं ततः ॥६४०॥
रथगजहयानीकानि पुरतः संप्रस्थितानि वेगेन। तथा पादातानीकमज्ञातसंख्यमसंख्यबलम् ॥६४१॥

---

१ ग नरवरेयं।

तत्तो य दंडिणो मुंडिणो य हासंकरा य खिड्डकरा । गायंता वायंता नच्चंता तह पसंसंता ॥६४३॥
जय-जयरवं कुणंता पयडंता मंगलीयसहसाइं । जिणगुणगणं थुणंता सव्वेवि हु पट्ठिया तुरियं ॥६४४॥
सेणावइमंतिमहंतखत्तिणो सिट्ठिणो य सत्थाहा । संपट्ठिया य पुरओ नियनियजाणेसु आरूढा ॥६४५॥
सिरिसेहरनरनाहो सुइभूओ गंधसिंधुरारूढो । धुव्वंतधवलचमरो जिणवरमणुगंतुमारद्धो ॥६४६॥
एवं सुरनरनियराणुगम्ममाणो सुपासजिणनाहो । धणुसयदुगतणुमाणो समाणचउरंससंठाणो ॥६४७॥
अंचिज्जंतो पम्हलविसालनयणुप्पलेहिं रमणीहिं । आणंदनिब्भरं विबुहविंदगिज्जंतजयसद्दो ॥६४८॥
परिचत्तपाणभोयणपासायारूढपिच्छिरजणेहिं । मुचंतकुसुमवरिसो थुव्वंतो वंदिवंदेहिं ॥६४९॥
नूणं एस असारो संसारो एरिसेहिं जं चत्तो । इय चित्ते जणयंतो ससुरासुरमणुयनाहाणं ॥६५०॥
सलहिज्जंतो मंगलमुहलाहिं गलंतअंसुधाराहिं । वारविलयावलीहिं अत्ताणं सोयमाणीहिं ॥६५१॥
एगत्तो सिरिसेहरपमुहेहिं खत्तिएहिं आवरिओ । अन्नत्तो सोमाभिहपमुहंतेउरपुरंधीहिं ॥६५२॥
पत्तो सुपासनाहो सहसंबवणाभिहाणमुज्जाणं । कयसद्दं पिव उच्छलियकोइलाकोमलरवेहिं ॥६५३॥
नच्चंतं पिव पवणंदोलिरकंकेल्लिपल्लवकरेहिं । गायंतं पिव बहुविहविहंगकुलतुमुलसद्देहिं ॥६५४॥
पणमंतं पिव मिउपवणनमिरतरुसिहरउत्तमंगेहिं । हासं पिव पयडंतं वियसियकुसुमट्टहासेहिं ॥६५५॥
सवियासकुसुमवियलियमयरंदाणंदअंसुबिंदूहिं । उक्खित्तबहलधूयंव परिमलुम्मीसपवणेहिं ॥६५६॥

---

तदनन्तरं च गुरुत्वेन गगनमपि परिमिमाण इव । सुरपाणिपरिगृहीतो माहेन्द्रध्वजोऽतिविलोलः ॥६४२॥
ततश्च दण्डिनो मुण्डिनश्च हास्यकराश्च खिड्डकराः । गायन्तो वादयन्तो नृत्यन्तस्तथा प्रशंसन्तः॥६४३॥
जयजयरवं कुर्वन्तः प्रकटयन्तो मङ्गलिकसहस्राणि । जिनगुणगणं स्तुवन्तः सर्वेऽपि खलु प्रस्थितास्त्वरितम् ॥
सेनापतिमन्त्रिमहाक्षत्रियाः श्रेष्ठिनश्च सार्थवाहाः । संप्रस्थिताश्च पुरतो निजनिजयानेष्वारूढाः ॥६४५॥
श्रीशेखरनरनाथः शुचिभूतो गन्धसिन्धुरारूढः । धूयमानधवलचामरो जिनवरमनुगन्तुमारब्धः ॥६४६॥
एवं सुरनरनिकरानुगम्यमानः सुपार्श्वजिननाथः । धनुःशतद्विकतनुमानः समानचतुरस्रसंस्थानः ॥६४७॥
अर्च्यमानः पक्ष्मलविशालनयनोत्पलै रमणीभिः । आनन्दनिर्भरं विबुधवृन्दगीयमानजयशब्दः ॥६४८॥
परित्यक्तपानभोजनप्रासादारूढद्रष्टृजनैः । मुच्यमानकुसुमवर्षः स्तूयमानो बन्दिवृन्दैः ॥६४९॥
नूनमेषोऽसारः संसार ईदृशैर्यत् त्यक्तः । इति चित्ते जनयन् ससुरासुरमनुजनाथानाम् ॥६५०॥
श्लाघ्यमानो मङ्गलमुखराभिर्गलदश्रुधाराभिः । वारवनितावलीभिरात्मानं शोचयन्तीभिः ॥६५१॥
एकतः श्रीशेखरप्रमुखैः क्षत्रियैरावृतः । अन्यतः सोमाभिधप्रमुखान्तःपुरपुरन्ध्रीभिः ॥६५२॥
प्राप्तः सुपार्श्वनाथः सहस्राम्रवणाभिधानमुद्यानम् । कृतशब्दमिवोच्छलितकोकिलाकोमलरवैः ॥६५३॥
नृत्यदिव पवनान्दोलनशीलकङ्केलिपल्लवकरैः । गायदिव बहुविधविहंगकुलतुमुलशब्दैः ॥६५४॥
प्रणमदिव मृदुपवननम्रतरुशिरउत्तमाङ्गैः । हास्यमिव प्रकटयद् विकसितकुसुमाट्टहासैः ॥६५५॥
सविकासकुसुमविगलितमकरन्दानन्दाश्रुबिन्दुभिः । उत्क्षिप्तबहलधूपमिव परिमलोन्मिश्रपवनैः ॥६५६॥

दिन्नग्घंव मरुद्धयतरुवरनिवडंतकुसुमनियरेहिं । सागयमिव पुच्छंतं कलाविकेकाइयरवेहिं ॥६५७॥
तत्थ य कंकेल्लिमहातरुस्स मूलम्मि सीयलच्छाए । सुरवइकरावलंबी सिवियाए अवयरेऊण ॥६५८॥
सिद्धाण नमोत्ति भणित्तु मुयइ आहरणकुसुमवत्थाइं । ताइं च तियसनाहो गहिऊणं नियकरकमले ॥
सिरिसेहरनरवइणो समप्पए तयणु गरुयहरिसेण । सेणाहिवमाइसिउं रुंभइ सुरतूरनिग्घोसं ॥६६०॥
इत्तो मुत्ताहलविब्भमाइं थूलंसुयाइं मुयमाणी । कुलमयहरिया गग्गयगिराए भणिउं समारद्धा ॥६६१॥
देव ! जयत्तयनिम्मलकासवसुपवित्तगोत्तजाओ सि । सुपइट्ठपत्थिवामलकुलजलनिहिपारियाओ सि ॥६६२॥
विमलोभयपक्खाए पुहईदेवीए कुच्छिभूओ सि । सारयससंकजोण्हानिम्मलजसधवलियधरो सि ॥६६३॥
अमियअणोवमलायन्नरूवसोहग्गकलियदेहो सि । ता तह कहवि पयट्टसु जह सिवसोक्खं लहुं लहसि ॥६६४॥
इय कुलमयहरियाए वयणं सोउं सुपासजिणनाहो । उप्पाडिउमारद्धो केसकलावं समुट्ठीहिं ॥६६५॥
जा ताव अंतरचिय वज्जेणं छिंदिऊण सुरनाहो । जिणकरयलपल्हत्थियकेसभरं गरुयभत्तीए ॥६६६॥
ईसीसिनमियदेहो देवदुकूलंचलेणं नियएण । गिण्हइ कमेण इत्तो निव्वत्तिए लोयकम्मम्मि ॥६६७॥
जिणवरमणुन्नवेउं कुडिलं कसिणं च दुज्जणमणंव । केसकलावं खीरोयजलहिमज्झम्मि पक्खिवइ ॥६६८॥
अह जेट्ठसुद्धपक्खम्मि तेरसीएऽवरण्हसमयम्मि । भयवं सुपासनाहो सयमेव समुज्जओ सहसा ॥६६९॥
काऊण नमोक्कारं सिद्धाणमभिग्गहं च गिण्हेइ । सव्वं मेऽकरणिज्जं पावंति चरित्तमारूढो ॥६७०॥

---

दत्तार्घमिव मरुद्धततरुवरनिपतत्कुसुमनिकरैः । स्वागतमिव पृच्छत् कलापिकेकायितरवैः ॥६५७॥
तत्र च कङ्केल्लिमहातरोर्मूले शीतलच्छाये । सुरपतिकरावलम्बी शिबिकाया अवतीर्य ॥६५८॥
सिद्धेभ्यो नम इति भणित्वा मुञ्चत्याभरणकुसुमवस्त्राणि । तानि च त्रिदशनाथो गृहीत्वा निजकरकमले ॥६५९॥
श्रीशेखरनरपतेः समर्पयति तदनु गुरुहर्षेण । सेनाधिपमादिश्य रुणद्धि सुरतूर्यनिर्घोषम् ॥६६०॥
इतो मुक्ताफलविभ्रमाणि स्थूलांशुकानि मुञ्चन्ती । कुलमहत्तरा गद्गदगिरा भणितुं समारब्धा ॥६६१॥
देव ! जगत्त्रयनिर्मलकाश्यपसुपवित्रगोत्रजातोऽसि । सुप्रतिष्ठपार्थिवामलकुलजलनिधिपारिजातोऽसि ॥६६२॥
विमलोभयपक्षायाः पृथिवीदेव्याः कुक्षिभूतोऽसि । शारदशशाङ्कज्योत्स्नानिर्मलयशोधवलितधरोऽसि ॥६६३॥
अमितानुपमलावण्यरूपसौभाग्यकलितदेहोऽसि । तस्मात्तथा कथमपि प्रयतस्व यथा शिवसौख्यं लघु लभसे ॥६६४॥
इति कुलमहत्तराया वचनं श्रुत्वा सुपार्श्वजिननाथः । उत्पाटयितुमारब्धः केशकलापं स्वमुष्टिभ्याम् ॥६६५॥
यावत् तावदन्तरेव वज्रेण छित्त्वा सुरनाथः । जिनकरतलपर्यस्तकेशभरं गुरुभक्त्या ॥६६६॥
ईषदीषन्नमितदेहो देवदुकूलाञ्चलेन निजकेन । गृह्णाति क्रमेणेतो निर्वर्तिते लोचकर्मणि ॥६६७॥
जिनवरमनुज्ञाप्य कुटिलं कृष्णं च दुर्जनमन इव । केशकलापं क्षीरोदजलधिमध्ये प्रक्षिपति ॥६६८॥
अथ ज्येष्ठशुद्धपक्षे त्रयोदश्यामपराह्णसमये । भगवान् सुपार्श्वनाथः स्वयमेव समुद्यतः सहसा ॥६६९॥
कृत्वा नमस्कारं सिद्धेभ्योऽभिग्रहं च गृह्णाति । सर्वं मेऽकरणीयं पापमिति चारित्रमारूढः ॥६७०॥
अत्रान्तरे देवेन्द्रवृन्दनरखचरकिन्नरगणेन । अम्बरतलस्थितेन भूमिस्थितेन च जिनेन्द्रस्य ॥६७१॥

एत्थंतरम्मि देविंदविंदनरखयरकिन्नरगणेणं । अंबरतलट्ठिएणं भूमिट्ठिएण य जिणिंदस्स ॥६७१॥
उवरि विमुक्को सुहगंधलुद्धभसलावलीविलुप्पंतो । सुहगंधवासचुन्नो पिंगलियसमग्गगयणयलो ॥६७२॥
पहयाओ देवदुंदुहिढक्कहुड्डुक्कामुइंगतलिमाओ । तह बहिरियबंभंडो उच्छलिओ जयजयारावो ॥६७३॥
इत्तो सबाहिरंतरपरिग्गहे जिणवरेण परिचत्ते । खिवइ वरदेवदूसं वामंसतले तियसनाहो ॥६७४॥
अह अट्ठारससीलंगसहस्सभारे जिणेण उक्खित्ते । साहिज्जं पिव काउं मणपज्जवनाणमुप्पन्नं ॥६७५॥
एत्थंतरम्मि सामंतमंतिमंडलियपउरलोएहिं । मित्तेहिं य समकालं सहस्ससंखेहिं नमिऊण ॥६७६॥
भणियमिणं जयपुंगव ! जह इहलोयम्मि तुह पसाएण। असरिससुहमणुभुत्तं अम्हेहिं एत्तियं कालं॥६७७॥
तह पहु ! परलोयम्मिवि तुह पयसेवाए सासयं सुक्खं । इच्छामो अणुभुत्तुं इय भणिउं तेहिं धीरेहिं॥६७८॥
संविग्गमाणसेहिं पंचहिं मुट्ठीहिं कुंतलकलावा । उल्लुंचिया सयं चिय सव्वेहिवि चत्तमोहेहिं ॥६७९॥
अह देवयाए ताणं लिंगाइं समप्पियाइं सव्वेसिं ।देवेहिं तप्पसंसाहिं बहिरियं सयलदिसिवलयं॥६८०॥
अह सिरिसेहरराया अमंदआणंदगग्गयगिराए । विम्हइयमणो ताणं अभिमुहमेयं पयंपेइ ॥६८१॥
भो भो महाणुभावा कित्तीए धवलियं तिहुयणंपि । तह भवभमणदुहाणं तुब्भेहिं जलंजली दिन्नो ॥६८२॥
तह दुल्लंघं मयणस्स सासणं लंघियं च हेलाए । तुब्भेहिं मुत्तिकंताकडक्खपत्तं कओ अप्पा ॥६८३॥
जेहिं दुद्धरवयभारधरणधवलेहिं सामिओ एसो । इण्हिंपि हु पडिवन्नो निक्कारणबंधवो भयवं ॥६८४॥
एवं काऊण थुइं विरए सिरिसेहरे निवे इंदा । नमिय जिणिंदं नंदीसरम्मि गंतुं गया सग्गे ॥६८५॥

---

उपरि विमुक्तं शुभगन्धलुब्धभ्रमरावलीविलुप्यमानम् । शुभगन्धवासचूर्णं पिञ्जलितसमग्रगगनतलम् ॥६७२॥
प्रहता देवदुन्दुभिढक्काहुडुक्कामृदङ्गतलिमाः । तथा बधिरितब्रह्माण्ड उच्छलितो जयजयारावः ॥६७३॥
इतः सबाह्याभ्यन्तरपरिग्रहे जिनवरेण परित्यक्ते । क्षिपति वरदेवदूष्यं वामांशतले त्रिदशनाथः ॥६७४॥
अथाष्टादशशीलाङ्गसहस्रभारे जिनेनोत्क्षिप्ते । साहाय्यमिव कर्तुं मनःपर्यवज्ञानमुत्पन्नम् ॥६७५॥
अत्रान्तरे सामन्तमन्त्रिमण्डलिकपौरलोकैः । मित्रैश्च समकालं सहस्रसंख्यैर्नत्वा ॥६७६॥
भणितमिदं जगत्पुङ्गव ! यथेहलोके तव प्रसादेन । असदृशसुखमनुभुक्तमस्माभिरेतावन्तं कालम् ॥६७७॥
तथा प्रभो ! परलोकेऽपि तव पादसेवया शाश्वतं सौख्यम् । इच्छामोऽनुभोक्तुमिति भणित्वा तैर्धीरैः॥६७८॥
संविग्नमानसैः पञ्चभिर्मुष्टिभिः कुन्तलकलापाः । उल्लुञ्चिताः स्वयमेव सर्वैरपि त्यक्तमोहैः ॥६७९॥
अथ देवतया तेभ्यो लिङ्गानि समर्पितानि सर्वेभ्यः । देवैस्तत्प्रशंसाभिर्बधिरितं सकलदिग्वलयम् ॥६८०॥
अथ श्रीशेखरराजोऽमन्दानन्दगद्गदगिरा । विस्मितमनास्तेषामभिमुखमेवं प्रजल्पति ॥६८१॥
भो भो महानुभावाः ! कीर्त्या धवलितं त्रिभुवनमपि । तथा भवभ्रमणदुःखानां युष्माभिर्जलाञ्जलिर्दत्तः॥६८२॥
तथा दुर्लङ्घं मदनस्य शासनं लङ्घितं च हेलया । युष्माभिर्मुक्तिकान्ताकटाक्षपात्रं कृत आत्मा ॥६८३॥
यैर्दुर्धरव्रतभारधरणधवलैः स्वाम्येषः । इदानीमपि खलु प्रतिपन्नो निष्कारणबान्धवो भगवान् ॥६८४॥
एवं कृत्वा स्तुतिं विरते श्रीशेखरे नृप इन्द्राः । नत्वा जिनेन्द्रं नन्दीश्वरे गत्वा गताः स्वर्गे ॥६८५॥

सिरिसेहरोवि राया सहिओ जणणीए नमिवि भत्तीए। तित्थेसरस्स चलणे ताणं च समुट्ठिउं सहसा॥६८६॥
पुज्जो सुरासुराणं मज्झ पिया इय पमोयसंजुत्तो। चइऊण रज्जरट्ठे ठिओ अरन्ने इय सस्रोओ॥६८७॥
नियनयरीए पविट्ठो दूसहपियविरहसोयसंतत्तं। संठावइ कहकहवि हु देविं सोमाभिहं तत्थ॥६८८॥
इय जम्मणनिक्खमणाभिहाणकल्लाणकहणपडिबद्धो। जिणवरसुपासचरिए समत्थिओ दुइयपत्थावो॥६८९॥

---

श्रीशेखरोऽपि राजा सहितो जनन्या नत्वा भक्त्या। तीर्थेश्वरस्य चरणौ तेषां च समुत्थितः सहसा॥६८६॥
पूज्यः सुरासुराणां मम पितेति प्रमोदसंयुक्तः। त्यक्त्वा राज्यराष्ट्रे स्थितोऽरण्य इति सशोकः॥६८७॥
निजनगर्यां प्रविष्टो दुःसहप्रियविरहशोकसंतप्ताम्। संस्थापयति कथंकथमपि हि देवीं सोमाभिधां तत्र॥६८८॥
इति जन्मनिष्क्रमणाभिधानकल्याणकथनप्रतिबद्धः। जिनवरसुपार्श्वचरिते समर्थितो द्वितीयप्रस्तावः॥६८९॥



अह सिरिसुपासनाहो चउनाणी सव्वसत्तहियनिरओ। काउस्सग्गम्मि ठिओ निक्कंपो मेरुसिहरंव ॥१॥
तं तत्थ गमइ दियहं पसंतमुणिमंडलेण परियरिओ। जणयंतो आणंदं भवियचओराण जिणचंदो ॥२॥
अह दुइयदिणे भयवं मयभिभलतियससिंधुरगईए। पारणगत्थं पत्तो पाडलिसंडम्मि नयरम्मि ॥३॥
तत्थ य महुयरविर्त्ति अणुसरमाणो महिंदगेहम्मि। संपत्तो सोवि तओ हरिसभरुल्लसियरोमंचो ॥४॥
जिणनाहस्साभिमुहं वच्चइ निययासणाओ उट्ठेउं। नमिउं च निरुवमाणंदगग्गयं भणिउमारद्धो ॥५॥
केहिंपि अज्ज चिरसंचिएहिं फलियम्ह तवविसेसेहिं। कप्पतरूहिंव नूणं सइमहुरपचेलिमफलेहिं ॥६॥
जेणेयं मह भवणं सुरविसरनमंसणिज्जमज्जेव। जायं जिण! तुहपयपउमपंतिविच्छित्तिरमणीयं ॥७॥
ते तिहुयणसिरिसिंगारभायणं जे जिणिंदमुहकमले। विप्फारियनयणउडा पियंति लायन्नमयरंदं ॥८॥
कित्तिं कुणेइ उवणेइ संपयं पडिहणेइ मलपडलं। देव! दुहावि अमोहं साहइ तुह दंसण किं नो? ॥९॥
भुवणयलासासकरं तुह पहु! इणमो अचिंतियागमणं। चत्तरणसमयवुट्ठीए संनिहं हरइ संतावं ॥१०॥
पेक्खंति परमजोईसरावि जं झाणचक्खुणा कहवि। सो परमप्पसरूवो तुमं गओ दिट्ठिविसयम्मि॥११॥
अहिभोगे विय भोगे निहणंव धणं मलंव कमलंपि। मन्नंता भवविमुहा भवारिसा कस्स इंति गिहं'१२॥
इय थोऊण सहरिसं बहुमाणपरो भणइ नियं गिहिणिं। कल्लाणाणं पणइणि! एगचिय भायणं तं सि ॥
जीए जएक्कनाहो सपत्तं दाणपत्तमेस तए। जिणनाहो सचराचरजंतूणमकत्तिमो बंधू ॥१४॥
तो पारणयं काराविऊण एयं विसुद्धदव्वेण। गहिरंपि भवसमुद्दं गोपयमित्तंव लंघेसु ॥१५॥

---

अथ श्रीसुपार्श्वनाथश्चतुर्ज्ञानि सर्वसत्त्वहितनिरत। कायोत्सर्गे स्थितो निष्कम्पो मेरुशिखरमिव ॥१॥
त तत्र गमयति दिवस प्रशान्तमुनिमण्डलेन परिकरित। जनयन्नानन्द भविकचकोराणा जिनचन्द्र ॥२॥
अथ द्वितीयदिने भगवान् मदमत्तत्रिदशसिन्धुरगत्या। पारणकार्थं प्राप्त पाटलिषण्डे नगरे ॥३॥
तत्र च मधुकरवृत्तिमनुसरन् महेन्द्रगेहे। संप्राप्त सोऽपि ततो हर्षभरोल्लसितरोमाञ्च ॥४॥
जिननाथस्याभिमुख व्रजति निजकासनादुत्थाय। नत्वा च निरुपमानन्दगद्गद भणितुमारब्ध ॥५॥
कैरप्यद्य चिरसंचितै फलित मम तपोविशेषै। कल्पतरुभिरिव नून सदामधुरपचेलिमफलै ॥६॥
*येनेद मम भवनं सुरविसरनमस्यनीयमद्यैव। जातं जिन! त्वत्पादपद्मपङ्क्तिविच्छित्तिरमणीयम् ॥७॥*
ते त्रिभुवनश्रीशृङ्गारभाजन ये जिनेन्द्रमुखकमले। विस्फारितनयनपुटा पिबन्ति लावण्यमकरन्दम् ॥८॥
कीर्त्तिं करोत्युपनयति सपद प्रतिहन्ति मलपटलम्। देव! द्विधाप्यमोघ (ह) साधयति तव दर्शन किं नो? ॥
भुवनतलाश्वासकरं तव प्रभो! इदमचिन्तितागमनम्। त्यक्तरनसमयवृष्ट्या सनिभ हरति सतापम् ॥१०॥
प्रेक्षन्ते परमयोगीश्वरा अपि ध्यानचक्षुषा कथमपि। स परमात्मस्वरूपस्त्व गतो दृष्टिविषये ॥११॥
अहिभोगानिव भोगान् निधनमिव धन मलमिव कमलमपि। मन्यमाना भवविमुखा भवादृशा कस्यायान्ति गृहम्? ॥
इति स्तुत्वा सहर्ष बहुमानपरो भणति निजा गृहिणीम्। कल्याणाना प्रणयिणि! एकैव भाजन त्वमसि॥१३॥
यया जगदेकनाथ सप्राप्त दानपात्रमेष त्वया। जिननाथ सचराचरजन्तूनामकृत्रिमो बन्धु ॥१४॥

उद्धट्ठिओवि भयवं पारइ तत्थेव पाणितलकलियं । तं सुद्धंव पासंति नेय लोयावि जं भणियं ॥३०॥
परमाइसयजुयाणं हवंति तित्थेसराण सयकालं । आहारा नीहारा अदिस्सा चम्मचक्खूणं ॥३१॥
सेसावि मुणिवरिंदा [1]सकम्मनिम्मूलणम्मि उज्जुत्ता । जहविहिणा जं पत्तं कुणंति पारणयमित्तो य॥३२॥
भयवंपि गहियबहुविहअभिग्गहो निप्परिग्गहो धीरो । गामागरनयराइसु विहरइ समसत्तुमित्तमणो॥३३॥
कत्थवि निच्चलचित्तो पडिरुद्धअसेसकरणवावारो । सुद्धज्झाणदवेणं पाववणं दहइ सयलंपि ॥३४॥
कत्थवि य लगंडासणगरुडासणपमुहठाणकरणेण । उवलपडिबिंबसंकं जणइ जणाणं पयासेवि ॥३५॥
कत्थवि नवनीलुप्पलसंडंव हिमेण डज्झमाणोवि । निच्चलतणू मणंपि हु न चलइ नियझाणसरसीओ॥३६॥
तवहुयवहेण अंतो बाहिं च सहस्सकरपयावेण । ओलंबियभुयपरिहो बाढं सोहेइ देहमलं ॥३७॥
छट्ठट्ठमदसमदुवालसाइमासद्धमासखमणाई । भद्दमहाभद्दाई कुणमाणो उग्गतवकम्मं ॥३८॥
बावीसपरीसहसहणपच्चलो दलियमोहमाहप्पो । तुडियदढवियडनेहायसनियडो खलियमयपसरो ॥३९॥
नियपयकमलरएणं पवित्तयंतो महीयलं सयलं । निम्मूलं दलमाणो सयलंतरसत्तुसिन्नबलं ॥४०॥
अत्ताणं भावितो मुहु मुहुं भावणाहिं सुद्धाहिं । कम्ममलेण य मलिणं धोयंतो पसमसलिलेणं ॥४१॥
कलयंतो गहिरंपि हु जाणुपमाणं भवन्नवं देवो । छउमत्थो नव मासे गमेइ परिचत्तसावज्जो ॥४२॥
अह अन्नया य उक्कंठिउव्व देसेसु विहरिउं पत्तो । वाराणसीए ईसाणदिसिट्ठिए सहमअंबवणे॥४३॥

---

ऊर्ध्वस्थितोऽपि भगवान्पारयति तत्रैव पाणितलकलितम् । तच्छुद्धान्न पश्यन्ति नैव लोका अपि यद्भणितम्॥३०॥
परमातिशययुताना भवन्ति तीर्थेश्वराणा सदाकालम् । आहारा नीहारा अदृश्याश्चर्मचक्षुषाम् ॥३१॥
शेषा अपि मुनिवरेन्द्रा निर्मूलन उद्युक्ता । यथाविधि यत् प्राप्त कुर्वन्ति पारणकमितश्च ॥३२॥
भगवानपि गृहीतबहुविधाभिग्रहो निष्परिग्रहो धीर । ग्रामाकरनगरादिषु विहरति समशत्रुमित्रमना ॥३३॥
कुत्रापि निश्चलचित्त प्रतिरुद्धाशेषकरणव्यापार । शुद्धध्यानदवेन पापवनं दहति सकलमपि ॥३४॥
कुत्रापि च लकुटासनगरुडासनप्रमुखस्थानकरणेन । उपलप्रतिबिम्बशङ्का जनयति जनाना प्रकाशेऽपि ॥३५॥
कुत्रापि नवनीलोत्पलषण्डमिव हिमेन दह्यमानोऽपि । निश्चलतनुर्मनागपि खलु न चलति निजध्यानसरसीत ॥
तपोहुतवहेनान्तर्बहिश्च सहस्रकरप्रतापेन । अवलम्बितभुजपरिघो बाढ शोधयति देहमलम् ॥३७॥
षष्ठाष्टमदशमद्वादशादिमासार्धमासक्षपणादि । भद्रामहाभद्रादि कुर्वाण उग्रतप कर्म ॥३८॥
द्वाविंशतिपरीषहसहनप्रत्यलो दलितमोहमाहात्म्य । त्रुटितदृढविकटस्नेहायसनिगड स्खलितमदप्रसर ॥३९॥
निजपादकमलरजसा पवित्रयन् महीतल सकलम् । निर्मूल दलयन् सकलान्तरशत्रुसैन्यबलम् ॥४०॥
आत्मान भावयन् मुहुर्मुहुर्भावनाभि शुद्धाभि । कर्ममलेन च मलिन धावन् प्रशमसलिलेन ॥४१॥
कलयन् गभीरमपि हि जानुप्रमाण भवार्णव देव । छद्मस्थो नव मासान् गमयति परित्यक्तसावद्य ॥४२॥
अथान्यदा चोत्कण्ठित इव देशेषु विहृत्य प्राप्त । वाराणस्यामीशानदिक्स्थिते सहमाम्रवणे ॥४३॥

---

[1] स म मदणा ।

तत्थ य उम्मिलिरपढमपल्लवारुणियसयलसाहस्स । अमरपुरस्सव मणहरसुमणसनियराभिरामस्स ॥४४॥
नरनाहस्सव बहुपत्तनियरपरियरियभूमिभायस्स । सिरिसस्स महातरुणो मूलम्मि अवट्ठिओ भयवं ॥४५॥
तत्थ य चरित्तदंसणनाणेहिं अणुत्तरप्पभावेहिं । आलयविहारमद्दवअज्जवलाहवपहाणेहिं ॥४६॥
आकिंचणसच्चतिगुत्तिमुत्तिखंतिपमुक्खचरिएहिं । सम्मं मुहुं मुहुं चिय भावेमाणस्स अप्पाणं ॥४७॥
जहवट्ठियभावभावणभावियहिययस्स करुणजलनिहिणो । सयलंपि हु जियलोयं अत्तंव पलोयमाणस्स॥४८॥
बाहिरविक्खेवविवज्जिएहिं करणेहिं सह समाहीए । एगीभूयंव मणं काउं तत्तम्मि लीणस्स ॥४९॥
गयलेवस्स नहस्सव मेरुस्सव सुइरनिप्पकंपस्स । पवमाणस्सव कत्थवि पडिबंधं अकुणमाणस्स ॥५०॥
सुक्कज्झाणानलदड्ढसयलवणघाइकम्मगहणस्स । निव्वायथिमियजलरासिविब्भमं निरु वहंतस्स ॥५१॥
सुक्कज्झाणस्सवि चरिमभेयजुयलं अपत्तपुव्वस्स । फग्गुणवइछट्ठीए सुहे मुहुत्तम्मि पुव्वण्हे ॥५२॥
चंदम्मि विसाहत्थे सुपासतित्थेसरस्स जयपहुणो । अव्वाहयं अणंतं पडिपुन्नं तह निरावरणं ॥५३॥
भाविस्सभूयपभवंतभावमालोयलोयणं विमलं । लोयालोयपयासं उप्पन्नं केवलं नाणं ॥५४॥
एत्थंतरम्मि आसणपकंपसंबोहिओ तियसनाहो । अवहीए जाणिऊणं जिणस्स जायं जहा नाणं ॥५५॥
उट्ठिय सत्तट्ठ पए गंतुं भत्तिब्भरोणमियसीसो । पभणइ नमोत्थु तित्थंकरस्स भयवंसुपासस्स ॥५६॥
आणवइ तहा सेणावइं च भो भद्द ! जह लहुं गंतुं । सोहम्मसहाए तुमं अप्फालसु सासयं घंटं ॥५७॥
तह तिक्खुत्तो घोसह जह भरहे सत्तमस्स जिणवइणो । केवलनाणं जायंति तत्थ सव्वेण गंतव्वं ॥५८॥

---

तत्र चोन्मीलनशीलप्रथमपल्लवारुणितसकलशाखस्य । अमरपुरस्येव मनोहरसुमनोनिकराभिरामस्य ॥४४॥
नरनाथस्येव बहुप(पा)त्रनिकरपरिकारितभूमिभागस्य । शिरीषस्य महातरोर्मूलेऽवस्थितो भगवान् ॥४५॥
तत्र च चारित्रदर्शनज्ञानैरनुत्तरप्रभावैः । आलयविहारमार्दवार्जवलाघवप्रधानैः ॥४६॥
आकिञ्चन्यसत्यत्रिगुप्तिमुक्तिक्षान्तिप्रमुख्यचरितैः । सम्यग् मुहुर्मुहुरेव भावयत आत्मानम् ॥४७॥
यथावस्थितभावभावनाभावितहृदयस्य करुणाजलनिधेः । सकलमपि जीवलोकमात्मानमिव प्रलोकमानस्य॥४८॥
बाह्यविक्षेपविवर्जितैः करणैः सह समाधिना । एकीभूतमिव मनः कृत्वा तत्त्वे लीनस्य ॥४९॥
गतलेपस्य नभस इव मेरोरिव सुचिरनिष्प्रकम्पस्य । पवमानस्येव कुत्रापि प्रतिबन्धमकुर्वाणस्य ॥५०॥
शुक्लध्यानानलदग्धसकलघनघातिकर्मगहनस्य । निर्वातस्तिमितजलराशिविभ्रमं निश्चितं वहतः ॥५१॥
शुक्लध्यानस्यापि चरमभेदयुगलमप्राप्तपूर्वस्य । फाल्गुनासितषष्ठ्यां शुभे मुहूर्ते पूर्वाह्णे ॥५२॥
चन्द्रे विशाखास्थे सुपार्श्वतीर्थेश्वरस्य जगत्प्रभोः । अव्याहतमनन्तं परिपूर्णं तथा निरावरणम् ॥५३॥
भविष्यद्भूतप्रभवद्भावालोकलोचनं विमलम् । लोकालोकप्रकाशमुत्पन्नं केवलं ज्ञानम् ॥५४॥
अत्रान्तरे आसनप्रकम्पसंबोधितत्रिदशनाथः । अवधिना ज्ञात्वा जिनस्य जातं यथा ज्ञानम् ॥५५॥
उत्थाय सप्ताष्ट पदानि गत्वा भक्तिभरावनतशीर्षः । प्रभणति नमोऽस्तु तीर्थङ्कराय भगवत्सुपार्श्वाय ॥५६॥
आज्ञपयति तथा सेनापतिं च भो भद्र ! यथा लघु गत्वा । सौधर्मसभायां त्वमास्फालय शाश्वतीं घण्टाम् ॥

ता भो देवा तुम्मे आगन्छह परियणेण परियरिया। इय सक्कसासणं सो पडिच्छिउं तं तहा कुणइ ॥५९॥
तत्तो य गहिरघंटाअप्फालणउच्छलंतपडिसद्दं। पडिसद्दपडिप्फलणावज्जिरनीसेससुरघंटं ॥६०॥
सुरघंटरणज्झणारववसवज्जियतियसचउविहाउज्जं। आउज्जसद्दसंसग्गभग्गगंधव्वगीयरवं ॥६१॥
गीयरवभंगपरिगलियतालल्यचुक्कनच्चिरच्छरसं। अच्छरसकलयलारवअक्कंतसमग्गदिसिचक्कं ॥६२॥
एवं सुरलोएसुं सव्वेसुवि सुरवराण भवणेसु। किंकिंतिसद्दमीसो उच्छलिओ बहलहलवोलो ॥६३॥
उवसंते य खणेणं साहइ सेणावईवि तियसाण। जिणकेवलमहिमत्थं जह सुरवइणा समाट्ठं ॥६४॥
सोऊण तं च समगं सव्वेवि हु सुरवरा सुरिंदेण। सह संचलिया नियनियजाणविमाणेसु आरूढा ॥६५॥
हरिसुक्करिसमयं किं किंवा जयजयजएक्करवमइयं। रयणुज्जोयमयं किं किं लच्छीविब्भममयं वा? ॥६६॥
एवं गयणयलं पइ हियए लोयाण विम्हयं गरुयं। जणयंता संपत्ता सहसंबवणम्मि उज्जाणे ॥६७॥
तत्थ य सव्वेहिं सुरवईहिं आणंदगग्गयगिराए। चउविहदेवनिकाया वयणमिमं सहरिसं भणिया ॥६८॥
भो भो सुपासनाहस्स समवसरणम्मि जस्स जं किच्चं। तं काऊण कयत्था हवह सुरा, तेवि तं सोउं ॥६९॥
वाउकुमारा अवणिंति रेणुतिणकयवराईयं सव्वं। जोयणमित्ते खित्ते तरुकूवाइयं तिरोहंति ॥७०॥
मेहकुमारा पुण पवणचलियरयनियरनासणं सुरहिं। तम्मि य कुणंति तुट्ठा गंधोदयसीयरक्खेवं ॥७१॥
केवि हु अमंदमयरंदबिंदुनीसंदलुद्धअलिपडलं। हरियंदणमंदारयकुसुमक्केरं च वरिसंति ॥७२॥

---

तथा त्रिर्घोषय यथा भरते सप्तमस्य जिनपतेः। केवलज्ञानं जातमिति तत्र शक्रेण गन्तव्यम् ॥५८॥
तस्माद् भो देवा यूयमागच्छत परिकरेण परिकरिताः। इति शक्रशासनं स प्रतीप्य तत्तथा करोति ॥५९॥
ततश्च गभीरघण्टास्फालनोच्छलत्प्रतिशब्दम्। प्रतिशब्दप्रतिस्फालनावादनशीलनिःशेषसुरघण्टम् ॥६०॥
सुरघण्टारणझणारववशवादितत्रिदशचतुर्विधातोद्यम्। आतोद्यशब्दसंसर्गभग्नगान्धर्वगीतरवम् ॥६१॥
गीतरवभङ्गपरिगलिततालल्यभ्रष्टनर्तनशीलाप्सरसम्। अप्सरःकलकलारवाक्रान्तसमग्रदिक्चक्रम् ॥६२॥
एवं सुरलोकेषु सर्वेष्वपि सुरवराणां भवनेषु। किंकिमितिशब्दमिश्र उच्छलितो बहलकोलाहलः ॥६३॥
उपशान्ते च क्षणेन कथयति सेनापतिरपि त्रिदशान्। जिनकेवलमहिमार्थं यथा सुरपतिना समादिष्टम् ॥६४॥
श्रुत्वा तच्च समकं सर्वेऽपि हि सुरवराः सुरेन्द्रेण। सह संचलिता निजनिजयानविमानेष्वारूढाः ॥६५॥
हर्षोत्कर्षमयं किं किंवा जयजयजयैकरवमयम्। रत्नोद्योतमयं किं किं लक्ष्मीविभ्रममयं वा? ॥६६॥
एवं गगनतलं प्रति हृदये लोकानां विस्मयं गुरुम्। जनयन्तः संप्राप्ताः सहस्राम्रवण उद्याने ॥६७॥
तत्र च सर्वैः सुरपतिभिरानन्दगद्गदगिरा। चतुर्विधदेवनिकाया वचनमिदं सहर्षं भणिताः ॥६८॥
भो भोः सुपार्श्वनाथस्य समवसरणे यस्य यत् कृत्यम्। तत्कृत्वा कृतार्था भवत सुराः, तेऽपि तत् श्रुत्वा ॥६९॥
वायुकुमारा अपनयन्ति रेणुतृणकचरादिकं सर्वम्। योजनमात्रे क्षेत्रे तरुकूपादिकं तिरोदधति ॥७०॥
मेघकुमाराः पुनः पवनचलितरजोनिकरनाशनं सुरभिम्। तस्मिंश्च कुर्वन्ति तुष्टा गन्धोदकसीकराक्षेपम् ॥७१॥
केऽपि ह्यमन्दमकरन्दबिन्दुनिःस्यन्दलुब्धालिपटलम्। हरिचन्दनमन्दारकुसुमोत्करं च वर्षन्ति ॥७२॥

तत्तो पढमो कप्पोववण्णदेवेहिं रयणपायारो । निम्मविओ जो रेहइ रोहणगिरितुंगसिंगसमो ॥७३॥
दुइओ जोइसिएहिं वरकणयमओ विउव्विओ झत्ति । जो सुरगिरिव्व रेहइ समागओ जिणसिरिं दट्ठुं ॥७४॥
तइओ भवणवईहिं कलहोयमओ विणिम्मिओ सालो । जो चंदकुंदधवलो तुहिणायललीलमुव्वहइ ॥७५॥
एयम्मि ठिओ सामी चउविहसंघस्स चउविहं धम्मं । साहिस्सइ इय तेहिं कयाइं चत्तारि दाराइं ॥७६॥
तह चउसुवि दारेसुं फालिहसोवाणमालकलियाओ । वावीओ रइयाओ विसट्टकंदोट्टवंदाओ ॥७७॥
तह विहियाइं वणाइं चंपयपुन्नायनायविडवीणं । पवणुव्वेल्लिरपल्लवकरसण्णियसयललोयाइं ॥७८॥
सीहासणं च मज्झे हेममयं निम्मियं अइविसालं । उदयायलसिहरं पिव तिहुयणरविसंगमीहंतं ॥७९॥
तह उवरि वारसगुणो पवणुव्विल्लंतगुच्छसंछन्नो । कोमलकिसलयकलिओ असोयवरपायवो रइओ ॥८०॥
एसो तिगुत्तिगुत्तो निज्जियदंडत्तओ तिकालविऊ । तिहुयणगुरुत्ति रइयं विमलं छत्तत्तयं उवरिं ॥८१॥
एगोच्चिय जिणनाहो पोओ भवसायरम्मि इइ कहिउं । धरणीए अंगुली विय समुब्भिया धम्मधयमिसओ ॥८२॥
भामंडलं च पेट्ठीए निम्मियं रयणकिरणचिंचइयं । वरदुंदुही य तह तत्थ ताडिया सहरिससुरेहिं ॥८३॥
सक्कीसाणिंदावि हु दोसुवि पासेसु चंदकरधवलं । चालंति चामरजुयं तह वुट्ठी हवइ कुसुमाण ॥८४॥
पुरओवि धम्मचक्कं पइट्ठियं घडियममलरयणेहिं । जं सेवागयतरणिव्व सहइ विजिउत्ति जयरविणा ॥८५॥
एत्थंतरे जिणिंदो सुरविरइयकणयपउमपंतीए । ठावितो कमजुयलं थुव्वंतो चारणमुणीहिं ॥८६॥
पणमिज्जंतो सायरनरकिन्नरखयरसुरसमूहेहिं । सुरवइदंसियमग्गो पुव्वदुवारेण पविसेइ ॥८७॥

---

ततः प्रथमः कल्पोपपन्नदेवै रत्नप्राकारः । निर्मापितो यो राजति रोहणगिरितुङ्गश्रृङ्गसमः ॥७३॥
द्वितीयो ज्योतिषिकैर्वरकनकमयो विकुर्वितो झटिति । यः सुरगिरिरिव राजति समागतो जिनश्रियं द्रष्टुम् ॥७४॥
तृतीयो भवनपतिभिः कलधौतमयो विनिर्मितः शालः । यश्चन्द्रकुन्दधवलस्तुहिनाचललीलामुद्वहति ॥७५॥
एतस्मिन् स्थितः स्वामी चतुर्विधसंघस्य चतुर्विधं धर्मम् । कथयिष्यतीति तैः कृतानि चत्वारि द्वाराणि ॥७६॥
तथा चतुर्ष्वपि द्वारेषु स्फाटिकसोपानमालाकलिताः । वाप्यो रचिता विकासितनीलोत्पलवृन्दाः ॥७७॥
तथा विहितानि वनानि चम्पकपुन्नागनागविटपिनाम् । पवनोद्वेलनशीलपल्लवकरसंज्ञितसकललोकानि ॥७८॥
सिंहासनं च मध्ये हेममयं निर्मितमतिविशालम् । उदयाचलशिखरमिव त्रिभुवनरविसङ्गमीहमानम् ॥७९॥
तथोपरि द्वादशगुणः पवनोद्वेल्लद्गुच्छसंछन्नः । कोमलकिशलयकलितोऽशोकवरपादपो रचितः ॥८०॥
एष त्रिगुप्तिगुप्तो निर्जितदण्डत्रयस्त्रिकालवित् । त्रिभुवनगुरुरिति रचितं विमलं छत्रत्रयमुपरि ॥८१॥
एक एव जिननाथः पोतो भवसागर इति कथयितुम् । धरण्याऽङ्गुलीव समूर्ध्विता धर्मध्वजमिषतः ॥८२॥
भामण्डलं च पृष्ठे निर्मितं रत्नकिरणमण्डितम् । वरदुन्दुभिश्च तथा तत्र ताडिता सहर्षसुरैः ॥८३॥
शक्रेशानेन्द्रावपि हि द्वयोरपि पार्श्वयोश्चन्द्रकरधवलम् । चालयन्ति चामरयुगं तथा वृष्टिर्भवति कुसुमानाम् ॥८४॥
पुरतोऽपि धर्मचक्रं प्रतिष्ठितं घटितममलरत्नैः । यत् सेवागततरणिरिव राजते विजित इति जगद्रविणा ॥८५॥
अत्रान्तरे जिनेन्द्रः सुरविरचितकनकपद्मपङ्क्तौ । स्थापयन् क्रमयुगलं स्तूयमानश्चारणमुनिभिः ॥८६॥

मज्झवि तं नमणिज्जं तित्थं लोयाण इय निदंसंतो। कयकिच्चोवि हु भयवं 'नमोत्थु तित्थस्स' इय भणइ॥८८॥
अह समवसरणसीहासणं सरुक्खं पयाहिणीकाउं। पुव्वाभिमुहो भयवं उवविसइ तिलोयहियकारी॥८९॥
अन्नाइंवि जिणपडिरूवगाइं तिन्नेव तिसुवि दिसासु। ठाविंति सुरा सीहासणम्मि अकलियपहावाणि॥९०॥
ताइं च तप्पभावेण तयणुरूवाइं चेव सोहंति। अह चउरूवो जाओ एगोवि सुपासजिणनाहो॥९१॥
तं च नमिऊण देवा केवि हु गायंति केवि नच्चंति। फोडिंति केवि तिवइं कुणंति तह संथवं केवि॥९२॥
जिणवरपयपउमोवरि अमंदमयरंदबिंदुसंवलियं। मुंचंति केवि देवा पणवन्नं जलरुहसमूहं॥९३॥
चेलंचलेहिं वीयंति केवि केवि हु कुणंति भत्तीए। उब्भियभुयदंडा चंडतंडवाडंबरं पुरओ॥९४॥
रंभापमुहाओ विलासिणीओ संगीयकरणनिउणाओ। पयडियभावाभिणयं हरिसियहियया ओ नच्चंति॥९५॥
एत्थंतरम्मि सिरिकलियमउडमणिकिरणकविसियदसासा। सव्वे सुरासुरिंदा तिपयाहिणपुव्वगं नमिउं॥९६॥
नियनियसमुचियठाणेसु संनिसन्ना, सहस्सनयणेण। एत्थंतरे निसिद्धो सुरयणकोलाहलो सहसा॥९७॥
भयवंपि दसणमालामऊहमल्लिलेण धोइयव्व। विमलाए एगाइवि अणेगजणसंसयहराए॥९८॥
सुरनरतिरिक्खसाहारणाए जलवाहगज्जिगहिराए। संसारदुक्खसंतत्तसत्तसंतावहरिणीए॥९९॥
जोयणमित्तपडिफलणपच्चलाए गिराए महुराए। अह परिसाए सुपासो माहेउं धम्ममारद्धो॥१००॥
एत्थंतरम्मि वणपालियाए अच्चब्भुयं भुवणगुरुणो। रिद्धिं पलोइऊणं ससंभमं विम्हियमणाए॥१०१॥

---

प्रगल्भ्यमानः सादरनरकिन्नरखचरसुरसमूहैः। सुरपतिदर्शितमार्गः पूर्वद्वारेण प्रविशति॥८७॥
ममापि तन्नमनीयं तीर्थं लोकानामिति निदर्शयन्। कृतकृत्योऽपि हि भगवान् 'नमोऽस्तु तीर्थाय' इति भणति॥८८॥
अथ समवसरणसिंहासनं सवृक्षं प्रदक्षिणीकृत्य। पूर्वाभिमुखो भगवानुपविशति त्रिलोकीहितकारी॥८९॥
*अन्यान्यपि जिनप्रतिरूपकाणि त्रीण्येव त्रिष्वपि दिक्षु। स्थापयन्ति सुराः सिंहासनेऽकलितप्रभावाणि॥९०॥*
तानि च तत्प्रभावेण तदनुरूपाण्येव शोभन्ते। अथ चतूरूपो जात एकोऽपि सुपार्श्वजिननाथः॥९१॥
तं च नत्वा देवाः केऽपि खलु गायन्ति केऽपि नृत्यन्ति। स्फोटयन्ति केऽपि त्रिपदीं कुर्वन्ति तथा संस्तवं केऽपि॥९२॥
जिनवरपादपद्मोपर्यमन्दमकरन्दबिन्दुसंवलितम्। मुञ्चन्ति केऽपि देवाः पञ्चवर्णं जलरुहसमूहम्॥९३॥
चेलाञ्चलैर्वीजयन्ति केऽपि केऽपि हि कुर्वन्ति भक्त्या। ऊर्ध्वितभुजदण्डाश्चण्डताण्डवाडम्बरं पुरतः॥९४॥
रम्भाप्रमुखा विलासिन्यः संगीतकरणनिपुणाः। प्रकटितभावाभिनयं हर्षितहृदया नृत्यन्ति॥९५॥
अत्रान्तरे श्रीकलितमुकुटमणिकिरणकपिशितदशाशाः। सर्वे सुरासुरेन्द्रास्त्रिप्रदक्षिणापूर्वकं नत्वा॥९६॥
निजनिजसमुचितस्थानेषु संनिषण्णाः, सहस्रनयनेन। अत्रान्तरे निषिद्धः सुरजनकोलाहलः सहसा॥९७॥
भगवानपि दशनमालामयूखसलिलेन धौतयेव। विमलयैकयाप्यनेकजनसंशयहरया॥९८॥
सुरनरतिर्यक्साधारणया जलवाहगर्जिगभीरया। संसारदुःखसंतप्तसत्त्वसंतापहारिण्या॥९९॥
योजनमात्रप्रतिफलनप्रत्यलया गिरा मधुरया। अथ पर्षदि सुपार्श्वः कथयितुं धर्ममारब्धः॥१००॥
अत्रान्तरे वनपालिकयात्यद्भुतां भुवनगुरोः। ऋद्धिं प्रलोक्य ससंभ्रमं विस्मितमनसा॥१०१॥

आगंतूणं तह पणमिऊण सिरिसेहरं नरवरिंदं । विन्नत्तममंदाणंदगग्गयं तस्सिमं पुरओ ॥१०२॥
दिट्ठीए देव ! वद्धसि देविंदनरिंदवंदिओ अज्ज । तुह उज्जाणे संझाए आगओ जिणवरसुपासो॥१०३॥
तस्स य केवलनाणं उप्पन्नं संपयं अणाबाहं । लोयालोयब्भंतरसमत्थवत्थुप्पयासकरं ॥१०४॥
एगं तु कासवकुलं न केवलं धवलियं, नियजसेण । तिहुयणमवि नीसेसं सुपासनाहेण नूणमिणं॥१०५॥
पिच्छसु सव्वत्थवि सामि! सालपुरओ चउव्विहसुराणं। रयणमयविमाणेहिं रेहइ नयरं सुरपुरिव्व॥१०६॥
अह भत्तिभरोणयमउलिमिलियकरसंपुडो पणमिऊण । हरिसेण जिणवरिंदं थोउं सक्कत्थएण तओ॥१०७॥
दाउं धणद्धतेरसलक्खे दाणम्मि तीए, पडिहारं । आणविउं नयरीए कारवइ महूसवं राया ॥१०८॥
तह पडुपडहपयाणेण पउरलोयं पवट्टए सव्वं । समुचियसिंगारेणं जिणनाहनमंसणाहेउं ॥१०९॥
सयमवि य मत्तमयगलउत्तुंगतुरंगरहवरठिएहिं + अंतेउरसुयसामंतमंतिविंदेहिं परियरिओ ॥११०॥
संचलिओ जाव तहिं ताव य थणसिहरलुलियहारलया। करकलियकणयदंडा पविसेउं भणइ पडिहारी॥१११॥
देव ! पुरा तुम्भेहिं चउरमई नाम पेसिओ दूओ । जो आसिमयणमंजरिकन्नाए सयंवरनिमित्तं ॥११२॥
अंगाहिववंगाहिवमगहाहिवनरवईण कुमराणं । आमंतणत्थमिण्हिं सो चिट्ठइ दारदेसम्मि ॥११३॥
तो मुंचसुत्ति भणिए नरवइणा सो पवेसिओ तीए। धरणियलविलुलियसिरो विन्नवइ सरूवमह पहुणो॥११४॥
अद्धमासि गओ तुह सासणाओ अंगाइनिवपसूयाणं । आहवणत्थं कन्नासयंवरे देव! कुमराणं ॥११५॥

---

आगत्य तथा प्रणम्य श्रीशेखरं नरवरेन्द्रम् । विज्ञप्तममन्दानन्दागद्गदं तस्येदं पुरतः ॥१०२॥
दिष्ट्या देव ! वर्ध्यसे देवेन्द्रनरेन्द्रवन्दितोऽद्य । तवोद्याने संध्यायामागतो जिनवरसुपार्श्वः ॥१०३॥
तस्य च केवलज्ञानमुत्पन्नं सांप्रतमनाबाधम् । लोकालोकाभ्यन्तरसमस्तवस्तुप्रकाशकरम् ॥१०४॥
एकं तु काश्यपकुलं न केवलं धवलितं निजयशसा । त्रिभुवनमपि निःशेषं सुपार्श्वनाथेन नूनमिदम्॥१०५॥
पश्य सर्वत्रापि स्वामिन् ! शालपुरतश्चतुर्विधसुराणाम् । रत्नमयविमानै राजति नगरं सुरपुरीव ॥१०६॥
अथ भक्तिभरावनतमौलिमिलितकरसंपुटः प्रणम्य । हर्षेण जिनवरेन्द्रं स्तुत्वा शक्रस्तवेन ततः ॥१०७॥
दत्त्वा धनार्धत्रयोदशलक्षाणि दाने तस्यै, प्रतिहारम् । आज्ञाप्य नगर्यां कारयति महोत्सवं राजा ॥१०८॥
तथा पटुपटहप्रदानेन पौरलोकं वर्तयति सर्वम् । समुचितशृङ्गारेण जिननाथनमस्यनहेतोः ॥१०९॥
स्वयमपि च मत्तमदकलोत्तुङ्गतुरङ्गरथवरस्थितैः । अन्तःपुरसुतसामन्तमन्त्रिवृन्दैः परिकरितः ॥११०॥
संचलितो यावत्तत्र तावच्च स्तनशिखरलुठितहारलता। करकलितकनकदण्डा प्रविश्य भणति प्रतिहारी ॥१११॥
देव ! पुरा युष्माभिश्चतुरमतिर्नाम प्रेषितो दूतः । य आसीद् मदनमञ्जरीकन्यायाः स्वयंवरनिमित्तम् ॥११२॥
अङ्गाधिपवङ्गाधिपमगधाधिपनरपतीनां कुमाराणाम् । आमन्त्रणार्थमिदानीं स तिष्ठति द्वारदेशे ॥११३॥
ततो मुञ्चेति भणिते नरपतिना स प्रवेशितस्तया । धरणितलविलुठितशिरा विज्ञपयति स्वरूपमसौ प्रभवे ॥११४॥
अर्धमासं गतस्तव शासनादङ्गादिनृपप्रसूतानाम् । आह्वानार्थं कन्यास्वयंवरे देव ! कुमाराणाम् ॥११५॥

---

१. ग. °रसुयसंमंतमंतिमंतवरि° ।

उचियपडिवत्तिपुव्वं मएवि सव्वे कमेण सच्चविया। नीसेसगुणिजणाउलपुहईअच्छेरयब्भूया ॥११६॥
जं जं संबंधविऊ वरेसु जोअंति किंपि तं ताणं। कुलरूवविहवपभिई नीसामन्नंपि सामन्नं ॥११७॥
अह जोग्गयं मुणेउं सव्वाणवि सासणं तुह नरिंद !। संपाडियं च तेहिवि पडिच्छियं नमिरमउलीहिं॥११८॥
तो तक्खणदिन्नपयाणभेरिभंकारतुमुलियदियंता। सज्जियचउरंगबला आउच्छियगुरुजणा चलिया ॥११९॥
लोभिज्जंता गुणकित्तणेण कुमरीए विसमठाणाइं। लंघित्तु पंचनवइसंखा कुमरा इहं पत्ता ॥१२०॥
ता आइससु लहुं चिय दीसन्तुद्दंडपुंडरीएहिं। ढिंविडिकिज्जइ तुह नयरिपरिसरो ताण सिन्नेहिं॥१२१॥
इय सुणिऊणं चिंतइ नरवरोवि एएवि जह पसंगाओ। दट्ठूण भुवणसामिं लहंतु जयलच्छिपरिरंभं॥१२२॥
इय ताण पवेसत्थं पच्चोणीए बले समाइसइ। तेवि विहिओवयारा पविसंति महाविभूईए ॥१२३॥
पत्ता य रायमंदिरममंदमाणंदिया नरिंदेण। परिरंभिऊण पणमंतमउलिणो निद्धवयणेहिं ॥१२४॥
तो कहियजिणागमवइयरेहिं तेहिंपि परिगओ राया। नियअंबाए य समं सोमाए करेणुयारूढो ॥१२५॥
जिणनाहसमवसरणे संचलिओ भत्तिनिब्भरुच्छाहो। पत्तो कमेण तत्तो करिणीए लहुं समोअरइ॥१२६॥
जाव विहीए पविसइ उज्जाणवणस्स मज्झभागम्मि। ता जिणवरस्स लच्छीवित्थारं पासिउं भणइ॥१२७॥
अम्मो ! पिच्छसु पुरओ किंकरआयारधारयसुरेहिं। जिणनाहं मुत्तूणं सेविज्जइ कस्स कमकमलं॥१२८॥
छत्ततयं च तिहुयणसामित्तुवलक्खणं इमं कस्स। अन्नस्सोवरि सुइरं धरंति ससिपंडुरं तियसा ? ॥१२९॥
रयणासणे निसन्नो वीइज्जइ सुरवरेहिं को अन्नो। अम्मो ! मोत्तूण जिणं चमरुप्पीलेहिं धवलेहिं ?॥१३०॥

---

उचितप्रतिपत्तिपूर्वं मयापि सर्वे क्रमेण दृष्टाः। निःशेषगुणिजनाकुलपृथिव्याश्चर्यभूताः ॥११६॥
यद्यत् संबन्धविदो वरेषु पश्यन्ति किमपि तत्तेषाम्। कुलरूपविभवप्रभृति निःसामान्यमपि सामान्यम्॥११७॥
अथ योग्यतां ज्ञात्वा सर्वेषामपि शासनं तव नरेन्द्र !। संपादितं च तैरपि प्रतीष्टं नम्रमौलिभिः ॥११८॥
ततस्तत्क्षणदत्तप्रयाणभेरीभाङ्कारतुमुलितदिगन्ताः। सज्जितचतुरङ्गबला आपृष्टगुरुजनाश्चलिताः ॥११९॥
लोभ्यमाना गुणकीर्तनेन कुमार्या विषमस्थानानि। लङ्घित्वा पञ्चनवतिसंख्याः कुमारा इह प्राप्ताः ॥१२०॥
तस्मादादिश लघ्वेव दृश्यमानोद्दण्डपुण्डरीकैः। मण्ड्यते तव नगरीपरिसरस्तेषां सैन्यैः ॥१२१॥
इति श्रुत्वा चिन्तयति नरवरोऽप्येतेऽपि यथा प्रसङ्गात्। दृष्ट्वा भुवनस्वामिनं लभन्तां जयलक्ष्मीपरिरम्भम्॥१२२॥
इति तेषां प्रवेशार्थं प्रत्युद्गतं बलं समादिशति। तेऽपि विहितोपचाराः प्रविशन्ति महाविभूत्या ॥१२३॥
प्राप्ताश्च राजमन्दिरममन्दमानन्दिता नरेन्द्रेण। परिरभ्य प्रणमन्मौलयः स्निग्धवचनैः ॥१२४॥
ततः कथितजिनागमव्यतिकरैस्तैरपि परिगतो राजा। निजाम्बया च समं सोमया करेणुकारूढः ॥१२५॥
जिननाथसमवसरणे संचलितो भक्तिनिर्भरोत्साहः। प्राप्तः क्रमेण ततः करिण्या लघु समवतरति ॥१२६॥
यावद् विधिना प्रविशत्युद्यानवनस्य मध्यभागे। तावज्जिनवरस्य लक्ष्मीविस्तारं दृष्ट्वा भणति ॥१२७॥
अम्ब ! पश्य पुरतः किङ्कराकारधारकसुरैः। जिननाथं मुक्त्वा सेव्यते कस्य करकमलम् ? ॥१२८॥
छत्रत्रयं च त्रिभुवनस्वामित्वोपलक्षणमिदं कस्य। अन्यस्योपरि सुचिरं धरन्ति शशिपाण्डुरं त्रिदशाः ? ॥१२९॥

मणिमइयधम्मचक्कच्छलेण भाणूवि कं समल्लियइ ?। सुरा कमलाणि व कस्स य पयविन्नासं पडिच्छंति ?॥
भमिरभमरउलमुहला कस्स पुरो पडइ कुसुमवुट्ठीवि । गयणाउ मुत्तिरमणीकडक्खमालव्व अइतरला॥१३२॥
इय साहिंतो जणणीए सव्वओ हरिसनिब्भरो राया । पढमं पायारमइक्कमित्तु दुइयं समारुहइ॥१३३॥
तत्थ य पिच्छइ बहुभवपरिभमणज्जियमहंतवेराणं । जीवाणं मिहुणाइं अन्नोन्नपसन्नचित्ताइं ॥१३४॥
तत्तो पुणोवि पभणइ अंब! महच्छेरयं इमं उयह । जिणनाहसहाए जह मिलंति एकम्मि वेरिगणा॥१३५॥
मज्जारस्स सिरम्मि य नहग्गभागेहिं मूसओ कह णु । कंडुयमाणो निसुणइ जिणवयणं मुक्कआयंको॥१३६॥
अइउग्गविसभुयंगमफणाकडप्पम्मि नियसि उवविट्ठो । सालूरो गयवेरो जणइ जणाणं महच्छरियं॥१३७॥
चत्तप्पओसस्स चिरं मओ मयंदस्स केसरकलावं । ईसुम्मीलियनयणस्स अग्गसिंगेण विवरेइ ॥१३८॥
वणमहिसो गवलग्गेण नियह तुरयस्स लोयणद्धंते । कंडुयमाणो न कुणइ जिणवयणपरस्स विहुरत्तं ॥
निच्चलसामलसिहिकंठकंदले कोमले किसलयव्व । उयह अही जिणवयणं कुंडलियकलेवरो सुणइ॥१४०॥
पिच्छसु कडारकेसरकडप्पदुप्पिच्छपंचवयणाण । मज्झे संवलियकरो वसई करी जिणपहावेण ॥१४१॥
इय एवमाइअच्चुब्भुयाइं विम्हयकराइं अंबाए । दंसितो नरनाहो पत्तो तइयम्मि पायारे॥ १४२ ॥
तत्थ य निरुवमभत्तीपरव्वसो बहलपुलयकलियंगो । आणंदपुरस्सरसुरसमूहपिच्छिज्जमाणो य ॥१४३॥
नियपरिवारेण जुओ तिपयाहिणदाणपुव्वगं राया । रयणमयपायपीढग्गभायविणिहित्तभालयलो॥१४४॥

---

रत्नासने निषण्णो वीज्यते सुरवरैः कोऽन्यः । अम्ब ! मुक्त्वा जिनं चामरसंघातैर्धवलैः ? ॥१३०॥
मणिमयधर्मचक्रच्छलेन भानुरपि कं समुपसर्पति ?। सुराः कमलानीव कस्य च पादविन्यासं प्रतीच्छन्ति?॥१३१॥
भ्रमणशीलभ्रमरकुलमुखरा कस्य पुरः पतति कुसुमवृष्टिरपि। गगनान्मुक्तिरमणीकटाक्षमालेवातितरला ?॥१३२॥
इति कथयञ्जनन्यां सर्वतो हर्षनिर्भरो राजा । प्रथमं प्राकारमतिक्रम्य द्वितीयं समारोहति ॥१३३॥
तत्र च पश्यति बहुभवपरिभ्रमणार्जितमहावैराणाम् । जीवानां मिथुनानि, अन्योन्यप्रसन्नचित्तानि ॥१३४॥
ततः पुनरपि प्रभणति अम्ब ! महाश्चर्यमिदं पश्य। जिननाथसभायां यथा मिलन्ति एकत्र वैरिगणाः ॥१३५॥
मार्जारस्य शिरसि च नभोऽग्रभागैर्मूषकः कथं नु । कण्डूयमानः श्रृणोति जिनवचनं मुक्तातङ्कः ॥१३६॥
अत्युग्रविषभुजङ्गमफणानिकरे पश्यस्युपविष्टः । शालूरो गतवैरो जनयति जनानां महाश्चर्यम् ॥१३७॥
त्यक्तप्रद्वेषस्य चिरं मृगो मृगेन्द्रस्य केसराकलापम् । ईषदुन्मीलितनयनस्याग्रश्रृङ्गेण विवृणोति ॥१३८॥
वनमहिषो गवलाग्रेण पश्य तुरगस्य लोचनपर्यन्तम् । कण्डूयमानो न करोति जिनवचनपरस्य विधुरत्वम् ॥
निश्चलश्यामलशिखिकण्ठकन्दले कोमले किशलयमिव । पश्याहिर्जिनवचनं कुण्डलितकलेवरः श्रृणोति॥१४०॥
पश्य कडारकेसरानिकरदुर्दर्शपञ्चवदनानाम् । मध्ये संवलितकरो वसति करी जिनप्रभावेण ॥१४१॥
इत्येवमाद्यत्यद्भुतानि विस्मयकराण्यम्बायै । दर्शयन् नरनाथः प्राप्तस्तृतीये प्राकारे ॥१४२॥
तत्र च निरुपमभक्तिपरवशो बहलपुलककलिताङ्गः । आनन्दपुरस्सरसुरसमूहदृश्यमानश्च ॥१४३॥
निजपरिवारेण युतस्त्रिप्रदक्षिणादानपूर्वकं राजा । रत्नमयपादपीठाग्रभागविनिहितभालतलः ॥१४४॥

नमिऊण जिणवरिंदं पणनवइकुमरेहिं परिगओ सणियं । पुव्वुत्तरदिसिभागे निवसइ सुद्धम्मि महिवीढे ॥
तज्जणणीवि हु नरवइअवरोहवहूहिं परिगया तत्थ । पुरओ काऊण निवं उवट्ठिया चिट्ठइ पहिट्ठा॥१४६॥
अह तेसु निविट्ठेसुं भालयलालीणअंजलिपुडेसु । भयवं सुपासनाहो एवं धम्मक्कहं कहइ ॥१४७॥
भो भो देवाणुपिया ! संसारे माणुसत्तण सारं । तं पुण दसहिं चुल्लगपमुहाहरणेहिं अइदुलहं॥१४८॥
तथाहि;—
मोहाइकम्मअइनिविडवियडनियडेहिं नियडिया केवि । जीवा अणंतकायाभिहाणगुत्तीए निवसंति॥१४९॥
तेसिं च मोहमोहियमईण कहकहवि दिट्ठिविसयम्मि । पत्तेयवणस्सइभूमियावि संजायए नूणं ॥१५०॥
तत्थवि पत्ता केवि हु तिलपीसयगोणउव्व चिरकालं । चिट्ठंति परिभमंता पुणोवि तत्थेव तत्थेव॥१५१॥
तत्तो तओ विमुक्का कहकहवि अहापवत्तकरणेणं । सेसेगिंदियजंतुसु वराया वच्चंति ते जीवा ॥१५२॥
तत्थवि कुकम्मवुइया णगाण संताडणेण चिरकालं । तत्थेव जह तहच्चिय गिरिव्व खित्ता सहंति दुहं ॥
वसिऊणोसप्पिणिसप्पिणीउणंताउ तत्थेव ते जीवा। विगलिंदिएसु कहकहवि दिव्वजोएण जायंति॥१५४॥
तत्थवि तमपडलंतरियलोयणा तेसुं चेव अणवरयं । तरुवरसाहासुव्व अधवायसा परिभमंति चिरं॥१५५॥
ताणं च तओ सुलहं कहं नु पंचिंदियत्तणं हंत !। जाण न तिप्पेइ विही विगलिंदियपभवदुक्खेहिं॥१५६॥
अह कहवि कम्मपरिणइवसेण अणुकूलभावमावन्नो । जइ सोवि दुग्घडं घडइ कहवि पंचिंदिए जम्मं ॥
तहवि हु दूसहनारयविडंबणाहिं विडंबइ भवम्मि । तह कहवि जह न तीरइ वयणसहस्सेहिंवि कहेउं ॥

---

नत्वा जिनवरेन्द्रं पञ्चनवतिकुमारैः परिगतः शनैः । पूर्वोत्तरदिग्भागे निवसति शुद्धे महीपीठे ॥१४५॥
तज्जनन्यपि खलु नरपत्यवरोधवधूभिः परिगता तत्र । पुरतः कृत्वा नृपमुपस्थिता तिष्ठति प्रहृष्टा ॥१४६॥
अथ तेषु निविष्टेषु भालतलालीनाञ्जलिपुटेषु । भगवान् सुपार्श्वनाथ एवं धर्मकथां कथयति ॥१४७॥
भो भो देवानुप्रियाः ! संसारे मनुष्यत्वं सारम् । तच्च पुनर्दशभिश्चुल्लकप्रमुखोदाहरणैरतिदुर्लभम् ॥१४८॥
मोहादिकर्मातिनिबिडविकटनिगडैर्निगडिताः केऽपि । जीवा अनन्तकायाभिधानगुप्तौ निवसन्ति ॥१४९॥
तेषां च मोहमोहितमतीनां कथंकथमपि दृष्टिविषये । प्रत्येकवनस्पतिभूमिकापि सञ्जायते नूनम् ॥१५०॥
तत्रापि प्राप्ताः केऽपि खलु तिलपेषकगव इव चिरकालम् । तिष्ठन्ति परिभ्रमन्तः पुनरपि तत्रैव तत्रैव॥१५१॥
ततस्ततो विमुक्ताः कथंकथमपि यथाप्रवृत्तकरणेन । शेषैकेन्द्रियजन्तुषु वराका व्रजन्ति ते जीवाः ॥१५२॥
तत्रापि कुकर्मवृता नगानां सताडनेन चिरकालम् । तत्रैव यथा तथैव गिरय इव क्षिताः सहन्ते दुःखम्॥१५३॥
उषित्वावसर्पिण्युत्सर्पिणीरनन्तास्तत्रैव ते जीवाः । विकलेन्द्रियेषु कथंकथमपि दैवयोगेन जायन्ते ॥१५४॥
तत्रापि तमःपटलान्तरितलोचनास्तेष्वेवानवरतम् । तरुवरशाखास्विवान्धवायसाः परिभ्रमन्ति चिरम् ॥१५५॥
तेषां च ततः सुलभं कथं नु पञ्चेन्द्रियत्वं हन्त ! । येषां न तृप्यति विधिर्विकलेन्द्रियप्रभवदुःखैः ?॥१५६॥
अथ कथमपि कर्मपरिणतिवशेनानुकूलभावमापन्नः । यदि सोऽपि दुर्घटं घटयति कथमपि पञ्चेन्द्रिये जन्म ॥
तथापि हि दुःसहनारकविडम्बनाभिर्विडम्बयति भवे । तथा कथमपि यथा न शक्यते वदनसहस्रैरपि कथयितुम्॥

एवं किलिट्ठकम्ममि घुम्मियाणं इओ तओ ताणं । बहुपोग्गलपरियट्टावट्टविवट्टीण अणवरयं ॥१५९॥
घणजोणिलक्खकच्छवगलच्छणातिक्खदुक्खदुहियाण। किण्हपमुक्खालेसाअव्वालसेवालकलियाण॥१६०॥
कोहमहावडवानलतत्ताणं रायपंकखुत्ताणं । मिच्छत्तमच्छभीयाण कलिससलिलम्मि बुड्डाणं ॥१६१॥
जीवाण भवसमुद्दे अणोरपारम्मि दुल्लहं एयं । मणुयत्तजाणवत्तं विसालकुलजाइदलकलियं ॥१६२॥
तं पुण पत्तंपि हु कहकहंपि रहियं सुकन्नधारेण । तत्थेव निमज्जंतं पुणोवि को धारिउं तरइ ? ॥१६३॥
ते य पुण कन्नधारा दुविहा चिट्ठंति भवसमुद्दम्मि । एगे कुतित्थपत्थाणपत्थिया मग्गमूढा य ॥१६४॥
अन्ने उण सयलअवायरक्खणखमा भवसमुद्दमग्गम्मि । दीवंतरेसु संबलसंपाडणपयडमाहप्पा ॥१६५॥
ता जइ सम्मं अपरिक्खिऊण पुव्वुत्तकन्नधाराणं । वयणेण परिपिल्लइ जीवो मणुयत्तबोहित्थं ॥१६६॥
ता माणमीणखलियं मच्छरमयरंराणणम्मि पडिफलियम् । मायावित्तलयावणगहणे गाढं निगूढंव॥१६७॥
लोहमहागिरिगुरुसिहरघट्टणाजज्जरिज्जमाणंव । अइपवलकामकल्लोलमालआवत्तपडियंव ॥१६८॥
मोहमहागिरिकुहरंतरालवासीहिं लद्धलक्खेहिं । लूडिज्जंतं इंदियचोरेहिं सुदुन्निवारेहिं ॥१६९॥
कोहमहावडवानलकरालजालावलीकलिज्जंतं । रुद्दज्झाणभिहाणेण सबरराएण हीरंतं ॥१७०॥
रायगाहपसारियउयारसिंगारदाढउग्गाढं । विसयमहाविसविसहरसएहिं वेढिज्जमाणंव ॥१७१॥
इय एवमाइबहुविहअवायपडियं तडत्ति फुट्टंतं । किंकायव्वविमूढा न हु ते पारंति तं धरिउं ॥१७२॥
तम्मि य फुट्टे जीवो पुणोवि संसारजलहिमज्झम्मि । निवडइ अणंतकायाइएसु दुक्खाइं य सहेइ॥१७३॥

---

एवं क्लिष्टकर्मणा घूर्णितानामितस्ततस्तेषाम् । बहुपुद्गलपरावर्तावर्तविवर्तिनामनवरतम् ॥१५९॥
घनयोनिलक्षकच्छपकलक्षणतीक्ष्णदुःखदुःखितानाम् । कृष्णप्रमुख्यलेश्याऽवालशैवालकलितानाम् ॥१६०॥
क्रोधमहावडवानलतप्तानां रागपङ्कमग्नानाम् । मिथ्यात्वमत्स्यभीतानां क्लेशसलिले मग्नानाम् । ॥१६१॥
जीवानां भवसमुद्रेऽनादिपारे दुर्लभमेतत् । मनुजत्वयानपात्रं विशालकुलजातिदलकलितम् ॥१६२॥
तत् पुनः प्राप्तमपि हि कथंकथमपि रहितं सुकर्णधारेण । तत्रैव निमज्जत् पुनरपि को धारयितुं शक्नोति ?॥
ते च पुनः कर्णधारा द्विविधास्तिष्ठन्ति भवसमुद्रे । एके कुतीर्थप्रस्थानप्रस्थिता मार्गमूढाश्च ॥१६४॥
अन्ये पुनः सकलापायरक्षणक्षमा भवसमुद्रमार्गे । द्वीपान्तरेषु शम्बलसंपादनप्रकटमाहात्म्याः ॥१६५॥
तस्माद् यदि सम्यगपरीक्ष्य पूर्वोक्तकर्णधाराणाम् । वचनेन परिपीडयति जीवो मनुजत्वयानपात्रम् ॥१६६॥
ततो मानमीनस्खलितं मत्सरमकरानने प्रतिफलितम् । मायावृत्तलतावनगहने गाढं निगूढमिव ॥१६७॥
लोभमहागिरिगुरुशिखरघट्टनाजर्जर्यमाणमिव । अतिप्रबलकामकल्लोलमालावर्तपतितमिव ॥१६८॥
मोहमहागिरिकुहरान्तरालवासिभिर्लब्धलक्ष्यैः । लुण्ट्यमानमिन्द्रियचौरैः सुदुर्निवारैः ॥१६९॥
क्रोधमहावडवानलकरालज्वालावलीकल्यमानम् । रौद्रध्यानाभिधानेन शबरराजेन ह्रियमाणम् ॥१७०॥
रागग्राहप्रसारितोदारशृङ्गारदंष्ट्रोद्गाढम् । विषयमहाविषविषधरशतैर्वेष्ट्यमानमिव ॥१७१॥
इत्येवमादिबहुविधापायपतितं तडदिति स्फुट्यमानम् । किंकर्तव्यविमूढा न खलु ते पारयन्ति तद् धर्तुम् ॥

ता इह कुतित्थपत्थियकुकन्नहारे लहुं विमोत्तूणं । सम्मं परिक्खिऊणं सुकन्नधारे य अणुसरह ॥१७४॥
ते पुण संसारमहासमुद्दतरणम्मि कन्नधारसमा । पंच परमिट्ठिणो च्चिय जयत्तए पयडमाहप्पा ॥१७५॥
जेणं ते च्चिय उम्मग्गमग्गिगाणं निवारणसमत्था । जहवट्ठियपरिभावियसंसारोदहिसरूवा य ॥१७६॥
तिच्चिय पुव्वपसाहियअवायनियराउ रक्खिऊण इमं । अव्वाबाहपहेणं निंति सुचारित्तदीवम्मि ॥१७७॥
तत्थवि य सव्वसावज्जविरइनामम्मि तुंगसेलम्मि । नेऊण वरमहव्वयरयणाइं खिवंति एयम्मि॥१७८॥
जेहिं करयलकलिएहिं नत्थि भुवणेवि किंपि हु असज्झं । निव्वुइपुरीवि परमा नियडच्चिय हवइ लद्धुमेव॥
तस्स य गिरिणो उवरिं दसविहमुणिधम्मनामरुक्खाओ । असमट्ठारससीलंगसहस्सफलनियरमुवणिंति॥
तस्सवि य अग्गभागे केवलनाणाभिहाणसिहरम्मि । वीसामिऊण कइवयदिणाइं तो तस्स अग्गम्मि१८१.
निव्वाणपुरी चिट्ठइ भवपारावारपरमतीरसमा । तम्मि य ठवंति जीवं मोत्तुं मणुयत्तवोहित्थं ॥१८२॥
जीए न जम्मो न जरा नय मरणं नेह छुहपिवासावि । नय रायरोसरोया न भयं नय सोयलेसोवि ॥
नव्वामोहो न मओ नवि चिंता नेय खेयसोयावि । न विसाओ नवि निद्दा कयाइ अरई नय खणंपि॥
केवलममंदआणंदअमयसेएण अक्खयसरूवो । निरंजणो थिरप्पा जीवो रयणप्पईवोव्व ॥१८५॥
लोयालोयब्भंतरसमत्थसुपसत्थवत्थुवित्थारं । उज्जोयंतो चिट्ठइ सयावि अखंडियप्पसरो ॥१८६॥
एत्थंतरम्मि पणनवइकुमरेहिं पुच्छिओ जिणवरिंदो । भयवं ! जे तुब्भेहिं कहिया इह कन्नधारसमा।१८७.

---

तस्मिंश्च स्फुटिते जीवः पुनरपि संसारजलधिमध्ये । निपतत्यनन्तकायादिकेषु दुःखानि च सहते ॥१७३॥
तस्मादिह कुतीर्थप्रस्थितकुकर्णधारांल्लघु विमुच्य । सम्यक् परीक्ष्य सुकर्णधारांश्चानुसरत ॥१७४॥
ते पुनः संसारमहासमुद्रतरणे कर्णधारसमाः । पञ्च परमेष्ठिन एव जगत्त्रये प्रकटमाहात्म्याः ॥१७५॥
येन त एवोन्मार्गमार्गिकाणां निवारणसमर्थाः । यथावस्थितपरिभावितसंसारोदधिस्वरूपाश्च ॥१७६॥
त एव पूर्वप्रकथितापायनिकराद् रक्षित्वेदम् । अव्याबाधपथेन नयन्ति सुचारित्रद्वीपम् ॥१७७॥
तत्रापि च सर्वसावद्यविरतिनाम्नि तुङ्गशैले । नीत्वा वरमहाव्रतरत्नानि क्षिपन्त्येतस्मिन् ॥१७८॥
यैः करतलकलितैर्नास्ति भुवनेऽपि किमपि ह्यसाध्यम् । निर्वृतिपुर्यपि परमा निकटैव भवति लब्धेव॥१७९॥
तस्य च गिरेरुपरि दशविधमुनिधर्मनामवृक्षात् । असमाष्टादशशीलाङ्गसहस्रफलनिकरमुपनयन्ति ॥१८०॥
तस्यापि चाग्रभागे केवलज्ञानाभिधानशिखरे । विश्रम्य कतिपयदिनानि ततस्तस्याग्रे ॥१८१॥
निर्वाणपुरी तिष्ठति भवपारावारपरमतीरसमा । तस्यां च स्थापयन्ति जीवं मोक्तुं मनुजत्वयानपात्रम्॥१८२॥
यस्यां न जन्म न जरा न च मरणं नेह क्षुत्पिपासे अपि । न च रागरोषरोगा न भयं न च शोकलेशोऽपि॥१८३॥
न व्यामोहो न मदो नापि चिन्ता न च खेदशोकावपि । न विषादो नापि निद्रा कदाप्यरतिर्न च क्षणमपि॥
केवलममन्दानन्दामृतसेकेनाक्षयस्वरूपः । निरञ्जनः स्थिरात्मा जीवो रत्नप्रदीप इव ॥१८५॥
लोकालोकाभ्यन्तरसमस्तसुप्रशस्तवस्तुविस्तारम् । उद्योतयंस्तिष्ठति सदाप्यखण्डितप्रसरः ॥१८६॥
अत्रान्तरे पञ्चनवतिकुमारैः पृष्टो जिनवरेन्द्रः । भगवन् ! ये युष्माभिः कथिता इह कर्णधारसमाः॥१८७॥

पंच परमिट्ठिणो ते पत्तेयं कहह अम्ह पसिऊण । तो कहइ जिणो ताणं पत्तेयं पण जिणाईए ॥१८८॥
अह पणनउई कुमरा चलणेसुं निवडिऊण जयगुरुणो । संसारविरत्तमणा एवं भणिउं समारद्धा॥१८९॥
भयवं ! पढमा तुब्भे पणपरमिट्ठीण भवजलनिहिस्स । पारगया, ता इण्हि अम्हेवि हु तुह पसाएण॥१९०॥
तुब्भेहिं कन्नधारोवमेहिं मणुयत्तजाणवत्तम्मि । कहकहंवि हु आरूढा दुत्तरभवजलहिमज्झाओ ॥१९१॥
तुह परिकहियपहेणं निव्वाणपुरम्मि गंतुमिच्छामो । तो भयवयावि भणियं जुत्तं तुम्हारिसाण इमं॥१९२॥
एवमुववूहिऊणं जयगुरुणा दिक्खिया सहत्थेण । पिंगलकुमारपमुहा कइवयलोगेण परियरिया ॥१९३॥
तत्तो निरुवमरूवोवसोहिया चित्तसत्तिसंजुत्ता । वोच्छिन्ननेहनियडा विसिट्ठकुलजाइसंपन्ना ॥१९४॥
परिचत्तसव्वसंगा समत्थसुपसत्थसत्थपारगया । सुरविसरवंदणिज्जा ते पणनउई महामुणिणो ॥१९५॥
जइधम्मभारदुद्धरधुरंधरा गुणकलावपरिकलिया । रेहंति सिस्सकलहेहिं परिवुडा दिसिगइंदव्व ॥१९६॥
एत्थंतरम्मि अन्ने राईसरसिट्ठिसत्थवाहसुया । सामंतमंतिणो तह अन्नेवि विसिट्ठकुलपुत्ता ॥१९७॥
भववासुव्विग्गमणा कयाहिलासा य सव्वविरईए । जिणवरसुपासपासं अल्लीणा भयवया ताहे ॥१९८॥
पुव्वुत्तेण कमेणं तेवि सहत्थेण दिक्खिया तत्तो । सोमावि समं सामंतमंतिदारेहिं सारेहिं ॥१९९॥
सव्वविरइं पवज्जिउमहिलसमाणी उवट्ठिया पुरओ । तो तीसेवि महव्वयदाणं पहुणा सयं विहियं॥२००॥
जे पव्वज्जं काउं असमत्था केवि ते सनारीया । सावयधम्मे ठविया एवं च सुपासनाहस्स ॥२०१॥
पढमम्मि समोसरणे समग्गगुणरयणरोहणगिरिंदो । संघो चउव्विहोवि य जाओ, अह भयवया ताणं॥२०२॥

---

पञ्च परमेष्ठिनस्तान् प्रत्येकं कथयास्मान् प्रसद्य । ततः कथयति जिनस्तेषां प्रत्येकं पञ्च जिनादिकान्॥१८८॥
अथ पञ्चनवतिः कुमाराश्चरणयोर्निपत्य जगद्गुरोः । संसारविरक्तमनस एवं भणितुं समारब्धाः ॥१८९॥
भगवन् ! प्रथमा यूयं पञ्चपरमेष्ठिनां भवजलनिधेः । पारगताः, तस्मादिदानीं वयमपि खलु तव प्रसादेन॥१९०॥
युष्माभिः कर्णधारोपमैर्मनुजत्वयानपात्रे । कथंकथमपि खल्वारूढा दुस्तरभवजलधिमध्यात् ॥१९१॥
तव परिकथितपथेन निर्वाणपुरे गन्तुमिच्छामः ।ततो भगवतापि भणितं युक्तं युष्मादृशामिदम् ॥१९२॥
एवमुपबृंह्य जगद्गुरुणा दीक्षिता स्वहस्तेन । पिङ्गलकुमारप्रमुखाः कतिपयलोकेन परिकरिताः ॥१९३॥
ततो निरुपमरूपोपशोभिताश्चित्रशक्तिसंयुक्ताः । व्युच्छिन्नस्नेहनिगडा विशिष्टकुलजातिसंपन्नाः ॥१९४॥
परित्यक्तसर्वसङ्गाः समस्तसुप्रशस्तशास्त्रपारगताः । सुरविसरवन्दनीयास्ते पञ्चनवतिर्महामुनयः ॥१९५॥
यतिधर्मदुर्धरभारधुरन्धरा गुणकलापपरिकलिताः । राजन्ति शिष्यकलभैः परिवृता दिग्गजेन्द्रा इव ॥१९६॥
अत्रान्तरेऽन्ये राजेश्वरश्रेष्ठिसार्थवाहसुताः । सामन्तमन्त्रिणस्तथाऽन्येऽपि विशिष्टकुलपुत्राः ॥१९७॥
भववासोद्विग्नमनसः कृताभिलाषाश्च सर्वविरत्याम् । जिनवरसुपार्श्वपार्श्वमालीनाः, भगवता तदा ॥१९८॥
पूर्वोक्तेन क्रमेण तेऽपि स्वहस्तेन दीक्षितास्ततः । सोमापि समं सामन्तमन्त्रिदारैः सारैः ॥१९९॥
सर्वविरतिं प्रपत्तुमभिलषमाणोपस्थिता पुरतः । ततस्तस्या अपि महाव्रतदानं प्रभुणा स्वयं विहितम् ॥२००॥
ये प्रव्रज्यां कर्तुमसमर्थाः केऽपि ते सनारीकाः । श्रावकधर्मे स्थापिताः, एवं च सुपार्श्वनाथस्य ॥२०१॥

पणनुवइसंखमुणिपुंगवाण सयलत्थसंगहपराइं । उप्पन्नविगमधुवलक्खणाइं तिन्नेव य पयाइं ॥२०३॥
कहियाइं तओ अंतोमुहुत्तमेत्तेण तयणुसारेण । तक्कालुल्लसियअउव्वबुद्धिविहवप्पभावेणं ॥२०४॥
पुव्वभवब्भत्थसमत्थसत्थपरमत्थवित्थरवसेणं । सव्वेहिं विरइयाइं दुवालसंगाइं, एवं च ॥ २०५॥
सयमेव जा जिणिंदो एए ठावेइ गणहरपयम्मि । ता गंधवाससचुन्नं थाले वित्तूण सक्कोवि ॥२०६॥
पुरओ तुरियरं चिय उवट्ठिओ अवसरंति कलिऊण।तो उट्ठिऊण सामी गिण्हइ चुन्नं समुट्ठीए॥२०७॥
ताणं च अवणयाणं सिरम्मि पक्खिवइ इय पयंपंतो । तुम्हाणमणुन्नायं तित्थमिमं पज्जवगुणेहिं ॥२०८॥
एत्थंतरम्मि भमरउलमुहलियं ताणमुत्तिमंगम्मि । पणवन्नवासवासं विहियं तोसाउ तियसेहिं ॥२०९॥
सोमज्जावि हु अज्जाण संजमुज्जोयसासणनिमित्तं । ठविया पवित्तिणिपए निम्मलसीलेक्ककुलभवणं ॥
एत्थंतरम्मि उग्घाडपोरिसीसूयगो बली पत्तो ।-कारविओ सिरिसेहरनिवेण वरकलमसालिमओ॥२११॥
आढगमित्तो उच्छालिओ य गहिओ सुरासुरनरेहिं । तो सव्वे सुरवइणो पत्ता नंदीसरे दीवे ॥२१२॥
काऊण जिणिंदाणं अट्ठाहियमह सट्ठाणमणुपत्ता । इय काउं वक्खाणं कइवि दिणे तयणु जिणनाहो॥२१३॥
सव्वेहिं गणहरेहिं तहणेगमुणीहिं साहुणीहिं च । परियरिओ निक्खंतो नवकंचणकमलकयचरणो॥२१४॥
तो आगासगएणं लंबियमुत्तावचूलकलिएणं । छत्तेण तहा सारयससंकधवलेहिं चमरेहिं ॥२१५॥
गयणयलालंबियपायवीढसीहासणेण विउलेण ।·तह माहिंदझएणं नहमग्गगएण रायंतो ॥२१६॥

---

प्रथमे समवसरणे समग्रगुणरत्नरोहणगिरीन्द्रः । संघश्चतुर्विधोऽपि च जातः, अथ भगवता तेषाम् ॥२०२॥
पञ्चनवतिसंख्यमुनिपुङ्गवानां सकलार्थसंग्रहपराणि । उत्पत्तिविगमध्रुवलक्षणानि त्रीण्येव च पदानि ॥२०३॥
कथितानि ततोऽन्तर्मुहूर्तमात्रेण तदनुसारेण । तत्कालोल्लसितापूर्वबुद्धिविभवप्रभावेण ॥२०४॥
पूर्वभवाभ्यस्तसमस्तशास्त्रपरमार्थविस्तरवशेन । सर्वै विरचितानि द्वादशाङ्गानि, एवं च ॥२०५॥
स्वयमेव यावज्जिनेन्द्र एतान् स्थापयति गणधरपदे । तावद् गन्धवासचूर्णं स्थाले गृहीत्वा शक्रोऽपि ॥२०६॥
पुरतस्त्वरिततरमेवोपस्थितोऽवसर इति कलयित्वा । तत उत्थाय स्वामी गृह्णाति चूर्णं स्वमुष्ट्या ॥२०७॥
तेषां चावनतानां शिरसि प्रक्षिपतीति प्रजल्पन् । युष्माकमनुज्ञातं तीर्थमिदं पर्यवगुणैः ॥२०८॥
अत्रान्तरे भ्रमरकुलमुखरितस्तेषामुत्तमाङ्गे । पञ्चवर्णवासवासो विहितस्तोषात् त्रिदशैः ॥२०९॥.
सोमार्यापि खल्वार्याणां संयमोद्द्योतशासननिमित्तम् । स्थापिता प्रवर्तिनीपदे निर्मलशीलैककुलभवनम्॥२१०॥
अत्रान्तरे उद्घाटपौरुषीसूचको बलिः प्राप्तः । कारितः श्रीशेखरनृपेण वरकलमशालिमयः ॥२११॥
आढकमात्र उच्छालितश्च गृहीतः सुरासुरनरैः । ततः सर्वे सुरपतयः प्राप्ता नन्दीश्वरे द्वीपे ॥२१२॥
कृत्वा जिनेन्द्राणामष्टाहिकामथ स्वस्थानमनुप्राप्ताः । इति कृत्वा व्याख्यानं कत्यपि दिनानि तदनु जिननाथः॥
सर्वैर्गणधरैस्तथानेकमुनिभिः साध्वीभिश्च परिकरितो निष्क्रान्तो नवकाञ्चनकमलकृतचरणः ॥२१४॥
तत आकाशगतेन लम्बितमुक्तावचूलकलितेन । छत्रेण तथा शारदशशाङ्कधवलैश्चामरैः ॥२१५॥
गगनतलालम्बितपादपीठसिंहासनेन विपुलेन । तथा माहेन्द्रध्वजेन नभोमार्गगतेन राजन् ॥२१६॥

सायरमणुगच्छंतीसु भत्तिपरिकलियतियसकोडीसु । वायंतेसु य अणुकूलसिसिरसुयंधपवणेसु ॥२१७॥
हिट्ठाहुत्तं परिसंठिएसु मग्गम्मि कंटगगणेसु । भत्तीइव नमंतीसु मग्गतरुविसरसेणीसु ॥२१८॥
अणुगिण्हंतो तह सव्वविरइदाणेण भव्वसत्तजणं । गमागरनयरमडंबखेडपुरकव्वडाईसु ॥२१९॥
विहरंतो संपत्तो कमेण सिरिनंदिवद्धणपुरम्मि । पुव्वुत्तरदिसिभागे कुसुमकरंडम्मि उज्जाणे ॥२२०॥
पुव्वुत्तेण कमेणं रइयं देवेहिं वरसमोसरणं । रयणमयपगारब्भंतरम्मि सीहासणं ठवियं ॥२२१॥
पुव्वाभिमुहं मणिमयसुपायवीढेण संजुयं तत्तो । भयवं सुपासनाहो तिजयपहू तत्थ उवविसइ ॥२२२॥
पयवीढअदूरे चिय भयवंतो गणहराइया सव्वे । नियनियठाणेसु ठिया तिरिया दुइयम्मि पायारे ॥२२३॥
तथाहि;—
मुणिवेमाणियदेवीसाहुणीओ ठंति अग्गिकोणम्मि । जोइसियभवणवंतरदेवीओ होंति नेरईए ॥२२४॥
भवणवणजोइसदेवा वायव्वे, कप्पवासिणो अमरा । नरनारीओ ईसाणे पुव्वाइसु पविसिउं ठंति ॥२२५॥
एत्थंतरे पसिद्धी वित्थरिया नंदिवद्धणपुरम्मि । जह सिरिसुपासनाहो उज्जाणे ईह समोसरिओ ॥२२६॥
तत्तो सुइभूयतणू नयरजणो जाइ जिणवरं दट्ठुं । पूओवगरणपडलयहत्थो सुपसत्थवेसधरो ॥२२७॥
तं तह वच्चंतं पिच्छिऊण सिरिविजयवद्धणो राया । पासायगवक्खगओ पुच्छइ मइसायरममच्चं ॥२२८॥
जइ इंदमहप्पमुहो किं कोवि महूसवो नयरमज्झे । पुप्फकरंडयहत्थो जं वच्चइ एस सयलजणो ? ॥२२९॥

---

सादरमनुगच्छन्तीषु भक्तिपरिकलितत्रिदशकोटिषु । वात्सु चानुकूलशिशिरसुगन्धपवनेषु ॥२१७॥
अधोमुखं परिसंस्थितेषु मार्गे कण्टकगणेषु । भक्त्येव नमन्तीषु मार्गतरुविसरश्रेणीषु ॥२१८॥
अनुगृह्णंस्तथा सर्वविरतिदानेन भव्यसत्त्वजनम् । ग्रामाकरनगरमडम्बखेटपुरकर्बटादिषु ॥२१९॥
विहरन् संप्राप्तः क्रमेण श्रीनन्दिवर्धनपुरे । पूर्वोत्तरदिग्विभागे कुसुमकरण्ड उद्याने ॥२२०॥
पूर्वोक्तेन क्रमेण रचितं देवैर्वरसमवसरणम् । रत्नमयप्राकाराभ्यन्तरे सिंहासनं स्थापितम् ॥२२१॥
पूर्वाभिमुखं मणिमयसुपादपीठेन संयुतं ततः । भगवान् सुपार्श्वनाथस्त्रिजगत्प्रभुस्तत्रोपविशति ॥२२२॥
पादपीठादूरे एव भगवन्तो गणधरादिकाः सर्वे । निजनिजस्थानेषु स्थितास्तिर्यञ्चो द्वितीये प्राकारे ॥२२३॥
मुनिवैमानिकदेवीसाध्व्यस्तिष्ठन्त्यग्निकोणे । ज्योतिषिकभवनव्यन्तरदेव्यो भवन्ति नैर्ऋते ॥२२४॥
भवनवनज्योतिषदेवा वायव्ये, कल्पवासिनोऽमराः । नरनार्य ईशाने पूर्वादिषु प्रविश्य तिष्ठन्ति ॥२२५॥
अत्रान्तरे प्रसिद्धिर्विस्तृता नन्दिवर्धनपुरे । यथा श्रीसुपार्श्वनाथ उद्याने इह समवसृतः ॥२२६॥
ततः शुचिभूततनुर्नगरजनो याति जिनवरं द्रष्टुम् । पूजोपकरणपटलकहस्तः सुप्रशस्तवेषधरः ॥२२७॥
तं तथा व्रजन्तं दृष्ट्वा श्रीविजयवर्धनो राजा । प्रासादगवाक्षगतः पृच्छति मतिसागरममात्यम् ॥२२८॥
यदीन्द्रमहप्रमुखः किं कोऽपि महोत्सवो नगरमध्ये । पुष्पकरण्डकहस्तो यद् व्रजत्येष सकलजनः ? ॥२२९॥
ततः संनिहितजनाज्जिनागमनं विज्ञाय सोऽपि । जल्पति न कोऽप्यन्यो महोत्सवः किन्तु बहिः ॥२३०॥

---

१ ग संगत ।

तो संनिहियजणाओ जिणआगमणं वियाणिउं सोवि । जंपइ न कोवि अन्नो महूसवो किंनु बाहिम्मि ॥
उज्जाणवणे सुम्मइ समोसढो सिरिसुपाससतित्थयरो । तव्वंदणत्थमेसो नयरजणो वचइ समग्गो ॥२३१॥
तं सोऊणं पभणइ नरनाहो जइ अमच्च ! अम्हेवि । तव्वंदणानिमित्तं वचिस्सामो किमन्नेण ? ॥२३२॥
भणियं च तेण तद्दंसणंपि कल्लाणकारणं देव ! । किं पुण गमणनमंसणपयसेवापमुहपडिवत्ती ॥२३३॥
ता कुणसु सयं तद्दंसणेण मणुयत्तस्स सफलत्तं । इय वुत्ते सचिवेणं विजयनरिंदो तओ तुरियं ॥२३४॥
संचलिओ जिणवरपायमूलमह सो कमेण संपत्तो । पंचविहाभिगमेणं उल्लसियाविरलरोमंचो ॥२३५॥
तिक्खुत्तो दाऊणं पयाहिणं पणमिउं च जिणनाहं । भत्तिभरनिब्भरंगो एवं थुणिउं समारद्धो ॥२३६॥
देव ! तुह चरणनहमणिमऊहदीवा जयंतु जे रविणो । खंडंति चंडिमं मोहतिमिरहरणेण भुवणम्मि॥२३७॥
पहु ! बहुपयंडपासंडिमंडिए महियलम्मि जीवाण । तुह दंसणंपि जायइ अणंतभवचिन्नपुन्नेहिं ॥२३८॥
अज्जं चिय मह मणवंछियाइं जायाइं अज्ज जाओ हं । चिरकालओवि जं दिट्ठिगोयरे नाह ! तं जाओ॥२३९॥
ता लहु इण्हिं सारयसंपुन्नससंककिरणसिसिराए । अवहरसु नियगिराए जिणम्ह भवगिम्हसंतावं॥२४०॥
इय संथोउं राया उवविट्ठइ ठाविऊण नियदिट्ठिं । जिणवरवयणे, एत्तो भयवं धम्मकहं कहइ ॥२४१॥
कहं विय ?
जोणीलक्खाणि य परिभमितु लद्धूण कहवि मणुयत्तं । जे नायरंति धम्मं नरिंद ! ते अप्पणो अहिया॥२४२॥
जेणं करयलपरिकलियसलिलबिंदुव्व गलइ अणुसमयं । जीयं, जराइरोगा देहं दूमंति तह निच्चं ॥२४३॥

---

उद्यानवने श्रूयते समवसृतः श्रीसुपार्श्वतीर्थकरः । तद्वन्दनार्थमेष नगरजनो व्रजति समग्रः ॥२३१॥
तत् श्रुत्वा प्रभणति नरनाथो यथाऽमर्त्य ! वयमपि । तद्वन्दनानिमित्तं व्रजिष्यामः किमन्येन ? ॥२३२॥
भणितं च तेन तद्दर्शनमपि कल्याणकारणं देव ! । किं पुनर्गमननमस्यनपदसेवाप्रमुखप्रतिपत्तिः ॥२३३॥
तस्मात् कुरुष्व स्वयं तद्दर्शनेन मनुजत्वस्य सफलत्वम् । इत्युक्ते सचिवेन विजयनरेन्द्रस्ततस्त्वरितम् ॥२३४॥
संचलितो जिनवरपादमूलमथ स क्रमेण संप्राप्तः । पञ्चविधाभिगमेनोल्लसिताविरलरोमाञ्चः ॥२३५॥
त्रिर्दत्त्वा प्रदक्षिणां प्रणम्य च जिननाथम् । भक्तिभरनिर्भराङ्ग एवं स्तोतुं समारब्धः ॥२३६॥ -
देव ! तव चरणनखमणिमयूखदीपा जयन्तु, ये रवेः । खण्डयन्ति चण्डिमानं मोहतिमिरहरणेन भुवने॥२३७॥
प्रभो ! बहुप्रचण्डपाखण्डिमण्डिते महीतले जीवानाम् । तव दर्शनमपि जायतेऽनन्तभवचीर्णपुण्यैः ॥२३८॥
अद्यैव मम मनोवाञ्छितानि जातान्यद्य जातोऽहम् । चिरकालतोऽपि यद् दृष्टिगोचरे नाथ ! त्वं जातः ॥२३९॥
तस्माल्लघ्विदानीं शारदसंपूर्णशशाङ्ककिरणशिशिरया । अपहर निजगिरया जिनास्माकं भवग्रीष्मसंतापम् ॥२४०॥
इति संस्तुत्य राजोपतिष्ठते स्थापयित्वा निजदृष्टिम् । जिनवरवदने, इतो भगवान् धर्मकथां कथयति ॥२४१॥
कथमिव ?
योनिलक्षाणि च परिभ्रम्य लब्ध्वा कथमपि मनुजत्वम् । ये नाचरन्ति धर्मं नरेन्द्र ! त आत्मनोऽहिताः॥२४२॥
येन करतलपरिकलितसलिलबिन्दुरिव गलत्यनुसमयम् । जीवितम्, ज्वरादिरोगा देहं दावयन्ति तथा नित्यम्॥

अइबहुकिलेससमुवज्जियावि चोराइहरणकवडेहिं । लच्छी खणेण नासइ विज्जुलयाचंचला नूणं॥२४४॥
पिउमाइमित्तसुकलत्तपुत्तसयणाइओवि संजोगो । खणदिट्ठनट्ठरूवो जलनिहिकल्लोलसंकासो ॥२४५॥
विसयसुहं पुण विरसं खणरमणीयं च जोव्वणं नूणं । किं बहुणा इह नरवर ! मोत्तुं जिणदेसियं धम्मं ॥
न हु किंपि सासयं इय मुणित्तु तं चेव कुणसु अवियप्पं। जेण लहुमेव सासयसिवसुहठाणं तुमं लहसि ॥
इय सोउं संविग्गो दाणविरयस्स नियकुमारस्स । काउं रज्जभिसेयं विजयनरिंदो पमोएण ॥२४८॥
पव्वज्जं पडिवज्जइ महाविभूईए जिणवरसमीवे । एत्तो य दाणविरओ नरनाहो भणइ नमिऊण॥२४९॥
जिणनाह ! रज्जकज्जे समुज्जयाणं गिहे वसंताण । जं किंपि हु करणिज्जं अम्हाण तमिण्हिमाइससु ॥
तो भणइ जिणो सावयधम्मो नरनाह! तुम्ह कायव्वो । सो य दुवालसभेओ ते पुण भेया इमे नेया ॥
पाणिवहमुसावाए अदिन्नमेहुणपरिग्गहे चेव । दिसिभोगदंडसमइयदेसे तह पोसहविभागे ॥२५२॥
एयस्स समेयस्सवि पत्तेयं पंच पंच अइयारा । मूलं पुण सम्मत्तं समेयभिन्नस्सवि इमस्स ॥२५३॥
तस्स य पंच अइयारा ता तं पडिवज्जिऊण नरनाह!। निरईयारं सावयधम्मं बारसविहं कुणसु ॥२५४॥
इय सोऊणं पभणइ दाणविरओ जिणिंद ! जे केवि । पालंति निरइयारं सम्मत्तं जं फलं ताणं ॥२५५॥
जे पुण साईयारं केवि हु पालंति जं च ताण फलं । तह बारसभेयंपि हु सावयधम्मं निरइयारं॥२५६॥
जे आयरंति केवि हु ताण फलं, जे य साइयारं तु । पालंति ताण य फलं सवित्थरं सोउमिच्छामि ॥

---

अतिबहुक्लेशसमुपार्जितापि चौरादिहरणकपटैः । लक्ष्मीः क्षणेन नश्यति विद्युल्लताचञ्चला नूनम् ॥२४४॥
पितृमातृमित्रसुकलत्रपुत्रस्वजनादिकोऽपि संयोगः । क्षणदृष्टनष्टरूपो जलनिधिकल्लोलसंकाशः ॥२४५॥
विषयसुखं पुनर्विरसं क्षणरमणीयं च यौवनं नूनम् । किं बहुनेह नरवर ! मुक्त्वा जिनदेशितं धर्मम् ॥२४६॥
न खलु किमपि शाश्वतमिति ज्ञात्वा तदेव कुरुष्वाविकल्पम् । येन लघ्वेव शाश्वतशिवसुखस्थानं त्वं लभसे ॥
इति श्रुत्वा संविग्नो दानविरतस्य निजकुमारस्य । कृत्वा राज्याभिषेकं विजयनरेन्द्रः प्रमोदेन ॥२४८॥
प्रव्रज्यां प्रतिपद्यते महाविभूत्या जिनवरसमीपे । इतश्च दानविरतो नरनाथो भणति नत्वा ॥२४९॥
जिननाथ ! राज्यकार्ये समुद्यतानां गृहे वसताम् । यत् किमपि हि करणीयमस्माकं तदिदानीमादिश ॥२५०॥
ततो भणति जिनः श्रावकधर्मो नरनाथ ! त्वया कर्तव्यः । स च द्वादशभेदस्ते पुनर्भेदा इमे ज्ञेयाः ॥२५१॥
प्राणिवधमृषावादादत्तमैथुनपरिग्रहाश्चैव । दिग्भोग-दण्ड-सामायिक-देशास्तथा पौषध-विभागौ ॥२५२॥
एतस्य सभेदस्यापि प्रत्येकं पञ्च पञ्चातिचाराः । मूलं पुनः सम्यक्त्वं सभेदभिन्नस्याप्यस्य ॥२५३॥
तस्य च पञ्चातिचारास्तस्मात् तत्प्रतिपद्य नरनाथ !। निरतीचारं श्रावकधर्मं द्वादशविधं कुरुष्व ॥२५४॥
इति श्रुत्वा प्रभणति दानविरतो जिनेन्द्र ! ये केऽपि । पालयन्ति निरतिचारं सम्यक्त्वं यत् फलं तेषाम्॥२५५॥
ये पुनः सातिचारं केऽपि खलु पालयन्ति यच्च तेषां फलम् । तथा द्वादशभेदमपि खलु श्रावकधर्मं निरतिचारम्
य आचरन्ति केऽपि खलु तेषां फलं, ये च सातिचारं तु । पालयन्ति तेषां च फलं सविस्तरं श्रोतुमिच्छामि ॥

ता पसिऊणं साहसु सोयाहरणं जिणिंद! जं जाणं। जायं फलंति, एत्तो भयवंपि हु कहिउमारद्धे ॥

॥ इति श्रीसुपार्श्वजिनचरित्रे केवलज्ञानश्रीप्राप्तिः ॥

---

तस्मात् प्रसद्य कथय सोदाहरणं जिनेन्द्र! यद् येषाम्। जातं फलमिति, इतो भगवानपि खलु कथयितुमारब्धः॥



सम्मत्ते थिरचित्ता सत्ता जे पवयणं पभाविंति । चंपयमालव्व लहंति ते सिवं तब्भवेणेव ॥ १ ॥
तहाहि;—

जंबुदीवे दीवे भारहवासस्स मज्झयारम्मि । अत्थि नयरी विसाला तिहावि नामेण य विसाला ॥२॥
जत्थुवसग्गो गुरुलाघवं च गुणवाहिया य तह वुड्ढी । वन्ननिवायवियारा वागरणे न उण लोयम्मि॥३॥
तत्थत्थि अत्थिमणवंछियत्थसंपाडणिक्कदुल्ललिओ । ललियंगउत्ति राया राया जणकुमुयसंडस्स ॥४॥
निज्जियविपक्खलक्खो कमलदलक्खो कलासु निउदक्खो । जिणधम्मबद्धलक्खो जो निच्चं विहियहियरक्खो
तस्सत्थि पिया भज्जा निरुवमलज्जा सुसीलकयचोज्जा । सद्धम्मम्मि सुसज्जा पीइमई नाम निरवज्जा ॥
ताणं च परोप्परपीइनिब्भरं विसयसोक्खनिरयाणं । पंचसुयाणं उवरिं जाया धूया पवररूवा ॥७॥
गिरिकंदरंतरगया देहोवचएण गुणकलावेण । चंपयलयव्व वड्ढइ चंपयमालत्ति कयनामा ॥८॥
अह जोग्गत्तं पत्ता अज्झावयकुमुयचंदपासम्मि । लक्खणसाहित्तपमाणजोइसाईणि सा पढइ ॥९॥
सामंतमंतिभडसंकडम्मि अह अन्नया नरिंदस्स । अत्थाणम्मि पविट्ठो पडिहारनिरूवियसरूवो ॥१०॥
रायाहिरायअरिकेसरिस्स पहुणो कुणालनयरीए । नामेणं अमरगुरू रायगुरुत्तणगुणग्घविओ ॥११॥
अब्भुट्ठिऊण रन्ना सायरमवगूहिउं उचियठाणे । उववेसिऊण पुट्ठो अरिकेसरिनिवइणो कुसलं ॥१२॥
तम्मि य खणम्मि बाला चंपयमाला सहीहिं परियरिया । निवअज्झावयजुत्ता संपत्ता रायपासम्मि॥१३॥

---

सम्यक्त्वे स्थिरचित्ताः सत्त्वा ये प्रवचनं प्रभावयन्ति । चम्पकमालेव लभन्ते ते शिवं तद्भवेनैव ॥१॥
*तथाहि;—*

जम्बूद्वीपे द्वीपे भारतवर्षस्य मध्ये । अस्ति नगरी विशाला त्रिधापि नाम्ना च विशाला ॥२॥
यत्रोपसर्गो गुरुलाघवं च गुणबाधिता च तथा वृद्धिः । वर्णनिपातविकारा व्याकरणे न पुनर्लोके ॥३॥
तत्रास्त्यर्थिमनोवाञ्छितार्थसंपादनैकदुर्ललितः । ललिताङ्गक इति राजा राजा जनकुमुदषण्डस्य ॥४॥
निर्जितविपक्षलक्षः कमलदलाक्षः कलासु निश्चितदक्षः । जिनधर्मबद्धलक्ष्यो यो नित्यं विहितहितरक्षः ॥५॥
तस्यास्ति प्रिया भार्या निरुपमलज्जा सुशीलकृताश्चर्या । सद्धर्मे सुसज्जा प्रीतिमती नाम निरवद्या ॥६॥
तयोश्च परस्परप्रीतिनिर्भरं विषयसौख्यनिरतयोः । पञ्चसुतानामुपरि जाता दुहिता प्रवररूपा ॥७॥
गिरिकन्दरान्तर्गता देहोपचयेन गुणकलापेन । चम्पकलतेव वर्धते चम्पकमालेति कृतनामा ॥८॥
अथ योग्यतां प्राप्ताऽध्यापककुमुदचन्द्रपार्श्वे । लक्षणसाहित्यप्रमाणज्योतिषादीनि सा पठति ॥९॥
सामन्तमन्त्रिभटसंकटेऽथान्यदा नरेन्द्रस्य । आस्थाने प्रविष्टः प्रतिहारनिरूपितस्वरूपः ॥१०॥
राजाधिराजारिकेसरिणः प्रभोः कुणालानगर्याः । नाम्नाऽमरगुरू राजगुरुत्वगुणपरिपूर्णः ॥११॥
अभ्युत्थाय राज्ञा सादरमवगुह्योचितस्थाने । उपवेश्य पृष्टोऽरिकेसरिनृपतेः कुशलम् ॥१२॥
तस्मिंश्च क्षणे बाला चम्पकमाला सखीभिः परिकरिता । निजाध्यापकयुक्ता संप्राप्ता राजपार्श्वे ॥१३॥

---

१ विस्तीर्णा, त्रिशिष्ट शाल प्राकारो यस्याम्, विशिष्टा शाला = द्रुमाश्च यस्यां सा त्रिधा विशालेत्यर्थः ।

पायवडिया निवेण उच्छंगे ठाविऊण सा पुट्ठा । किं पढियं पुत्ति! तए कहेहि मूलाओ आरब्भ? ॥१४॥
सा किंपि जा न जंपइ ता भणियं कुमुयचंदविबुहेण । अपढियमवि मुणइ इमा नरवर! बहुसत्थपरमत्थं॥
तं सोउं अमरगुरू अरिकेसरिणो महानरिंदस्स । जइ गिहिणी हवइ इमा तो लट्ठं इय [1]विचिंतेउं ॥१६॥
पुच्छइ किं तुह वच्छे चूडामणिसत्थआगमो अत्थि?। सा भणइ अत्थि किंचिवि, जइ अत्थि कहेह ता एयं॥
होही को तुज्झ पई कया य कह वट्टिही य सह तुमए । संतइसंपत्तीए कइ पुत्ता कइ व पुत्तीओ? ॥१८॥
लज्जाए जा न जंपइ तं पइ पच्चुत्तरं, तओ भणिया । उज्झाएण कहिज्जउ मा विज्जाहीलणं होही ॥१९॥
तो परिचिंतिय जंपइ मउयं महुरक्खरेहिं सा बाला । अरिकेसरिनरनाहो वरिसंते मह पई होही ॥२०॥
बारह वरिसे रत्तो छम्मासे विरज्जिऊण रच्चेही । सुयजुयलं एक्का कन्नगा उ तह संतई होही ॥२१॥
इय कहियं तुह पुट्ठं इण्हिमपुट्ठंपि किंपि साहेमि । तुह पुत्तो संपत्तो परलोयगईय दसमदिणे ॥२२॥
तीए च्चिय रयणीए चरिमे जामम्मि पणइणी तुम्ह । पुत्तरयणं पसूया वरलंछणलंछियसरीरं ॥२३॥
अह सो विसायसंतोसपरवसो पुच्छए नरिंदसुयं । को हेऊ संजाओ परलोयगमे मह सुयस्स? ॥२४॥
तो सविसेसं परिभाविऊण चूडामणीए परमत्थं । सम्मं नाउं साहइ जहट्ठियं वइयरं एवं ॥२५॥
तं पत्थिओ सि जइया रायाएसेण तायमुद्दिसिउं । तइया किल तुह पुत्तो तए समं आसि संचलिओ॥२६॥
चत्तो तए विमुक्को समुव्वहंतो मणम्मि अवमाणं । सुहपंसुकीलिएहिं कीलंतो सह वयंसेहिं ॥२७॥

---

पादपतिता नृपेणोत्सङ्गे स्थापयित्वा सा पृष्टा । किं पठितं पुत्रि! त्वया कथय मूल[illegible]रम्य? ॥१४॥
सा किमपि यावन्न जल्पति तावद्भणितं कुमुदचन्द्रविबुधेन । अपठितमपि जानातीयं नरवर! बहुशास्त्रपरमार्थम्॥१५॥
तत् श्रुत्वाऽमरगुरुररिकेसरिणो महानरेन्द्रस्य । यदि गृहिणी भवेदियं ततः सुन्दरमिति विचिन्त्य ॥१६॥
पृच्छति किं तव वत्से! चूडामणिशास्त्रागमोऽस्ति?। सा भणत्यस्ति किञ्चिदपि, यद्यस्ति कथय तत एतत्॥
भविष्यति कस्तव पतिः कदा च कथं वर्त्स्यति च सह त्वया । संततिसंपत्तौ कति पुत्राः कति वा पुत्र्यः?॥१८॥
लज्जया यावन्न जल्पति तं प्रति प्रत्युत्तरं, ततो भणिता । उपाध्यायेन कथ्यतां मा विद्याहेलनं भूत्॥१९॥
ततः परिचिन्त्य जल्पति मृदुकं मधुराक्षरैः सा बाला । अरिकेसरिनरनाथो वर्षान्ते मम पतिर्भविष्यति ॥२०॥
द्वादश वर्षाणि रक्तो षण्मासान् विरज्य रंक्ष्यति । सुतयुगलमेका कन्यका तु तथा संततिर्भविष्यति ॥२१॥
इति कथितं तव पृष्टमिदानीमपृष्टमपि किमपि कथयामि । तव पुत्रः संप्राप्तः परलोकगतौ दशमदिने ॥२२॥
तस्यामेव रजन्यां चरमे यामे प्रणयिनी तव । पुत्ररत्नं प्रसूता वरलाञ्छनलाञ्छितशरीरम् ॥२३॥
अथ स विषादसंतोषपरवशः पृच्छति नरेन्द्रसुताम् । को हेतुः संजातः परलोकगमे मम सुतस्य? ॥२४॥
ततः सविशेषं परिभाव्य चूडामणेः परमार्थम् । सम्यग् ज्ञात्वा कथयति यथास्थितं व्यतिकरमेवम् ॥२५॥
त्वं प्रस्थितोऽसि यदा राजादेशेन तातमुद्दिश्य । तदा किल तव पुत्रस्त्वया सममासीत् संचलितः ॥२६॥
अवसरे त्वया विमुक्तः समुद्वहन् मनस्यपमानम् । सुखपांशुक्रीडितैः क्रीडन् सह वयस्यैः ॥२७॥

---

१ ग, विर विं । २ क, ख चमाए चूडामणीए परिसम्मं अहिय रायपुत्ति ।

अह अन्नया कयाई उज्जाणमहूसवम्मि गमणत्थं । तुहपुव्वपुरिसखग्गं करे करेऊण जा चलिओ ॥२८॥
तो जणणीए भणियं पूइज्जइ चेव खग्गरयणमिणं। न हु चालिज्जइ ता वच्छ! गच्छ एयं विमोत्तूण ॥२९॥
अवमाणियमप्पाणं मन्नंतो सोवि पुव्वकम्मवसा । रयणीए पसुत्ताए सपरियणाएवि जणणीए ॥३०॥
सणियं सणियं सयणीययाउ गंतूण उववणस्संतो । वावीए निवडिओ विहडिओ य से पाणसंबंधो ॥
सव्वत्थ गविट्ठो सो अलहंतेणं पउत्तिमित्तंपि । जणणीपमुहजणेणं तो तुह पासम्मि धावणओ ॥३२॥
संपेसिओ कुरंगो एही सो संपयम्मि एत्थेव । तक्खणमह पडिहारेण सूइओ सोवि संपत्तो ॥३३॥
नरनाहं अमरगुरुं च नमिय तं तह कहेइ सो सव्वं । जह कुमरीए भणियं अमरगुरू अह पयंपेइ ॥३४॥
अन्नाणतिमिरहरणी अलद्धरूवा य जयत्तयवहूहिं । तुम्ह गिहे अवइन्ना पच्चक्खसरस्सई एसा ॥३५॥
इय सेसेवि पसंसारसिए अत्थाणसंठिए लोए । आपुच्छिऊण जणयं समुट्ठिया जाव किर कुमरी ॥३६॥
ता अंगविलग्गं नरवरेण अन्नेण तयणु लोएण। दिन्नमसेसाहरणं, रन्ना तह कुमुयचंदस्स ॥३७॥
दिन्नं सुवण्णलक्खस्स सासणं नासणं दरिद्दस्स। चंपयमालाणुगओ गओ तओ सोवि नियठाणं ॥३८॥
नरनाहो अमरगुरुं पइ जंपइ तुम्ह संपइ कुणालं। गंतुं जुत्तं तुरियं नियपरियणट्ठावणट्ठाए ॥३९॥
ता संखेवेणं चिय कहेहि रायाहिरायआएसं । तो जंपइ अमरगुरू तुम्ह गढो अत्थि सीमाए ॥४०॥
सो अम्हं चिय दिज्जउ लिज्जउ अत्थेण सह गढो उचिओ । इय आएसो रायाहिवस्स, तो जंपए राया ॥

---

अथान्यदा कदाचिदुद्यानमहोत्सवे गमनार्थम् । त्वत्पूर्वपुरुषखड्गं करे कृत्वा यावच्चलितः ॥२८॥
ततो जनन्या भणितं पूज्यत एव खड्गरत्नमिदम् । न च चाल्यते तस्माद् वत्स! गच्छैनं विमुच्य ॥२९॥
अवमानितमात्मानं मन्यमानः सोऽपि पूर्वकर्मवशात् । रजन्यां प्रसुप्तायां सपरिजनायामपि जनन्याम् ॥३०॥
शनैः शनैः शयनीयाद् गत्वोपवनस्यान्तः । वाप्यां निपतितो विघटितश्च तस्य प्राणसंबन्धः ॥३१॥
सर्वत्र गवेषितः सोऽलभमानेन प्रवृत्तिमात्रमपि । जननीप्रमुखजनेन ततस्तव पार्श्वे धावनकः ॥३२॥
संप्रेषितः कुरङ्ग एष्यति स सांप्रतमत्रैव । तत्क्षणमथ प्रतिहारेण सूचितः सोऽपि संप्राप्तः ॥३३॥
नरनाथममरगुरुं च नत्वा तत् तथा कथयति स सर्वम् । यथा कुमार्या भणितममरगुरुरथ प्रजल्पति ॥३४॥
अज्ञानतिमिरहरणी अलब्धरूपा च जगत्त्रयवधूभिः । युष्माकं गृहेऽवतीर्णा प्रत्यक्षसरस्वत्येषा ॥३५॥
इति शेषेऽपि प्रशंसारसिके आस्थानसंस्थिते लोके । आपृच्छ्य जनकं समुत्थिता यावत्किल कुमारी ॥३६॥
तावदङ्गविलग्नं नरवरेणान्येन तदनु लोकेन । दत्तमशेषाभरणं, राज्ञा तथा कुमुदचन्द्राय ॥३७॥
दत्तं सुवर्णलक्षस्य शासनं नाशनं दारिद्र्यस्य । चम्पकमालानुगतो गतस्ततः सोऽपि निजस्थानम् ॥३८॥
नरनाथोऽमरगुरुं प्रति जल्पति तव संप्रति कुणालाम्। गन्तुं युक्तं त्वरितं निजपरिजनस्थापनार्थम् ॥३९॥
ततः संक्षेपेणैव कथय राजाधिराजादेशम् । ततो जल्पत्यमरगुरुर्युष्माकं दुर्गोऽस्ति सीम्नि ॥४०॥
सोऽस्मभ्यं दीयतां लायतामर्थेन सह दुर्ग उचितः । इत्यादेशो राजाधिपस्य, ततो जल्पति राजा ॥४१॥

---

१ क. ° या य उज्जाणियाए सो मित्तमंडलीकलिओ ।

तो कुमरेणं भणिया तुट्ठा जइ देसि इच्छियं मज्झ । मणवइकाएहिं तुमं जीववहं ता विवज्जेहि ॥१७७॥
तवसीलेहिंवि य लोए तुज्झ का होज्ज धम्मसंपत्ती । एसो चिय तुह धम्मो मुंचसु तसघायदुव्वसणं॥१७८॥
जेण ।
अप्पाणं न लहइ पायवो जहा मूलपसरपरिहीणो । तह धम्मो जीवाणं न होइ नूणं दयाए विणा॥१७९॥
ता मा घायावह अप्पणो पुरो पाणिणो विणा कज्जं । मज्जेण य मा तुससु विसिट्ठजणगरहिणिज्जेण ॥
कज्जेणवि पाणवहं करिंति कारिंति ते महापावा । जे उण कज्जेण विणा तेसिंपि हु ते सिरोमणिणो ॥
कावालियाहारविवज्जियाए किं तुज्झ जीववहणेणं । पुव्वभवम्मिवि न कओ जिणधम्मो जीवदयरम्मो ॥
तेण तुमं संजाया अइकिव्विसिया कुदेवजोणीए । ता चय जीववहं तुह भत्तावि कुणंति जेण दयं ॥१८३॥
तह सदंसणमूलं धम्मं सद्दहसु जिणवरिंदेहिं । सहियं तप्पडिमाण य जहसत्तीओ कुणसु भत्तिं ॥१८४॥
तम्मग्गसंठियाण य संनिज्झं कुणसु सव्वकज्जेसु । जेण नरत्तं लद्धुं अणंतसोक्खं लहसि मोक्खं॥१८५॥
तो काली पभणइ अज्जपभिइ सव्वंपि जीवरासिमहं । नियजीवंव गणिस्सं इय भणिउमदंसणं पत्ता ॥
इत्तो लद्धावसरो कुमरं पणमेइ बुद्धिमयरहरो । अंसुजलाविलनयणो तं दढमालिंगए सोवि ॥१८७॥
दारुणपरिणाममिमस्स पाविणो तं वियाणमाणोवि । सज्जणसेहर ! कह पाडिओ पिडे दुज्जणेणिमिणा ? ॥
बुद्धिमयरहरमंती भणइ रयणीए पढमपहरम्मि । कुमर ! तुह वासभवणे संपत्ता भारिया जाव ॥१८९॥

---

भूत्वा किल सेत्स्यामि तावत्त्वमागतोऽसि नृपतनय ! । तव पौरुषेण तुष्टा मार्गय यत्किमपि प्रतिभाति॥१७६॥
ततः कुमारेण भणिता तुष्टा यदि ददासीप्सितं मह्यम् । मनोवचःकायैस्त्वं जीववधं तदा विवर्जय ॥१७७॥
तपः शीलाभ्यामपि च लोके तव का भवेद् धर्मसंपत्तिः ? । एष एव तव धर्मो मुञ्च त्रसघातदुर्व्यसनम्॥१७८॥
येन ।
आत्मानं न लभते पादपो यथा मूलप्रसरपरिहीणः । तथा धर्मो जीवानां न भवति नूनं दयया विना ॥१७९॥
तस्माद् मा घातयात्मनः पुरः प्राणिनो विना कार्यम् । मद्येन च मा तुष्य विशिष्टजनगर्हणीयेन ॥१८०॥
कार्येणापि प्राणवधं कुर्वन्ति कारयन्ति ते महापापाः । ये पुनः कार्येण विना तेषामपि खलु ते शिरोमणयः ॥
कापालिकाहारविवर्जितया किं तव जीववधेन । पूर्वभवेऽपि न कृतो जिनधर्मो जीवदयारम्यः ॥१८२॥
तेन त्वं संजाता अतिकिल्बिषिका कुदेवयोनौ । तस्मात्त्यज जीववधं तव भक्ता अपि कुर्वन्ति येन दयाम् ॥
तथा सद्दर्शनमूलं धर्मं श्रद्धेहि जिनवरेन्द्रैः । सहितं तत्प्रतिमानां च यथाशक्ति कुरु भक्तिम् ॥१८४॥
तन्मार्गसंस्थितानां च सांनिध्यं कुरु सर्वकार्येषु । येन नरत्वं लब्ध्वाऽनन्तसौख्यं लभसे मोक्षम् ॥१८५॥
ततः काली प्रभणत्यद्यप्रभृति सर्वमपि जीवराशिमहम् । निजजीवमिव गणयिष्यामीति भणित्वाऽदर्शनं प्राप्ता ॥
इतो लब्धावसरः कुमारं प्रणमति बुद्धिमकरगृहः । अश्रुजलाविलनयनस्तं दृढमालिङ्गति सोऽपि ॥१८७॥
दारुणपरिणाममस्य पापिनस्त्वं विजानानोऽपि । सज्जनशेखर ! कथं पातितः पिटे दुर्जनेनानेन ? ॥१८८॥
बुद्धिमकरगृहमन्त्री भणति रजन्याः प्रथमप्रहरे । कुमार ! तव वासभवने संप्राप्ता भार्या यावत् ॥१८९॥

तत्थ न दिट्ठा तुब्भे तीए तो विम्हियाए जामिल्ला। पुट्ठा भणंति छलिया जग्गंता हा ! कहं अम्हे ?॥
तो सव्वत्थ गविट्ठोवि जा नवि दिट्ठो तुमं तओ रन्नो। कहियं केणवि कुमरो हरिओ निसि पढमपहरम्मि॥
आयन्निऊण एयं वयणं सीहासणाओ नरनाहो। मुच्छानिमीलियच्छो सहसा धरणीयले पडिओ॥१९२॥
मालइपमुहो जणणीजणोवि तह चेव मुच्छिओ सव्वो। चंदणरसेण सित्तो तो कहवि सचेयणो जाओ॥
जा विलविउं पयत्तो राया जणणीजणो समंतियणो। ताव सहसत्ति पत्ता मज्झवया इत्थिया एका॥
कंपंतकरकराला भासुरवयणा धुणंतसिरकमला। भणइ नरिंदं उट्ठसु मह पूयं कुणसु भत्तीए॥१९५॥
अहयं तुह कुलदेवी समागया तुज्झ पुत्तअत्तीए। मा तं नरिंद ! खेयं कुणसु, सुओ तुज्झ अवहरिओ॥
पासंडियाहमेणं उत्तरसाहगमिसेण रयणीए। काऊणं संगामं कुमरस्स सिरं किल गहेही॥१९७॥
ता जक्खिणिदेवीए नीओ नियमंदिरम्मि इच्चाइ। कहिउं भणिओ कइहिवि दिणेहिं एइ विभूईए॥१९८॥
इय सा कहिऊण गया वयणं संवाइउंव तीए अहं। सउणनिरिक्खणहेउं जाव गओ नयरबाहिम्मि॥१९९॥
ताव सहसत्ति वामेयरासु ठाउं दिसासु वाहरइ। खुखुत्तयसद्देणं तित्तिराणं जुगं झत्ति॥२००॥
सुणओवि हु सवडीए गंतूणं दाहिणेण चरणेण। कंडूयइ उत्तिमंगं रमणीयुच्चे ठिओ ठाणे॥२०१॥
आगासजोगिणीए निसुओ सद्दोवि वामपासम्मि। सामा वामा लविउं तारा चडिया सुखीरदुमे॥२०२॥
इच्चाइसउणसउणोहरंजिओ जाव किल वलिस्सामि। तो गयणगएणिमिणा उक्खिविउं अहमिहाणीओ॥

---

तत्र न दृष्टा यूयं तया ततो विस्मितया यामिकाः। पृष्टा भणन्ति च्छलिता जाग्रतो हा ! कथं वयम् ?॥१९०॥
ततः सर्वत्र गवेषितोऽपि यावन्नैव दृष्टस्त्वं ततो राज्ञे। कथितं केनापि कुमारो हृतो निशि प्रथमप्रहरे॥१९१॥
आकर्ण्यैतद् वचनं सिंहासनाद् नरनाथः। मूर्च्छानिमीलिताक्षः सहसा धरणीतले पतितः॥१९२॥
मालतीप्रमुखो जननीजनोऽपि तथैव मूर्च्छितः सर्वः। चन्दनरसेन सिक्तस्ततः कथमपि सचेतनो जातः॥१९३॥
यावद्विलपितुं प्रवृत्तो राजा जननीजनः समन्त्रिजनः। तावत् सहसेति प्राप्ता मध्यवयाः स्त्री एका॥१९४॥
कम्पमानकरकराला भासुरवदना धुन्वच्छिरःकमला। भणति नरेन्द्रमुत्तिष्ठ मम पूजां कुरु भक्त्या॥१९५॥
अहं तव कुलदेवी समागता तव पुत्रार्त्या। मा त्वं नरेन्द्र ! खेदं कुरु, सुतस्तवापहृतः॥१९६॥
पाखण्डिकाधमेनोत्तरसाधकमिषेण रजन्याम्। कृत्वा संग्रामं कुमारस्य शिरः किल ग्रहीष्यति॥१९७॥
तावद् यक्षिणीदेव्या नीतो निजमन्दिर इत्यादि। कथयित्वा भणितं कतिभिरपि दिनैरेष्यति विभूत्या॥१९८॥
इति सा कथयित्वा गता वचनं संवादयितुमिव तस्या अहम्। शकुननिरीक्षणहेतोर्यावद्गतो नगराद् बहिः॥१९९॥
तावत्सहसेति वामेतरयोः स्थित्वा दिशोर्व्याहरति। खुखुत्रयशब्देन तित्तिरयोर्युगं झटिति॥२००॥
शुनकोऽपि खलु स्वसीम्नि गत्वा दक्षिणेन चरणेन। कण्डूयत्युत्तमाङ्गं रमणीयोच्चे स्थितः स्थाने॥२०१॥
आकाशयोगिन्याः श्रुतः शब्दोऽपि वामपार्श्वे। श्यामा वामा लपित्वा तारा चटिता सुक्षीरद्रुमे॥२०२॥
इत्यादिसगुणशकुनौघरञ्जितो यावत्किल वलिष्ये। ततो गगनगतेनानेनोत्क्षिप्याहमिहानीतः॥२०३॥

---

१ ग. ख़ुत्त्य।

बहुपुन्नपावणिज्जाण मेलिउं तुह चरणकमलाणं। तुहविरहविहुरिओ हं निव्वविओ झत्ति तो कुमर! ॥२०४॥
परमुवयारी एसो ता संपइणुग्गहं मह विहेउं। उवइसह धम्ममेयस्स सो तओ भणइ उवविट्ठो ॥२०५॥
मह देवीए दिसंतेण चेव धम्मो अधम्मचरियस्स। सुच्चिय सरणं तद्देसओ य मह होउ जिणनाहो॥२०६॥
अपरं च।
अवयारुवयारपरस्स बुद्धिमयरहर! तुह पए वंदे। गुणमणिरोहणगिरिणो दासो हं पुण कुमारस्स ॥२०७॥
जावेवं ते जंपंति ताव उइए रविम्मि तत्थ तओ। पत्तो करीव जक्खो सत्तंगपइट्ठिओ सोवि ॥२०८॥
कुमरं करे करेउं नियपट्ठीए ठवेइ मंतिं च। कालियभवणाउ तओ उप्पइओ गयणमग्गम्मि ॥२०९॥
तत्तो कुमरो जंपइ अहह अहो! सव्वमच्चलोयम्मि। एरिसकरिवररयणं किं दीसइ किंव उप्पयइ ?॥२१०॥
बुद्धिमयरहरमंती पभणइ जिणवयणभावियमईओ। तं नत्थि संविहाणं कुमार! जं भवइ नेह भवे ॥२११॥
किंतु तुहपुन्नपगरिसपरिपेरियसुरवरो इमो कोवि। ता जाउ जत्थ तत्थ व नत्थि भयं इहसयासाओ॥२१२॥
इय जंपंताण खणेण ताण हत्थी नहाउ अवयरिउं। एक्कम्मि सुन्ननगरे गोउरदारम्मि ते मोत्तुं ॥२१३॥
कत्थवि गओह कुमरो मंतिं मोत्तूणं नयरबाहिम्मि। निब्भयचित्तो पविसइ एगागी नयरमज्झम्मि ॥२१४॥
वरसत्थपद्धइं पिव ससुवन्नं पउरविमललंकारं। सोवन्नवणियहट्टे अन्नेवि हु तत्थ हट्टगिहे ॥२१५॥
पेच्छंतो जा वच्चइ सुन्ने रन्निव्व तो तहिं नियइ। नरसिंहागारधरं किंपि अच्चब्भुयं जीवं ॥२१६॥

तसु दुह दाढह अंतरि रसणा लहलहइ, नं सारयघणमज्झि तडिच्छड झलहलइ।
तेणचंतरसंत रुइरतणु एगु नरु, वयणि गहिउ पभणंतउ मं मह पाण हरु ॥२१७॥

---

बहुपुण्यप्रापणीयानि मेलयित्वा तव चरणकमलानि। त्वद्विरहविधुरितोऽहं निर्वापितो झटिति ततः कुमार! ॥
परमोपकार्येष तस्मात्संप्रत्यनुग्रहं मयि विधाय। उपदिश धर्ममेतस्य स ततो भणत्युपविष्टः ॥२०५॥
मम देवीं दिशतैव धर्मोऽधर्मचरितस्य। स एव शरणं तद्देशकश्च मम भवतु जिननाथः ॥२०६॥
अपकारोपकारपरस्य बुद्धिमकरगृह! तव पादौ वन्दे। गुणमणिरोहणगिरेर्दासोऽहं पुनः कुमारस्य ॥२०७॥
यावदेवं ते जल्पन्ति तावदुदिते रवौ तत्र ततः। प्राप्तः करीव यक्षः सप्ताङ्गप्रतिष्ठितः सोऽपि ॥२०८॥
कुमारं करे कृत्वा निजपृष्ठे स्थापयति मन्त्रिणं च। कालिकाभवनात् तत उत्पतितो गगनमार्गे ॥२०९॥
ततः कुमारो जल्पत्यहह अहो! सर्वमर्त्यलोके। ईदृशकरिवररत्नं किं दृश्यते किंवोत्पतति ? ॥२१०॥
बुद्धिमकरगृहमन्त्री प्रभणति जिनवचनभावितमतेः। तन्नास्ति संविधानं कुमार! यद् भवति नेह भवे॥२११॥
किन्तु त्वत्पुण्यप्रकर्षपरिप्रेरितसुरवरोऽयं कोऽपि। तस्माद् यातु यत्र तत्र वा नास्ति भयमस्य सकाशात् ॥
इति जल्पतोः क्षणेन तयोर्हस्ती नभसोऽवतीर्य। एकस्मिन् शून्यनगरे गोपुरद्वारे तौ मुक्त्वा ॥२१३॥
क्वापि गतोऽथ कुमारो मन्त्रिणं मुक्त्वा नगराद् बहिः। निर्भयचित्तः प्रविशत्येकाकी नगरमध्ये ॥२१४॥
वरशास्त्रपद्धतिमिव समुवर्णां प्रचुरविमलालङ्काराम्। सौवर्णवणिग्वीथीमन्यान्यपि च तत्र हट्टगृहाणि ॥२१५॥
पश्यन् यावद् व्रजति शून्येऽरण्य इव तनस्तस्मिन्पश्यति। नरसिंहाकारधरं किमप्यत्यद्भुतं जीवम् ॥२१६॥

तो नं दट्ठुं कुमरो देवयमइदारुणं इमं किंपि। इय चिंतिय तं सविणयमिय पत्थइ मुंच पुरिसमिमं ॥२१८॥
उम्मीलियच्छिजुयलेण तेण ता पुलइऊण कुमरमुहं। सो पुरिसो वयणाओ मोत्तुं पयहिट्ठओ ठविओ ॥
भणियं च अहो! सुपसन्नवयण! मिल्लेमि कह महं एयं। अज्ज मए छुहिएणं जं लद्धो एस भक्खंति?॥
कुमरो भणइ तुमं कयविक्कियरूवो सुरोव्व लक्खियसि। तो कह तुह भक्खमिणं जमकवलाहारिणो देवा?॥
अबुहो जंवा तंवा करेइ, जुत्तं न तुम्ह पुण एयं। विलवंताण सदुक्खं जीवाणं मारणं विबुहा! ॥२२२॥
जहवा तहवा जीवे जो बंधइ वहइ मारइ रसंते। सो दुस्सहदुहदंदोलिकवलिओ भमइ भवगहणे ॥२२३॥
तत्तो सो पडिजंपइ सच्चमिणं जंपियं तए सव्वं। किंपुण दुहरिंछोली इमिणा तह दंसिया मज्झ ॥२२४॥
इत्तो पुव्वभवम्मि जह सयवारंपि मारिएणिमिणा। विज्झाइ न कोहग्गी इत्तो च्चिय जीवमाणस्स॥२२५॥
काउं कयत्थणाओ बहुयाओ दुसहदुक्खजणणीओ। मारिस्सामि इम, तो कुमरो तं भणइ भो भद्द! ॥
अवयारिसु जइ कोवो तुह ता किं न कुणसि कोवम्मि। सयलपुरिसत्थविग्घे निव्विग्घे दुक्खहेउम्मि?॥
ता मुंचसु दीणमिणं करुणारसपच्चयं चिणसु धम्मं। जेणन्नभवे मोक्खं पावसि निट्ठाविउं कम्मं॥२२८॥
इय बहु विन्नविओवि हु न जाव सो कहवि मिल्लए पुरिसं। तो कुमरो चिंतइ साममेयदाणाणिमोऽसज्झो ॥
कोहाविट्ठो भिट्ठो तो सहसा पिल्लिऊण तं कुमरो। नियपट्ठीए ठावइ पुरिसं कुविओ तओ सोवि॥२३०॥
धावइ पसारियमुहो गिलिउं कुमरं तओ कुमारेण। धरिउं खुरम्मि मत्थयउवरिं भामेउमारद्धो ॥२३१॥

---

तस्य द्वयोर्दंष्ट्रयोरन्तो रसना लालल्यते, ननु शारदघनमध्ये तडिच्छटा जाज्वल्यते।
तेनात्यन्तं रसन् रुचिरतनुरेको नरो, वदने गृहीत प्रभणन् मा मम प्राणान् हर ॥२१७॥
ततस्तद् दृष्ट्वा कुमारो दैवतमतिदारुणमिद किमपि। इति चिन्तयित्वा त सविनयमिति प्रार्थयते मुञ्च पुरुषमिम्॥
उन्मीलिताक्षियुगलेन तेन ततो दृष्ट्वा कुमारमुखम्। स पुरुषो वदनान्मुक्त्वा पादयोरधस्तात्स्थापित ॥२१९॥
भणित चाहो! सुप्रसन्नवदन! मुञ्चामि कथमहमेतम्। अद्य मया क्षुधितेन यल्लब्ध एष भक्ष्यमिति?॥२२०॥
कुमारो भणति त्वं कृतवैक्रियरूप सुर इव लक्ष्यसे। तत कथ तव भक्ष्यमिद यदकवलाहारिणो देवा? ॥
अबुधो यद्वा तद्वा करोति, युक्तं न तव पुनरेतत्। विलपता सदु ख जीवाना मारण विबुध! ॥२२२॥
यथा वा तथा वा जीवान् यो बध्नाति हन्ति मारयति रसत। स दु सहदु खद्वन्द्वालीकवलितो भ्रमति भवगहने ॥
तत स प्रतिजल्पति सत्यमिद जल्पित त्वया सर्वम्। किन्तु दु खपङ्क्तिरनेन तथा दर्शिता मम ॥२२४॥
इत पूर्वभवे यथा शतवारमपि मारितेनानेन। विध्यति न क्रोधाग्निरित एव जीवत ॥२२५॥
कृत्वा कदर्थना बह्वीर्दु सहदु खजननी। मारयिष्यामीम, तत कुमारस्त भणति भो भद्र! ॥२२६॥
अपकारिषु यदि कोपस्तव तदा किं न करोषि कोपे। सकलपुरुषार्थविघ्ने निर्विघ्ने दु खहेतौ? ॥२२७॥
तस्मान्मुञ्च दीनमिम करुणारसप्रत्यय चिनु धर्मम्। येनान्यभवे मोक्ष प्राप्नोषि निष्ठाप्य कर्म ॥२२८॥
इति बहु विज्ञपितोऽपि खलु न यावत्स कथमपि मुञ्चति पुरुषम्। तत कुमारश्चिन्तयति साम्भेददानानामयमसाध्य ॥
क्रोधाविष्टो धृष्टस्तत सहसा प्रेर्य त कुमार। निजपृष्ठे स्थापयति पुरुष कुपितस्तत सोऽपि ॥२३०॥

तो सो सुहुमो होउं निग्गंतुं कुमरहत्थमज्झाओ । अदिस्सो कुमरगुणोहरंजिओ ठाइ तत्थेव ॥२३२॥
तम्मि उ अदिस्समाणे कुमरो अह तस्स नायरनरस्स। भुयदंडविलग्गो कोउगेण पविसेइ रायउलं ॥
मायंगसंगयाओ सुसुत्तजुत्ताओ समयघडियाओ । जत्थ कुविंदकुडीओव गयसालाओ नियइ कुमरो ॥
कत्थ य तरुसाहाओ घणवल्लिसमाउलाओ तुंगाओ।हयसालाउ नियंतो वच्चइ कुमरो सुनिस्संको ॥
विबुहाण मईओ इव बहुसत्थसमन्नियाओ विमलाओ।आउहसालाओ वराओ तत्थ गच्छइ नियच्छंतो॥
एरिसरूवं तो रायअंगणं उव्वसं पलोयंतो । कुमरो नरेण सहिओ संपत्तो रायभवणम्मि ॥२३७॥
बहुरूवनिम्मविए सुविचित्तचित्तयम्मि सत्ततले। विम्हयरसवसहियओ पासाए जा समारूढो ॥२३८॥
तो तत्थ थंभविणिकुट्टियाहिं पवराहिं सालहंजीहिं।जोडियकराहिं भणियं सागयमिह भीमकुमरस्स ॥
तत्तो तुरियगईए ओयरिउं थंभउवरिभागाओ । कणयमयमासणं तस्स ताहिं दिन्नं सबहुमाणं ॥२४०॥
तो कुमरो तेण नरेण संजुओ जाव तत्थ उवविट्ठो । ता लहु नहाउ पत्ता मज्जणसामग्गिया सव्वा ॥
तो सालहंजियाहिं पयंपियं परिहिउं इमं पोत्ति । कुमरो करेउ ण्हाणं काउं अम्होवरि पसायं ॥२४२॥
तो कुमरेणं भणियं मह मित्तो नयरपरिसरुज्जाणे।चिट्ठइ लहु हक्कारह तो ताहिं सोवि आणीओ ॥
बुद्धिमयरहरमंती मज्जणयं कारिउं कुमारेणं । सह ताहिं तओ भोयणविहिं च अह जाव पल्लंके ॥२४४॥
ठविओ विम्हियहियओ कुमरो चिट्ठेइ अत्तणो पुरओ।ता कंतिल्लं देवं पिच्छइ चलकुंडलाहरणं ॥२४५॥

---

धावति प्रसारितमुखो गलितुं कुमारं, ततः कुमारेण।धृत्वा खुरे मस्तकोपरि भ्रमयितुमारब्धः ॥२३१॥
ततः स सूक्ष्मो भूत्वा निर्गत्य कुमारहस्तमध्यात । अदृश्यः कुमारगुणौघरञ्जितस्तिष्ठति तत्रैव ॥२३२॥
तस्मिंस्त्वदृश्यमाने कुमारोऽथ तस्य नागरनरस्य । भुजदण्डविलग्नः कौतुकेन प्रविशति राजकुलम् ॥२३३॥
मातङ्गसंगताः सुसूत्रयुक्ताः समकघटिताः । यत्र कुविन्दकुटीरिव गजशालाः पश्यति कुमारः ॥२३४॥
क्व च तरुशाखा घनवल्लीसमाकुलास्तुङ्गाः । हयशालाः पश्यन् व्रजति कुमारः सुनिःशङ्कः ॥२३५॥
विबुधानां मतीरिव बहुश(शा)स्त्रसमन्विता विमलाः । आयुधशालाः वरास्तत्र गच्छति पश्यन् ॥२३६॥
ईदृशरूपं ततो राजाङ्गणमुद्वसं प्रलोकमानः । कुमारो नरेण सहितः संप्राप्तो राजभवने ॥२३७॥
बहुरूपनिर्मापिते सुविचित्रचित्रके सप्ततले । विस्मयरसवशहृदयः प्रासादे यावत् समारूढः ॥२३८॥
ततस्तत्र स्तम्भविनिकुट्टिताभिः प्रवराभिः शालभञ्जीभिः । योजितकराभिर्भणितं स्वागतमिह भीमकुमारस्य ॥
ततस्त्वरितगत्याऽवतीर्य स्तम्भोपरिभागात् । कनकमयमासनं तस्य ताभिर्दत्तं सबहुमानम् ॥२४०॥
ततः कुमारस्तेन नरेण संयुतो यावत्तत्रोपविष्टः । तावल्लघु नभसः प्राप्ता मज्जनसामग्रिका सर्वा ॥२४१॥
ततः शालभञ्जीभिः प्रजल्पितं परिधायेदं शाटकम् । कुमारः करोतु स्नानं कृत्वाऽस्माकमुपरि प्रसादम् ॥
ततः कुमारेण भणितं मम मित्रं नगरपरिसरोद्याने । तिष्ठति लघु हक्कारयत ततस्ताभिः सोऽप्यानीतः ॥
बुद्धिमकरगृहमन्त्री, मज्जनकं कारयित्वा कुमारेण । सह ताभिस्ततो भोजनविधिं चाथ यावत्पल्यङ्के ॥२४४॥
स्थापितो विस्मितहृदयः कुमारस्तिष्ठत्यात्मनः पुरतः । तावत्कान्तिमन्तं देवं पश्यति चलकुण्डलाभरणम् ॥

तो जोडियकरजुयलेण जंपियं तेण भीमकुमरस्स । तुह असमविक्कमेण तुट्ठो हं मग्ग ता किंचि ॥२४६॥
कुमरेण तओ भणियं जइ तुट्ठो तं सि मज्झ ता कहसु। को सि तुमं किमिमं पट्टणं च कहमुव्वसं जायं ? ॥
देवेण तओ भणियं निसुणसु भो कुमर ! जं तए पुट्ठं । कणयपुरं पुरमेयं कणयरहो नाम इह राया ।२४८।
जो रक्खिओ तए सो, एयस्स पुरोहिओ अहं चंडो। सव्वस्स जणस्सुवरिं रुट्ठो चिट्ठामि निच्चंपि ।२४९।
इत्तो सव्वाणवि पुरजणाण जाओ अईव वेसो हं । नो इत्थ कोवि हु मए मिट्ठामित्तोवि संजणिओ ।२५०।
एसोवि नरवरिंदो पयईए कन्नदुब्बलो कूरो । संकाएवि अवराहस्स कुणइ अइदारुणं दंडं ॥२५१॥
अह अन्नया कयाई केणावि हु मज्झ असहमाणेण। अलियं परिकहियमिणं जह चुक्को एस डुंबीए ॥२५२॥
फालं मग्गंतोवि हु तो हं अवियारिऊण एएण । एयं न अन्नहा होइ कहवि, एवं भणंतेणं ॥२५३॥
विंटाविउं सिणेणं छंटावेऊण पउरतेल्लेण । जालाविओ रसंतो तत्तो पाणेहिं परिचत्तो ॥२५४॥
भवियव्वयावसेणं जाओ हमकामनिज्जराए इहं ।.नामेणं सव्वगिलोत्ति रक्खसो सुमरिउं वेरं ॥२५५॥
इत्थागंतूण मए सव्वोवि तिरोहिओ पउरलोओ । तह विसरिसरूवधरेण नरवरो एस संगहिओ ॥२५६॥
करुणाएऽणन्नपोरिसपगरिसरयणायरेण तह तुमए । मोयावंतेण इमं चमक्कियं माणसं मज्झ ॥२५७॥
तत्तो अदिस्सेणं एस समग्गोवि तुम्ह उवयारो । भत्तीए दिव्वसत्तीए विरइओ मज्जणाईओ ॥२५८॥
तुम्हणुवित्तीए तहा एसोवि हु पयडिओ मए लोओ । ता जा नियइ कुमरो ता पिच्छइ सयलपुरलोयं ॥
इय एवं वट्टंते कुमरो पिच्छइ सुरेहिं थुव्वंतं । गयणेणागच्छंतं मोहरिउं चारणमुणिंदं ॥२६०॥

---

ततो योजितकरयुगलेन जल्पितं तेन भीमकुमारस्य । तवासमविक्रमेण तुष्टोऽहं मार्गय तस्मात्किञ्चित् ॥२४६॥
कुमारेण ततो भणितं यदि तुष्टस्त्वमासि तदा कथय। कोऽसि त्वं किमिदं पत्तनं च कथमुद्वसं जातम् ? ॥
देवेन ततो भणितं शृणु भोः कुमार ! यत्त्वया पृष्टम् । कनकपुरं पुरमेतत् कनकरथो नामेह राजा ॥२४८॥
यो रक्षितस्त्वया सः, एतस्य पुरोहितोऽहं चण्डः । सर्वस्य जनस्योपरि रुष्टस्तिष्ठामि नित्यमपि ॥२४९॥
इतः सर्वेषामपि पुरजनानां जातोऽतीव द्वेष्योऽहम् । नो अत्र किमपि खलु मया मार्गमित्रमपि संजनितम्२९०
एषोऽपि नरवरेन्द्रः प्रकृत्या कर्णदुर्बल' क्रूरः । शङ्कयाप्यपराधस्य करोत्यतिदारुणं दण्डम् ॥२९१॥
अथान्यदा कदाचित्केनापि हि ममासहमानेन । अलीकं परिकथितमिदं यथा भ्रष्ट एष श्वपच्याम् ॥२९२॥
धैर्यं मार्गयन्नपि खलु ततोऽहमविचार्यैतेन । एतन्नान्यथा भवति कथमपि, एवं भणता ॥२५३॥
वेष्टयित्वा सिनेन सेचयित्वा प्रचुरतैलेन । ज्वालितो रसंस्ततः प्राणैः परित्यक्तः ॥२९४॥
भवितव्यतावशेन जातोऽहमकामनिर्जरयेह । नाम्ना सर्वगिल इति राक्षसः स्मृत्वा वैरम् ॥२९९॥
अत्रागत्य मया सर्वोऽपि तिरोहितः पौरलोकः । तथा विसदृशरूपधरेण नरवर एष संगृहीतः ॥२५६॥
करुणयाऽनन्यपौरुषप्रकर्षरत्नाकरेण तथा त्वया । मोचयतेमं चमत्कृतं मानसं मम ॥२९७॥
ततोऽदृश्येनैष समग्रोऽपि तवोपचारः । भक्त्या दिव्यशक्त्या विरचितो मज्जनादिकः ॥२९८॥
तवानुवृत्त्या तथैषोऽपि खलु प्रकटितो मया लोकः । तदा यावत्पश्यति कुमारस्तावत्पश्यति सकलपुरलोकम् ॥

बुद्धिमयरहरमंती जत्थ ठिओ आसि कुमरपरिमुक्को । तत्थ मुणिंदो पउमासणम्मि सुरविरइयम्मि ठिओ॥
ताहे कुमरवरेणं सव्वगिलो रक्खसो इमं भणिओ । हे रक्खसिंद ! एसो मज्झ गुरू आगओ तत्थ ॥२६२॥
एयस्स चरणजुयदंसणेण सहलीकरेमु अप्पाणं । इय भणिए रक्खेणं पयंपियं होउ एवंति ॥२६३॥
बुद्धिमयरहरमंती कणगरहो कुमरसव्वगिलपमुहा । सव्वेवि भत्तिमंता संपत्ता मुणिसयासम्मि ॥२६४॥
कणयकमलोवविट्ठो सुरनरखयरिंदसंथुणिज्जंतो । मोहरिऊ मुणिनाहो पणओ भत्तीए सव्वेहिं ॥२६५॥
अमयरसेणव सित्तेण तेण सव्वेण पुरजणेणावि । आगंतुं भत्तिभरेण पणमिओ तत्थ मुणिनाहो ॥२६६॥
तत्तो मुणिराएणं आढत्ता धम्मदेसणा तेसिं । जह कोहग्गहगहिओ जीवो परिभमइ भवगहणे ॥२६७॥
तथाहि;—
कोहपसत्तो जीवो पावाइं कुणइ विविहरूवाइं । वहबंधमारणाईणि निरयगइगमणजोग्गाइं ॥२६८॥
कोहाऊरियदेहो कज्जाकज्जं न पिच्छए किंपि । जुत्ताजुत्तं न मुणइ तहेव हेएयरं वत्थुं ॥२६९॥
चउप्पई ;—

जहिं उप्पज्जइ जलणु तं निच्छियं ता डहइ, पासट्ठिउं फुलिंगिहिं डहइ नवा डहइ ।
जसु पुणु कोहु सु अप्पउं अवरुवि जणु डहिउ, हाणि करेइ परत्तह जिणवरि इय कहिउ ॥२७०॥
रोसिण अब्भुक्खाणु जु वियरइ अवरजणि, सो तेणवि परिभवियइ डज्झइ अत्तुमणि ।
तो तं सो इह लोइवि वइरिउ भणि हणइ, आलि जु दिन्नइ पावु अयाणउ न तं गणइ ॥२७१॥

---

इत्येवं वर्तमाने कुमारः पश्यति सुरैः स्तूयमानम् । गगनेनागच्छन्तं मोहरिपुं चारणमुनीन्द्रम् ॥२६०॥
बुद्धिमकरगृहमन्त्री यत्र स्थित आसीत्कुमारपरिमुक्तः । तत्र मुनीन्द्रः पद्मासने सुरविरचिते स्थितः ॥२६१॥
तदा कुमारवरेण सर्वगिलो राक्षस इदं भणितः । हे राक्षसेन्द्र ! एष मम गुरुरागतस्तत्र ॥२६२॥
एतस्य चरणयुगदर्शनेन [1]सफलीकुर्म आत्मानम् । इति भणिते रक्षसा प्रजल्पितं भवत्वेवमिति ॥२६३॥
बुद्धिमकरगृहमन्त्री कनकरथः कुमारसर्वगिलप्रमुखाः । सर्वेऽपि भक्तिमन्तः संप्राप्ता मुनिसकाशे ॥२६४॥
कनककमलोपविष्टः सुरनरखचरेन्द्रसंस्तूयमानः । मोहरिपुर्मुनिनाथः प्रणतो भक्त्या सर्वैः ॥२६५॥
अमृतरसेनेव सिक्तेन तेन सर्वेण पुरजनेनापि । आगत्य भक्तिभरेण प्रणतस्तत्र मुनिनाथः ॥२६६॥
ततो मुनिराजेनारब्धा धर्मदेशना तेषाम् । यथा क्रोधग्रहगृहीतो जीवः परिभ्रमति भवगहने ॥२६७॥
क्रोधप्रसक्तो जीवः पापानि करोति विविधरूपाणि । वधबन्धमारणादीनि निरयगतिगमनयोग्यानि ॥२६८॥
क्रोधापूरितदेहः कार्याकार्यं न पश्यति किमपि । युक्तायुक्तं न जानाति तथैव हेयेतरं वस्तु ॥२६९॥
चतुष्पदी;—

यत्रोत्पद्यते ज्वलनस्तद् निश्चितं तावद्दहति, पार्श्वस्थितं स्फुलिङ्गैर्दहति नवा दहति ।
यस्य पुनः क्रोधः स आत्मानमपरमपि जनं दग्ध्वा, हानिं करोति परत्रापि जिनवरेणेति कथितम्॥२७०॥

---

१ ग. °रेह ।

रोसानलिण पलित्तु मुहुत्तिण डहइ नरु, नियधम्मह भंडारु सुसंठिउ जो सुचिरु। .
रोसपिसाइण गहिउ न भुंजइ न य सुयइ, अइवल्लह धणु माणुसु विणु दोसिण मुयइ ॥२७२॥
जइ कुंडलकेऊरकिरीडविहूसणविहूसिउ, विणयविहूणउ सोह न पावइ नरु कहवि।
तह पंडिउ दायारु तवस्सी जइ तहवि, न लहइ सुगइमग्गु सरोसिरु नरु कहवि ॥२७३॥
रोसाइट्ठो जीवो तं तं कज्जं कुणेइ मूढमणो। जेणज्जिणेइ पावं भवे भवे भमइ दुक्खत्तो ॥२७४॥
इय मुणिवयणं सोउं सव्वगिलो उट्ठिउं पणमिऊण। मुणिनाहं पइ जंपइ नियत्तिओ हं अकज्जाओ ॥२७५॥
पहुणा हेलाए च्चिय, अहवा न तए, इमेण कुमरेण। जेण तुहपायपंकयपणमणपउणो कओ एवं ॥२७६॥
कुमरपभावेणं चिय निग्गहिओ पुरजणे मए कोवो। कणगरहम्मि संपइ पुण नाह! तुहप्पभावेण ॥२७७॥
भणइ मुणी उवयारं नाउं तुह कोहपरिणई एवं। उवदंसिया मए, सो न अन्नहा मोहपयडीसु ॥२७८॥
अइभीमं मिच्छत्तं जं सम्मत्तेवि तप्पभावेण। अइयाराण पयारा हुंति दुरंता जियंताणं ॥२७९॥
परलोए दुक्खोहं दुक्खोहं तं जणंति पुण एए। जेणक्कंता जीवा लहु बहु मन्नंति मरणाइं ॥२८०॥
इय मुणिवयणं सोउं जा कुमरो भणइ नाह! एवमिणं। ता गडयडं कुणंतो समागओ गयवरो तत्थ ॥२८१॥
तो खुहिया सा परिसा मत्तगइंदस्स दंसणे सहसा। तं कुमरो धीरविउंवपुक्कारेइ करिरायं ॥२८२॥
तो सो संकोएउं करं करी तक्खणेण उवसंतो। तिपयाहिणं करेउं मुणिवइणो परिससहियस्स ॥२८३॥

---

रोषेणाभ्याख्यानं यो वितरत्यपरजने, स तेनापि परिभूयते दह्यते आत्ममनसि।
ततस्तं स इह लोकेऽपि वैरिणं भणित्वा हन्ति, आलि यदुदीर्यते पापमज्ञायको न तद्गणयति ॥२७१॥
रोषानलेन प्रदीप्तो मुहूर्तेन दहति नरो, निजधर्मस्य भाण्डागारं सुसंस्थितो यः सुचिरम्।
रोषपिशाचेन गृहीतो न भुङ्क्ते न स्वपिति, अतिवल्लभं धनं मनुष्यं विना दोषेण मुञ्चति ॥२७२॥
यथा कुण्डलकेयूरकिरीटविभूषितो, विनयविहीनः शोभां न प्राप्नोति नरः कथमपि।
तथा पण्डितो दाता तपस्वी यदि तथापि, न लभते सुगतिमार्गं सरोषो नरः कथमपि ॥२७३॥
रोषादिष्टो जीवस्तत्तत् कार्यं करोति मूढमनाः। येनार्जयति पापं भवे भवे भ्रमति दुःखार्तः ॥२७४॥
इति मुनिवचनं श्रुत्वा सर्वगिल उत्थाय प्रणम्य। मुनिनाथं प्रति जल्पति निवर्तितोऽहमकार्यात् ॥२७५॥
प्रभुणा हेलयैव, अथवा न त्वया, अनेन कुमारेण। येन त्वत्पादपङ्कजप्रणमनप्रगुणः कृत एवम् ॥२७६॥
कुमारप्रभावेणैव निगृहीतः पुरजने मया कोपः। कनकरथे संप्रति पुनर्नाथ! त्वत्प्रभावेण ॥२७७॥
भणति मुनिरुपकारं ज्ञात्वा तव क्रोधपरिणतिरेवम्। उपदर्शिता मया, स नान्यथा मोहप्रकृतिषु ॥२७८॥
अतिभीमं मिथ्यात्वं यत्सम्यक्त्वेऽपि तत्प्रभावेण। अतिचाराणां प्रकारा भवन्ति दुरन्ता जीवताम् ॥२७९॥
परलोके दुःक्षोभं दुःखौघं तं जनयन्ति पुनरेते। येनाक्रान्ता जीवा लघु बहु मन्यन्ते मरणानि ॥२८०॥
इति मुनिवचनं श्रुत्वा यावत्कुमारो भणति नाथ! एवमिदम्। तावद्गर्जारवं कुर्वन् समागतो गजवरस्तत्र ॥२८१॥
ततः क्षुब्धा सा परिषद् मत्तगजेन्द्रस्य दर्शने सहसा। तं कुमारो धीरयितुमिव पूत्कारयति करिराजम् ॥२८२॥

वंदइ भत्तीए मुणिं तत्तो संहरिय हत्थिणो रूवं । सो पच्चक्खो जक्खो जाओ चलकुंडलाहरणो ॥२८४॥
तत्तो सो मुणिवइणा भणिओ तं कुमरमणुसरेऊण । नियपडिपोत्तयमेयं समागओ गयवरो होउं ॥२८५॥
इइ आणीओ पुव्विं एसो कणगरहरायरक्खट्ठा । संपइ नियनयरं पइ नेउं एयं तुहुच्छाहो ॥२८६॥
तो जक्खेणं भणियं एवमिणं नाह! मज्झ एस निवो । कणगरहो पुव्वभवम्मि नत्तुओ आसि मह जेण ॥
किञ्च ।
विन्नवियव्वमियं पुण पुव्वं अंगीकएवि सम्मत्ते । पासंडियसंसग्गी अग्गीव निरग्गला लग्गा ॥२८८॥
मह मणभवणे तेणं दड्ढा सम्मत्तरयणवररिद्धी । हद्धी जाओऽणिद्धी वंतरजोणीए जक्खो हं ॥२८९॥
काउं पसायमिण्हिं आरोवह मज्झ नाह! सम्मत्तं । कणगरहरक्खसाईहिं भणियमम्हंपि इइ होउ ॥२९०॥
तो मुणिणा सम्मत्तं दिन्नं निवजक्खरक्खसाईणं । कुमरेण पुणो भणियं मज्झ विसोहिं पहु! पयच्छ ॥
जेण मए लहिऊणं कहवि कुलग्गेण नाह! सम्मत्तं । पासंडिकुसंगेणं पुणोवि विहियं सअइयारं ॥२९२॥
तप्पंकेणं मलिणं निम्मलपच्छित्तदाणसलिलेण । मज्झ मणं पक्खालसु मुणिणावि तहेव तं विहियं ॥२९३॥
तो निम्मलसम्मत्तो कुमरो मुणिपायवंदणं काउं । कणगरहरायभवणे रक्खसमाईहिं सह पत्तो ॥२९४॥
कणगरहोवि य राया अमच्चसामंतमंतिपरिकलिओ । पणमिय भणइ कुमारं सव्वमिणं तुम्ह माहप्पं॥२९५॥
जं जीविज्जइ जा रज्जसंपया जं च एस पुरलोओ । जं एयस्स य लच्छीविच्छड्डो जं च सम्मत्तं ॥२९६॥
तो एस जणो तुह कुमर! किंकरो जहरिहम्मि कज्जम्मि । तह वावारियव्वो अणुग्गहीओ जहा होइ ॥२९७॥

---

ततः स संकोच्य करं तत्क्षणेनोपशान्तः । त्रिः प्रदक्षिणां कृत्वा मुनिपतेः परिषत्सहितस्य ॥२८३॥
वन्दते भक्त्या मुनिं ततः संहृत्य हस्तिनो रूपम् । स प्रत्यक्षो यक्षो जातश्चलकुण्डलाभरणः ॥२८४॥
ततः स मुनिपतिना भणितस्त्वं कुमारमनुसृत्य । निजप्रतिपौत्रकमेतं समागतो गजवरो भूत्वा ॥२८५॥
इहानीतः पूर्वमेष कनकरथराजरक्षार्थम् । संप्रति निजनगरं प्रति नेतुमेतं तवोत्साहः ॥२८६॥
ततो यक्षेण भणितमेवमिदं नाथ! ममैष नृपः । कनकरथः पूर्वभवे नप्ताऽऽसीद् मम येन ॥२८७॥
विज्ञपयितव्यमिदं पुनः पूर्वमङ्गीकृतेऽपि सम्यक्त्वे । पाखण्डिसंसक्तिरग्निरिवार्गला लग्ना ॥२८८॥
मम मनोभवने, तेन दग्धा सम्यक्त्वरत्नवरर्द्धिः । हा धिग् जातोऽनृद्धिर्व्यन्तरयोनौ यक्षोऽहम् ॥२८९॥
कृत्वा प्रसादमिदानीमारोपय मम नाथ! सम्यक्त्वम् । कनकरथराक्षसादिभिर्भणितमस्माकमपीति भवतु॥२९०॥
ततो मुनिना सम्यक्त्वं दत्तं नृपयक्षराक्षसादीनाम् । कुमारेण पुनर्भणितं मम विशुद्धिं प्रभो! प्रयच्छ ॥२९१॥
येन मया लब्ध्वा कथमपि कुलग्ने नाथ! सम्यक्त्वम् । पाखण्डिकुसङ्गेन पुनरपि विहितं सातिचारम् ॥२९२॥
तत्पङ्केन मलिनं निर्मलप्रायश्चित्तदानसलिलेन । मम मनः प्रक्षालय मुनिनापि तथैव तद् विहितम् ॥२९३॥
ततो निर्मलसम्यक्त्वः कुमारो मुनिपादवन्दनं कृत्वा । कनकरथराजभवने राक्षसादिभिः सह प्राप्तः ॥२९४॥
कनकरथोऽपि च राजाऽमात्यसामन्तमन्त्रिपरिकलितः । प्रणम्य भणति कुमारं सर्वमिदं तव माहात्म्यम् ॥२९५॥
यज्जीव्यते या राज्यसंपद् यचैष पुरलोकः । यदेतस्य च लक्ष्मीविस्तरो यच्च सम्यक्त्वम् ॥२९६॥

कुमारः प्राह,—

जम्मणमरणाइं जहा अन्नोन्ननिबंधण भवगयाणं । तह संपयावयाओ, का गणणा अन्नहेउस्स ? ॥२९८॥
वावारो पुण एसो तुम्ह सुकुलुब्भवाण सव्वाण । न पमाओ कायव्वो जिणधम्मे सुट्ठुदुल्लंभे ॥२९९॥
सोयरत्तं साहम्मिएसु सेवा य साहुवग्गस्स । जिणसासणे पभावणमपवित्ती पावठाणेसु ॥३००॥
तुमए सया विहेया तो कुमरं ते भणंति थेवदिणे । इह चिट्ठह जिणधम्मे जेणम्ह पवीणया होइ ॥३०१॥
इय सोऊणं ताणं कुमरो जा किंपि देइ पडिवयणं । ता डमडमंतडमरयगुरुसद्दत्तसियनिवलोया ॥३०२॥
वीसभुया सा काली कावालियसजुया तहिं पत्ता । कुमरमभिवाइऊणं उवविट्ठा कुमरपासम्मि ॥३०३॥
भणइ य कुमार ! तइया आणिज्जंतस्स तुज्झ इह करिणा । ओहीए मए नायं जह एस हिओ कुमारस्स ॥
तो हं तह चेव ठिया निव्वुयहियया पयंपि नो चलिया । इण्हि पुण तुह जणओ जणणी सयणो पुरजणो य ॥
अणवरयं रयमाणो पुणो पुणो सुमरिऊण तुज्झ गुणे । कज्जवसेण गयाए तत्थ मए किंचि संठविओ ॥
विहिया य ताण पुरओ मए पइन्ना जहा दिणदुगंते । भीमकुमारो नियमा आणेयव्वो मए एत्थ॥३०७॥
कहियं च जहा कुमरेण ठाविओ बहुजणो जिणमयम्मि । मारिज्जंतोवि य रक्खिओ तहा बहू लोओ ॥
बुद्धिमयरहरसहिओ चिट्ठइ कुसलेण कणयपुरनयरे । ता परमहरिसठाणे खेयं मा कुणह तुम्भेवि ॥३०९॥
इय सुणिय उम्मुयमणो कुमरो किर कुणइ जाव पत्थाण । ताव पडुपडहभेरीभभाइरवो समुच्छलिओ ॥
गयणयले तत्तो पुण विमाणमालाण मज्झिमविमाणे । हारविराइयवच्छा कुंडलउल्लिहियगंडयला ॥३११॥

---

तत एव जनन्त्र कुमार ! किङ्करो यथार्हं कार्ये। तथा व्यापारयितव्योऽनुगृहीतो यथा भवति ॥२९७॥
*जन्ममरणे यथाऽन्योन्यनिबन्धन भवगतानाम्। तथा सुपदापदे, का गणनाऽन्यहेतोः ? ॥२९८॥*
व्यापार पुनरेष युष्माक सुकुलोद्भवाना सर्वेषाम्। न प्रमाद कर्तव्यो जिनधर्मे सुष्ठुदुर्लभे ॥२९९॥
सोदरत्व साधर्मिकेषु सेवा च साधुवर्गस्य । जिनशासने प्रभावनमप्रवृत्ति पापस्थानेषु ॥३००॥
युष्माभि सदा विधेया तत कुमारं ते भणन्ति स्तोकदिनानि। इह तिष्ठत जिनधर्मे येनास्माक प्रवीणता भवति॥
इति श्रुत्वा तेषा कुमारो यावत्किमपि ददाति प्रतिवचनम् । तावड्डमडमडमरुगुरुशब्दत्रस्तनृपलोका ॥३०२॥
विंशतिभुजा सा काली कापालिकसयुता तत्र प्राप्ता । कुमारमभिवाद्योपविष्टा कुमारपार्श्वे ॥३०३॥
भणति च कुमार ! तदाऽऽनीयमाने त्वयीह करिणा । अवधिना मया ज्ञात यथैष हित कुमारस्य ॥३०४॥
ततोऽहं तथैव स्थिता निर्वृतहृदया पदमपि नो चालिता। इदानीं पुनस्तव जनको जननी स्वजन पुरजनश्च ॥३०५॥
अनवरत रुदन् पुन पुन स्मृत्वा तव गुणान् । कार्यवशेन गतया तत्र मया किञ्चित्सस्थापित ॥३०६॥
विहिता च तेषा पुरतो मया प्रतिज्ञा यथा दिनद्वयान्ते । भीमकुमारो नियमादानेतव्यो मयात्र ॥३०७॥
कथित च यथा कुमारेण स्थापितो बहुजनो जिनमते । मार्यमाणोऽपि च रक्षितस्तथा बहुर्लोक ॥३०८॥
बुद्धिमकरगृहसहितस्तिष्ठति कुशलेन कनकपुरनगरे । तस्मात्परमहर्षस्थाने खेद मा कुरुत यूयमपि ॥३०९॥
इति श्रुत्वोत्सुकमना कुमार किल करोति यावत्प्रस्थानम् । तावत्पटुपटहभेरीभम्भादिरव समुच्छलित ॥

दिट्ठा य संनिसन्ना देवी दसदिसिपणासियतमोहा। तो संभंतो किमियंति जंपिरो उट्ठिओ रक्खो॥३१२॥
जक्खोवि गडयडंतो करे करेऊण मोग्गरं गरुयं। उट्ठेइ कालियावि हु करकड्ढियकत्तियकराला॥३१३॥
कुमरो य असंभंतो जा चिट्ठइ ताव गरुयसद्देहिं। जय जीव नंद नंदण हरिवाहणनिवइणो कुमर!॥३१४॥
इय भणमाणा देवा देवीओ समागया कुमरपासं। साहिंति जक्खिणीए कमलक्खाए समागमणं॥३१५॥
तत्तो सावि खणेणं मुत्तु विमाणं कुमारचरणजुगं। नमिऊणं उवविट्ठा कुमरं विन्नवइ वयकुसला॥३१६॥
सम्मत्तं मह दाउं विंझगिरिगुहाए मुणिसगासम्मि। तइया तुमं महायस! ठिओ सि पत्ता पभायम्मि॥
तत्थाहं सह नियपरियणेण, सफलीकओ मए जम्मो। मुणिपायवंदणेणं तुम्ह पसाएण भत्तीए॥३१८॥
दिट्ठा न तत्थ तुब्भे पुट्ठा मुणिणो न दिंति पडिवयणं। तो आउलचित्ताए दाउं अवहीए उवओगं॥
कारिज्जंता मज्जणविहिमिह दिट्ठा तओ सउक्कंठा। चलिया खलिया कालं कियंतमवि गरुयकज्जेण॥
अह जक्खेण विमाणं विउव्वेऊण पभणिओ कुमरो। आरुहह जओ सिग्घं गंतव्वं कमलपुरनयरे॥३२१॥
तो उट्ठिओ कुमारो संबोहेऊण कणगरहरायं। आरूढो सुविमाणे संजुत्तो मंतिपुत्तेण॥३२२॥
गच्छंतस्स य देवा गायंता केवि केवि नच्चंता। गयगज्जि हयहिंसं च तप्पुरओ केवि कुव्वंता॥३२३॥
फलयलतूररवेण य बहिरिंता सयलनहयलाभोयं। कुमरेणं सह पत्ता कमलपुरासन्नगामम्मि॥३२४॥
तो कुमरो जिणभवणे गओ तओ जक्खरक्खसाईहिं। सह वंदिउं जिणिंदं दावइ स महत्थमित्तो य॥

---

गगनतले ततः पुनर्विमानमालानां मध्यमविमाने। हारविराजितवक्षाः कुण्डलोल्लिखितगण्डतला॥३११॥
दृष्टा च संनिषण्णा देवी दशदिक्प्रणाशिततमओघा। ततः संभ्रान्तः किमिदमिति जल्पिरुत्थितं रक्षः॥३१२॥
यक्षोऽपि जागर्जत् करे कृत्वा मुद्गरं गुरुम्। उत्तिष्ठति कालिकापि खलु करकृष्टकर्तरीकराला॥३१३॥
कुमारश्चासंभ्रान्तो यावत्तिष्ठति तावद् गुरुशब्दैः। जय जीव नन्द नन्दन! हरिवाहननृपतेः कुमार!॥३१४॥
इति भणन्तो देवा देव्यः समागताः कुमारपार्श्वम्। कथयन्ति यक्षिण्याः कमलाक्षायाः समागमनम्॥३१५॥
ततः सापि क्षणेन मुक्त्वा विमानं कुमारचरणयुगम्। नत्वोपविष्टा कुमारं विज्ञपयति वचःकुशला॥३१६॥
सम्यक्त्वं मम दत्त्वा विन्ध्यगिरिगुहायां मुनिसकाशे। तदा त्वं महायशः! स्थितोऽसि प्राप्ता प्रभाते॥३१७॥
तत्राहं सह निजपरिजनेन, सफलीकृतं मया जन्म। मुनिपादवन्दनेन तव प्रसादेन भक्त्या॥३१८॥
दृष्टा न तत्र यूयं पृष्टा मुनयो न ददति प्रतिवचनम्। तत आकुलचित्तया दत्त्वाऽवधेरुपयोगम्॥३१९॥
कार्यमाणा मज्जनविधिमिह दृष्टास्ततः सोत्कण्ठा। चलिता स्खलिता कालं कियन्तमपि गुरुकार्येण॥३२०॥
अथ यक्षेण विमानं विकृत्य प्रभणितः कुमारः। आरोहत यतः शीघ्रं गन्तव्यं कमलपुरनगरे॥३२१॥
तत उत्थितः कुमारः संबोध्य कनकरथराजम्। आरूढः सुविमाने संयुक्तो मन्त्रिपुत्रेण॥३२२॥
गच्छतश्च देवा गायन्तः केऽपि केऽपि नृत्यन्तः। गजगर्जि हयहेषां च तत्पुरतः केऽपि कुर्वन्तः॥३२३॥
फलत्तूररवेण च बधिरयन्तः सकलनभस्तलाभोगम्। कुमारेण सह प्राप्ताः कमलपुरासन्नग्रामे॥३२४॥
ततः कुमारो जिनभवने गतस्ततो यक्षराक्षसादिभिः। सह वन्दित्वा जिनेन्द्रं दापयति स महार्थमितश्च॥

ढकाडक्कहुडुकाघुकासंबुककरडिपभिईणं । आउज्जाणमतुच्छो उच्छलिओ गहिरनिग्घोसो ॥३२६॥
कमलपुरे अत्थाणाट्ठिएण आयन्निओ नरिंदेण । सो ससुरासुरमंथिज्जमाणजलरासिरवगहिरो ॥३२७॥
तो राया मंतियणं पुच्छइ किं अज्ज कस्सवि मुणिस्स । उप्पन्नं वरनाणं जं सुव्वइ अमरतूररवो॥३२८॥
जा मंतियणो ईहापोहं काऊण किंपि किल कहिही । तग्गामभोइएणं राया वद्धाविओ ताव ॥३२९॥
देव ! कुमारो पत्तो मह गामे देवदेविपरियरिओ । जिणभवणे पारद्धो महूसवो तेहिं रमणिज्जो ॥३३०॥
तो सव्वं आभरणं नियंगलग्गं किरीडपरिहीणं । दाउं तस्साइट्ठो पडिहारो भणसु सव्वंपि ॥३३१॥
सामंताईलोयं जेणं संवहइ कुमरपच्चोणी । कायव्वा पच्चूसे तहेव तेणावि तं विहियं ॥३३२॥
कारविय हट्टसोहं सपरियणो नरपई गओ समुहं । आगच्छंतो कुमरो मिलिओ मग्गम्मि नरवइणो ३३३
उत्तरिय विमाणाओ पाए पणमेइ पुहइनाहस्स । जणणीपमुहजणस्स य अन्नाणवि काउं करणिज्जं ३३४
नियपिउआएसेणं आरूढो करिवरम्मि तो कुमरो । मंतिसुएणवि विहियं उचियं सव्वस्स लोयस्स ३३५
पच्छासणम्मि करिणो अह सो आरोविओ कुमारेण । पत्तो पिउणा सद्धिं धवलहरे मंगलसएहिं ॥३३६॥
भुत्तुत्तरम्मि परिपुच्छिएण कुमरस्स साहियं चरियं । जं जह वत्तं तं तह नरवइणो मंतितणएण ॥३३७॥
परिणाविओ य बहुया बहुआ कुमरो नियम्मि रज्जम्मि । अह सित्तो य निवेणं गहिया य सयं तु जिणदिक्खा ॥
भीमनरिंदो जाओ जिणसासणउन्नइं करेऊण । संपावियपव्वज्जो पत्तो पयमुत्तमुत्तमयं ॥३३९॥
इय थेवोवि हु संगो पासंडीणं इहेव दुक्खकरो । अविहियपच्छित्तो उण नरयाइसु देइ दुहजालं ॥३४०॥

---

ढक्काडक्कहुडुक्काबुक्कासंबुक्ककरटिप्रभृतीनाम् । आतोद्यानामतुच्छ उच्छलितो गभीरनिर्घोषः ॥३२६॥
कमलपुरे आस्थानस्थितेनाकर्णितो नरेन्द्रेण । स ससुरासुरमथ्यमानजलराशिरवगभीरः ॥३२७॥
ततो राजा मन्त्रिजनं पृच्छति किमद्य कस्यापि मुनेः । उत्पन्नं वरज्ञानं यत् श्रूयतेऽमरतूररवः ॥३२८॥
यावद् मन्त्रिजन ईहापोहं कृत्वा किमपि किल कथयिष्यति । तद्ग्रामभोगिकेण राजा वर्धितस्तावत् ॥३२९॥
देव ! कुमारः प्राप्तो मम ग्रामे देवदेवीपरिकरितः । जिनभवने प्रारब्धो महोत्सवस्तै रमणीयः ॥३३०॥
ततः सर्वमाभरणं निजाङ्गलग्नं किरीटपरिहीणम् । दत्त्वा तस्मा आदिष्टः प्रतिहारो भण सर्वमपि ॥३३१॥
सामन्तादिलोकं येन संवहति कुमारप्रतिगमनम् । कर्तव्यं प्रत्यूषे तथैव तेनापि तद् विहितम् ॥३३२॥
कारयित्वा हट्टशोभां सपरिजनो नरपतिर्गतः संमुखम् । आगच्छन् कुमारो मिलितो मार्गे नरपतेः ॥३३३॥
उत्तीर्य विमानात् पादौ प्रणमति पृथिवीनाथस्य । जननीप्रमुखजनस्य चान्येषामपि कृत्वा करणीयम्॥३३४॥
निजपित्रादेशेनारूढः करिवरे ततः कुमारः । मन्त्रिसुतेनापि विहितमुचितं सर्वस्य लोकस्य ॥३३५॥
पश्चादासने करिणोऽथ स आरोपितः कुमारेण । प्राप्तः पित्रा सार्धं धवलगृहे मङ्गलशतैः ॥३३६॥
भुक्तोत्तरं परिपृष्टेन कुमारस्य कथितं चरितम् । यद् यथा वृत्तं तत्तथा नरपतये मन्त्रितनयेन ॥३३७॥
परिणायितश्च बह्वीर्वधूः कुमारो निजे राज्ये । अथ सिक्तश्च नृपेण गृहीता च स्वयं तु जिनदीक्षा ॥३३८॥
भीमनरेन्द्रो जातो जिनशासनोन्नतिं कृत्वा । संप्राप्तप्रव्रज्यः प्राप्तः पदमुत्तमोत्तमम् ॥३३९॥

भीमकुमरेण पत्तं दुक्खं पासंडिसंथवोत्थं तं । जं पुण सुहमणुहूयं सम्मत्तफलं ति तं मुणह ॥३४१॥

॥ इति पाखण्डिसंस्तवे भीमकुमारोदाहरणं समाप्तम् ॥

---

इति स्तोकोऽपि खलु सङ्गः पाखण्डिनामिहैव दुःखकरः। अविहितप्रायश्चित्तः पुनर्नरकादिषु ददाति दुःखजालम्॥
भीमकुमारेण प्राप्तं दुःखं पाखण्डिसंस्तवोत्थं तत्। यत्पुनः सुखमनुभूतं सम्यक्त्वफलमिति तज्जानीत॥३४१॥



पासंडियप्पसंसा पोसइ पावं जणेइ संतावं । जह मंतितिलयमंतिस्स सव्वहा चयह ता एयं ॥१॥
तथाहि;—

सप्पुरिसजम्मभूमी सययपवट्टंतधम्मसामग्गि । विजयंव सुप्पसिद्धं विजयपुरं पुरवरं, तत्थ ॥२॥
दुव्वारवेरिविहुहिययदारुदावानलो नलो नाम। सज्जभुयवज्जपंजरनियलियसिरिसारिओ राया ॥३॥
वणराइव्व विरायइ जस्स सरीरे सयावि वरराई । सच्छाया दंतवणोवसोहिया सउणसेवणिया ॥४॥
गंभीरमणमहोयहिमहल्लिरुल्लाससयलससिमुत्ती । तस्सत्थि पिया सोहग्गमंजरी पेमकुलभवणं ॥५॥
कयदुट्ठलोयविलओ जणमणतुलओ सुबुद्धिवरनिलओ । नामेण मंतितिलओ मंती नयतिलयतरुमलओ ॥
निरवज्जकज्जजहवड्ढठवियसामप्पमुक्खनीइपहो । सो चेव तस्स रज्जे कयप्पमाणो य सव्वत्थ ॥७॥
अह अन्नया कयाई राया आहेडयम्मि संचलिओ । तुरयारूढो मंतीवि पत्थिओ सह नरिंदेण ॥८॥
ता जाव गया रन्ने सिन्नं सव्वंपि पसरियं तत्थ । मंतितिलएण सद्धिं राया मज्झेण रन्नस्स ॥९॥
जा गच्छइ ता पिच्छइ एक्कं हरिणं सुदीहदढसिंगं । आरोविऊण चावं हणिही तं जाव बाणेण ॥१०॥
ता हरिणो भणइ इमं जुज्जइ खत्तस्स तुज्झ किं एयं । वसणासत्तो मुंचसि मइ जं एवं तुमं बाणं ? ॥
नो खत्तसद्दअत्थं परियाणसि जं खयाउ तायंति । सयलंपि जणं तह खत्तिया य ते चेव वुच्चंति ॥१२॥
जे उभयकुलविसुद्धा खत्तियकुलकेउणो महासत्ता । अवहत्थियरिउस्सवि पहरंति न, जे पुणो मूढा ॥
वज्जियअवराहाणं वराहहरिणाइयाण पहरंता । गयपहरणाण पावा दूरे ते खत्तियत्तस्स ॥१४॥

---

पाखण्डिप्रशंसा पुष्णाति पापं जनयति संतापम् । यथा मन्त्रितिलकमन्त्रिणः सर्वथा त्यजत तस्मादेताम् ॥१॥
सत्पुरुषजन्मभूमिः सततप्रवर्तमानधर्मसामग्रि । विजयमिव सुप्रसिद्धं विजयपुरं पुरवरं, तत्र ॥२॥
दुर्वारवैरिवधूहृदयदारुदावानलो नलो नाम । सज्जभुजवज्रपञ्जरनिगडितश्रीशारिको राजा ॥३॥
वनराजीव विराजति यस्य शरीरे सदापि वरराजी । सच्छाया दन्तवनोपशोभितासगुण(शकुन)सेवनीया ॥४॥
गम्भीरमनोमहोदधिमहोल्लाससकलशशिमूर्तिः । तस्यास्ति प्रिया सौभाग्यमञ्जरी प्रेमकुलभवनम् ॥५॥
कृतदुष्टलोकविलयो जनमनस्तोलकः सुबुद्धिवरनिलयः । नाम्ना मन्त्रितिलको मन्त्री नयतिलकतरुमलयः ॥
निरवद्यकार्ययथावृद्धस्थापितसामप्रमुखनीतिपथः । स एव तस्य राज्ये कृतप्रमाणश्च सर्वत्र ॥७॥
अथान्यदा कदाचिद् राजाऽऽखेटके संचलितः । तुरगारूढो मन्त्र्यपि प्रस्थितः सह नरेन्द्रेण ॥८॥
तौ यावद् गतावरण्ये सैन्यं सर्वमपि प्रसृतं तत्र । मन्त्रितिलकेन सार्धं राजा मध्येनारण्यस्य ॥९॥
यावद् गच्छति तावत्पश्यत्येकं हरिणं दीर्घदृढशृङ्गम् । आरोप्य चापं हनिष्यति तं यावद् बाणेन ॥१०॥
तावद् हरिणो भणतीदं युज्यते क्षत्रस्य तव किमेतत् । व्यसनासक्तो मुञ्चसि मयि यदेवं त्वं बाणम् ? ॥११॥
नो क्षत्रशब्दार्थं परिजानासि यत् क्षतात् त्रायन्ते । सकलमपि जनं तथा क्षत्रियाश्च त एवोच्यन्ते ॥१२॥
य उभयकुलविशुद्धाः क्षत्रियकुलकेतवो महासत्त्वाः । अपहस्तितरिपोरपि प्रहरन्ति न, ये पुनर्मूढाः ॥१३॥
वर्जितापराधानां वराहहरिणादिकानां प्रहरन्तः । गतप्रहरणानां पापा दूरे ते क्षत्रियत्वस्य ॥१४॥

माणुसम्मिवि दारिद्दवाहिदोहग्गदुक्खसंतत्तो । विसयासानडिओ अणुवलद्धविसओ गमइ कालं ॥२९॥
अह कहवि लहइ विसए तस्सेवाए विवड्ढए अहियं। विसयहिलासो, तित्ती य नेय, तेसिं असंपत्ती॥३०॥
होइ कयाइ अवस्सं तो सुमरंतो निसेविए पुव्विं । अरईइ तीइ घिप्पइ जीइ न निद्दंपि पावेइ ॥३१॥
देवत्तेवि महड्ढियइड्ढीईसा दुणेइ इयरेवि । अभियोगियकिव्विसिया पुण भंडं चेव दुक्खाण ॥३२॥
तथा च ते शोचन्ति;—
एगगुरुणो सयासे तवमणुचिन्नं मए इमेणावि । इद्धी ! मज्झ पमाओ फलिओ एयस्स अपमाओ ॥३३॥
तथा;—
देवत्तणि तुल्लेवि परु जं आणवइ सरोसु । किं किज्जइ तसु वइरियह धम्मपमायह दोसु ॥३४॥
तिरियनरसुरभवेसुं विसयासेवाए जो सुहाभासो । सोवि अपत्थं पच्छा दितो गुरुदुक्खदंदोलिं ॥३५॥
एवं च निरंतरदुहपरंपरापरिगयम्मि संसारे । जिणदेसिए कयंते भणियमणुट्ठह भवकयंते ॥३६॥
भणइ निवो एवमिणं किंतु विसेसेण कारणं तुम्ह । वेरग्गे जं जायं तं साहह, तो मुणी कहइ ॥३७॥
अत्थि नयरं पसिद्धं सिद्धपुरं नाम तत्थ नरनाहो। नामेण भुवणसारो भज्जा तस्सत्थि कणयसिरी ॥
अवितहअभिहाणो तस्स अत्थि मइसागरोत्ति वरमंती । दाहिणदेसाओ अहन्नयागओ तत्थ समुदाओ॥
गंधव्वियआउज्जियनच्चणिमाईण तस्स अत्थाणे । पडिहारसूइओ तेण काउं पेक्खणयमारद्धं ॥४०॥
अपुव्वपेक्खणेक्खणहेउं कंचुइमुहेण नरनाहो । अंतेउरेण विन्नविओ तयं तेणणुन्नायं ॥४१॥

---

तिर्यक्त्वेऽपि वाहनदहनाङ्कनकर्णकर्तनादीनि । अनुभवति विविधदुःखानि क्षुत्पिपासापरिश्रान्तः ॥२८॥
मानुष्येऽपि दारिद्र्यव्याधिदौर्भाग्यदुःखसंततः । विषयाशानटितोऽनुपलब्धविषयो गमयति कालम् ॥२९॥
अथ कथमपि लभते विषयांस्तत्सेवया विवर्धतेऽधिकम् । विषयाभिलाषः, तृप्तिश्च नैव, तेषामसंप्राप्तिः ॥३०॥
भवति कदाचिदवश्यं ततः स्मरन्निषेवितान् पूर्वम् । अरत्या तया गृह्यते यया न निद्रामपि प्राप्नोति ॥३१॥
देवत्वेऽपि महर्द्धिकर्द्धीर्ष्या दुनोतीतरेऽपि । अभियोगिककिल्विषिकाः पुनर्भाण्डमेव दुःखानाम् ॥३२॥
एकगुरोः सकाशे तपोऽनुचीर्णं मयाऽनेनापि । हा धिग् ! मम प्रमादः फलित एतस्याप्रमादः ॥३३॥
देवत्वे तुल्येऽपि परो यदाज्ञापयति सरोषः । किं क्रियते तस्य वैरिणो धर्मप्रमादो दोषः ॥३४॥
तिर्यग्नरसुरभवेषु विषयासेवायां यः सुखाभासः । सोऽप्यपथ्यं पश्चाद् ददद् गुरुदुःखद्वन्द्वालीम् ॥३५॥
एवं च निरन्तरदुःखपरम्परापरिगते संसारे । जिनदेशिते कृतान्ते भणितमनुतिष्ठत भवकृतान्ते ॥३६॥
भणति नृप एवमिदं किन्तु विशेषेण कारणं युष्माकम् । वैराग्ये यज्जातं तत्कथयत, ततो मुनिः कथयति ॥
अस्ति नगरं प्रसिद्धं सिद्धपुरं नाम तत्र नरनाथः । नाम्ना भुवनसारो भार्या तस्यास्ति कनकश्रीः ॥३८॥
अवितथाभिधानस्तस्यास्ति मतिसागर इति वरमन्त्री । दक्षिणदेशादथान्यदाऽऽगतस्तत्र समुदायः ॥३९॥
गान्धर्विकातोद्यिकनर्तन्यादीनां तस्यास्थाने । प्रतिहारसूचितस्तेन कर्तुं प्रेक्षणकमारब्धम् ॥४०॥
अपूर्वप्रेक्षणेक्षणहेतोः कञ्चुकिमुखेन नरनाथः । अन्तःपुरेण विज्ञपितस्तत् तेनानुज्ञातम् ॥४१॥

किं चुक्का भंडारे किं तुह अंतेउरे पुरे सिविरे ? । गयसरणे हणसि जहा तहेव धी खत्तियत्तं ते ॥१५॥
तया चाह;—
हरिण चरंति वणंतरि हि अविदियपरसंताव । ताहिवि कह वाहंति कर सज्जण ! सरलसहाव ॥१६॥
इच्चाइ निसुणिऊणं रायामच्चं भणेइ अच्छेरं । जं पसुणोवि हु जंपंति निब्भया माणुसगिराए ॥१७॥
मंतितिलएण भणियं देव ! इमो दाणवो व देवो वा । केणावि कारणेणं कयमिगवेसो समोइन्नो ॥१८॥
ता गच्छ तुरियं तुरियं तुरयं मा खंच मुंच मुक्कलयं । पिच्छह किं कुणइ इमोत्ति तो निवो तह समायरइ ॥
उच्चुच्चझंपयाहिं गच्छइ हरिणोवि पिट्ठओ राया । ता जाव मज्झ भागे वणस्स ता पिच्छए तत्थ ॥२०॥
उत्ततकणयवन्नं पलंबबाहुं सुदंसणं सोमं । कंदप्पंपि अदप्पं कुणमाणं देहसोहाए ॥२१॥
मुणिमेगं एगंते निरुद्धवयणं विमुक्कतणुचिट्ठं । नासग्गनिसियदिट्ठिं झायंतं किंपि परमत्थं ॥२२॥
ता हरिणेणं भणिया वंदह भो भो इमं महाभागं । मुणिमवयरिउं तुरियं तुरयाओ तो निवामच्चा ॥२३॥
वंदंति भत्तिमंता सोवि हु तेसिं पयच्छइ अणुच्छं । वरधम्मलाभवयणं जणणं सिवसुक्खलाभस्स ॥२४॥
उवविट्ठा धरणीए जा ते तो तत्थ सिन्नमणुपत्तं । मुणिणावि समारद्धा तेसिं सदेसणा एवं ॥२५॥
तयाहि;—
जीवो अणाइपइखणवज्झंतुदयंतकम्मसंताणो । परिभमइ दुहसयावत्तदुग्गमे भवसमुद्दम्मि ॥२६॥
तत्थ तसेयरजीवाण दुक्खमुप्पाइऊण नरयम्मि । अणुहवइ विविहसत्थाभिघायसंजणियवियणाओ ॥२७॥
तिरियत्तणेवि वाहणडहणंकणकन्नकप्पणाईणि । अणुहवइ विविहदुक्खाइं खुप्पिवासापरिस्संतो ॥२८॥

---

किं भ्रष्टा भाण्डागारे किं तवान्तःपुरे पुरे शिविरे ? । गतशरणान् हंसि यथा तथैव धिक् क्षत्रियत्वं ते ॥१५॥
हरिणाश्चरन्ति वनान्तरे हि अविदितपरसंतापाः । तथापि कथं वाध्यन्ते कुरु सज्जन ! सरलस्वभावम् ॥१६॥
इत्यादि श्रुत्वा राजामात्यं भणत्याश्चर्यम् । यत् पशवोऽपि खलु जल्पन्ति निर्भया मनुष्यगिरा ॥१७॥
मन्त्रितिलकेन भणितं देव ! अयं दानवो वा देवो वा । केनापि कारणेन कृतमृगवेषः समवतीर्णः ॥१८॥
तस्माद् गच्छ त्वरितं त्वरितं तुरगं मा कर्ष मुञ्च स्वतन्त्रम् । पश्य किं करोत्ययमिति ततो नृपस्तथा समाचरति ॥
उच्चोच्चझम्पाभिर्गच्छति हरिणोऽपि पृष्ठतो राजा । तावद्यावन्मध्यभागे वनस्य तदा पश्यति तत्र ॥२०॥
उत्तप्तकनकवर्णं प्रलम्बबाहुं सुदर्शनं सोमम् । कन्दर्पमप्यदर्पं कुर्वाणं देहशोभया ॥२१॥
मुनिमेकमेकान्ते निरुद्धवचनं विमुक्ततनुचेष्टम् । नासाग्रन्यस्तदृष्टिं ध्यायन्तं किमपि परमार्थम् ॥२२॥
तदा हरिणेन भणितौ वन्देथां भो भो इमं महाभागम् । मुनिमवतीर्य त्वरितं तुरगात् ततो नृपामात्यौ ॥२३॥
वन्देते भक्तिमन्तौ सोऽपि खलु तयोः प्रयच्छत्यतुच्छम् । वरधर्मलाभवचनं जननं शिवसौख्यलाभस्य ॥२४॥
उपविष्टौ धरण्यां यावत्तौ तावत्तत्र सैन्यमनुप्राप्तम् । मुनिनापि समारब्धा तेषां सद्देशनैवम् ॥२५॥
जीवोऽनादिप्रतिक्षणबध्यमानोदयत्कर्मसंतानः । परिभ्रमति दुःखशतावर्तदुर्गमे भवसमुद्रे ॥२६॥
तत्र त्रसेतरजीवानां दुःखमुत्पाद्य नरके । अनुभवति विविधशस्त्राभिघातसंजनितवेदनाः ॥२७॥

माणुस्सम्मिवि दारिद्दवाहिदोहग्गदुक्खसंतत्तो । विसयासानडिओ अणुवलद्धविसओ गमइ काल ॥२९॥
अह कहवि लहइ विसए तस्सेवाए विवड्ढए अहियं। विसयहिलासो, तित्ती य नेय, तेसिं असंपत्ती॥३०॥
होइ कयाइ अवस्सं तो सुमरंतो निसेविए पुव्विं । अरईइ तीइ घिप्पइ जीइ न निद्दंपि पावेइ ॥३१॥
देवत्तेवि महड्ढियइड्ढीईसा दुणेइ इयरंवि । अभियोगियकिव्विसिया पुण भंडं चेव दुक्खाण ॥३२॥
तथा च ते शोचन्ति,—
एगगुरुणो सयासे तवमणुचिन्नं मए इमेणावि । हद्धी ! मज्झ पमाओ फलिओ एयस्स अपमाओ॥३३॥
तथा;—
देवत्तणि तुल्लेवि परु जं आणवइ सरोसु । किं किज्जइ तसु वइरियह धम्मपमायह दोसु ॥३४॥
तिरियनरसुरभवेसुं विसयासेवाए जो सुहाभासो । सोवि अपत्थं पच्छा दिंतो गुरुदुक्खदंदोलिं॥३५॥
एवं च निरंतरदुहपरंपरापरिगयम्मि संसारे । जिणदेसिए कयंते भणियमणुट्ठह भवकयंते ॥३६॥
भणइ निवो एवमिणं किंतु विसेसेण कारणं तुम्ह । वेरग्गे जं जायं त साहह, तो मुणी कहइ ॥३७॥
अत्थि नयरं पसिद्धं सिद्धपुरं नाम तत्थ नरनाहो। नामेण भुवणसारो भज्जा तस्सत्थि कणयसिरी ॥
अवितहअभिहाणो तस्स अत्थि मइसागरोत्ति वरमंती । दाहिणदेसाओ अहन्नयाओ तत्थ समुदाओ॥
गंधव्वियआउज्जियनच्चणिमाईण तस्स अत्थाणे । पडिहारसूइओ तेण काउ पेक्खणयमारद्धं ॥४०॥
अपुव्वपेक्खणेक्खणहेउं कंचुइमुहेण नरनाहो । अंतेउरेण विन्नाविओ तयं तेणणुन्नायं ॥४१॥

---

तिर्यक्त्वेऽपि वाहनदहनाङ्कनकर्णकर्तनादीनि । अनुभवति विविधदुःखानि क्षुत्पिपासापरिश्रान्तः ॥२८॥
मानुष्येऽपि दारिद्र्यव्याधिदौर्भाग्यदुःखसंतप्तः । विषयाशानटितोऽनुपलब्धविषयो गमयति कालम् ॥२९॥
अथ कथमपि लभते विषयास्तत्सेवया विवर्धतेऽधिकम् । विषयाभिलाषः, तृप्तिश्च नैव, तेषामसंप्राप्तिः ॥३०॥
भवति कदाचिदवश्यं ततः स्मरन्निषेवितान् पूर्वम् । अरत्या तया गृह्यते यया न निद्रामपि प्राप्नोति ॥३१॥
देवत्वेऽपि महर्द्धिकर्द्धीर्ष्या दुनोतीतरेऽपि । अभियोगिककिल्बिषिकाः पुनर्भाण्डमेव दुःखानाम् ॥३२॥
एकगुरोः सकाशे तपोऽनुचीर्णं मयाऽनेनापि । हा धिग् ! मम प्रमादः फलित एतस्याप्रमादः ॥३३॥
देवत्वे तुल्येऽपि परो यदाज्ञापयति सरोषः । किं क्रियते तस्य वैरिणो धर्मप्रमादो दोषः ॥३४॥
तिर्यग्नरसुरभवेषु विषयासेवाया यः सुखाभासः । सोऽप्यपथ्यं पश्चाद् ददद् गुरुदुःखद्वन्द्वालीम् ॥३५॥
एवं च निरन्तरदुःखपरम्परापरिगते संसारे । जिनदेशिते कृतान्ते भणितमनुतिष्ठत भवकृतान्ते ॥३६॥
भणति नृप एवमिदं किन्तु विशेषेण कारणं युष्माकम् । वैराग्ये यज्जातं तत्कथयत, ततो मुनिः कथयति ॥
अस्ति नगरं प्रसिद्धं सिद्धपुरं नाम तत्र नरनाथः । नाम्ना भुवनसारो भार्या तस्यास्ति कनकश्री ॥३८॥
अवितथाभिधानस्तस्यास्ति मतिसागर इति वरमन्त्री । दक्षिणदेशादथान्यदाऽऽगतस्तत्र समुदायः ॥३९॥
गान्धर्विकातोदिकनर्तन्यादीनां तस्यास्थाने । प्रतिहारसूचितस्तेन कर्तुं प्रेक्षणकमारब्धम् ॥४०॥
अपूर्वप्रेक्षणेक्षणहेतोः कञ्चुकिमुखेन नरनाथः । अन्तःपुरेण विज्ञपितस्तत् तेनानुज्ञातम् ॥४१॥

तो जवणियछिड्डेहिं पिच्छइ अंतेउरंपि पिच्छणयं । वारविलासिणिसत्थो अत्थाणत्थो पुणो नियइ॥४२॥
तथाहि,--
सुरसुंदरिसमरूवाहिं लडहलीलाविलासकलियाहिं । नाणापगारलंकारफारसिंगारसाराहिं ॥४३॥
कसिणघणकुंतलुप्पीलकलियधम्मिल्लकुसुमदामाहिं । मयणाहिपरिमलुग्गारगारवग्घवियसोहाहिं ॥४४॥
मइरामयमउलावियपहोलिरायंबलोयणिल्लाहिं । अविरलपयट्टघणसेयबिंदुदंतुरियभालाहिं ॥४५॥
वारविलयाहिं राया संवाहिज्जंतललियकमकमलो । वीइज्जंतो अवराहिं नरवरो चामरकराहिं ॥४६॥
उवविट्ठो अत्थाणे जा चिट्ठइ पेक्खणम्मि अक्खित्तो । ता सहसा पडिहारो समागओ कुणइ विन्नत्तिं ॥
देव ! दुवारे चिट्ठइ अट्ठंगनिमित्तजाणओ वडुओ । पुत्थियहत्थो सियनिवसणो य पहुदंसणासाए॥४८॥
को आएसो मुच्चइ, मा मुंचसु तुज्झ तस्स कोऽवसरो । देवाण दुल्लहम्मिवि अतुच्छपिच्छणयछणकाले ?॥
मइसागरसचिवेणं तो विन्नत्तो निवो इमं झत्ति । देव ! पसायं काउं मिल्लावसु बंभणं एयं ॥५०॥
अट्ठंगनिमित्तधरो धराए नहु कोवि दीसए पायं । पेच्छणयं पुण दीसइ दिणे दिणे तुह पसाएण॥५१॥
तो भणियं नरवइणा मुंचसु पडिहार ! बंभणं एयं । आएसोत्ति भणित्ता मुक्को सो तेण पत्तो य ॥
मंतुच्चारणपुव्वं सियक्खए मत्थए नरिंदस्स । अप्पेउं उवविट्ठो उचियट्ठाणम्मि सो वडुओ ॥५३॥
मूइसमत्तीए तओ आभट्ठो नरवरेण सो एवं । सयकालं ते कुसलं सो जंपइ नाह ! नो कुसलं ॥५४॥
मम तुम्हाणं अन्नस्स वावि इहनयरवासिलोयस्स । नाणेण मए नायं अंतमुहुत्तंतरापरओ ॥५५॥

---

ततो यवनिकाछिद्रैः पश्यत्यन्तःपुरमपि प्रेक्षणकम् । वारविलासिनीसार्थं आस्थानस्थः पुनः पश्यति ॥४२॥
सुरसुन्दरीसमरूपाभिः सुन्दरलीलाविलासकलिताभिः । नानाप्रकारालङ्कारस्फारशृङ्गारसाराभिः ॥४३॥
कृष्णघनकुन्तलसंघातकलितधम्मिल्लकुसुमदामाभिः । मृगनाभिपरिमलोद्गारगौरवपूर्णशोभाभिः ॥४४॥
मदिरामदमुकुलितप्रघूर्णनशीलाताम्रलोचनाभिः । अविरलप्रवृत्तघनस्वेदबिन्दुदन्तुरितभालाभिः ॥४५॥
वारवनिताभी राजा संवाह्यमानललितक्रमकमलः । वीज्यमानोऽपराभिर्नरवरश्चामरकराभिः ॥४६॥
उपविष्ट आस्थाने यावत्तिष्ठति प्रेक्षण आक्षिप्तः । तावत्सहसा प्रतीहारः समागतः करोति विज्ञप्तिम् ॥४७॥
देव ! द्वारे तिष्ठत्यष्टाङ्गनिमित्तज्ञायको बटुकः । पुस्तिकाहस्तः सितनिवसनश्च प्रभुदर्शनाशया ॥४८॥
क आदेशो मुच्यते, मा मुञ्च वधि तस्य कोऽवसरः । देवानां दुर्लभेऽप्यतुच्छप्रेक्षणकक्षणकाले ? ॥४९॥
मतिसागरसचिवेन ततो विज्ञप्तो नृप इदं झटिति । देव ! प्रसादं कृत्वा मोचय ब्राह्मणमेतम् ॥५०॥
अष्टाङ्गनिमित्तधरो धरायां नैव कोपि दृश्यते प्रायः । प्रेक्षणकं पुनर्दृश्यते दिने दिने तव प्रसादेन ॥५१॥
ततो भणितं नरपतिना मुञ्च प्रतिहार ! ब्राह्मणमेतम् । आदेश इति भणित्वा मुक्तः स तेन प्राप्तश्च ॥५२॥
मन्त्रोच्चारणपूर्वं सिताक्षतान् मस्तके नरेन्द्रस्य । अर्पयित्वोपविष्ट उचितस्थाने स बटुकः ॥५३॥
प्रस्तावसमाप्तौ तत आभाषितो नरवरेण स एवम् । सदाकालं ते कुशलं स जल्पति नाथ ! नो कुशलम् ॥५४॥
मम युष्माकमन्यस्य वापीह नगरवासिलोकस्य । ज्ञानेन मया ज्ञातमन्तर्मुहूर्तान्तरापरतः ॥५५॥

तो तं पइ जंपेइ पुहइवई गरुयणरखभरभरिओ। किं गयणं निवडेही गहचक्कजुयंपि इह नयरे ? ॥५६॥
किंवा अइगरुअगिरिं कोवि सुरो पाडिही पुरस्सुवरिं। पलयानलसारिच्छो अहवा जलणो इहुट्ठिही ? ॥
अहह! असंबद्धपलाविरस्स वडुयस्स पेच्छ मह पुरओ। जीहाए चंचलत्तं तो मंती भणइ पसिऊण ॥५८॥
एसो चिय पुच्छिज्जउ देवाकुसलस्स कारणं किंपि। किमिमेहिं अणवरेहिं वियप्पबहुलेहिं भणिएहिं ? ॥
तो भणइ निवो भण भद्द! कारणं अकुसले पुरजणस्स। जंपइ देव! सुणिज्जउ मणंमसन्नं करेऊणं॥६०॥
नरवर! वरोवि दिव्वं देवन्नू सक्कए न रक्खेउं। जं भावि सुहं असुहं तं चिय सो कहइ अवियप्पं॥६१॥
ता मा रुससु मज्झं जहदिट्ठं भावि परिकहंतस्स। इय भणिउं देवन्नू निब्भयचित्तो कहइ एवं ॥६२॥
मुसलप्पमाणघणधारघोरणीए धराए तह कहवि। धाराधरो पवुट्ठिं काही धीराण धुणियसिरो ॥६३॥
अकलियगुरुथलगत्तोरुसालदेवउलमालधवलहरं। एक्कजलं चिय होही नयरं गुरुनीरनिहिसरिसं ॥६४॥
इय तस्स कहंतस्सवि परिवत्तियं उत्तरो ठिओ पवणो। कचोलयमुहमेत्तं समुन्नयं मेहखंडं च ॥६५॥
तो भणइ बंभणो भो उत्तरओ नियह अब्भयं लोया!। पच्छाइस्सइ एयं समग्गगयणंगणं कमसो ॥६६॥
तत्तो अत्थाणत्थो लोओ सव्वोवि ठाइ उड्ढमुहो। उप्पइउं पिव गयणे तव्वयणस्सेव भयभीओ ॥६७॥
जह जह पवणो पसरइ तह तह पसरेइ मेहखंडंपि। गयणंगणपरिसक्कणमहमहमिगयाइव कुणंति ॥६८॥
भरियगिरिकंदरोदरघरविवरो झत्ति थणियसद्दोवि। फोडंतो बंभंडं दिक्करडिरवोव्व विन्थरिओ ॥६९॥
पसरंततडयडारावभरियभुवणंतरा तडिदंडी। सुरकुंभिकुंभुवरिसायकुंभआहरणकिरणव्व ॥७०॥

---

ततस्तं प्रति जल्पति पृथिवीपतिर्गुरुरोषभरभृतः। किं गगनं निपतिष्यति ग्रहचक्रयुतमपीह नगरे ? ॥५६॥
किंवाऽतिगुरुगिरिं कोऽपि सुरः पातयिष्यति पुरस्योपरि। प्रलयानलसदृशोऽथवा ज्वलन इहोत्थास्यति ? ॥५७॥
अहह! असंबद्धप्रलपितुर्बटुकस्य पश्य मम पुरतः। जिह्वायाश्चञ्चलत्वं ततो मन्त्री भणति प्रसद्य ॥५८॥
एष एव पृच्छ्यतां देवाकुशलस्य कारणं किमपि। किमेभी रोषैर्विकल्पबहुलैर्भणितैः ? ॥५९॥
ततो भणति नृपो भण भद्र! कारणमकुशले पुरजनस्य। जल्पति देव! श्रूयतां मनः प्रसन्नं कृत्वा ॥६०॥
नरवर! वरोऽपि दैवं दैवज्ञः शक्नोति न रक्षितुम्। यद्भावि शुभमशुभं तदेव स कथयत्यविकल्पम्॥६१॥
*तस्माद् मा रुष्य मम यथादृष्टं भावि परिकथयतः। इति भणित्वा दैवज्ञो निर्भयचित्तः कथयत्येवम् ॥६२॥*
मुसलप्रमाणघनधाराघोरण्या धरायां तथा कथमपि। धाराधरः प्रवृष्टिं करिष्यति धीराणां धूनितशिराः ॥६३॥
अकलितगुरुस्थलगर्तोरुशालदेवकुलमालाधवलगृहम्। एकजलमेव भविष्यति नगरं गुरुनीरनिधिसदृशम् ॥६४॥
इति तस्मिन् कथयत्यपि परिवृत्त्योत्तरः स्थितः पवनः। चषकमुखमात्रं समुन्नतं मेघखण्डं च ॥६५॥
ततो भणति ब्राह्मणो भो उत्तरतः पश्यताभ्रकं लोकाः!। प्रच्छादयिष्यत्येतत्समग्रगगनाङ्गणं क्रमशः ॥६६॥
तत आस्थानस्थो लोकः सर्वोऽपि तिष्ठन्यूर्ध्वमुखः। उत्पतितुमिव गगने तद्वचन इव भयभीतः ॥६७॥
यथा यथा पवनः प्रसरति तथा तथा प्रसरति मेघखण्डमपि। गगनाङ्गणपरिष्वष्कणमहमहमिकयेव कुर्वन्ति ॥
भृतगिरिकन्दरोदरगृहविवरो झटिति स्तनितशब्दोऽपि। स्फोटयन् ब्रह्माण्डं दिक्करटिरव इव विस्तृतः ॥६९॥

किञ्च ।

तडिदंडाडंबरनिब्भरंवरं तक्खणे जयं जायं । पलयानलजडिलविलोलजालमालाकवलियंव ॥७१॥
इय नरवइपमुहजणो जणियच्छरिओ खणं निरिक्खंतो । जा चिट्ठइ ता लग्गो वरिसेउं मुसलधाराहिं ॥
तो तक्खणेण तह कहवि पसरिओ पउरनीरपूरोवि । जह बोलिउं पयट्टो पलए जलहिव्व नरलोयं॥७३॥
तो जाओ पुरखोहो खुहिओ ता नरवईवि चिंतेइ । किमकाले संजाओ अहह अहो! पलयकालोऽयं ? ॥
एवं चिंतंतस्सवि अत्थाणसहाएवि पाविय सलिलं । उट्ठेउं तो चडिओ सत्तमभूमीए महिनाहो ॥७५॥
मइसायरेण सहिओ वडुएण य ताव तत्थ पुरलोयं । अक्कंदभरक्कंतं विलवंतं निसुणए एवं ॥७६॥
हा वच्छ वच्छ! गच्छसु पाणे गहिउं गुरुम्मि देवउले । मा मं पडिक्ख नीरं उपसरइ पलयजलहिव्व ॥
अन्ना य भणइ नारी वच्छ ! तुमं सरसु जिणनमुक्कारं । आहारं पच्चक्खसु सागारं अणसणं काउं॥७८॥
इय करुणं विलवंतं जणं सुणेऊण दुक्खिओ राया । जा चिट्ठइ ता नीरं सत्तमभूमीए संपत्तं ॥७९॥
तं पिच्छिउं नरिंदो पभणइ मंतिस्स संमुहं एयं । अम्हाण अकयधम्माणं आगयं संपयं मरणं ॥८०॥
सुकयं न कयं परिहीणमाउयं आवइं पलोएउं । पासायसिंगसंठियद्धउव्व मह धुव्वए हियर्य ॥८१॥
विसयासत्तेण मए इत्तियकालो मुहाइ गमिओ जं । न कओ जिणिंदधम्मो सावयकुलसंभवेणावि ॥८२॥
एमेव गओ जम्मो असारसंसारकारणरयस्स । पच्चासन्ने मरणे अहमिण्हि किं करिस्सामि ? ॥८३॥
हा हा ! हओ म्हि इण्हि विहलमणुयत्तणं गमंतेण । नियपुव्वपुरिसमेरा भग्गा भग्गासएण मए ॥८४॥

---

प्रसरत्तटतटारावभृतभुवनान्तरस्तडिद्दण्डः । सुरकुम्भिकुम्भोपरिशातकुम्भाभरणकिरण इव ॥७०॥
तडिद्दण्डाडम्बरनिर्भराम्बरं तत्क्षणे जगज्जातम् । प्रलयानलजटिलविलोलज्वालामालाकवलितमिव ॥७१॥
इति नरपतिप्रमुखजनो जनिताश्चर्यः क्षणं निरीक्षमाणः । यावत्तिष्ठति तावल्लग्नो वर्षितुं मुसलधाराभिः॥७२॥
ततस्तत्क्षणेन तथा कथमपि प्रसृतः प्रचुरनीरपूरोऽपि । यथाऽतिक्रमितुं प्रवृत्तः प्रलये जलधिरिव नरलोकम् ॥
ततो जातः पुरक्षोभः क्षुभितस्तस्मान्नरपतिरपि चिन्तयति । किमकाले संजातोऽहह अहो! प्रलयकालोऽयम् ! ॥
एवं चिन्तयतोऽप्यास्थानसभायामपि प्राप्तं सलिलम् । उत्थाय ततश्चटितः सप्तमभूम्यां महीनाथः ॥७५॥
मतिसागरेण सहितो वटुकेन च तावत्तत्र पुरलोकम् । आक्रन्दभराक्रान्तं विलपन्तं शृणोत्येवम् ॥७६॥
हा वत्स वत्स ! गच्छ प्राणान् गृहीत्वा गुरौ देवकुले । मा मां प्रतीक्षस्व नीरमुपसरति प्रलयजलधिरिव ॥७७॥
अन्या च भणति नारी वत्स ! त्वं स्मर जिननमस्कारम् । आहारं प्रत्याख्याहि साकारमनशनं कृत्वा ॥७८॥
इति करुणं विलपन्तं जनं श्रुत्वा दुःखितो राजा । यावत्तिष्ठति तावन्नीरं सप्तमभूमौ संप्राप्तम् ॥७९॥
तद् दृष्ट्वा नरेन्द्रः प्रभणति मन्त्रिणः संमुखमेतत् । अस्माकमकृतधर्मणामागतं सांप्रतं मरणम् ॥८०॥
सुकृतं न कृतं परिहीणमायुरापदं प्रलोक्य । प्रासादशृङ्गसंस्थितध्वज इव मम धूयते हृदयम् ॥८१॥
विषयासक्तेन मयैतावत्कालो मुधा गमितो यत् । न कृतो जिनेन्द्रधर्मः श्रावककुलसंभवेनापि ॥८२॥
एवमेव गतं जन्मासारसंसारकारणरतस्य । प्रत्यासन्ने मरणेऽहमिदानीं किं करिष्यामि ! ॥८३॥

सावज्जरज्जकज्जे अणज्जमज्जायमायरंतेण। हा! सव्वसंगचाओ न कओ विसएसु गिद्धेण ॥८५॥
कोडी वराडीयाए वेरुलीयमणी य कायखंडेण। चिंतामणी उवलेणं कप्पतरू थोहरेणंव ॥८६॥
हा! हारिओ मए जं दुक्खसरूवाण दुक्खहेऊण। विसयाणं सेवाए गमिओ जम्मो अकयधम्मो॥८७॥
किं कुणिमो किं सरिमो किं भणिमो संकडम्मि आवडिए? । इअ पभणंतस्स तहिं नीरं पत्तं सुवेगेण॥
ता जा नमोक्कारं मणम्मि चिंतेइ ताव बोहित्थं। अभिमुहमिंतं पिच्छइ उम्मिट्ठगयंव अमणुस्सं ॥८९॥
सत्तमभूमीए वरंडियाए वेगेण तं समावडियं। मइसागरेण तत्तो भणियं आरुहउ इह देवो ॥९०॥
जं देवमिमाउ आवईउ नित्थारिउं सुरो कोवि। एयं ढोयइ पुन्नोदएण परियेरिओ तुम्ह ॥९१॥
इय सुणिउं नरनाहो आरुहणत्थं महत्थबोहित्थे। जा उक्खिवेइ चरणं वरंडियाठवियवामपओ ॥९२॥
ताव न जलं न मेहो नय बोहित्थं न विज्जुगज्जीओ। सुत्थावत्थं तु परं पासइ पमुइयमणं लोयं॥९३॥
कत्थवि संगीयरवं कत्थवि पारद्धविविहकलहट्टं। कत्थवि पयडियनट्टं तो राया विम्हिओ भणइ॥९४॥
किं अणणुभूयपुव्वं एयं अचब्भुयं गणयपवर!। सो भणइ अहं निव! इंदजालिओ न उण जोइसिओ॥
तत्तो विम्हयपरवसहियओ राया सुवन्नकोडिदुगं। वत्थाई अन्नंपि हु दाविय बडुयं विसज्जेइ ॥९६॥
मइसागरपमुहजणं अवरोहसमन्नियं भवविरत्तो। भणइ नरिंदो दिट्ठं वियम्भियं इंदयालस्स? ॥९७॥
दिट्ठं सव्वंपि इमं तुम्ह पसाएण तेवि जंपंति। अइअचब्भुयमेयं केणवि न कयावि दिट्ठंति ॥९८॥

---

हा हा! हतोऽस्मीदानीं विफलमनुजत्वं गमयता। निजपूर्वपुरुषमर्यादा भग्ना भग्नाशयेन मया ॥८४॥
सावद्यराज्यकार्येऽनार्यमर्यादामाचरता। हा! सर्वसङ्गत्यागो न कृतो विषयेषु गृद्धेन ॥८५॥
कोटिर्वराटिकया वैडूर्यमणिश्च काचखण्डेन। चिन्तामणिरुपलेन कल्पतरुः स्नुहेव ॥७६॥
हा! हारितो मया यद् दुःखस्वरूपाणां दुःखहेतूनाम्। विषयाणां सेवायां गमितं जन्माकृतधर्म ॥८७॥
किं कुर्मः किं स्मरामः किं भणामः संकटे आपतिते। इति प्रभणतस्तत्र नीरं प्राप्तं सुवेगेन ॥८८॥
तदा यावन्नमस्कारं मनसि चिन्तयति तावद् यानपात्रम्। अभिमुखमायत् पश्यत्युन्मृष्टगजमिवामनुष्यम्॥८९॥
सप्तमभूमेर्वरण्डिकायां वेगेन तत् समापतितम्। मतिसागरेण ततो भणितमारोहत्विह देवः ॥९०॥
यद् देवमस्या आपदो निस्तारयितुं सुरः कोऽपि। एतद्ढौकते पुण्योदयेन परिप्रेरितो युष्माकम् ॥९१॥
इति श्रुत्वा नरनाथ आरोहणार्थं महार्थयानपात्रे। यावदुत्क्षिपति चरणं वरण्डिकास्थापितवामपादः ॥९२॥
तावन्न जलं न मेघो नच यानपात्रं न विद्युद्गर्जयः। सुस्थावस्थं तु परं पश्यति प्रमुदितमनसं लोकम् ॥९३॥
क्वापि संगीतरवं क्वापि प्रारब्धविविधकलहट्टम्। क्वापि प्रकटितनाट्यं ततो राजा विस्मितो भणति ॥९४॥
किमननुभूतपूर्वमेतदत्यद्भुतं गणकप्रवर!। स भणत्यहं नृप! इन्द्रजालिको न पुनर्ज्यौतिषिकः ॥९५॥
ततो विस्मयपरवशहृदयो राजा सुवर्णकोटिद्विकम्। वस्त्राद्यन्यदपि च दापयित्वा बटुकं विसृजति ॥९६॥
मतिसागरप्रमुखजनमवरोधसमन्वितं भवविरक्तः। भणति नरेन्द्रो दृष्टं विजृम्भितमिन्द्रजालस्य? ॥९७॥
दृष्टं सर्वमपीदं तव प्रसादेन तेऽपि जल्पन्ति। अत्यद्भुतमेतत्केनापि न कदापि दृष्टमिति ॥९८॥

अंतेउरेण सहिओ कइवयरहतुरयकरिसहस्सेहिं । संचलिओ चालंतो सल्लसहस्साइं लोयस्स ॥१७७॥
नियपत्थाणयवइयरमाइट्ठो नरवरेण परिकहइ । तव्वेलं चिय जयसीहनिवइणो चेडओ गंतुं ॥१७८॥
तं सोउं सो सहसा मुक्को रोगेहिं अमयसित्तोव्व । माइ न अंगे जणणीवि परियणो जणवयजणो य ॥
संमाणिऊण तेणं विसज्जिओ विजयचंदनरवइणो । तं सो साहइ तत्तो य ऊसुयत्तं परिचइउं ॥१८०॥
चेडयपयडियमग्गो गामागरनगरपरिमंडियं वसुहं । वोलंतो सो वच्चइ ठाणे ठाणे पडिच्छंतो ॥१८१॥
रायाईणमुवायणमणेगगणरायरायविंबाई । ठावंतो भंजंतो दप्पमणेगाण सुहडाण ॥१८२॥
पइनगरं पइगामं पायं जिणमंदिराइं पूयंतो । जिन्नाइं उद्धरंतो सम्माणंतो समणधम्मे ॥१८३॥
नियपिउचउरंगचमूसंचारपवित्तभूमिभागाए । संपत्तो सीमाए कमेण देसस्स सो तत्तो ॥१८४॥
चेडयमुहेण एयं जयसिंहनराहिवं भणावेइ । जह काऊण पसायं मह पच्चोणी न कायव्वा ॥१८५॥
अइकिसदेहत्ताओ मग्गसमेणं पुणोवि पभविसु । रोगत्ति तओ तेणवि तं पडियज्जित्तु नयरम्मि ॥१८६॥
हट्टसोहानिरोवो दिन्नो सचिवाउ नायरजणाणं । तेहिवि नियसत्तीए पारद्धो सो सवित्थरओ ॥१८७॥
तथाहि;—
ठाणट्ठाणनिवेसियसियचामरवत्थकुसुमरमणीयं । रमणीयरयणमालाविरइयवरवंदुरामालं ॥१८८॥
मालट्टालयगुरुमालमंचआरूढपोढरमणिजणं । जणसंकुलरत्थामुहपुरसुंदरिविहियवरगेयं ॥१८९॥
गेयाणुमग्गलग्गुग्गसुभगनच्चंतनच्चणीओहं । ओहावियसुरसुंदरिसुंदरिपारद्धकलहट्टं ॥१९०॥

---

अन्तःपुरेण सहितः कतिपयरथतुरगकरिसहस्रैः । संचलितश्चालयन् शल्यसहस्राणि लोकस्य ॥१७७॥
निजप्रस्थानव्यतिकरमादिष्टो नरवरेण परिकथयति । तद्वेलमेव जयसिंहनृपतये चेटको गत्वा ॥१७८॥
तत् श्रुत्वा स सहसा मुक्तो रोगैरमृतसिक्त इव । माति नाङ्गे जनन्यपि परिजनो जनपदजनश्च ॥१७९॥
सम्मान्य तेन विसृष्टो विजयचन्द्रनरपतये । तत् स कथयति ततश्चोत्सुकत्वं परित्यज्य ॥१८०॥
चेटकप्रकटितमार्गो ग्रामाकरनगरपरिमण्डितां वसुधाम् । अतिक्रामन् स व्रजति स्थाने स्थाने प्रतीच्छन् ॥
राजादीनामुपायनमनेकगणराजराजबिम्बानि । स्थापयन् भञ्जन् दर्पमनेकेषां सुभटानाम् ॥१८२॥
प्रतिनगरं प्रतिग्रामं प्रायो जिनमन्दिराणि पूजयन् । जीर्णान्युद्धरन् सम्मानयन् श्रमणधर्मिणः ॥१८३॥
निजपितृचतुरङ्गचमूसंचारपवित्रभूमिभागायाम् । संप्राप्तः सीम्नि क्रमेण देशस्य स ततः ॥१८४॥
चेटकमुखेनैतज्जयसिंहनराधिपं भाणयति । यथा कृत्वा प्रसादं ममाभिगमनं न कर्तव्यम् ॥१८५॥
अतिकृशदेहत्वाद् मार्गश्रमेण पुनरपि प्रभविष्णुः । रोग इति ततस्तेनापि तत्प्रतिपद्य नगरे ॥१८६॥
हट्टशोभादेशो दत्तः सचिवाद् नागरजनानाम् । तैरपि निजशक्त्या प्रारब्धः स सविस्तरम् ॥१८७॥
स्थानस्थाननिवेशितसितचामरवस्त्रकुसुमरमणीयम् । रमणीयरत्नमालाविरचितवरवन्दनमालम् ॥१८८॥
मालाट्टालयगुरुमालमञ्चारूढप्रौढरमणीजनम् । जनसंकुलरथ्यामुखपुरसुन्दरीविहितवरगेयम् ॥१८९॥
गेयानुमार्गलग्नोग्रसुभगनृत्यन्नर्तकीसमूहम् । अपहस्तितसुरसुन्दरीकसुन्दरीप्रारब्धकलहासम् ॥१९०॥

हट्टयरदारविरइयमुत्ताहलरेणुसत्थियपबंधं। बंधवइसुंकपरिमुक्कलोयआसीसरवमुहलं ॥१९१॥
इय परमूसवभूयं पविसिय नयरं निवो विजयचंदो। जइसीहमहारायं पणमइ जणणिंपि सक्कलत्तो॥१९२॥
नियविरहतवियदेहं हरिसंसुजलेण निव्ववंतोव्व। आलिंगिय निवसंतं धराए सिंहासणे ठवइ ॥१९३॥
अन्नोन्नममंदाणंदमंदिरा जाव ठंति खणमेगं। रोमंचंचियगत्ता ता समयनिवेयओ पढइ ॥१९४॥
अवगाहिऊण जलहिं लहिउं उदयायलम्मि अब्भुदयं। वियसावियकमलवणो सव्वुवरिठिओ रवी जयइ॥
समयाणुगयं वयणं सरिसं निवविजयचंदचरियस्स। पढियंति कणयलक्खं दावइ वंदिस्स नरनाहो॥
एत्तो य सावएहिं विन्नत्तं जिणहरेसु सव्वेसु। ण्हवणबलिपूयपभिइं निप्पन्नं जं जहा इट्ठं ॥१९७॥
आसन्ने जिणभवणे देवे वंदंति दोवि नरनाहा। भंडारियं भणंति य अट्ठवि अट्ठाहियादिवसे ॥१९८॥
मग्गंति सावया जं दव्वं घणसारघुसिणमाईयं। दावंति य जं किंचिवि तत्थ विलंबो न कायव्वो॥१९९॥
समयमहोयहिसूरीण पायकमलं नमंसिउं इंति। नियभवणे भुंजंति य सपरियणा परमपीईए ॥२००॥
अह पत्थावे कहिओ सुयवुत्तंतो निवस्स पुट्ठेण। मइधणसचिवेण तओ जयसिंहनिवो भणइ तणयं॥२०१॥
तइ वच्छ! पुहइपालणभरधरणधुरंधरम्मि निच्चिंतो। पुव्वपुरिसाणुचिन्नं संपइ मग्गं पवज्जामि ॥२०२॥
तो विजयचंदराया उट्ठेउं जणयपायवीढम्मि। विणिवेसिउत्तिमंगो सगग्गयं भणइ पसिऊण ॥२०३॥
वरिसाइं कइवि नियपायकमलरेणूए मज्झ भालयलं। ताय! पवित्तीकाउं उचियंपि इमं विहेयव्वं ॥२०४॥
एवमसग्गहपरमवि पुत्तं संबोहिऊण जुत्तीहिं। पीइमईए सहिओ कइवयसामंतमंतिजुओ ॥२०५॥

---

हट्टगृहद्वारविरचितमुक्ताफलरेणुस्वस्तिकप्रबन्धम्। बन्धवधशुल्कपरिमुक्तलोकाशीरवमुखरम् ॥१९१॥
इति परमोत्सवभूतं प्रविश्य नगरं नृपो विजयचन्द्रः। जयसिंहमहाराजं प्रणमति जननीमपि सकलत्रः ॥१९२॥
निजविरहतप्तदेहं हर्षाश्रुजलेन निर्वापयन्निव। आलिङ्ग्य निवसन्तं धराया सिंहासने स्थापयति ॥१९३॥
अन्योन्यममन्दानन्दमन्दिराणि यावत्तिष्ठन्ति क्षणमेकम्। रोमाञ्चाञ्चितगात्रास्तावत्समयनिवेदकः पठति॥१९४॥
अवगाह्य जलधिं लब्ध्वोदयाचलेऽभ्युदयम्। विकासितकमल(ला)वनः सर्वस्योपरिस्थितो रविर्जयति ॥१९५॥
समयानुगतं वचनं सदृशं नृपविजयचन्द्रचरितस्य। पठितमिति कनकलक्षं दापयति बन्दिने नरनाथः ॥१९६॥
इतश्च श्रावकैर्विज्ञपितं जिनगृहेषु सर्वेषु। स्नपनबलिपूजाप्रभृति निष्पन्नं यद् यथेष्टम् ॥१९७॥
आसन्ने जिनभवने देवान् वन्देते द्वावपि नरनाथौ। भाण्डागारिकं भणतश्च अष्टाप्यष्टाहिकादिवसान् ॥१९८॥
मार्गयन्ति श्रावका यद् द्रव्यं घनसारघुसृणादिकम्। दापयन्ति च यत् किञ्चिदपि तत्र विलम्बो न कर्तव्यः ॥
समयमहोदधिसूरीणां पादकमलं नमस्यित्वैतः। निजभवने भुञ्जाते च सपरिजनौ परमप्रीत्या ॥२००॥
अथ प्रस्तावे कथितः सुतवृत्तान्तो नृपाय पृष्टेन। मतिधनसचिवेन ततो जयसिंहनृपो भणति तनयम्॥२०१॥
त्वयि वत्स! पृथिवीपालनभरधरणधुरन्धरे निश्चिन्तः। पूर्वपुरुषानुचीर्णं सम्प्रति मार्गं प्रपद्ये ॥२०२॥
ततो विजयचन्द्रराज उत्थाय जनकपादपीठे। विनिवेशितोत्तमाङ्गः सगद्गदं भणति प्रसद्य ॥२०३॥
वर्षाणि कत्यपि निजपादकमलरेण्वा मम भालतलम्। तात! पवित्रीकृत्योचितमपीदं विधातव्यम् ॥२०४॥

उच्छप्पणापुरस्सरमणवज्जायरियपायमूलम्मि । गिण्हवि दिक्खं विहिणा नरनाहो मोक्खमणुपत्तो ॥२०६॥
सिरिविजयचंदराया पयाउ पालेइ परमनीईए । जिणभवणभूसियं विसयमप्पणो कुणइ सव्वंपि ॥२०७॥
नेय मंदेणं मरई कोइ तिरिओ अहव मणुओ वा । सारीण चेव मारो दंडो छत्ताण तव्विसए ॥२०८॥
अट्ठमि चउद्दसीए अमावसाए य पुन्निमाएवि । गिण्हेइ पोसहं सो परमं वेरग्गमावन्नो ॥२०९॥
तह कहवि करं गिण्हइ जह तं दिन्नं मुणंति न पयाओ । सावयजणं तु सव्वं अकरं चिय सव्वहा कुणइ ॥
कल्लाणाइदिणेसुं सव्वत्थवि सावएहिं जिणभवणे । जिणमज्जणाइं कारइ सयंपि समयम्मि जाइ तहिं ॥
इय वच्चंते काले कमलसिरी पसवए पुत्तं । नामेण विजयसेणं कलापगिट्ठं सुधम्मिट्ठं ॥२१२॥
अह अन्नया नरिंदो पासायसिरम्मि कमलसिरिमहिओ । जा अच्छइ ता पेच्छइ पच्चासन्नम्मि पासाए ॥
वुड्ढनरमिहुणमेगं रइकलहपरव्वसं पडियदसणं । अच्चंतं जंपंतं निल्लज्जं लज्जियाणंगं ॥२१४॥
कंपंतसव्वगत्तं तणुसिरभूपलियरोमचिहुरचयं । अवनमियपिट्ठदेसं घुलंतमुहलालदुप्पिच्छं ॥२१५॥
तं दंसिय भणइ पियं विसयपिवासा न जाव अम्हेवि । एवं विनडइ सुंदरि ! ता मुचउ रुंचउ तुहेयं ॥
देवी पभणइ विसयासेवाए जरा किमेसिमाणीया । जं देवो इय जंपइ, कंपइ एएण मह हिययं ॥२१७॥
कयसुकयदुक्कयाणं एयं चिय अंतरं मणुस्साणं । विसयाणं संपत्ती एगेसिं नेय अन्नेसिं ॥२१८॥
किञ्च ।

---

एवमसद्ग्रहपरमपि पुत्रं संबोध्य युक्तिभिः । प्रीतिमत्या सहितः कतिपयसामन्तमन्त्रियुतः ॥२०५॥
उत्सर्पणापुरस्सरमनवद्याचार्यपादमूले । गृहीत्वा दीक्षां विधिना नरनाथो मोक्षमनुप्राप्तः ॥२०६॥
श्रीविजयचन्द्रराजः प्रजाः पालयति परमनीत्या । जिनभवनभूषितं विषयमात्मनः करोति सर्वमपि ॥२०७॥
न च मान्द्येन म्रियते कोऽपि तिर्यगथवा मनुजो वा । शारीणामेव मारो दण्डश्छत्राणां तद्विषये ॥२०८॥
अष्टम्यां चतुर्दश्याममावास्यां च पूर्णिमायामपि । गृह्णाति पौषधं स परमं वैराग्यमापन्नः ॥२०९॥
तथा कथमपि करं गृह्णाति यथा तं दत्तं जानन्ति न प्रजाः । श्रावकजनं तु सर्वमकरमेव सर्वथा करोति ॥
कल्याणादिदिनेषु सर्वत्रापि श्रावकैर्जिनभवने । जिनमज्जनादि कारयति स्वयमपि समये याति तत्र ॥२११॥
इति व्रजति काले कमलश्रीः प्रसूते पुत्रम् । नाम्ना विजयसेनं कलाप्रकृष्टं सुधार्मिष्ठम् ॥२१२॥
अथान्यदा नरेन्द्रः प्रासादशिरसि कमलश्रीसहितः । यावदास्ते तावत् पश्यति प्रत्यासन्ने प्रासादे ॥२१३॥
वृद्धनरमिथुनमेकं रतिकलहपरवशं पतितदशनम् । अत्यन्तं जल्पन्निर्लज्जं लज्जितानङ्गम् ॥२१४॥
कम्पमानसर्वगात्रं तनुःशिरोभ्रूपलितरोमचिहुरचयम् । अवनतपृष्ठदेशं घूर्णमानमुखलालादुर्दर्शम् ॥२१५॥
तद्दर्शयित्वा भणति प्रियां विषयपिपासा न यावदस्मानपि । एवं विनाटयति सुन्दरि ! तावन्मुच्यतां रुच्यतां तवेतत्॥
देवी प्रभणति विषयासेवया जरा किमनयोरानीता । यद्देव इति जल्पति, कम्पत एतेन मम हृदयम् ॥२१७॥
कृतसुकृतदुष्कृतानामेतदेवान्तरं मनुष्याणाम् । विषयाणां संप्राप्तिरेकेषां नैवान्येषाम् ॥२१८॥

---

१ क ख निद्दंसेनं विय द०।

सव्वेवि दुक्खभीरू सव्वेवि सुहेसिणो फुडं जीवा। ता एयावत्थगयं मिहुणमिणं इय पयट्टंतं॥२१९॥
विसयासेवाए सुहं साहइ पयडं तहावि नाहस्स। कह दट्ठुमिमं जाया विसएसु परम्मुहा बुद्धी? ॥२२०॥
नरपतिरुवाच;—
दंसणनाणमणंतं विरियमणंतं तहा सुहमणंतं। परमत्थेण सरूवं जीवाण इमं, तहावि इमे ॥२२१॥
विसयपिवासापामाकयत्थिया इह भवे अणाइम्मि। संपायणत्थमेसिं विसयाण सहंति दुक्खाइं ॥२२२॥
जायंति पुणं तहाविहकम्माउ इमे कयावि कस्सावि। दालिद्ददुहट्टाणं अन्नेसिं जाइ पुण जम्मो ॥२२३॥
तो तेसिं परिभोगे कंडूकंडूयणेव्व सुहलेसं। भुंजंतो बहु मन्नइ विसयपिवासं पयट्टंति ॥ २२४ ॥
अह कहवि धणाभावे पणइणिविरहेण हुंति नो विसया। तो तच्चिंतासल्लियहियओ दुक्खं गमइ कालं॥
उक्तं च;—
"अप्राप्ताः संकल्पैः प्राप्ता दर्पेण चिन्तया विरहे। त्वरयन्ति ज्वरयन्ति कशयन्ति प्राणिनं विषयाः॥"
नय समइ विसयतण्हा चिरंपि संसेविएसु विसएसु। अइसयमणोहरेसुवि विसेसओ बड्ढए गिद्धी ॥२२६॥
उक्तं च;—
" न जातु कामः कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ "
विसयपिवासा य इमा रागो अणुकूलएसु विसएसु। पडिकूलेसुं दोसो जीवाणं मोहवसयाणं ॥२२७॥
रागद्दोसा य पुणो कम्मस्स निबंधणं धुवं हुंति। कम्मोदएण जीवो पावइ दुक्खं भवे घोरं ॥२२८॥
एवं विसयपिवासा इहपरलोउब्भवाण दुक्खाण। परमं कारणमेसा य जोव्वणे मंदसत्तेहिं ॥२२९॥
नो निज्जेउं सक्का, इमं तु वुड्ढंपि मिहुणमेयाए। एवं वियारबहुलं विहियं तो तेणिमं भणियं ॥२३०॥

---

सर्वेऽपि दुःखभीरवः सर्वेऽपि सुखेषिणः स्फुटं जीवाः। तस्मादेतदवस्थागतं मिथुनमिदमिति प्रवर्तमानम्॥२१९॥
विषयासेवायां सुखं कथयति प्रकटं तथापि नाथस्य। कथं दृष्ट्वेदं जाता विषयेषु पराङ्मुखा बुद्धिः ?॥२२०॥
दर्शनज्ञानमनन्तं वीर्यमनन्तं तथा सुखमनन्तम्। परमार्थेन स्वरूपं जीवानामिदम्, तथापीमे ॥२२१॥
विषयपिपासापामाकदर्थिता इह भवेऽनादौ। संपादनार्थमेषां विषयाणां सहन्ते दुःखानि ॥२२२॥
जायन्ते पुनस्तथाविधकर्मण इमे कदापि कस्यापि। दारिद्र्यदुःखार्तानामन्येषां याति पुनर्जन्म॥२२३॥
ततस्तेषां परिभोगे कण्डूकण्डूयन इव सुखलेशम्। भुञ्जानो बहु मन्यते विषयपिपासां प्रवर्तमानाम्॥२२४॥
अथ कथमपि धनाभावे प्रणयिनीविरहेण भवन्ति नो विषयाः। ततस्तच्चिन्ताशल्यितहृदयो दुःखं गमयति कालम् ॥
नच शाम्यति विषयतृष्णा चिरमपि संसेवितेषु विषयेषु। अतिशयमनोहरेष्वपि विशेषतो वर्धते गृद्धिः॥२२६॥
विषयपिपासा चेयं रागोऽनुकूलेषु विषयेषु। प्रतिकूलेषु द्वेषो जीवानां मोहवशगानाम् ॥२२७॥
रागद्वेषौ च पुनः कर्मणो निबन्धनं ध्रुवं भवतः। कर्मोदयेन जीवः प्राप्नोति दुःखं भवे घोरम् ॥२२८॥
एवं विषयपिपासेहपरलोकोद्भवानां दुःखानाम्। परमं कारणमेषा च यौवने मन्दसत्त्वैः ॥ २२९ ॥
नो निर्जेतुं शक्येदं तु वृद्धमपि मिथुनमेतया। एवं विकारबहुलं विहितं ततस्तेनेदं भणितम् ॥२३०॥

जिणवयणगब्भियं विजयचंदपिययमपयंपियं एयं । सोऊणं कमलसिरी सप्पणयं भणइ वयणमिणं ॥
जं मुहरयाए पिययम ! पयंपियं अप्पियं मए तुम्ह । तं पसिऊण खमिज्जउ कुणिमो धम्मुज्जमं परमं॥
तो विजयचन्दराया जेट्ठसुयं विजयरायनामाणं । ठविउं रज्जे गिण्हइ विहीए दिक्खं सुगुरुमूले ॥२३३॥
कमलसिरीपभिईहिं अंतेउरियाहि तह य मंतीहिं । सामंतेहिंवि केहिंचि सहिओ अइमहविभूईए ॥२३४॥
गहिऊण दुविहसिक्खं वरिसंते केवलीवि होऊण । सासयसोक्खं पत्तो सम्मेए पव्वयवरम्मि ॥२३५॥

॥ इति स्थूलप्राणातिपातनिरतिचारप्रथमाणुव्रतफलदर्शने विजयचन्द्रनरेश्वरकथानकं समाप्तम् ॥

---

जिनवचनगर्भितं विजयचन्द्रप्रियतमप्रजल्पितमेतत् । श्रुत्वा कमलश्रीः सप्रणयं भणति वचनमिदम् ॥२३१॥
यद् मुखरतया प्रियतम ! प्रजल्पितमप्रियं मया युष्माभिः। तत्प्रसद्य क्षम्यतां कुर्मो धर्मोद्यमं परमम्॥२३२॥
ततो विजयचन्द्रराजो ज्येष्ठसुतं विजयराजनामानम् । स्थापयित्वा राज्ये गृह्णाति विधिना दीक्षां सुगुरुमूले॥
कमलश्रीप्रभृतिभिरान्तःपुरिकाभिस्तथा च मन्त्रिभिः । सामन्तैरपि कैश्चित्सहितोऽतिमहाविभूत्या ॥२३४॥
गृहीत्वा द्विविधशिक्षां वर्षान्ते केवल्यपि भूत्वा । शाश्वतसौख्यं प्राप्तः सम्मेते पर्वतवरे ॥ २३५ ॥

निरवेक्खो दुट्ठमणो तिरियाईणं करेइ जो बंधं । सो पावइ बंधवहं जह पत्तं बंधुराएण ॥१॥
तथाहि,—
अत्थि पुरं पोराणं पउमिणिसंडंव पउमिणीसंडं । सुविचित्तपत्तकलियं पउमावासं सुवाणिययं ॥२॥
तत्थत्थि अत्थिजणवंछियत्थसंपाडणिक्कदुल्ललिओ । धणउव्व धणो सेट्ठी भज्जा तस्सत्थि बंधुमई ॥३॥
ताणं च परोप्परनेहनिब्भरं विसयसोक्खनिरयाणं । वच्चइ कालो अक्खलियदव्वाण धणधन्नकलियाण ॥
केवलमवन्चदुक्खं सल्लइ हियए परोप्परं ताणं । किं विहवेणम्हाणं कुलकेउसुपुत्तरहियाणं ? ॥ ५ ॥
इय चिंताजुत्ताणं ताणं वच्चंति वासरा विरसा । अह अन्नया कयाई बन्धुमई नियघरदुवारे ॥ ६ ॥
जा चिट्ठइ ता पेच्छइ कस्सइ गाहावइस्स गेहवइणी । धूलिधूसरियपुत्तेहिं परिगया चिंतए तत्तो ॥७॥
धन्ना एसा महिला जा एवं अत्तए रमावेइ । अइमंजुमम्मणुल्लावसीलए वाणीए सुहयाए ॥ ८ ॥
एक्कं धरइ कडीए बीयं हत्थंगुलीए संलग्गं । तइयाओ य चउत्थं रुट्ठं संभासए एवं ॥ ९ ॥
आगच्छ वच्छ ! अंबा जं जंपइ तं करेह किं बहुणा ? । गिण्हसु अंबयजंबुयफलाइं जणणीए दिंताए ॥
इय बहुडिंभजुयाए चरियं दट्ठूण तीए महिलाए । अप्पाणं निंदंती पत्ता गेहस्स मज्झम्मि ॥११॥
चिंतेइ अहं जणिया एक्कच्चिय मंदभाइणी विहिणा । एक्कंपि पुत्तभंडं जीए पसूयं न पावाए ॥१२॥
जम्मो निरत्थउ तीए जीए महिलाए मम्मणुल्लविरो । रमिऊण धूलिधवलो पुत्तो नारुहइ अंकम्मि ॥१३॥
अन्नन्नकज्जवइयरविकिरणकयत्थियं हिययकुमुयं । उल्लसइ नवरि मणुयाण तणयमुहयंदसच्चवणे ॥१४॥

---

निरपेक्षो दुष्टमनास्तिर्यगादीनां करोति यो बन्धम् । स प्राप्नोति बन्धवधं यथा प्राप्तं बन्धुराजेन ॥१॥
अस्ति पुरं पुराणं पद्मिनीषण्डमिव पद्मिनीषण्डम् । सुविचित्रपा(प)त्रकलितं पद्मावासं सुवाणिज(पानीय)कम् ॥
तत्रास्त्यर्थिजनवाञ्छितार्थसंपादनैकदुर्ललितः । धनद इव धनः श्रेष्ठी भार्या तस्यास्ति बन्धुमती ॥ ३ ॥
तयोश्च परस्परस्नेहनिर्भरं विषयसौख्यनिरतयोः । व्रजति कालोऽस्खलितद्रव्ययोर्धनधान्यकलितयोः ॥ ४ ॥
केवलमपत्यदुःखं शल्यति हृदये परस्परं तयोः । किं विभवेनावयोः कुलकेतुसुपुत्ररहितयोः ? ॥ ५ ॥
इति चिन्तायुक्तयोस्तयोर्व्रजन्ति वासरा विरसाः । अथान्यदा कदाचिद् बन्धुमती निजगृहद्वारे ॥ ६ ॥
यावत्तिष्ठति तावत्पश्यति कस्यापि गाथापतेर्गृहपत्नीम् । धूलिधूसरितपुत्रैः परिगता चिन्तयति ततः ॥ ७ ॥
धन्यैषा महिला यैवमात्मजान् रमयति । अतिमञ्जुमन्मनोल्लापनशीलया वाण्या सुभगया ॥ ८ ॥
एकं धरति कट्यां द्वितीयं हस्ताङ्गुलौ संलग्नम् । तृतीयाच्च चतुर्थं रुष्टं समाभाषत एवम् ॥ ९ ॥
आगच्छ वत्स ! अम्बा यज्जल्पति तत्कुरु किं बहुना । गृहाणाम्रजम्बूकफलानि जनन्या ददत्या॥१०॥
इति बहुडिम्भयुक्तायाश्चरितं दृष्ट्वा तस्या महिलायाः । आत्मानं निन्दन्ती प्राप्ता गेहस्य मध्ये ॥११॥
चिन्तयत्यहं जनितैकैव मन्दभागिनी विधिना । एकमपि पुत्रभाण्डं यया प्रसूतं न पापया ॥ १२ ॥
जन्म निरर्थकं तस्या यस्या महिलाया मन्मनोल्लपिता । रन्त्वा धूलिधवलः पुत्रो नारोहत्यङ्के ॥ १३ ॥
अन्यान्यकार्यव्यतिकरविकिरणकदर्थितं हृदयकुमुदम् । उल्लसति केवलं मनुजानां तनयमुखचन्द्रदर्शने ॥१४॥

दोगच्चंपि न नज्जइ न गणिज्जइ आवईवि अइगरुई। हिययस्स निव्वुइकरो जाण सुओ गुणगणाहारो॥
इय तणयाभावसमुब्भवेण असुहेण दूमिया संती। दिट्ठा सिट्ठिधणेणं परम्मुहा सयलकज्जेसु ॥१६॥
हिमदड्ढकमलिणी इव दीससि किं सुयणु! पुच्छिए तेण। सा कहइ तस्स पुत्ताभावदुहं तो धणो भणइ॥
मा होसु ऊसुयमणा धणियं भत्तीए धणयजक्खमहं। आराहिऊण विहिणा तुह पुत्तं दावइस्सामि॥१८॥
सत्तदिणब्भिंतरओ ता,मा पमयच्छि! खेयमुव्वहसु। इय वुत्तुं संझाए धणसिट्ठी पूइउं जक्खं॥१९॥
परिमुक्कसयलकज्जो तब्भवणे ठाइ निरसणो ताव। जा सत्तमिया रयणी ता जक्खो भणइ पच्चक्खं॥२०॥
होही तुह लहु पुत्तो, महापसाउत्ति भणिय नमिऊण। जक्खस्स पायकमलं संपत्तो नियगिहे सिट्ठी॥२१॥
जक्खाएसं सव्वं कहेइ भज्जाए सा य संतुट्ठा। बंधइ गंठिं भणइ य एवं चिय होउ एयंति॥२२॥
तो पच्छिमम्मि जामे बंधुमई पासए सुमिणयम्मि। नियवयणे पविसंतं नारंगं जणियगुरुरंगं॥२३॥
उट्ठेउं सा साहइ पइणो तत्तो विमंसिउं सम्मं। तेणवि तणओ होहित्ति साहियं सा य परितुट्ठा॥२४॥
तद्दिवसजायगब्भा पसवइ समए मणोरमं पुत्तं। पत्तम्मि बारसाहे दिन्नं नामं इमं तस्स॥२५॥
जणएहिं बंधुराओत्ति लच्छिविच्छड्डओ तओ कमसो। अहिगयकलाकलावो संपत्तो जोव्वणं सोवि॥
अह केणवि कज्जेणं धणसेट्ठी बंधुरायपरिकलिओ। संपत्तो उज्जाणे जणमणआणंदणभिहाणे॥२७॥
तो पेच्छइ तत्थ मुणिं देसंतं सुगइपच्चलं धम्मं। भव्वाण हियट्ठाए उवविट्ठो सोवि निसुणेइ॥२८॥
तद्यथा;—

---

दौर्गत्यमपि न ज्ञायते न गण्यत आपदप्यतिगुर्वी। हृदयस्य निर्वृतिकरो येषां सुतो गुणगणाधारः॥ १५॥
इति तनयाभावसमुद्भवेनासुखेन दाविता सन्ती। दृष्टा श्रेष्ठिधनेन पराङ्मुखा सकलकार्येषु॥ १६॥
हिमदग्धकमलिनीव दृश्यसे किं सुतनु! पृष्टे तेन। सा कथयति तस्मै पुत्राभावदुःखं ततो धनो भणति॥१७॥
मा भवोत्सुकमना बाढं भक्त्या धनदयक्षमहम्। आराध्य विधिना तुभ्यं पुत्रं दापयिष्यामि॥ १८॥
सप्तदिनाभ्यन्तरं तस्मान्मा प्रमदाक्षि! खेदमुद्वह। इत्युक्त्वा संध्यायां धनश्रेष्ठी पूजयितुं यक्षम्॥ १९॥
परिमुक्तसकलकार्यस्तद्भवने तिष्ठति निरशनस्तावत्। यावत्सप्तमी रजनिस्तदा यक्षो भणति प्रत्यक्षम्॥२०॥
भविष्यति तव लघु पुत्रो महाप्रसाद इति भणित्वा नत्वा। यक्षस्य पादकमलं संप्राप्तो निजगृहे श्रेष्ठी॥२१॥
यक्षादेशं सर्वं कथयति भार्यायाः सा च संतुष्टा। बध्नाति ग्रन्थिं भणति चैवमेव भवत्वेतदिति॥२२॥
ततः पश्चिमे यामे बन्धुमती पश्यति स्वप्ने। निजवदने प्रविशद् नारङ्गं जनितगुरुरङ्गम्॥२३॥
उत्थाय सा कथयति पत्ये ततो विमृश्य सम्यक्। तेनापि तनयो भविष्यतीति कथितं सा च परितुष्टा॥२४॥
तद्दिवसजातगर्भा प्रसूते समये मनोरमं पुत्रम्। प्राप्ते द्वादशाहे दत्तं नामेदं तस्य॥२५॥
जनकाभ्यां बन्धुराज इति लक्ष्मीविस्तरतस्ततः क्रमशः। अधिगतकलाकलापः संप्राप्तो यौवनं सोऽपि॥२६॥
अथ केनापि कार्येण धनश्रेष्ठी बन्धुराजपरिकलितः। संप्राप्त उद्याने जनमनआनन्दनाभिधाने॥२७॥
ततः पश्यति तत्र मुनिं दिशन्तं सुगतिप्रत्यलं धर्मम्। भव्यानां हितार्थमुपविष्टः सोऽपि शृणोति॥२८॥

बाहत्तरिकलकुसलवि ते नर मुंक्खगणि, सयलकलहं सुपवित्त न दयकल जाहं मणि।
संजमकल तह तवकल वरविन्नाणकल, जे इय कला हु न याणहिं ते नर नणु विगल ॥२९॥
छद्दंसण छन्नवइ पासंडइं, अवरुप्परुवि न मच्छरु छड्डइं।
ताहं न दूसइ कोइ अहिंसा, तो तमणुट्ठह म कुणह हिंसा ॥३०॥
जो सद्धम्मासाए गहेइ कुहम्मु नरु, पच्छत्तावदवेण सु डज्झइ जेम्व तरु।
जो वेरुलिउ किरेविणु गिन्हइ कायमणि, सो जाणग जाणाविउ बुहु तप्पेइ मणि ॥३१॥
न जडकलावु न वक्कलचीरइं, न मंडणु न खालणु नीरइं।
एयाइं सोहि करंति न पावहं, जह दय थावरजंगमजीवहं ॥३२॥
इच्चाइदयागुणगणमायन्नेउं मुणिंदपासम्मि। विहिणा तसवहविरई पडिवन्ना बंधुराएण ॥३३॥
जो एयं पडिवज्जइ वज्जइ सो बंधपमुहअइयारे। इय कहिए मुणिवयणा पडिवज्जइ तेवि तह चेव ॥३४॥
धणसेट्ठिणा पवन्नो सावयधम्मो दुवालसविहोवि। पणमेउं मुनिनाहं सट्ठाणं जंति ते दोवि ॥३५॥
जीवदयं कुव्वंतो सविसेसं बंधुरायवणिपवरो। पंचहिं भज्जाहिं समं कीलइ दोगुंदुगसुरोव्व ॥३६॥
अह अन्नया कयाई केणई मित्तेण साहियं तस्स। जह अज्ज जोगनंदी उज्जाणे जोगिओ पत्तो ॥३७॥
जो नियगुणगणधवलो बहुमुल्लमहल्लमोत्तियसरीए। कंठगयाए रेहइ हिमवंतगिरिव्व गंगाए ॥३८॥
ता दट्ठव्वो एसो अणेगअच्छेरयाण कुलभवणं। दट्ठव्वदंसणं चिय नयणाण फलं बुहा विंति ॥३९॥

---

द्वासप्ततिकलाकुशला अपि ते नरा मूर्खगणे, सकलकलासु सुपवित्रा न दयाकला येषां मनसि।
संयमकला तथा तपःकला वरविज्ञानकला, ये इति कलाः खलु न जानन्ति ते नरा ननु विकलाः ॥२९॥
षड् दर्शनानि षण्णवतिः पाखण्डानि, परस्परमपि न मत्सरं मुञ्चन्ति।
तेषां न दूषयति कोऽप्यहिंसां, ततस्तामनुतिष्ठत मा कुरुत हिंसाम् ॥३०॥
यः सद्धर्माशया गृह्णाति कुधर्मं नरः, पश्चात्तापदवेन स दह्यते यथा तरुः।
यो वैडूर्यं विक्रीय गृह्णाति काचमणिं, स ज्ञायको ज्ञापयिता बहु तपति मनसि ॥३१॥
न जटाकलापो न वल्कलचीवराणि, न मण्डनं न क्षालनं नीरेण।
एतानि शुद्धिं कुर्वन्ति न पापानां, यथा दया स्थावरजङ्गमजीवानाम् ॥३२॥
इत्यादिदयागुणगणमाकर्ण्य मुनीन्द्रपार्श्वे। विधिना त्रसवधविरतिः प्रतिपन्ना बन्धुराजेन ॥३३॥
य एतां प्रतिपद्येत वर्जयेत् स बन्धप्रमुखातिचारान्। इति कथिते मुनिवचनात्परिवर्जयति तानपि तथैव ॥
धनश्रेष्ठिना प्रपन्नः श्रावकधर्मो द्वादशविधोऽपि। प्रणम्य मुनिनाथं स्वस्थानं यातस्तौ द्वावपि ॥३५॥
जीवदयां कुर्वन् सविशेषं बन्धुराजवणिक्प्रवरः। पञ्चभिर्भार्याभिः समं क्रीडति दोगुन्दुकसुर इव ॥३६॥
अथान्यदा कदाचित्केनचिद् मित्रेण कथितं तस्मै। यथाऽद्य योगनन्द्युद्याने योगी प्राप्तः ॥३७॥
यो निजगुणगणधवलो बहुमूल्यमहामौक्तिकमालया। कण्ठगतया राजति हिमवद्गिरिरिव गङ्गया ॥३८॥

ता काऊण पसायं वल्लह ! तस्संतियम्मि वच्चामो । पेच्छामो अच्छरियं किंचिवि आगिट्ठिमाईयं ॥४०॥
एवं होउत्ति तओ आरुहिय रहम्मि ते गया तत्थ । कप्पूरप्पभिईहिं काउं से·गुरुयमुवयारं ॥४१॥
उवविट्ठा नमिऊणं बहुओ कोलाहलेण पुरलोओ । मिलिओ सोवि हु दक्खइ· बहुकोउयमंततंताइं ॥४२॥
नियनियठाणम्मि गए लोए तह चेव पज्जुवासेइ । सेट्ठिसुयवंधुराओ तद्दिणयावज्जिओ जोई ॥४३॥
पुव्वपसाहियचेडयमज्झाओ भणइ चेडयं एगं । जं भणइ वंधुराओ सया तए तं विहेयव्वं ॥४४॥
पभणेइ वंधुरायं एसो अट्ठमिचउद्दसीसु तए । तप्पेयव्वो मज्जेण इय पवज्जित्तु से वयणं ॥४५॥
नमिऊण वंधुराओ तं पुच्छिय नियगिहम्मि संपत्तो । कुणइ मुणिकहियधम्मं जोगियवयणं च तो सोवि ॥
जोवि न वट्टइ वयणे जो नवि दिन्नंपि पत्थिओ देइ । जोवि हु करेइ गव्वं दुव्वयणं व.वि भासेइ ॥४७॥
तं तंपि हु बंधावइ चेडयचरडाउ गाढवंधेहिं । अदिट्ठवंधणेहिं तो लोओ तस्स भयभीओ ॥४८॥
चिट्ठइ सयावि एवं च वइयरं जाणिउं भणइ जणओ । तुहं पुव्वएहिं बद्धावि मोइया कोवि नवि बद्धो ॥
पढमवयस्सइयारो पढमो एसो गुरूहिं तुह कहिओ । ता तं सयमंगीकयमेवं कह वच्छ ! मइलेसि ? ॥
वद्धविमुक्को कोवि हु वेरवसा केणविप्पयारेण। अवयरइ तुह सरीरे इय अधीइ दहइ मह हिययं ॥५१॥
तथा ।
जइ मन्नसि मह वयणं जइ मन्नसि गुरुवयणं जिणमयं च। ता वच्छ ! तुच्छचरियं वज्जसु जीवाण वंधदुहं॥
भुवणगुरुणोवइट्ठं जीवदयानिम्मलं वयं गहिउं । भंजंति जंतुसंतावणेण जे मंदबुद्धीया ॥५३॥

---

तस्माद् द्रष्टव्य एषोऽनेकाश्चर्याणां कुलभवनम् । द्रष्टव्यदर्शनमेव नयनयोः फलं बुधा ब्रुवन्ति ॥३९॥
तस्मात् कृत्वा प्रसादं वल्लभ ! तस्यान्तिके व्रजावः । पश्याव आश्चर्यं किञ्चिदप्याकृष्ट्यादिकम् ॥४०॥
एवं भवत्विति तत आरुह्य रथे तौ गतौ तत्र । कर्पूरप्रभृतिभिः कृत्वा तस्य गुरुमुपचारम् ॥४१॥
उपविष्टौ नत्वा बहुः कोलाहलेन पुरलोकः । मिलितः सोऽपि खलु दर्शयति बहुकौतुकमन्त्रतन्त्रादि ॥४२॥
निजनिजस्थाने गते लोके तथैव पर्युपास्ते । श्रेष्ठिसुतबन्धुराजस्तद्दिनयावर्जितो योगी ॥४३॥
पूर्वप्रसाधितचेटकमध्याद् भणति चेटकमेकम् । यद् भणति बन्धुराजः सदा त्वया तद्विधातव्यम् ॥४४॥
प्रभणति बन्धुराजमेषोऽष्टमीचतुर्दश्योस्त्वया । तर्पितव्यो मद्येनेति प्रपद्य तस्य वचनम् ॥४५॥
नत्वा बन्धुराजस्तं पृष्ट्वा निजगृहे संप्राप्तः । करोति मुनिकथितधर्मं योगिवचनं च ततः सोऽपि ॥४६॥
योऽपि न वर्तते वचने यो नापि दत्तमपि प्रार्थितो ददाति । योऽपि खलु करोति गर्वं दुर्वचनं वापि भाषते ॥
तं तमपि खलु बन्धयति चेटकचरटेन गाढबन्धैः । अदृष्टबन्धनैस्ततो लोकस्तस्य भयभीतः ॥४८॥
तिष्ठति सदाप्येवं च व्यतिकरं ज्ञात्वा भणति जनकः। तव पूर्वजैर्बद्धा अपि मोचिताः कोऽपि न तु बद्धः॥४९॥
प्रथमव्रतस्यातिचारः प्रथम एष गुरुभिस्त्वां कथितः । तस्मात्त्वं स्वयमङ्गीकृतमेवं कथं वत्स ! मलिनयसि ? ॥
बद्धाविमुक्तः कोऽपि खलु वैरवशात्केनापि प्रकारेण । अवतरेत् तव शरीर इत्यधृतिर्दहति मम हृदयम् ॥५१॥
यदि मन्यसे मम वचनं यदि मन्यसे गुरुवचनं जिनमतं च । तदा वत्स ! तुच्छचरितं वर्जय जीवानां बन्धदुःखम्॥

भमिहंति भवं घोरं ते वहबंधाइदुक्खपरतंता। थेवोवि हु वयभंगो जणेइ गरुयाइं दुक्खाइं ॥५४॥
इय पिउणा भन्नंतो मन्नंतो सो तिणंव तव्वयणं। तह चेव पयट्टंतो ओहट्टंतो न मणयंपि ॥५५॥
रायामचाईहिं नाऊण सुपाडिहेरपरिकलियं। सामेण भणिओवि हु न कुणइ कन्नेवि तव्वयणं ॥५६॥
अह निवबेलाइत्तो लब्भधणव्वइयरम्मि कलहंतो। गहिओ बंधाविय चेडगाओ लब्भं धणं किंपि॥५७॥
दायव्वमत्थि अन्नंपि किंपि सो भणइ तुम्ह जं एत्थ। तस्स य मट्टे खग्गं गिन्हह एयंति सो भणिउं ॥
कोसाओ आयड्ढिय खग्गं दंसणमिसेण सहसत्ति। एक्केणं घाएणं दो खंडइ बंधुरायं सो ॥ ५९ ॥
नियभिच्चसहाओ सो तासेउं बन्धुरायभिच्चजणं। निययावासम्मि गओ तत्थ सरूवे तक्खणेण॥६०॥
विन्नत्ते नरवइणा भणियं जह एत्तियस्स सो जोग्गो। अन्नायपरो तम्हा गवेसणा इह न कायव्वा ॥६१॥
तत्तो पंचत्तगओ गमिही कुगईसु बहुपयारासु। विसहंतो धणदुक्खं बंधणवहमारणाईयं ॥६२॥
धणसिट्ठीवि हु विहवं सत्तसु खित्तेसु परिक्खिवेऊण। सुगुरूण पायमूले गिण्हइ दिक्खं सभज्जोवि॥६३॥
गहिऊण दुविहसिक्खं अंते संलेहणं विहेऊण। संपत्तो सोहम्मे कमेण मोक्खंपि गच्छिहिही ॥ ६४ ॥

॥ इति प्राणातिपातविरतिप्रथमातिचारविपाके बन्धुराजकथानकं समाप्तम् ॥

---

भुवनगुरुणोपदिष्टं जीवदयानिर्मलं व्रतं गृहीत्वा। भञ्जन्ति जन्तुसंतापनेन ये मन्दबुद्धय ॥५३॥
भ्रमिष्यन्ति भवं घोरं ते वधबन्धादिदुःखपरतन्त्राः। स्तोकोऽपि खलु व्रतभङ्गो जनयति गुरूणि दुःखानि ॥
इति पित्रा भण्यमानो मन्यमानः स तृणमिव तद्वचनम्। तथैव प्रवर्तमानोऽपसरन् न मनागपि ॥५५॥
राजामात्यादिभिर्ज्ञात्वा सुप्रातिहार्यपरिकलितम्। साम्ना भणितोऽपि खलु न करोति कर्णेऽपि तद्वचनम् ॥५६॥
अथ नृपवेलाऽऽयुक्तो लभ्यधनव्यतिकरे कलहयन्। गृहीतो बन्धयित्वा चेटकाद् लभ्यं धनं किमपि ॥५७॥
दातव्यमस्त्यन्यदपि किमपि स भणति तुभ्यं यदत्र। तस्य च मट्टे खड्गं गृहाणेतमिति स भणित्वा ॥५८॥
कोशादाकृष्य खड्गं दर्शनमिषेण सहसेति। एकेन घातेन द्विधा खण्डयति बन्धुराजं सः ॥ ५९ ॥
निजभृत्यसहायः स त्रासयित्वा बन्धुराजभृत्यजनम्। निजावासे गतस्तत्र स्वरूपे पुररक्षेण ॥ ६० ॥
विज्ञापिते नरपतिना भणितं यथैतावतः स योग्यः। अन्यायपरस्तस्माद् गवेषणेह न कर्तव्या ॥ ६१ ॥
ततः पञ्चत्वगतो गमिष्यति कुगतिषु बहुप्रकारासु। विषहमानो धनदुःखं बन्धनवधमारणादिकम् ॥६२॥
धनश्रेष्ठ्यपि खलु विभवं सप्तसु क्षेत्रेषु प्रक्षिप्य। सुगुरूणां पादमूले गृह्णाति दीक्षां सभार्योऽपि ॥६३॥
गृहीत्वा द्विविधशिक्षामन्ते संलेखनां विधाय। संप्राप्तः सौधर्मे क्रमेण मोक्षमपि गमिष्यति ॥६४॥

जो लिट्ठुलउडदंडाइएहिं जीवाण ताडणं कुणइ। निस्संको कुद्धमणो दिओव्व सो भमइ भीमभवे॥

तथाहि;—

अत्थि भरहम्मि वासे कुसुमपुरं पुरमणंगसारिच्छं। सिरिनंदणं समयरं अविग्गहं खाइसालिल्लं ॥२॥

तम्मि निवो निवतिलओ मलओ दारिद्दावतवियाणं। रइसुंदरी कलत्तं सुकलत्तं तस्स सुकलत्तं ॥३॥

तह मंती मइजलही तस्सत्थि पुरोहिओ य सिरिकंठो। से भज्जा य जसोया पुत्तो ताणत्थि सिरिवच्छो॥

सो अन्नया कयाई पिउणा अवमाणिओ जडप्पगई। कंचणपुरम्मि पत्तो कणवित्तिं कुणइ पढई य ॥५॥

विज्जामढम्मि तहवि हु न किंचि आगच्छई पढंतस्स। तो निव्विन्नो बाढं पाढं मोत्तुं दढसरीरो ॥६॥

ओलग्गिउं पवत्तो भोयणवित्तीए सूरगिहवइणो। तस्स सुएणं सद्धिं कम्मिवि गामम्मि संचलिओ ॥७॥

पिच्छंति य ते मग्गे मुणीण जुयलं पहे परिस्संतं। नग्गोहरुक्खहिट्ठा उवविट्ठं फासुयपएसे ॥८॥

तं च नमिऊण दोवि हु उवविट्ठा अह भणेइ भत्तीए। तयभिमुहं सूरसुओ पहु! धम्मो किंफलो होइ?॥

तो सजलजलहरुद्दामगहिरसद्देण ताण तं कहइ। तम्मज्झे जिट्ठमुणी तच्चित्तणुकूलणत्थं जं ॥१०॥

तथाहि;—

मोक्खफलो दुहदलणो आवइकालेवि दिन्नसाहिज्जो। हियइच्छियकज्जकरो हवइ सुमित्तोव्व जिणधम्मो॥

सारीरमाणसाणं दुक्खाणं मोयगो मणाणंदो। भवजलहिजाणवत्तं सव्वत्थ जयावहो धम्मो ॥१२॥

दालिद्दवाहिपरमोसहंव सोहग्गकंडयं परमं। मणचिंतियत्थसंपाडणम्मि चिंतामणी धम्मो ॥१३॥

विन्नाणनाणजणओ बंधू नीसेसजंतुवग्गस्स। वीसासकरणपडुओ परमप्पपहावओ धम्मो ॥१४॥

---

यो लेष्टुलकुटदण्डादिकैर्जीवानां ताडनं करोति। निःशङ्कः क्रुद्धमना द्विज इव स भ्रमति भीमभवे ॥१॥

अस्ति भरते वर्षे कुसुमपुरं पुरमनङ्गसदृशम्। श्रीनन्दनं स-म-करमविग्रहं खाति(दि)शालि ॥२॥

तस्मिन् नृपो नृपतिलको मलयो दारिद्र्यदावतप्तानाम्। रतिसुन्दरी कलत्रं सुकलत्वं तस्य शुकलत्रम् ॥३॥

तथा मन्त्री मतिजलधिस्तस्यास्ति पुरोहितश्च श्रीकण्ठः। तस्य भार्या च यशोदा पुत्रस्तयोरस्ति श्रीवत्सः॥४॥

सोऽन्यदा कदाचित्पित्राऽपमानितो जडप्रकृतिः। काञ्चनपुरे प्राप्तः कणवृत्तिं करोति पठति च ॥५॥

विद्यामठे तथापि खलु न किञ्चिदागच्छति पठतः। ततो निर्विण्णो बाढं पाठं मुक्त्वा दृढशरीरः ॥६॥

अवलगितुं प्रवृत्तो भोजनवृत्त्या सूरगृहपतेः। तस्य सुतेन सार्धं कस्मिन्नपि ग्रामे संचलितः ॥७॥

पश्यतश्च तौ मार्गे मुनीनां युगलं पथि परिश्रान्तम्। न्यग्रोधवृक्षस्याध उपविष्टं प्रासुकप्रदेशे ॥८॥

तच्च नत्वा द्वावप्युपविष्टावथ भणति भक्त्या। तदभिमुखं सूरसुतः प्रभो! धर्मः किंफलो भवति? ॥९॥

ततः सजलजलधरोद्दामगभीरशब्देन तयोस्तं कथयति। तन्मध्ये ज्येष्ठमुनिस्तच्चित्तानुकूलनार्थं यत् ॥१०॥

मोक्षफलो दुःखदलन आपत्कालेऽपि दत्तसाहाय्यः। हृदयेप्सितकार्यकरो भवति सुमित्रमिव जिनधर्मः ॥११॥

शारीरमानसयोर्दुःखयोर्मोचको मनआनन्दः। भवजलधियानपात्रं सर्वत्र जयावहो धर्मः ॥१२॥

दारिद्र्यव्याधिपरमौषधमिव सौभाग्यकाण्डः परमः। मनश्चिन्तितार्थसंपादने चिन्तामणिर्धर्मः ॥१३॥

दोसायरणनिवित्ती सुकुलुप्पत्ती सुहाण संपत्ती । सत्तुबलस्स विवत्ती जायइ परमेण धम्मेण ॥१५॥
सयलजणपत्थणिज्जा सुहया सच्छंदगामिणी विउला । वियरइ समुज्जलंगी कित्ती धम्मेण वेसव्व ॥१६॥
इय कहिउं धम्मफलं भणिया ते दोवि साहुणा भो भो ! । जिणवरभणियं धम्मं कुणह पयत्तेण पइदियहं ॥
सिरिवच्छेणं भणियं सो धम्मो केरिसो, मुणी कहइ । जिणभणियसद्दहाणं जीवदयाए अणुट्ठाणं ॥१८॥
अह जिणनाहसरूवं सुगुरुसरूवं जियाइतत्ताइं । कहिऊणं जीवदयामूलत्तं कहइ धम्मस्स ॥१९॥
तद्यथा;—
" पठितं श्रुतं च शास्त्रं गुरुपरिचरणं च गुरुतपश्चरणम् । घनगर्जितमिव विजलं विफलं सकलं दयाविकलम् ॥"
इच्चाइसप्पंचं जइधम्मं कहिय कहइ गिहिधम्मं । तो सिरिवच्छो जंपइ आयन्नह मज्झ विन्नत्तिं ॥२०॥
न हणेमि निरवराहे जीवे संकप्पओ अहं थूले । जावज्जीवं ता मह कुणह पसायं वयेणिमिणा ॥२१॥
तो मुणिणा से कहिया बंधाई पंच इत्थ अइयारा । एएवि न कायव्वा पढमवयं रक्खमाणेण ॥२२॥
आमंति तेण भणिए सूरसुएणवि तहेव पडिवन्ने । विहिणा पढममणुव्वयमारोवइ ताण मुणिनाहो ॥२३॥
तो वंदिऊण मुणिणो चलिया ते दोवि जत्थ गंतव्वं । मुणिणोवि जहाभिमयं पगया पगएण कज्जेण ॥
करिऊणं तं जत्तं पत्ता ते पुणवि कंचणपुरम्मि । किसिकम्ममाइयाइं करिंति कम्माइं विविहाइं ॥२५॥
अह सूरेण विवाहो पारद्धो नियसुयाए वित्थरओ । सह ईसरेण केणवि तीए आहरणहेउं च ॥२६॥
सुत्तइ बहुं सुवन्नं माणिक्काइं च मोत्तियाइं च । अह लहुबंधू सूरस्स केसवो चिंतए एवं ॥२७॥

---

विज्ञानज्ञानजनको बन्धुर्निःशेषजन्तुवर्गस्य । विश्वासकरणपटुः परमपदस्थापको धर्मः ॥१४॥
दोषाचरणनिवृत्तिः सुकुलोत्पत्तिः सुखानां संपत्तिः । शत्रुबलस्य विपत्तिर्जायते परमेण धर्मेण ॥१५॥
सकलजनप्रार्थनीया सुभगा स्वच्छन्दगामिनी विपुला । विचरति समुज्ज्वलाङ्गी कीर्तिर्धर्मेण वेश्येव ॥१६॥
इति कथयित्वा धर्मफलं भणितौ तौ द्वावपि साधुना भो भोः ! । जिनवरभणितं धर्मं कुरुत प्रयत्नेन प्रतिदिवसम् ॥
श्रीवत्सेन भणितं स धर्मः कीदृशो, मुनिः कथयति । जिनभणितश्रद्धानं जीवदयाया अनुष्ठानम् ॥१८॥
अथ जिननाथस्वरूपं सुगुरुस्वरूपं जीवादितत्त्वानि । कथयित्वा जीवदयामूलत्वं कथयति धर्मस्य ॥१९॥
इत्यादिसप्रपञ्चं यतिधर्मं कथयित्वा कथयति गृहिधर्मम् । ततः श्रीवत्सो जल्पत्याकर्णयत मम विज्ञप्तिम् ॥२०॥
न हन्मि निरपराधान् जीवान् संकल्पतोऽहं स्थूलान् । यावज्जीवं तस्मान्मम कुरुत प्रसादं व्रतेनानेन ॥२१॥
ततो मुनिना तस्य कथिता बन्धादयः पञ्चात्रातिचाराः । एतेऽपि न कर्तव्याः प्रथमव्रतं रक्षता ॥२२॥
आमेति तेन भणिते सूरसुतेनापि तथैव प्रतिपन्ने । विधिना प्रथममणुव्रतमारोपयति तयोर्मुनिनाथः ॥२३॥
ततो वन्दित्वा मुनी चलितौ तौ द्वावपि यत्र गन्तव्यम् । मुनी अपि यथाभिमतं प्रगतौ प्रकृतेन कार्येण ॥२४॥
कृत्वा तां यात्रां प्राप्तौ तौ पुनरपि काञ्चनपुरे । कृषिकर्मादिकानि कुरुतः कर्माणि विविधानि ॥२५॥
अथ सूरेण विवाहः प्रारब्धो निजसुताया विस्तरतः । सहेश्वरेण केनापि तस्या आभरणहेतोश्च ॥२६॥
सूत्रयति बहु सुवर्णं माणिक्यानि च मौक्तिकानि च । अथ लघुबन्धुः सूरस्य केशवश्चिन्तयत्येवम् ॥२७॥

जं एस इह वेइस्सइ तं सव्वं मज्झ जाइ विहवाओ। तम्हा होमि विभिन्नो पढमंपि विवाहकालाओ ॥२८॥
तो मूरं सो पभणइ बंधव ! जं किंपि एइ मह भागे। तं देह, भणइ सूरो किं एवं वुचए वच्छ !॥२९॥
कस्स य पुन्नेहिं सिरी वट्टइ मिलियाण नज्जइ न इत्थ। होज्ज पुढोभूयाणं सा कस्सवि कहवि दालिद्दं॥
तो तस्सवि आभारो कड्ढेयव्वोऽवरेण सव्वोवि। सुयणत्तसंठिएणं एवं चिय वहउ ता वच्छ ! ॥३१॥
तो भणइ केसवो मह दालिद्दं होहिई विउत्तस्स। जइ, तोवि न पत्थिस्सं किंपि अहं देहि मह भागं॥
इय काउं निब्बंधं बंधुसयासाउ लेइ विहवद्धं। सिरिवच्छंपि हु लोभविय नेइ सो अप्पणो पासे ॥३३॥
पइदिवसं चिय वड्ढइ विहवो मूरस्स, केसवस्स पुणो। तह खीणो जह भोयणमित्तं किच्छेण संपडइ॥
दितस्सवि नो गिण्हइ मूरस्स इमो धणाइ थेवंपि। इय तम्मि खीणविहवम्मि आगओ पाउसो कमसो॥
तथाहि;—
गज्जंतगहिरघणगरुयगयघडाडोवपयडियपयावो। उत्थरइ गिम्हनिहणिक्कविक्कमो पाउसो राया ॥३६॥
घहलघणकसिणजलहरअंधारियसयलगयणदिसिचक्के। नय नज्जइ कत्थ गओ वियंभिए पाउसे गिम्हो॥
इय पाउसेण कणियारिऊण वरिसंतमेघधाराहिं। निव्वविय भुवणयलं मोत्तूणं विरहिहिययाइं ॥३८॥
तो मूरहालिएसुं चित्तूण हलाइं खित्तचलिएसु। हलउत्तयकरणत्थं सिरिवच्छं केसवो भणइ ॥३९॥
अम्हेवि हु जुत्तेमो हलाइं, सो भणइ अज्ज भद्दाए। एए करिंति, अम्हं जाणंताणं न तं जुत्तं ॥४०॥
अह मूरहालियाणं अच्चब्भुयनच्चिरिं नइं मग्गे। दट्ठुं अक्खित्ताणं भद्दाए वोलिओ पहरो ॥४१॥

---

यदेष इह व्येष्यति तत्सर्वं मम याति विभवात्। तस्माद् भवामि विभिन्नः प्रथममेव विवाहकालात् ॥२८॥
ततः सूरं स प्रभणति बान्धव ! यत्किमप्येति मम भागे। तद् देहि, भणति सूरः किमेवमुच्यते वत्स !॥
कस्य च पुण्यैः श्रीर्वर्तते मिलितानां ज्ञायते नात्र। भवेत्पृथग्भूतानां सा कस्यापि कथमपि दारिद्र्यम्॥३०॥
ततस्तस्याप्याभारः कर्षितव्योऽपरेण सर्वोऽपि। सुजनत्वसंस्थितेनैवमेव वहतु तस्माद् वत्स ! ॥३१॥
ततो भणति केशवो मम दारिद्र्यं भविष्यति वियुक्तस्य। यदि,ततोऽपि न प्रार्थयिष्ये किमप्यहं देहि मम भागम्॥
इति कृत्वा निर्बन्धं बन्धुसकाशाल्लाति विभवार्धम्। श्रीवत्समपि खलु लोभयित्वा नयति स आत्मनः पार्श्वे॥३३॥
प्रतिदिवसमेव वर्धते विभवः सूरस्य, केशवस्य पुनः। तथा क्षीणो यथा भोजनमात्रं कृच्छ्रेण संपद्यते ॥३४॥
ददतोऽपि नो गृह्णाति सूरस्यायं धनादि स्तोकमपि। इति तस्मिन् क्षीणविभव आगता प्रावृट् क्रमशः॥३५॥
गर्जद्गम्भीरघनगुरुगजघटाटोपप्रकटितप्रतापः। उच्छलति ग्रीष्मनिधनैकविक्रमः प्रावृड्राजः ॥३६॥
बहलघनकृष्णजलधरान्धकारितसकलगगनदिक्चक्रायाम्। नच ज्ञायते क्व गतो विजृम्भितायां प्रावृषि ग्रीष्मः॥
इति प्रावृषा कर्णिकारयित्वा वर्षन्मेघधाराभिः। निर्वाप्य भुवनतलं मुक्त्वा विरहिहृदयानि ॥३८॥
ततः सूरहालिकेषु गृहीत्वा हलानि क्षेत्रचलितेषु। हलयोक्त्रककरणार्थं श्रीवत्सं केशवो भणति ॥३९॥
वयमपि ननु योजयामो हलानि, स भणत्यद्य भद्रायाम्। एते कुर्वन्ति, अस्माकं जानतां न तद्युक्तम्॥
अथ सूरहालिकानामत्यद्भुतनर्तनीं नदीं मार्गे। द्रष्टुमाक्षिप्तानां भद्राया अतिक्रान्तः प्रहरः ॥४१॥

जो आसि तत्थ दुट्ठो, पयट्टमणुकूलबहुगुणं लग्गं। तम्मि समयम्मि खित्ते तेहिं कओ खंडणारंभो॥४२॥
केसवसिरिवच्छेहिं अन्नदिणे सोहणे मुहुत्तम्मि। हलउत्तयकरणत्थं जुत्तेसु दोसुवि हलेसु ॥४३॥
सिरिवच्छो गोणेणं तहाहओ पट्ठुयाए हिययम्मि। मुच्छानिमीलियच्छो जह पडिओ धरणिवट्टम्मि॥
गेहे चिय तं मुत्तुं हलमिक्कं चेव केसवो घित्तुं। चलिओ खित्ताभिमुहं ता करभरुयं निसामेउं॥४५॥
रासिं जुत्तं चिय तोडिऊण गोणे गए कहवि गहिउं। असुमे समयम्मि कओ तेणं हलउत्तओ खित्ते॥
अह विन्नायावसरो दुण्हवि हलउत्तयाण सिरिवच्छो। पभणइ केसव! पेच्छह दिव्वस्स गईए कुडिलत्तं॥
सूरस्स पुन्नवसओ पमायओ हालियाण दुम्मुहुत्तं। टलियं सुहे मुहुत्ते जाओ हलउत्तओ ताव॥४८॥
अम्हं पुण विवरीयं जाणंताणंपि उज्जयाणंपि। संजायं इय सुणिउं कीरइ किं केसवो भणइ॥४९॥
अह अन्नया य दुन्निवि हलाइं खेडंति अप्पणच्चेव। सिरिवच्छहले गलिओ वलिओवि हु थक्कए पडिओ॥
तो तोत्तेणं हणई आराहिं य विंधए पुणो बहुयं। तुत्तम्मि कहवि भग्गे हणेइ पण्हिप्पहारेहिं॥५१॥
सूरसुएणं कज्जागएणं दट्ठूण पभणिओ भाया!। पाणाइवायविरइं घित्तुं आयरसि किं एवं?॥५२॥
सो भणइ परवसो हं भणइ य तह केसवोवि सूरसुयं। किं खलियारसि एयं किं तुह तत्तीए एयाए?॥
तो सो मोणं काउं गओ तओ सो तहेव सिरिवच्छो। थक्कं थक्कं गोणं बहुप्पयारं कयत्थेइ॥५४॥
दंतगिरिडिं पबंधइ पुच्छं मोडेइ खाइ दसणेहिं। चंडालोव्व पयंपइ अजंपियव्वाइं अइकुद्धो॥५५॥
इत्तो य कविलमूसयकसरवहुआरितिट्ठपभिईहिं। केसवकिसी विणट्ठा ववहरएहिं तओ धरिओ॥५६॥

*य आसीत्तत्र दुष्टः, प्रवृत्तमनुकूलबहुगुणं लग्नम्। तस्मिन् समये क्षेत्रे तैः कृतः कर्षणारम्भः॥४२॥*
केशवश्रीवत्साभ्यामन्यदिने शोभने मुहूर्ते। हलयोक्त्रककरणार्थं युक्तयोरपि द्वयोर्हलयोः॥४३॥
श्रीवत्सो गवा तथा हतः पादेन हृदये। मूर्च्छानिमीलिताक्षो यथा पतितो धरणीपृष्ठे॥४४॥
गेह एव तं मुक्त्वा हलमेकमेव केशवो गृहीत्वा। चालितः क्षेत्राभिमुखं तदा करभस्तं निशम्य॥४५॥
राशिं योक्त्रं च त्रोटयित्वा गवि गते कथमपि गृहीत्वा। अशुभे समये कृतं तेन हलयोक्त्रकं क्षेत्रे॥४६॥
अथ विज्ञातावसरो द्वयोरपि हलयोक्त्रयोः श्रीवत्सः। प्रभणति केशव! पश्य दैवस्य गतेः कुटिलत्वम्॥४७॥
सूरस्य पुण्यवशतः प्रमादतो हालिकानां दुर्मुहूर्तम्। अपगतं शुभे मुहूर्ते जातं हलयोक्त्रकं तावत्॥४८॥
अस्माकं पुनर्विपरीतं जानतामप्युद्यतानामपि। संजातमिति श्रुत्वा क्रियते किं केशवो भणति॥४९॥
*अथान्यदा च द्वावपि हले कर्षत आत्मनैव। श्रीवत्सहले गलिर्वल्यपि खलु तिष्ठति पतितः॥५०॥*
ततस्तोत्रेण हन्त्याराभिश्च विध्यति पुनर्बहु। तोत्रे कथमपि भग्ने हन्ति पार्ष्णिप्रहारैः॥५१॥
सूरसुतेन कार्यागतेन दृष्ट्वा प्रभणितो भ्रातः!। प्राणातिपातविरतिं गृहीत्वाऽऽचरसि किमेवम्?॥५२॥
स भणति परवशोऽहं भणति च तथा केशवोऽपि सूरसुतम्। किं स्खलयस्येतं किं तव चिन्तयैतया?॥५३॥
ततः स मौनं कृत्वा गतस्ततः स तथैव श्रीवत्सः। स्थितं स्थितं गां बहुप्रकारं कदर्थयति॥५४॥
दन्तघिंटिं प्रबध्नाति पुच्छं मोटयति खादति दशनैः। चाण्डाल इव प्रजल्पत्यजल्पितव्यान्यतिकुद्धः॥५५॥

दो सारवलिदावि हु तेहिं उद्दालिया तओ सगडं । वाहेइ भाडएणं सिरिवच्छो अवरगोणेहिं ॥५७॥
अह अन्नदिणे जुत्तो सो गलिओ गड्डयम्मि भरियम्मि । घणधूलीखोणीए खुरेवि उक्खणइ न कहंपि ॥५८॥
सगडाओ उत्तरिउं तो सो आराहिं विंधए हणइ । तोत्तयलउडयडंगालिट्ठुवलाईहिं निक्करुणं ॥५९॥
अह मोडेउं लग्गो पुच्छं जा तेण गलिवलद्देण । लत्ताए हओ गाढं मम्मम्मि मओ गओ नरयं ॥६०॥
तो सूरसुओ चिंतइ हद्धी एसो पमायवसवत्ती । वयमयलणाउ नूणं भमिही एसो भवारन्ने ॥६१॥
मज्झवि अलद्धपुव्वं लद्धुं एयं सुधम्मसामग्गिं । कुगईए निवडंतो अप्पा नोविक्खिउं जुत्तो ॥६२॥
सुगई पुण मुत्तिच्चिय सा पुण संपुन्नचरणओ चेव । तं पुण सुगुरूण समागमेण, गविस्सामि ता एए ॥
एवं सो ववसंतो मुक्को पाणेहिं आउपज्जंते । अखंडियपढमवओ पत्तो ईसाणकप्पम्मि ॥६४॥
सिरिवच्छनारओवि हु परमाहम्मियमुहाउ निसुणेउं । सुमरेऊणं च तहा पढमाणुव्वयअइक्कमणं ॥६५॥
पसरियपच्छायावो परिचिंतइ हा ! मए अणज्जेण । अमयलवम्मि निहित्तो कह मुट्ठी कालकूडस्स ? ॥
लद्धूण सव्वसंजमसामग्गिमणुव्वयं मए पढमं । एक्कं चिय पडिवन्नं तंपि हु जाणंतएणेव ॥६७॥
भग्गं अइक्कमंतेण पवरअमरत्तकारणं परमं । सिवसुहसंपत्तिफलं कमेण इन्हि तु पावो हं ॥६८॥
एयमवत्थं पत्तो करेमि किं दुक्खसायरनिबुड्डो । ता सच्चमिणं भणियं केहिवि विबुहेहिं पुरिसेहिं ॥६९॥

"इहैव नरकव्याधेश्चिकित्सां न करोति यः । गतो निरौषधं स्थानं स रुजः किं करिष्यति ? ॥"

एवं सो अप्पाणं निंदंतो जिणसरणपणीयं च । धम्मं बहु मन्नंतो वाससहस्साइं दस गमिउं ॥७०॥

---

इतश्च कपिलमूषकचरबहुझिल्लीशलभप्रभृतिभिः । केशवकृषिर्विनष्टा व्यवहारकैस्ततो धृतः ॥५६॥
द्वौ सारबलीवर्दावपि खलु तैर्गृहीतौ ततः शकटम् । वाहयति भाटकेन श्रीवत्सोऽपरगवाभ्याम् ॥५७॥
अथान्यदिने युक्तः स गलिः शकटे भृते । घनधूलिक्षोण्यां खुरानप्युत्खनति न कथमपि ॥५८॥
शकटादुत्तीर्य ततः स आराभिर्विध्यति हन्ति । तोत्रलकुटयष्टिलेष्टूपलादिभिर्निष्करुणम् ॥५९॥
अथ मोटयितुं लग्नः पुच्छं यावत्तेन गलिबलीवर्देन । पादेन हतो गाढं मर्माणि मृतो गतो नरकम् ॥६०॥
ततः सूरसुतश्चिन्तयति हा धिगेष प्रमादवशवर्ती । व्रतमलिनीकरणान्नूनं भ्रमिष्यत्येष भवारण्ये ॥६१॥
ममाप्यलब्धपूर्वां लब्ध्वैतां सुधर्मसामग्रीम् । कुगतौ निपतन्नात्मा नोपेक्षितुं युक्तः ॥६२॥
सुगतिः पुनर्मुक्तिरेव सा पुनः संपूर्णचारित्रत एव । तत्पुनः सुगुरूणां समागमेन, गवेषयिष्यामि तस्मादेतान्॥
एवं स व्यवस्यन् मुक्तः प्राणैरायुःपर्यन्ते । अखण्डितप्रथमव्रतः प्राप्त ईशानकल्पे ॥६४॥
श्रीवत्सनारकोऽपि खलु परमाधार्मिकमुखात् श्रुत्वा । स्मृत्वा च तथा प्रथमाणुव्रतातिक्रमणम् ॥६५॥
प्रसृतपश्चात्तापः परिचिन्तयति हा ! मयाऽनार्येण । अमृतलवे निहितः कथं मुष्टिः कालकूटस्य ? ॥६६॥
लब्ध्वा सर्वसंयमसामग्रीकमणुव्रतं मया प्रथमम् । एकमेव प्रतिपन्नं तदपि खलु जानतैव ॥६७॥
भग्नमतिक्रामता प्रवरामरत्वकारणं परमम् । शिवसुखसंपत्तिफलं क्रमेणेदानीं तु पापोऽहम् ॥६८॥
एतामवस्थां प्राप्तः करोमि किं दुःखसागरनिमग्नः । तस्मात्सत्यमिदं भणितं कैरपि विबुधैः पुरुषैः ॥६९॥

उव्वट्टिय निरयाओ इह भरहे मलयपुरपुरे रम्मे। विक्कमरायस्स सुओ हरिविक्कमनामओ होउं ॥७१॥
संजायजाइसरणो संविग्गो पालिऊण जिणदिक्खं। संपत्तो सोहम्मे तओ चुया निव्वुया दोवि ॥७२॥

॥ इति प्रथमाणुव्रते द्वितीयकातीचारे वधदृष्टान्ते विप्रश्रीवत्सकथानकं समाप्तम् ॥

---

एवं स आत्मानं निन्दन् जिनवरप्रणीतं च। धर्मं बहु मन्यमानो वर्षसहस्राणि दश गमयित्वा ॥७०॥
उद्वृत्य निरयादिह भरते मलयपुरपुरे रम्ये। विक्रमराजस्य सुतो हरिविक्रमनामतो भूत्वा ॥७१॥
सजातजातिस्मरण. संविग्नः पालयित्वा जिनदीक्षाम्। संप्राप्त. सौधर्मे ततश्च्युतौ निर्वृतौ द्वावपि ॥७२॥



गलकंबलकन्नाईण कप्पणं जो करेइ जीवाणं । सो राहडोव्व पावइ भवभमणदुहाइं भीमाइं ॥१॥

तथाहि:—

महिमहिलामुहतिलयंव लच्छिनिलयं पुरं इह पसिद्धं। विजियविपक्खनरिंदो राया तत्यत्थि कुरुचंदो॥२॥
तस्सत्थि पिया गोरीव संभुणो सीलसालिणी लीला । राहडनामा मंती सुरज्जकज्जे सया सज्जो ॥३॥
अह अन्नया नरिंदो राहडमंडलियमाइलोएण । परिवारिओ समंता अत्थाणसहाए उवविट्ठो ॥४॥
जा चिट्ठइ ता दिट्ठो एगो विज्जाहरो नहयलाओ । आगच्छंतो करकलियखग्गफलओ सभज्जो य॥५॥
संपत्तो अत्थाणे पभणइ नरनाहपणयपयकमलं। कुरुचंदराय ! निसुणसु विन्नत्ति मज्झ पसिऊण ॥६॥
खणमेगं मज्झ पिया रक्खेयव्वा तए पयत्तेण । जाव अहं संगामं करेमि गंतूण सह रिउणा ॥७॥
अन्नत्थ कत्थवि अहं एयं मोत्तुं चएमि नहु तेण । तुह पासम्मि मुएमि परनारिसहोयर ! नरिंद!॥८॥
परकज्जकरणरसिया दीसंति महीए पविरलनरिंदा ।तुम्हारिसा महायस! पुरिसोत्तमगुणगणोवेया ॥९॥
सव्वस्सं मह एसा पाणपिया पणइणी इमा तम्हा । रक्खेयव्वा तुमए इय भणिउं तो गओ खयरो॥१०॥
दिन्नासणम्मि अह सा उवविट्ठा खयरपणइणी जाव। ता गयणाओ सहसा फरयसणाहा भुया पडिया ॥
ताहे उड्ढमुहाणं सव्वाण जणाण तम्मि अत्थाणे । दिढगहियमंडलग्गा दुइयभुया निवडिया झत्ति ॥१२॥
तत्तो खेवेण विणा पडियं गयणंगणाउ सिरकमलं । मणिमउडदिप्पमाणं मज्झण्हदिणिंदबिंबंव॥१३॥
गुरुकोवारुणदारुणपसारियच्छं अईव दुप्पिच्छं । तिवलीभंगुरभालं निट्ठुरदंतग्गदट्ठोहं ॥१४॥

---

गलकम्बलकर्णादीनां छेदनं यः करोति जीवानाम् । स राहड इव प्राप्नोति भवभ्रमणदुःखानि भीमानि॥१॥
महीमहिलामुखतिलकमिव लक्ष्मीनिलयं पुरमिह प्रसिद्धम् । विजितविपक्षनरेन्द्रो राजा तत्रास्ति कुरुचन्द्रः॥२॥
तस्यास्ति प्रिया गौरीव शम्भोः शीलशालिनी लीला । राहडनामा मन्त्री सुराज्यकार्ये सदा सज्जः ॥३॥
अथान्यदा नरेन्द्रो राहडमाण्डलिकादिलोकेन । परिवारितः समन्तादास्थानसभायामुपविष्टः ॥४॥
यावत्तिष्ठति तावद् दृष्ट एको विद्याधरो नभस्तलात् । आगच्छन् करकलितखड्गफलकः सभार्यश्च ॥५॥
संप्राप्त आस्थाने प्रभणति नरनाथप्रणतपादकमलम् । कुरुचन्द्रराजन् ! शृणु विज्ञप्तिं मम प्रसद्य ॥६॥
क्षणमेकं मम प्रिया रक्षितव्या त्वया प्रयत्नेन । यावदहं संग्रामं करोमि गत्वा सह रिपुणा ॥७॥
अन्यत्र क्वाप्यहमेतां मोक्तुं शक्नोमि नैव तेन । तव पार्श्वे मुञ्चामि परनारीसहोदर ! नरेन्द्र ! ॥८॥
परकार्यकरणरसिका दृश्यन्ते मह्यां प्रविरलनरेन्द्राः । युष्मादृशा महायशः! पुरुषोत्तमगुणगणोपेताः ॥९॥
सर्वस्वं ममैषा प्राणप्रिया प्रणयिनीयं तस्मात् । रक्षितव्या युष्माभिरिति भणित्वा ततो गतः खचरः ॥१०॥
दत्तासनेऽथ सोपविष्टा खचरप्रणयिनी यावत् । तावद् गगनात् सहसा फरकसनाथा भुजा पतिता ॥११॥
तदोर्ध्वमुखेषु सर्वेषु जनेषु तस्मिन्नास्थाने । दृढगृहीतमण्डलाग्रा द्वितीयभुजा निपातिता झटिति ॥१२॥
ततः क्षेपेण विना पतितं गगनाङ्गणाच्छिरःकमलम् । मणिमुकुटदीप्यमानं मध्याह्नदिनेन्द्रबिम्बमिव ॥१३॥
गुरुकोपारुणदारुणप्रसारिताक्षमतीव दुर्दर्शम् । त्रिवलीभङ्गुरभालं निष्ठुरदन्ताग्रदष्टौष्ठम् ॥१४॥

तेण समं चिय पडियं पहारसयजज्जरं धडंपि तओ। तं तह दट्ठुं मउलियवयणा खयरी भणइ रायं ॥१५॥
एसो मह पाणपिओ रिउणा वावाइओ न संदेहो। ता तस्स विओए इ नो पाणे धारिउं सक्का ॥१६॥
ता काऊण पसाय सिग्घं मह देहि भाय! दारूणि। पियविरहदहणदड्ढं दहेमि देहं पुणो जेण ॥१७॥
ताहे रन्ना भणियं भगिणी तं मज्झ ता इमं रज्जं। तुह संतियंति मुंचसु पाणपरिचायबुद्धिंपि ॥१८॥
तो पुण भणियं तीए एव चिय इत्थ तुम्ह बंधुत्त। जं इट्ठविरहदुक्खियमणाए मे देसि कट्ठाणि ॥१९॥
पुणरवि बहुप्पयार भणिया रन्ना न जुत्तमिय काउं। अप्पाणम्मिवि पीडा विहिणा विहिया हवइ सुहया॥
धरसु महन्तयभारं हारं सिवरमणिमणहरमुयार। जिणसु कसाए सिद्धंतजाणओ सुहनिहिपिसाए ॥२१॥
परिहर कुदिट्ठिसेव देवं मन्नेसु विगयरागमलं। समतिणमणिणो मुणिणो गुरुणो, जीवाइतत्ताइ ॥२२॥
इय भणियावि न मन्नइ वयणं पुहईसरस्स सा खयरी। खयरगुणे उच्चरिउं पुणो पुणो रुयइ तो रन्ना ॥२३॥
दावाविआइं तीसे चंदणकट्ठाइं विरइऊण चियं। अह सा खयरी नियपइगत्ताइं झत्ति घित्तूण ॥२४॥
हुयवहजालचियाए चियाए सा तीए जा किर पविट्ठा। तो कुरुचंदनराहिवपुरओ सो आगओ खयरो॥
करकलियफरयखग्गो नरनाहं पणमिऊण विन्नवइ। पहु! परनारिसहोयरमत्थयचूडामणि! नरिंद!॥
तुज्झ पहावेण मए निहओ सत्तू गरिट्ठबलकलिओ। सरणागयजणवच्छल! मह दइय मे समप्पेसु॥
संपइ नियनयरं पइ गच्छिस्स जेण जणमणाणंद!। आणानिदेसकरो एस जणो तुज्झ सयकाल ॥२८॥
तो रुहिओ नरनाहो चिंतइ किं उत्तर पयच्छेमि। तो पक्खित्ता दिट्ठी रन्ना मतिस्स वयणम्मि ॥२९॥

---

तेन सममेव पतित प्रहारशतजर्जर कबन्धमपि तत। तत्तथा दृष्ट्वा मुकुलितवदना खचरी भणति राजानम्॥१५॥
एष मम प्राणप्रियो रिपुणा व्यापादितो न संदेह। तस्मात्तस्य वियोगेऽह नो प्राणान् धारयितु शक्ता॥१६॥
तस्मात् कृत्वा प्रसादं शीघ्र मम देहि भ्रात! दारूणि। प्रियविरहदहनदग्ध दहामि देह पुनर्येन ॥१७॥
तदा राज्ञा भणितं भगिनी त्वं मम तस्मादिद राज्यम्। तव सत्कमिति मुञ्च प्राणपरित्यागबुद्धिमपि ॥१८॥
तत पुनर्भणित तयैवमेवात्र युष्माक बन्धुत्वम। यदिष्टविरहदु खितमनसा मे ददासि काष्ठानि ॥१९॥
पुनरपि बहुप्रकार भणिता राज्ञा न युक्तमिति कर्तुम्। आत्मन्यपि पीडा विधिना विहिता भवति सुखदा॥२०॥
धर महान्तभारं हारं शिवरमणीमनोहरमुदारम्। जय कषायान् सिद्धान्तज्ञापत सुखनिधिपिशाचान्॥२१॥
परिहर कुदृष्टिसेवा देवं मन्यस्व विगतरागमलम्। समतृणमणीन् मुनीन् गुरून्, जीवादितत्त्वानि ॥२२॥
इति भणितापि न मन्यते वचन पृथिवीश्वरस्य सा खचरी। खचरगुणानुच्चार्य पुन पुना रोदिति ततो राज्ञा॥२३॥
दापितानि तस्यै चन्दनकाष्ठानि विरचय्य चिताम्। अथ सा खचरी निजपतिगात्राणि झगिति गृहीत्वा ॥२४॥
हुतवहज्वालाचितायां चितायां सा तस्या यावत्किल प्रविष्टा। तत कुरुचन्द्रनराधिपपुरत स आगत खचर॥
करकलितस्फरकखड्गो नरनाथं प्रणम्य विज्ञपयति। प्रभो! परनारीसहोदरमस्तकचूडामणे! नरेन्द्र! ॥२६॥
तव प्रभावेण मया निहत शत्रुर्गरिष्ठबलकलित। शरणागतजनवत्सल! मम दयितां मे समर्पय ॥२७॥
संप्रति निजनगर प्रति गमिष्यामि येन जनमनआनन्द!। आज्ञानिर्देशकर एष जनस्तव सदाकालम् ॥२८॥

तो मंतिणा जहट्ठियवुत्तंते साहिए समग्गेवि । ता कसिणीकयवयणो खयरो विन्नवइ नरनाहं ॥३०॥
अमयंपि विसं जायं चंदोवि हु मुयइ जलणजालोलिं । मायंडोवि हु पयडइ अहह ! अकंडेवि तमपडलं ॥
तुम्हारिसावि जइ परिचयंति पागयजणव्व मज्जायं । ता नाह ! समुद्देहिवि नूणममुद्देहिं होयव्वं ॥३२॥
अहमेसो पच्चक्खो सा मह अंगाइं पणइणी घेत्तुं । चडिया चियाए, अलियंपि बुच्चए किंचि घडमाणं ॥
अंतेउरेण छुहिऊण मह पियं भणसि साहियं जलणं । जं वुच्चिज्जइ सि परनारिसोयरो आयरसि एयं ॥
ता नियजसपसरं तिहुयणंपि उज्जोयमाणमिममेवं । मा कुणसु कलंकेउं तुल्लं चंदेण जयनाह ! ॥३५॥
ता अप्पसु मह दइयं कुणसु दयं जा तुट्टइ महासा । अह तुट्टचिय आसा सहसेव गयंव पाणेहिं ॥३६॥
तं सच्चं मन्नंतो तद्दुक्खदुहाउलो नरवरिंदो । किंकायव्वविमूढो छूढोव्व जलंतजलणम्मि ॥३७॥
अइकसिणीकयवयणो अहोमुहो जा न किंपि पडिभणइ । ताव खयरो पयंपइ सच्चंचिय सा मया किंतु ! ॥
तहवि हु राया चिट्ठइ निरुत्तरो जाव खेयरो ताव । जंपइ मयावि एसा जीवउ तुज्झप्पहावेण ॥३९॥
पभणइ आगच्छ पिए ! परदुहदुहिओ सुहं लहउ सामी । इय भणिए जाव निवो ऊससिओ ईसि ता सहसा॥
उद्दाममद्दलालीकंसालियतिलिमकंसियहुडुक्का । डक्काबोक्काण रवो वियंभिओ रायपंगणए ॥४१॥
तम्मज्झठिया छंदाणुसारओ भावनिब्भरं खयरी । पुरओ पणच्चमाणी पणमइ नरनाहपयकमलं ॥४२॥
तुह कोउयत्थमित्थं विहियं मे खयरइंदियालेण । इय कहिउं नरवइणो पिच्छणयं तेण पारद्धं ॥४३॥

---

ततः क्षुभितो नरनाथश्चिन्तयति किमुत्तरं प्रयच्छामि । ततः प्रक्षिप्ता दृष्टी राज्ञा मन्त्रिणो वदने ॥२९॥
ततो मन्त्रिणा यथास्थितवृत्तान्ते कथिते समग्रेऽपि । ततः कृष्णीकृतवदनः खचरो विज्ञपयति नरनाथम् ॥३०॥

अमृतमपि विषं जातं चन्द्रोऽपि खलु मुञ्चति ज्वलनज्वालालीम् ।
मार्तण्डोऽपि खलु प्रकटयत्यहह ! अकाण्डेऽपि तमःपटलम् ॥३१॥

युष्मादृशा अपि यदि परित्यजन्ति प्राकृतजना इव मर्यादाम् । तदा नाथ ! समुद्रैरपि नूनममुद्रैर्भवितव्यम् ॥३२॥
अहमेष प्रत्यक्षः सा ममाङ्गानि प्रणयिनी गृहीत्वा । चटिता चितायाम्, अलीकमप्युच्यते किञ्चिद् घटमानम् ॥
अन्तःपुरे क्षिप्त्वा मम प्रियां भणसि साधितं ज्वलनम् । यदुच्यतेऽसि परनारीसहोदर आचरस्येतत् ॥३४॥
तस्मान्निजयशःप्रसरेण त्रिभुवनमप्युद्योतमानमिदमेवम् । मा कुरु कलङ्कयित्वा तुल्यं चन्द्रेण जगन्नाथ !॥३५॥
तस्मादर्पय मम दयितां कुरु दयां यावत् त्रुट्यति ममाशा । अथ त्रुटितैवाशा सहसैव गतमिव प्राणैः ॥३६॥
तत् सत्यं मन्यमानस्तद्दुःखदुःखाकुलो नरवरेन्द्रः । किंकर्तव्यविमूढः क्षिप्त इव ज्वलज्ज्वलने ॥३७॥
अतिकृष्णीकृतवदनोऽधोमुखो यावन्न किमपि प्रतिभणति । तावत्खचरः प्रजल्पति सत्यमेव सा मृता किंतु ! ॥
तथापि खलु राजा तिष्ठति निरुत्तरो यावत्खेचरस्तावत् । जल्पति मृताप्येषा जीवतु तव प्रभावेण ॥३९॥
प्रभणत्यागच्छ प्रिये ! परदुःखदुःखितः सुखं लभतां स्वामी । इति भणिते यावन्नृप उच्छ्वसित ईषत्तावत्सहसा ॥
उद्दाममर्दलालीकांसालिकतिलिमकांसिकहुडुक्कानाम् । डक्काबुक्कानां रवो विजृम्भितो राजप्राङ्गणके ॥४१॥
तन्मध्यस्थिना छन्दोऽनुसारतो भावनिर्भरं खचरी । पुरतः प्रनृत्यन्ती प्रणमति नरनाथपादकमलम् ॥४२॥

तो राया पुरलोओ मंतियणो मंडलीयमाईया। विम्हियहियया जंपंति अहह ! अच्छरियमच्छरियं ॥४४॥
तो राया भणइ तयं किं खयर ! इमंति कहसु सब्भावं। न भवामि अहं खयरो नरपुंगव ! इंदियालीओ ॥
इय जंपंते तेसिं सपरियणो नरवईवि तोसेण। सव्वंगियमाभरणं कडगाइं देइ, इत्तो य ॥४६॥
पत्थावोत्ति मुणित्ता सहसा गयणंगणाओ अवयरिओ। चारणमुणी महप्पा चउनाणी ताण पुण्णेहिं ॥४७॥
सपरिग्गहो य राया अब्भुट्ठाणं करेइ पणमइ य। उवणमियं सीहासणमह तत्थ मुणिम्मि उवविट्ठे ॥४८॥
संवरियं पेच्छणयं मुणिणावि य देसणा समारद्धा। संवेयविवेयकरी सुणंति सव्वे तमुवउत्ता ॥४९॥
तथाहि;—
जह एस इंदियाली दंसइ खणनस्सराइं रूवाइं। तह कम्मसुत्तहारो सुत्तइ जीवाणवत्थाओ ॥५०॥
पढमं चिय बालत्तं तत्तो कुमरत्तजुव्वणत्ताइं। तत्तो य वुड्ढभावं कयाइ पचत्तसंपत्ती ॥५१॥
देवंपि कुणइ तिरियं मणुयं वा, माणवंपि नेरइयं। देवं वा मणुय वा तिरियं वा, तिरियमवि एवं॥५२॥
नेरइयंपि हु तिरियं नरं च, पंचिंदियंपि एगिंदी। इय घडणविहडणाहिं विणडइ भुवणं असेसंपि ॥५३॥
बालत्तणेवि किंपि हु करेइ कुट्ठि जरिं खइं वावि। कुमरत्तेवि हु पत्ते घरा घरं भामइ भिक्खं ॥५४॥
जुव्वणवणम्मि पत्तं डंसावइ दुट्ठकामसप्पेण। जह अप्पमवेयंतो पडइ सो दुरियगत्ताए ॥५५॥
वलिपलियगलियसोहं कुणइ य वुड्ढत्तणस्स समयम्मि। वंकीकयकायलयं हासकरं तुच्छतरणीण ॥५६॥
तो भो सव्वजणाणं सव्वावत्थासु नत्थि थेवंपि। सुहमसुहं पुण दीसइ पच्चक्ख चेव जीवाण ॥५७॥

---

तव कौतुकार्थमित्थं विहितं मया खचरेन्द्रजालेन। इति कथयित्वा नरपतिं प्रेक्षणकं तेन प्रारब्धम् ॥४३॥
ततो राजा पुरलोको मन्त्रिजनो मण्डलिकादिकाः। विस्मितहृदया जल्पन्ति अहह ! आश्चर्यमाश्चर्यम् ॥४४॥
ततो राजा भणति तं किं खचर ! इदमिति कथय सद्भावम्। न भवाम्यहं खचरो नरपुङ्गव ! ऐन्द्रजालिकः ॥
इति जल्पते तेषां सपरिजनो नरपतिरपि तोषेण। सर्वाङ्गीणमाभरणं कटकानि ददाति, इतश्च ॥४६॥
प्रस्ताव इति ज्ञात्वा सहसा गगनाङ्गणादवतीर्णः। चारणमुनिर्महात्मा चतुर्ज्ञानस्तेषां पुण्यैः ॥४७॥
सपरिग्रहश्च राजाऽभ्युत्थानं करोति प्रणमति च। उपनमितं सिंहासनमथ तत्र मुनावुपविष्टे ॥४८॥
संवृतं प्रेक्षणकं मुनिनापि च देशना समारब्धा। संवेगविवेककरी शृण्वन्ति सर्वे तामुपयुक्ताः ॥४९॥
यथैष इन्द्रजाली दर्शयति क्षणनश्वराणि रूपाणि। तथा कर्मसूत्रधारः सूत्रयति जीवानामवस्थाः ॥५०॥
प्रथममेव बालत्वं ततः कुमारत्वयौवने। ततश्च वृद्धभावं कदाचित्पञ्चत्वसंपत्तिः ॥५१॥
देवमपि करोति तिर्यञ्चं मनुजं वा, मानवमपि नैरयिकम्। देवं वा मनुजं वा तिर्यञ्चं वा, तिर्यञ्चमप्येवम्॥
नैरयिकमपि तिर्यञ्चं नरं च, पञ्चेन्द्रियमप्येकेन्द्रियम्। इति घटनविघटनाभ्यां विनटति भुवनमशेषमपि॥
बालत्वेऽपि कमपि खलु करोति कुष्ठिनं ज्वरिणं क्षयिणं वापि। कुमारत्वेऽपि हि प्राप्ते गृहाद् गृहं भ्रमयति भिक्षाम्॥
यौवनवने प्राप्तं दशयति दुष्टकामसर्पेण। यथाऽऽत्मानमविदन् पतति स दुरितगर्ते ॥५५॥
वलिपलितगलितशोभं करोति च वृद्धत्वस्य समये। वक्रीकृतकायलतं हास्यकरं तुच्छतरणीनाम् ॥५६॥

ता कम्मक्खयहेउम्मि जयह जिणदेसियम्मि धम्मम्मि । जेण कयत्थणदुत्थवज्जियं लहह सिद्धत्तं ॥५८॥
सो पुण जीवदयच्चिय सेसा सच्चाइया वई तस्सा । तं सव्वओवि काउं असमत्थो कुणइ देसेण ॥५९॥
अह पणमिऊण विन्नवइ नरवरो राहडो तह अमच्चो । पुव्वपुरिसक्कमेणवि सम्मत्तं अम्ह पहु ! अत्थि ॥
पाणाइवायविरइंपि देसओ देह अम्ह पसिऊण । भणइ मुणी होउ इमं किंपुण एए इहइयारा ॥६१॥
बंधवहं छविच्छेयं अइभारं भत्तपाणवोच्छेयं । दुट्ठमणएहिं एए वज्जेयव्वा पयत्तेण ॥६२॥
तो विहिणा पडिवन्नं पढमवयं निवअमच्चसड्ढेहिं । अन्नेरेहिवि अवराइं वीयवयाईणि गहियाणि ॥६३॥
तो मुणिवरेण भणियं गच्छामो पत्थुयम्मि कज्जम्मि । पडिवन्नवयविसेसे विसेसओ उज्जमेयव्वं ॥६४॥
इय भणिउं उप्पइओ तमालदलसामलम्मि गयणम्मि । रायावि कुणइ धम्मं रज्जधुरं राहडे ठविउं ॥६५॥
तो राहडोवि एक्के ठावेइ पयम्मि मंडलीयाण । अन्नाण पयब्भंसं करेइ निययाए इच्छाए ॥६६॥
एवं च वट्टमाणो दिणे दिणे चडइ गरुयअभिमाणे । थेवेवि हु अवराहे अइगरुयं कुणइ सो दंडं ॥६७॥
केसिंपि हु करचरणे अन्नेसिं पुण सउट्ठनासउडं । अन्नेसिं कण्णावइ निक्करुणो मूलओ कन्ने ॥६८॥
उप्पाडांवइ नयणे दसणे पाडावए य अन्नेसिं । केसिं च सयासाओ गिण्हावइ उग्गदंडे सो ॥६९॥
वसणच्छेयं कारइ जिब्भं कप्पावए य अन्नेसिं । एवं च रसे चडिओ अवराहविवज्जियाणंपि ॥७०॥
आरोविउं अलीयं अवराहं नियधणं अदिंताण । अन्नेसिं भयहेउं कप्पावइ अंगुवंगाइं ॥७१॥

---

ततो मोः सर्वजनानां सर्वावस्थासु नास्ति स्तोकमपि । सुखमसुखं पुनर्दृश्यते प्रत्यक्षमेव जीवानाम् ॥५७॥
तस्मात् कर्मक्षयहेतौ यतध्वं जिनदेशिते धर्मे । येन कदर्थनदौःस्थ्यवर्जितं लमध्वं सिद्धत्वम् ॥५८॥
स पुनर्जीवदयैव शेषाः सत्यादिका विस्तरस्तस्याः । तां सर्वतोऽपि कर्तुमसमर्थः करोति देशेन ॥५९॥
अथ प्रणम्य विज्ञपयति नरवरो राहडस्तथाऽमात्यः । पूर्वपुरुषक्रमेणापि सम्यक्त्वमावयोः प्रभो ! अस्ति ॥६०॥
प्राणातिपातविरतिमपि देशतो देह्यावयोः प्रसद्य । मणति मुनिर्भवत्विदं किन्त्वेत इहातिचाराः ॥६१॥
बन्धवधं पड्विच्छेदोऽतिभारो भक्तपानव्युच्छेदम् । दुष्टमनोभिरेते वर्जयितव्याः प्रयत्नेन ॥६२॥
ततो विधिना प्रतिपन्नं प्रथमव्रतं नृपामात्यश्राद्धैः । अपरैरप्यपराणि द्वितीयव्रतादीनि गृहीतानि ॥६३॥
ततो मुनिवरेण भणितं गच्छामः प्रस्तुते कार्ये । प्रतिपन्नव्रतविशेषे विशेषत उद्यन्तव्यम् ॥६४॥
इति भणित्वोत्पतितस्तमालदलश्यामले गगने । राजापि करोति धर्मं राज्यधुरां राहडे स्थापयित्वा ॥६५॥
ततो राहडोऽप्येकान् स्थापयति पदे मण्डलिकानाम् । अन्येषां पदभ्रंशं करोति निजयेच्छया ॥६६॥
एवं च वर्तमानो दिने दिने चटति गुर्वभिमाने । स्तोकेऽपि खल्वपराधेऽतिगुरुं करोति स दण्डम् ॥६७॥
केषामपि खलु करचरणानन्येषां पुनः सौष्ठनासापुटम् । अन्येषां छेदयति निष्करुणो मूलतः कर्णान् ॥६८॥
उत्पाटयति नयनानि दशनान् पाटयति चान्येषाम् । केषां च सकाशाद् ग्राहयत्युग्रदण्डान् सः ॥६९॥
वसनच्छेदं कारयति जिह्वां छेदयति चान्येषाम् । एवं च रसे चटितोऽपराधविवर्जितानामपि ॥७०॥
आरोप्यालीकमपराधं निजधनमददताम् । अन्येषां भयहेतोश्छेदयत्यङ्गोपाङ्गानि ॥७१॥

एवं च कुणंतो सो लोयाणं जाणिऊण नरवइणा। भणिओ राहडमंती मा कुण इइ दारुणं पावं॥७२॥
जाणंताण अवस्सं वयस्स भंगो न एत्थ अइयारो। सो होइ अणाभोगाइकारणा तो तयं चयइ॥७३॥
हालाहलविसपियणं वरं खु छुरियाए हणणमुयरस्स। पव्वयसिहराउ वरं अप्पा मुक्को निरालंबो॥७४॥
जालाजालकराले जलणम्मि वरं विसिज्ज निव्विसिज्जा। खग्गुग्गधारउवरिं न उण भंसिज्ज नियनियमं॥
किञ्च।
लब्भंति विविहमणिकणयरयणभवणोवभोयसंजुत्ता। रिद्धिविसेसा न उणो कहंपि धम्मो दयारूवो॥७६॥
भणिऊणं आएसो पमाणमिय अग्गओ नरिंदस्स। कट्टावइ करचरणे तहेव निद्धंधसत्तेण॥७७॥
माराविय तक्करबंधवेण अह अन्नया छलं लहिउं। निहओ छुरियाए मओ गओ य तच्चं नरयपुहविं॥७८॥
तत्तोवि हु उव्वट्टो भमिउं संसारसायरे घोरे। लद्धुं पुणोवि धम्मं अणंतसम्मं सिवं लहिही॥७९॥
कुरुचंदोवि हु राया पज्जंते अणसणं विहेऊण। पावियसमाहिमरणो सोहम्मे सुरवरो जाओ॥८०॥
तत्तो अवरविदेहे होऊण कयंगलाए नरनाहो। पत्तो निव्वाणसुहं पज्जंते लद्धजिणदिक्खो॥८१॥
वयअइयारो दुक्खाण कारणं वज्जणं तु पुण तस्स। अविलंबेणं सिवसुहजणयं ता चयह एयंपि॥८२॥

॥ इति प्राणातिपातवृतीयातिचारे राहडमन्त्रिकथानकं समाप्तम् ॥

---

एवं च कुर्वन् स लोकानां ज्ञात्वा नरपतिना। भणितो राहडमन्त्री मा कुर्विति दारुणं पापम्॥७२॥
जानतामवश्यं व्रतस्य भङ्गो नात्रातिचारः। स भवत्यनाभोगादिकारणात् ततस्तं त्यज॥७३॥
हालाहलविषपानं वरं खलु क्षुरिकया हननमुदरस्य। पर्वतशिखराद् वरमात्मा मुक्तो निरालम्बः॥७४॥
ज्वालाजालकराले ज्वलने वरं विशेद् निर्विशेत। खड्गोग्रधारोपरि न पुनर्भ्रंशेत निजनियमम्॥७५॥
लभ्यन्ते विविधमणिकनकरत्नभवनोपभोगसंयुक्ताः। ऋद्धिविशेषा न पुनः कथमपि धर्मो दयारूपः॥७६॥
भणित्वाऽऽदेशः प्रमाणमित्यग्रतो नरेन्द्रस्य। छेदयति करचरणांस्तथैव निर्दयत्वेन॥७७॥
मारयित्वा तस्करबान्धवेनाथान्यदा छलं लब्ध्वा। निहतः क्षुरिकया मृतो गतश्च तृतीयां नरकपृथिवीम्॥७८॥
ततोऽपि खलूद्वृत्तो भ्रान्त्वा संसारसागरे घोरे। लब्ध्वा पुनरपि धर्ममनन्तशर्म शिवं लप्स्यते॥७९॥
कुरुचन्द्रोऽपि खलु राजा पर्यन्तेऽनशनं विधाय। प्राप्तसमाधिमरणः सौधर्मे सुरवरो जातः॥८०॥
ततोऽपरविदेहे भूत्वा कृतमङ्गलायां नरनाथः। प्राप्तो निर्वाणसुखं पर्यन्ते लब्धजिनदीक्षः॥८१॥
व्रतातिचारो दुःखानां कारणं वर्जनं तु पुनस्तस्य। अविलम्बेन शिवसुखजनकं तस्मात्त्यजतैनम्॥८२॥

---

निक्करुणो जो जीवे अइभारारोवणेण पीडेइ। सो इह पेच्चभवेसुवि सुलसो इव लहइ दुक्खाइं ॥१॥
तथाहि;-
निवभवणपवरनाहिं उयारपायारनेमिपरियरियं। भरहरहचक्कभूयं नयरं नामेण चक्कपुरं ॥२॥
तम्मि रणरंगमल्लो राया निच्चंपि चायदुल्ललिओ। लीलाविलासकलिया ललिया नामेण तस्स पिया ॥
तत्थत्थि सुलससेट्ठी निवपुरदिट्ठी सया अहम्मिट्ठी। अइनिविडमिच्छदिट्ठी गयतुट्ठी कमलदलदिट्ठी ॥४॥
सव्वेसुवि कज्जेसुं नरवइणो नियमणव्व निब्भिच्चो। भिच्चो मित्तं मंती समगं चिय सुयइ भुंजइ य ॥५॥
अह अन्नया नरिंदो अत्थाणसहाए चिट्ठए जाव। ता पुरपवरो लोओ साहुलिहत्थो तहिं पत्तो ॥६॥
साहसिएणं केणवि आ छम्मासाउ पट्टणं एयं। जग्गंतंपि मुसिज्जइ सामिय! पाएण पइरयणिं ॥७॥
कस्सवि भज्जा वररूवसालिणी कन्नगा उ अन्नस्स। रयणकणयाइयाणं संखावि न तेण हरियाण ॥८॥
तो आरक्खियवयणं नियइ निवो भणइ पणमिउं सोवि। सव्वंचिय सच्चमिणं जं जंपइ पुरजणो देव ॥९॥
ता किं अगोयरो तुज्झ तक्करो नरवरेण इय भणिए। सो भणइ देव! एयं किमन्नहा अहमुविक्खेमि? ॥
गयणेणं आगंतुं बहुजणउप्पाडणिज्जमवि वत्थुं। एगागीवि हु घेत्तुं गच्छइ सो झत्ति उप्पइउं ॥११॥
इय एवं पभणंतम्मि तम्मि केणावि भणियमज्जेव। तं गिण्हसु इय सोउं राया परिभावए एवं ॥१२॥
दिव्वा भासा एसा न अन्नहा होइ ता अहं नूणं। कयउज्जमो लहिस्सं अज्जं चिय तं महाचोरं ॥१३॥
भणइ य पुरप्पहाणे नियदुत्थं मज्झ परिकहंतेहिं। कायव्वं कयमिच्चो मह चिंता इत्थ कज्जम्मि ॥१४॥

---

निष्करुणो यो जीवानतिभारारोपणेन पीडयति। स इह प्रेत्यभवेष्वपि सुलस इव लभते दुःखानि ॥१॥
नृपभवनप्रवरनाभि उदारप्राकारनेमिपरिकरितम्। भरतरथचक्रभूतं नगरं नाम्ना चक्रपुरम् ॥२॥
तस्मिन् रणरङ्गमल्लो राजा नित्यमपि त्यागदुर्ललितः। लीलाविलासकलिता ललिता नाम्ना तस्य प्रिया ॥३॥
तत्रास्ति सुलसश्रेष्ठी नृपपुरदृष्टिः सदाऽधर्मेष्टिः। अतिनिबिडमिथ्यादृष्टिर्गततुष्टिः कमलदलदृष्टिः ॥४॥
सर्वेष्वपि कार्येषु नरपतेर्निजमन इव निर्भृत्यः। भृत्यो मित्रं मन्त्री समकमेव स्वपिति भुङ्क्ते च ॥५॥
अथान्यदा नरेन्द्र आस्थानसभायां तिष्ठति यावत्। तावत्पुरप्रवरो लोको वस्त्रहस्तस्तत्र प्राप्तः ॥६॥
साहसिकेन केनाप्या षण्मासात् पत्तनमेतत्। जाग्रदपि मुष्यते स्वामिन्! प्रायेण प्रतिरजनि ॥७॥
कस्यापि भार्या वररूपशालिनी कन्यका त्वन्यस्य। रत्नकनकादिकानां संख्यापि न तेन हृतानाम् ॥८॥
तत आरक्षिकवदनं पश्यति नृपो भणति प्रणम्य सोऽपि। सर्वमेव सत्यमिदं यज्जल्पति पुरजनो देव! ॥९॥
तदा किमगोचरस्तव तस्करो नरवरेणेति भणिते। स भणति देव! एतं किमन्यथाऽहमुपेक्षे? ॥१०॥
गगनेनागत्य बहुजनोत्पाटनीयमपि वस्तु। एकाक्यपि खलु गृहीत्वा गच्छति स झटित्युत्पत्य ॥११॥
इत्येवं प्रभणति तस्मिन् केनापि भणितमद्यैव। तं गृहाणेति श्रुत्वा राजा परिभावयत्येवम् ॥१२॥
दिव्या भाषैषा नान्यथा भवति तस्मादहं नूनम्। कृतोद्यमो लप्स्येऽद्यैव तं महाचौरम् ॥१३॥

---

१ ख. लडियप्पुवाविन्दसा ल°।

इय भणिउं सम्माणिय विसज्जए नरवरो नयरलोयं। चिंतइ य दिव्ववयणं 'अज्जं चिय गिण्हसु' तओ य ॥
पच्चासण्णे नूणं होयव्वं तस्स संनिवेसेणं। वंचिय परियणमित्तो निसि नीसरिओ असिसहाओ ॥१६॥
तो मणसीकयउत्तरदिसिस्स से झत्ति भइरवा वाया। किलकिलिया मग्गेणं तेणं चिय तो पयट्टो सो ॥१७॥
अह जा गाउयदुगं गंतुं वडविडविणो ठिओ हिट्ठा। तो कत्थूरियघणसारपरिमलो तस्स नासाए ॥१८॥
तस्स पविट्ठो तो तयणुसारओ कोत्थरं पलोएइ। जा ताव तम्मि निसुणइ आलावे विविहभंगीहिं ॥१९॥
रमणीणं सुइसुहए, वच्चंतो तयणुसारओ तत्तो। पेच्छइ वरपासायं रयणुज्जोइयदिसावलयं ॥२०॥
तस्स भवणस्स दारम्मि पविसमाणेण राइणा दिट्ठा। एगा पवरा तरुणी वियडनियंबा विसालच्छी ॥
आहरणमणिमऊहोहरंजिया जियअणंगपाणपिया। तीइवि दिट्ठो राया नयणाण महूसवं दिंतो ॥२२॥
निज्जियअणंगरूवं रायं दट्ठूण तत्थ सा जुवई। चित्तलिहियव्व निरु थंभियव्व थक्का खणं एक्कं ॥२३॥
तो किच्छेणं कहकहवि तीए वयणाओ निग्गया वाया। हा रमणिलोयणाणंद! कत्थ तं आगओ इत्थ? ॥
ता गच्छ गच्छ तुरियं जाव न अज्जवि स एइ पाविट्ठो। जस्स इमो पासाओ दिन्नविसाओ य अम्हाणं ॥
रणरंगमल्लराया पुच्छइ तं बालियं इमं भवणं। कस्स तणयं स को वा चिट्ठइ कह संपयं कहसु? ॥२६॥
एयाओ कस्स व संतियाउ नवजोव्वणाउ रमणीओ। एक्काओ करुणसरं गायंति रुयंति अन्नाओ? ॥२७॥
भणियं तीए एयं पायालगिहं भणिज्जए सुहय!। एयस्स सामिओ पुण पिंगच्छो नाम चोरुत्ति ॥२८॥

---

भणति च पुरप्रधानानि निजदौस्थ्यं मां परिकथयद्भिः। कर्तव्यं कृतमितो मम चिन्तात्र कार्ये ॥१४॥
इति भणित्वा संमान्य विसृजति नरवरो नगरलोकम्। चिन्तयति च दिव्यवचनं 'अद्यैव गृहाण' ततश्च ॥१५॥
प्रत्यासन्ने नूनं भवितव्यं तस्य संनिवेशेन। वञ्चयित्वा परिजनमितो निशि निःसृतोऽसिसहायः ॥१६॥
ततो मनसिकृतोत्तरदिशस्तस्य झटिति भैरवी वाचा। किलकिलिता मार्गेण तेनैव ततः प्रवृत्तः सः ॥१७॥
अथ यावत्क्रोशद्विकं गत्वा वटविटपिनः स्थितोऽधः। ततः कस्तूरिकाघनसारपरिमलस्तस्य नासायाम् ॥१८॥
तस्य प्रविष्टस्ततस्तदनुसारतः कोटरं प्रलोकयति। यावद् तावत्तस्मिन् शृणोत्यालापान् विविधभङ्गिभिः ॥१९॥
रमणीनां श्रुतिसुखदान्, व्रजंस्तदनुसारतस्ततः। पश्यति वरप्रसादं रत्नोद्द्योतितदिग्वलयम् ॥२०॥
तस्य भवनस्य द्वारे प्रविशता राज्ञा दृष्टा। एका प्रवरा तरुणी विततनितम्बा विशालाक्षी ॥२१॥
आभरणमणिमयूखौघरञ्जिता जितानङ्गप्राणप्रिया। तयापि दृष्टो राजा नयनयोर्महोत्सवं ददन् ॥२२॥
निर्जितानङ्गरूपं राजानं दृष्ट्वा तत्र सा युवतिः। चित्रलिखितेव निश्चितं स्तम्भितेव स्थिता क्षणमेकम् ॥२३॥
ततः कृच्छ्रेण कथंकथमपि तस्या वदनाद् निर्गता वाक्। हा रमणीलोचनानन्द! क्व त्वमागतोऽत्र? ॥२४॥
तस्माद् गच्छ गच्छ त्वरितं यावन्नाद्यापि स एति पापिष्ठः। यस्यायं प्रासादो दत्तविषादश्चास्माकम् ॥२५॥
रणरङ्गमल्लराजः पृच्छति तां बालिकामिदं भवनम्। कस्य संबन्धि स को वा तिष्ठति कथं सांप्रतं कथय? ॥
एताः कस्य वा सत्का नवयौवना रमण्यः। एकाः करुणस्वरं गायन्ति रुदन्त्यन्याः? ॥२७॥
भणितं तयैतत् पातालगृहं भण्यते सुभग!। एतस्य स्वामी पुनः पिङ्गाक्षो नाम चौर इति ॥२८॥

सोवि अईव पयंडो दुज्जेओ खेयरासुराणंपि । नियभुयबलेण मुसिऊण आणए पवरवत्थूणि ॥२९॥
तह जाउ जाउ रमयंति नियमणं ताउ ताउं रमणीओ । आणेऊणं मिल्लइ इहइं पायालभवणम्मि ॥३०॥
चिट्ठइ संतावितो जुवइजणं दिणमणिम्मि उइयम्मि । राईए पुण बाहिं नीहरिउं मुसइ परलोयं ॥३१॥
तम्मि य बाहिम्मि गए जइ कत्थइ जाइ काइ नीहरिउं । तं तत्थ गयं जाणइ तत्तो आणइ विडंबइ य ॥
तो चिंतइ पुहइवई एसो सो जेण पट्टणं मुसियं । महतणयं, ता इन्हि पिच्छामि इमस्स माहप्पं ॥३३॥
इय एवं चिंततस्स तस्स तत्थेव थेववेलाए । सो पिंगच्छो चोरो समागओ खग्गवग्गकरो ॥३४॥
रणरंगमल्लरायस्स अग्गमहिसिं महंतसद्देण । पुक्कारिंतं खग्गं उग्गीरिय भायमाणो य ॥३५॥
अह सहसा नरवइणा सो चोरो हक्किउं इमं भणिओ । रे पुरिसाहम ! खग्गं उग्गीरसि उवरि इत्थीणं ? ॥
ता कत्थ जासि इन्हि रायविरुद्धाइं करिवि कम्माइं । मोत्तुं इमं पलायसु अह सज्जो होसु जुज्झम्मि ॥३७॥
इय तव्वयणं सोऊण चिंतियं तेण पुरिसचोरेण । एरिसअइगूढगिहे कहमित्थ समागओ एसो ? ॥३८॥
अह तेण निवो भणिओ पाव ! पविट्ठो ममावरोहम्मि । केणवि किं दुक्खेणं निविन्नो जीवियासाए ? ॥३९॥
मज्झ करवालधाराजलतित्थे निव्ववेसि अप्पाणं । किंव कुविओ कयंतो देइ चवेडं कवोलम्मि ? ॥४०॥
ता तुह अज्ज कयंतो कुविओ नहु इत्थ निग्गमोवाओ । सूयारसालपडिओ ससउव्व तुमं विणस्सिहसि॥
तो भणिओ सो रन्ना चोरो भणिऊण मज्झ तं वज्झो । तं विवरीयं जायं ससएहिंवि लउडया गहिया ॥

---

सोऽप्यतीव प्रचण्डो दुर्जेयः खेचरासुराणामपि । निजभुजबलेन मुषित्वाऽऽनयति प्रवरवस्तूनि ॥२९॥
तथा या या रमयन्ति निजमनस्तास्ता रमणीः । आनीय मुञ्चतीह पातालभवने ॥३०॥
तिष्ठति संतापयन् युवतिजनं दिनमणावुदिते । रात्रौ पुनर्बहिर्निःसृत्य मुष्णाति पुरलोकम् ॥३१॥
तस्मिंश्च बहिर्गते यदि क्वचिद्याति काचिन्निःसृत्य । तां तत्र गतां जानाति तत आनयति विडम्बयति च ॥३२॥
ततश्चिन्तयति पृथिवीपतिरेष स येन पत्तनं मुषितम् । मदीयं, तस्मादिदानीं पश्याम्यस्य माहात्म्यम् ॥३३॥
इत्येवं चिन्तयतस्तस्य तत्रैव स्तोकवेलया । स पिङ्गाक्षश्चौरः समागतः खड्गवर्गकरः ॥३४॥
रणरङ्गमल्लराजस्याग्रमहिषीं महाशब्देन । पूत्कुर्वन्तीं खड्गमुदीर्य भेषयंश्च ॥३५॥
अथ सहसा नरपतिना स चौरो हक्कयित्वेदं भणितः । रे पुरुषाधम ! खड्गमुद्गृणास्युपरि स्त्रीणाम् ? ॥
तस्मात् क यासीदानीं राजविरुद्धानि कृत्वा कर्माणि । मुक्त्वेमां पलायस्वाथ सज्जो भव युद्धे ॥३७॥
इति तद्वचनं श्रुत्वा चिन्तितं तेन पुरुषचौरेण । ईदृशातिगूढगृहे कथमत्र समागत एषः ? ॥३८॥
अथ तेन नृपो भणितः पाप ! प्रविष्टो ममावरोधे । केनापि किं दुःखेन निर्विण्णो जीविताशायाम् ॥३९॥
मम करवालधाराजलतीर्थे निर्वापयस्यात्मानम् । किंवा कुपितः कृतान्तो ददाति चपेटां कपोले ? ॥४०॥
तस्मात्तवाद्य कृतान्तः कुपितो नैवात्र निर्गमोपायः । सूदकारशालापतितः शशक इव त्वं विनङ्क्ष्यसि॥४१॥
ततो भणितः स राज्ञा चौरो भणित्वा मम त्वं वध्यः । तद्विपरीतं जातं शशकैरपि लकुटिका गृहीता ॥४२॥

---

१ ग. महिलाणं ।

तो तं रन्नो वयणं सोउं कोवानलेग पज्जलिओ। सो पिंगच्छो चोरो पहाविओ रायसंमुहओ ॥४३॥
अइरुट्टेणं तेणवि घट्टिओ तिक्खखग्गगुरुघाओ। रायावि दक्खयाए तं वंचिय गेहिय बाहाए ॥४४॥
उद्दालेउं खग्गं पायपहारेण पाडिवि धराए। तं पच्छामुहबाहं बंधइ तक्कणयसुत्तेण ॥४५॥
अह तं दट्ठुं चोरं बद्धं सव्वाउ ताउ रमणीओ। हरिसभरनिब्भरुब्भिन्नबहलपुलयाओ जायाओ ॥४६॥
दंसंति विविहभावे वियारबहुलाओ कामनडियाओ। गाढंपि हु धम्मिल्लं छोडेवि पुणोवि बंधंति ॥४७॥
तो सव्विवि कामिणि मणि हरिसिय, नं नियवल्लहमिलणुक्करिसिय।
पररमणीयणविहुणिय रायह, दंसहिं नेहरसोक्करु रायह ॥ ४८ ॥
अवहीरिऊण ताओ देविं आलवइ जाव किर राया। तो आयन्नइ हयहिंसियाइं गयगज्जियाइं च ॥४९॥
तं सोउं नरनाहो सविम्हओ ठाइ भणइ तो देवी। आणिज्जंतीए मए अणेगहा पलवियं मग्गे ॥५०॥
विक्खिरियाइं तह मुत्तियाइं मुद्दा य रयणरुइराओ। तो तेहिं चिंधेहिं मह अणुमग्गेण तुम्ह बलं ॥५१॥
आगयमेयं मन्ने तुहविरहदवानलेण डज्झंतं। निव्वाविज्जउ तुरियं नियसंगमअमयसेएण ॥५२॥
तो ताओ रमणीओ अग्गे काउं तहेव देविं च। तह गहियबद्धचोरो कमओ नीहरइ नरनाहो ॥५३॥
वडकुत्थरदारविणिग्गयाउ अह दट्ठुं ताओ रमणीओ। जंपंति मंतिपमुहा किमिमा पायालकन्नाओ?॥५४॥
किंवा सुरंगणाओ पायालं पासिऊण कयचोज्जा। निग्गच्छंति इमाओ, एवं जंपंति जा ताव ॥५५॥

---

ततस्तद्राज्ञो वचनं श्रुत्वा कोपानलेन प्रज्वलितः। स पिङ्गाक्षश्चौरः प्रधावितो राजसंमुखतः ॥४३॥
अतिरुष्टेन तेनापि घटितस्तीक्ष्णखड्गगुरुघातः। राजापि दक्षतया तं वञ्चयित्वा गृहीत्वा बाहौ ॥४४॥
उद्दाल्य खड्गं पादप्रहारेण पातयित्वा धरायाम्। तं पश्चान्मुखबाहुं बध्नाति तत्कनकसूत्रेण ॥४५॥
अथ तं दृष्ट्वा चौरं बद्धं सर्वास्ता रमण्यः। हर्षभरनिर्भरोद्भिन्नबहलपुलका जाताः ॥४६॥
दर्शयन्ति विविधभावान् विकारबहुलाः कामनटिताः। गाढमपि खलु धम्मिल्लं छोटयित्वा पुनरपि बध्नन्ति ॥
ततः सर्वा अपि कामिन्यो मनसि हर्षिताः, ननु निजवल्लभमेलनोत्कर्षिताः।
पररमणीजनविधुनितं राजानं, दर्शयन्त्यः स्नेहरसोत्करं राजन्ते ॥४८॥
अवधीर्य ता देवीमालपति यावत्किल राजा। तत आकर्णयति हयहेषितानि गजगर्जितानि च ॥४९॥
तत् श्रुत्वा नरनाथः सविस्मयस्तिष्ठति भणति ततो देवी। आनीयमानया मयाऽनेकधा प्रलपितं मार्गे ॥५०॥
विकीर्णानि तथा मौक्तिकानि मुद्राश्च रत्नरुचिराः। ततस्तैश्चिह्नैर्ममानुमार्गेण युष्माकं बलम् ॥५१॥
आगतमेतद् मन्ये त्वद्विरहदवानलेन दह्यमानम्। निर्वाप्यतां त्वरितं निजसंगमामृतसेकेन ॥५२॥
ततस्ता रमणीरग्रे कृत्वा तथैव देवीं च। तथा गृहीतबद्धचौरः क्रमतो निःसरति नरनाथः ॥५३॥
वटकोटरद्वारविनिर्गता अथ दृष्ट्वा ता रमणीः। जल्पन्ति मन्त्रिप्रमुखाः किमिमाः पातालकन्याः [१] ॥५४॥
किंवा सुराङ्गनाः पातालं दृष्ट्वा कृताश्चर्याः। निर्गच्छन्तीमाः, एवं जल्पन्ति यावत्तावत् ॥५५॥

---

१ य धेद्।

नीहरिओ नरनाहो हरिव्व गिरिकंदराओ दररहिओ । दट्ठूण हट्ठतुट्ठा ते तं पणमंति देविं च ॥५६॥
पभणंति नाह ! देवीहरणं नाऊण तुम्ह पयमूलं । जा अणुसरिमो ता नेय पिच्छिमो देवपाएवि ॥५७॥
देवीए अवहरणं वीसरियं तो अदंसणे तुम्ह । किंकायव्वविमूढा जा चिट्ठामो विगयचिट्ठा ॥५८॥
आरक्खिएण तत्तो आगंतुं साहियं जहुत्तरओ । केणवि गयणचरेणं निज्जइ देवी पलवमाणा ॥५९॥
तो तद्दंसियमग्गेण निग्गया मोत्तियाइवत्थूणि । उड्ढं कुट्टंकेहिं पेच्छंता आगया इत्थ ॥६०॥
पुरओ य अहिन्नाणं न पिच्छिमो दिणयरस्स उदएवि । थक्का इहेव वुन्ना तो दिट्ठं तुम्ह पयकमलं॥६१॥
देवीवि इत्थ दीसइ ता कह अच्चब्भुयं इमं जायं । को वा एसो पुरिसो दीसइ इह वद्धओ नाम ? ॥६२॥
तो तेसिं नरवइणा नियनिग्गमणाउ ताण मिलणंतं । कहिऊणं वुत्तंतं भणिओ सुलसो जहा तुम्हे ॥६३॥
जो जाणिज्जइ सामी जस्स, समप्पेह तस्स तं सव्वं । भूमिगिहट्ठियवत्थुं सेसं मिल्लेह भंडारे ॥६४॥
एयाओ बालियाओ नियनियगेहेसु जह पहुप्पंति । तह कुणह, तओ मंती तस्साएसं लहुं कुणइ ॥६५॥
करिखंधसमारूढो नयराभिमुहं तओ निवो चलिओ । चोरोवि अंगरक्खाण अप्पिउं चालिओ समगं ॥
मग्गे गच्छंतेणं जगनंदणकेवली कणयकमले । अइविउले उवविट्ठो दिट्ठो धम्मं पयासंतो ॥६७॥
हत्थीओ ओयरिउं पत्तो मुणिपायपंकयस्संते । ति पयक्खिणीकरेउं वंदइ रायावि वरविहिणा ॥६८॥
सामंताई लोओ सव्वोवि हु पणमिऊण उवविट्ठो । चोरोवि विन्नवावइ नरनाहमहंपि मुणिनाहं ॥६९॥

निःसृतो नरनाथो हरिरिव गिरिकन्दरातो दररहितः । दृष्ट्वा हृष्टतुष्टास्ते तं प्रणमन्ति देवीं च ॥५६॥
प्रभणन्ति नाथ ! देवीहरणं ज्ञात्वा युष्माकं पादमूलम् । यावदनुसरामस्तावन्नैव पश्यामो देवपादानपि॥५७॥
देव्या अपहरणं विस्मृतं ततोऽदर्शने युष्माकम् । किंकर्तव्यविमूढा यावत्तिष्ठामो विगतचेष्टाः ॥५८॥
आरक्षिकेण तत आगत्य कथितं यथोत्तरतः । केनापि गगनचरेण नीयते देवी प्रलपन्ती ॥५९॥
ततस्तद्दर्शितमार्गेण निर्गता मौक्तिकादिवस्तूनि । ऊर्ध्वं कुट्टाङ्कैः पश्यन्त आगता अत्र ॥६०॥
पुरतश्चाभिज्ञानं न पश्यामो दिनकरस्योदयेऽपि । स्थिता इहैव विषण्णास्ततो दृष्टं युष्माकं पादकमलम् ॥६१॥
देव्यप्यत्र दृश्यते तस्मात् कथमत्यद्भुतमिदं जातम् । को वैष पुरुषो दृश्यत इह बद्धो नाम ? ॥६२॥
ततस्तेभ्यो नरपतिना निजनिर्गमनात्तेषां मेलनान्तम् । कथयित्वा वृत्तान्तं भणितः सुलसो यथा यूयम्॥६३॥
यो ज्ञायते स्वामी यस्य, समर्पयत तस्मै तत् सर्वम् । भूमिगृहस्थितवस्तु शेषं मुञ्चत भाण्डागारे ॥६४॥
एता बालिका निजनिजगृहेषु यथा प्रभवन्ति । तथा कुरुत, ततो मन्त्री तस्यादेशं लघु करोति ॥६५॥
करिस्कन्धसमारूढो नगराभिमुखं ततो नृपश्चलितः । चौरोऽप्यङ्गरक्षाणामर्पयित्वा चालितः समकम् ॥६६॥
मार्गे गच्छता जगन्नन्दनकेवली कनककमले । अतिविपुल उपविष्टो दृष्टो धर्मं प्रकाशयन् ॥६७॥
हस्तितोऽवतीर्य प्राप्तो मुनिपादपङ्कजस्यान्ते । त्रिः प्रदक्षिणीकृत्य वन्दते राजापि वरविधिना ॥६८॥
सामन्तादिर्लोकः सर्वोऽपि खलु प्रणम्योपविष्टः । चौरोऽपि विज्ञपयति नरनाथमहमपि मुनिनाथम् ॥६९॥

१ क तुन्ना, ग. सुन्ना । २ क. पवरक° ग. वुवन्ध्यम्मि । कणयमए उ° ।

इच्छामि वंदिउं तो रन्ना आणाविओ पणमिऊण। मुणिवरमुवविट्ठो सो सुलसोवि समागओ तत्थ ॥
तो मंदरमंथिज्जंतजलहिसद्दाणुगारिसद्देण। ससुरासुरपरिसाए मुणीवि सदेसणं कुणइ ॥७१॥
तथाहि;—
अविरलपवणपहल्लिरकुवलयदललग्गजललवचलम्मि। जीवाण सरीरे जुव्वणे य जुवईजणे तह य ॥७२॥
मोहवसाउ अपुव्वो पडिबंधो कोइ जम्मि वट्टंता। सव्वंपि सरीराई सासयबुद्धीए मन्नंति ॥७३॥
तो तदुवयारकरणेकलालसा सालसा सया धम्मे। पेरिज्जंतावि हु गुरुजणेणं विरइंति अवहेरिं ॥७४॥
आलस्समोहवन्नाइकारणा गुरुयणस्स विसएवि। अन्ने न इंति न कयाइ जंति जिणमंदिरेसुंपि ॥७५॥
कारणवसेण केणइ कस्सवि उवरोहओवि जिणभवणे। कइयावि जंति जइ कहवि तहवि भवियव्वयावसओ ॥
रायकहाइसु निरया अन्नेसिंपि हु कुणंति ते विग्घं। जिणपूयणवंदणधम्मसवणपमिईसु दुम्मइणो ॥७७॥
ता ताण सव्वविरई दूरं निव्वाणकारणमवस्सं। देसविरईवि दुलहा सम्मत्तंपि हु न खलु सुलहं ॥७८॥
अहवा सम्मत्तमवंझकारणं उत्तरुत्तरगुणाणं। तं चिय दुलहं, तो भणइ नरवरो किमरूवमिमं ? ॥७९॥
तो सम्मत्तसरूवे सवित्थरे वन्नियम्मि मुणिवइणा। भणइ निवो आरोवह सम्मत्तं मज्झ जावजीवं ॥८०॥
तो जंपइ मुणिनाहो सहलं न हवेइ भद्द ! एयंपि। रहियं जीवदयाए विसिट्ठफलसाहणाभावा ॥८१॥
यतः;—
पढउ बहुं कुणउ तवं सहउ दुहं वसउ वणनिगुंजेसु। जस्स न जीवेसु दया सव्वं चिय निप्फलं तस्स ॥
धरउ सिरे जडभारं करउ हुयासस्स तप्पणं हविसा। लुंचउ वा चिहुरचयं चएउ पाणेवि तित्थम्मि ॥

---

इच्छामि वन्दितुं ततो राज्ञाऽऽज्ञापित प्रणम्य। मुनिवरमुपविष्टः स सुलसोऽपि समागतस्तत्र ॥७०॥
ततो मन्दरमथ्यमानजलधिशब्दानुकारिशब्देन। ससुरासुरपर्षदि मुनिरपि सद्देशनां करोति ॥७१॥
अविरलपवनप्रचलितृकुवलयदललग्नजललवचले। जीवानां शरीरे यौवने च युवतिजने तथा च ॥७२॥
मोहवशादपूर्वः प्रतिबन्धः कोऽपि यस्मिन् वर्तमानाः। सर्वमपि शरीरादि शाश्वतबुध्या मन्यन्ते ॥७३॥
ततस्तदुपचारकरणैकलालसाः सालस्याः सदा धर्मे। प्रेर्यमाणा अपि खलु गुरुजनेन विरचयन्त्यवहेलाम् ॥७४॥
आलस्यमोहरक्तादिकारणाद् गुरुजनस्य विषयेऽपि। अन्ये न यान्ति न कदाचिद्यान्ति जिनमन्दिरेष्वपि ॥७५॥
कारणवशेन केनचित्कस्याप्युपरोधतोऽपि जिनभवने। कदापि यान्ति यदि कथमपि तथापि भवितव्यतावशतः ॥
रागकथादिषु निरता अन्येषामपि खलु कुर्वन्ति ते विघ्नम्। जिनपूजनवन्दनधर्मश्रवणप्रभृतिषु दुर्मतयः ॥७७॥
तस्मात् तेषां सर्वविरतिर्दूरे निर्वाणकारणमवश्यम्। देशविरतिरपि दुर्लभा सम्यक्त्वमपि च न खलु सुलभम् ॥
अथवा सम्यक्त्वमवन्ध्यकारणमुत्तरोत्तरगुणानाम्। तदेव दुर्लभं, ततो भणति नरवरः किंस्वरूपमिदम् ? ॥७९॥
ततः सम्यक्त्वस्वरूपे सविस्तरे वर्णिते मुनिपतिना। भणति नृप आरोपयत सम्यक्त्वं मयि यावज्जीवम् ॥८०॥
ततो जल्पति मुनिनाथः सफलं न भवति भद्र ! एतदपि। रहितं जीवदयया विशिष्टफलसाधनाभावात् ॥८१॥
पठतु बहु करोतु तपः सहतां दुःखं वसतु वननिकुञ्जेषु। यस्य न जीवेषु दया सर्वमेव निष्फलं तस्य ॥८२॥
धरतु शिरसि जटाभारं करोतु हुताशस्य तर्पणं हविषा। लुञ्चतु वा चिहुरचयं त्यजतु प्राणानपि तीर्थे ॥८३॥

हवउ व वक्कलधारी निरहारी बंभचेरवयधारी । जइ जीवहणणकारी निरत्थयं तस्स ता सव्वं ॥८४॥
एयं धम्मरहस्सं एयं तत्तं तिलोयसारमिणं । जं जीवाण अहिंसा वहाइअइयारपरिमुक्का ॥८५॥
इइ देसणं सुणेउं राया सुलसेण सह वयं पढमं । गिण्हइ सम्मत्तजुयं असमत्थो सव्वविरईए ॥८६॥
चोरोवि सव्वविरइं पडिवज्जइ तह बहू जणो अन्नो । जिणभवणबिंबपूयं तत्थ य विगहाए परिहारं॥८७॥
कोवि अणुव्वयमेगं अन्ने सव्वाइं कोवि पव्वज्जं । पडिवज्जइ अह सव्वे नमिउं वच्चंति ठाणेसु ॥८८॥
रणरंगमल्लराया पडहयदाणेण नियदेसम्मि । घोसावए अमारिं कारागाराइं सोहेइ ॥८९॥
रहजत्ताउ पवत्तइ सव्वत्थ पभावए तहा तित्थं । साहम्मियवच्छल्लं करेइ सारं सुगिहिधम्मे ॥९०॥
जो कोवि उभयसंझं पडिकमइ पढेइ गुणइ सुणई य । जिणसिद्धंतरहस्सं तह जिणभवणेसु निच्चंपि ॥९१॥
ण्हवणच्चणआरत्तियलेक्खयमाई करेइ जो विहिणा । सव्वस्सवि सकुडुंबस्स तस्स रणरंगमल्लनिवो॥९२॥
भोअणवत्थासणवाहणाइं संपाडए असेसंपि । धम्मव्वयस्स हेउं दव्वं दावावए पउरं ॥९३॥
पायं सावयलोओ न करइ न कारवेइ वणिजाइं । गुरुदेवाणं सेवं करेइ निच्चंपि निच्चिंतो ॥९४॥
जे भूरिविहवजुत्ता तेसिंपि सयावि कुणइ सम्माणं । पंचपरमिट्ठिमित्तेण सावया जेवि तेसिंपि ॥९५॥
हट्टघराणं न करो कयाणगं जं च एक्कगड्डीए । आणिंति निंति तस्स य सुंकं मुक्कं नरिंदेण ॥९६॥
अह सो मित्तो सुलसो चुक्को अंतेउरीए नरवइणो । सव्वस्सं घित्तूणं मुक्को तहवि हु नरिंदेण ॥९७॥
धिक्कारिज्जइ य जणेण तस्स दट्ठुं मुहंपि, सयलजणो । अन्नत्तो अवलोयइ सोवि हु वित्तीए विच्छेए ॥

---

भवतु वा वल्कलधारी निराहारी ब्रह्मचर्यव्रतधारी । यदि जीवहननकारी निरर्थकं तस्य तदा सर्वम् ॥८४॥
एतद् धर्मरहस्यमेतत् तत्त्वं त्रिलोकीसारमिदम् । यज्जीवानामहिंसा वधाद्यतिचारपरिमुक्ता ॥८५॥
इति देशनां श्रुत्वा राजा सुलसेन सह व्रतं प्रथमम् । गृह्णाति सम्यक्त्वयुतमसमर्थः सर्वविरतौ ॥८६॥
चौरोऽपि सर्वविरतिं प्रतिपद्यते तथा बहुर्जनोऽन्यः । जिनभवनबिम्बपूजां तत्र च विकथायाः परिहारम् ॥८७॥
कोऽप्यणुव्रतमेकमन्ये सर्वाणि कोऽपि प्रव्रज्याम् । प्रतिपद्यतेऽथ सर्वे नत्वा व्रजन्ति स्थानेषु ॥८८॥
रणरङ्गमल्लराजः पटहकदानेन निजदेशे । घोषयत्यमारिं कारागाराणि शोधयति ॥८९॥
रथयात्राः प्रवर्तयति सर्वत्र प्रभावयति तथा तीर्थम् । साधर्मिकवात्सल्यं करोति सारं सुगृहिधर्मे ॥९०॥
यः कोऽप्युभयसन्ध्यं प्रतिक्रामति पठति गुणयति शृणोति च । जिनसिद्धान्तरहस्यं तथा जिनभवनेषु नित्यमपि ॥
स्नपनार्चनारात्रिकलेख्यकादीन् करोति यो विधिना । सर्वस्यापि सकुटुम्बस्य तस्य रणरङ्गमल्लनृपः ॥९२॥
भोजनवस्त्रासनवाहनादि संपादयत्यशेषमपि । धर्मव्रतस्य हेतोर्द्रव्यं दापयति प्रचुरम् ॥९३॥
प्रायः श्रावकलोको न करोति न कारयति वाणिज्यादि । गुरुदेवयोः सेवां करोति नित्यमपि निश्चिन्तः ॥९४॥
ये भूरिविभवयुक्तास्तेषामपि सदापि करोति सम्मानम् । पञ्चपरमेष्ठिमात्रेण श्रावका येऽपि तेषामपि ॥९५॥
हट्टगृहाणां न करः क्रयाणकं यच्चैकशकट्या । आनयन्ति नयन्ति तस्य च शुल्कं मुक्तं नरेन्द्रेण ॥९६॥
अथ स मित्रं सुलसो भ्रष्टोऽन्तःपुरे नरपतेः । सर्वस्वं गृहीत्वा मुक्तस्तथापि खलु नरेन्द्रेण ॥९७॥

एकेणं सगडेणं करेइ वाणिज्जयंपि सयमेव। तस्सवि न होइ सुंकं तो से आरोवए पउरं॥९९॥
तत्थ कयाणगमेवं भारकंताणं सगडवसहाणं। जाणइ स नेवनिट्ठं अइयारस्सवि न वीहेइ ॥१००॥
सत्त पहाणा गोणा अहन्नया तेण थलसमारुहणे। ढक्किज्जंता चडिउं लग्गा तुट्टा तओ यचिरं॥१०१॥
अणुभविऊण मया ते किणिउं अन्ने तहेव वाहेइ। तेसुवि मएसु अन्ने, एवं से वच्चए कालो ॥१०२॥
सुंकदविणस्स लुद्दइ वहुयस्स तहावि इमो न गोणाणं। मुल्लस्स कुणइ गन्नं-नय अत्थि दयाए परिणामो॥
तो एवं गोणाणं वहुणा कालेण सो वरायाणं। वहुयाणं जणिऊणं घोरं पीडं विवत्ति च ॥१०४॥
तत्तो अपडिक्कंतो रुद्दज्झाणट्ठिओ मरेऊण। तच्चाए पुढवीए परमाऊ नारओ जाओ ॥१०५॥
उव्वट्टिऊण तत्तो घोरं सहिउं चिरं भवे दुक्खं। पुव्वोवलद्धसम्मत्तभावओ जिणमयं लद्धुं ॥१०६॥
सुकुलम्मि कुंडनयरे खत्तियवंसम्मि जणपसिद्धम्मि। सम्मं च पालिऊणं मोक्खम्मि कमेण संपत्तो॥१०७॥
एवं अइभारारोवणेण वयमइयरंति जे पढमं। इय दुक्खभायणं ते हवंति तो जयह तच्चाए ॥१०८॥
रणरंगमल्लरायावि निक्कलंकं अणुव्वयं पढमं। पालेउं नियरज्जे ठविऊणं सुंदरकुमारं ॥१०९॥
रयणमयं जिणपडिमं सुइभूओ पूइऊण भत्तीए। वंदंतो परिचत्तो आउसमत्तीए पाणेहिं ॥११०॥
सहसारे इंदत्तं पत्तो तत्तो चुओ य इह भरहे। रहवीरपुरे पुत्तो होऊणं धम्मरायस्स ॥१११॥
पढमवए पव्वइओ अणवज्जं पालिऊण पव्वज्जं। विहुणियकम्मकलंको पत्तो ठाणं निरावाहं ॥११२॥

॥ इति प्राणातिपातप्रथमाणुव्रते चतुर्थातीचारेऽतिभारारोपणोदाहरणे सुलसश्रेष्ठिकथानकं समाप्तम् ॥

---

धिक्कार्यते च जनेन तस्य दृष्ट्वा मुखमपि, सकलजनः। अन्यतोऽवलोकते सोऽपि खलु वृत्तेर्विच्छेदे ॥९८॥
एकेन शकटेन करोति वाणिज्यकमपि स्वयमेव। तस्यापि न भवति शुल्कं ततस्तस्मिन्नारोपयति प्रचुरम् ॥९९॥
तत्र क्रयाणकमेवं भाराक्रान्तानां शकटवृषभानाम्। जानाति स नैवानिष्टमतिचारादपि न बिभेति ॥१००॥
सप्त प्रधानानि गावोऽथान्यदा तेन स्थलसमारोहणे। प्रेर्यमाणाश्चटितुं लग्नास्त्रुटितास्ततश्चाचिरम् ॥१०१॥
अनुभूय मृतास्ते क्रीत्वाऽन्यांस्तथैव वाहयति। तेष्वपि मृतेष्वन्यान्, एवं तस्य व्रजति कालः ॥१०२॥
शुल्कद्रविणस्य लुभ्यते बहोस्तथाप्ययं न गवाम्। मूल्यस्य करोति गणनां न चास्ति दयायाः परिणामः॥
तत एवं गवां बहुना कालेन स वराकाणाम्। बहूनां जनयित्वा घोरां पीडां विपत्तिं च ॥१०४॥
ततोऽप्रतिक्रान्तो रौद्रध्यानास्थितो मृत्वा। तृतीयस्यां पृथिव्यां परमायुर्नारको जातः ॥१०५॥
उद्वृत्य ततो घोरं सहित्वा चिरं भवे दुःखम्। पूर्वोपलब्धसम्यक्त्वभावतो जिनमतं लब्ध्वा ॥१०६॥
सुकुले कुण्डनगरे क्षत्रियवंशे जनप्रसिद्धे। सम्यक् च पालयित्वा मोक्षं क्रमेण संप्राप्तः ॥१०७॥
एवमतिभारारोपणेन व्रतमतिचरन्ति ये प्रथमम्। इति दुःखभाजनं ते भवन्ति ततो यतध्वं तत्त्यागे॥१०८॥
रणरङ्गमल्लराजोऽपि निष्कलङ्कमणुव्रतं प्रथमम्। पालयित्वा निजराज्ये स्थापयित्वा सुन्दरकुमारम् ॥१०९॥
रत्नमयीं जिनप्रतिमां शुचिभूतो पूजयित्वा भक्त्या। वन्दमानः परित्यक्त आयुःसमाप्तौ प्राणैः ॥११०॥
सहस्रार इन्द्रत्वं प्राप्तस्ततश्च्युतश्चेह भरते। रथवीरपुरे पुत्रो भूत्वा धर्मराजस्य ॥१११॥
प्रथमवयसि प्रव्रजितोऽनवद्यां पालयित्वा प्रव्रज्याम्। विधुनितकर्मकलङ्कः प्राप्तः स्थानं निराबाधम् ॥११२॥

अत्थाणत्थसमुत्थं वुच्छेयं भत्तपाणगाईणं । कुव्वंतो जीवाणं सीहोव्व भमेइ भवगहणे ॥१॥

तथाहि:—
जलधिजलमेहलाए विलसिरसुरसरिपवाहहाराए । महिमहिलाए मुहं पिव कुसुमपुरं अत्थि वरनयरं ॥२॥
तत्थ नरिंदो पडिवक्खकामिणीवयणकमलहिमपसरो । नामेण हेमचंदो चंदो इव सुयणकुमुयाण ॥३॥
रूवविणिज्जियरंभा विहियारंभा सयावि सुकएसु । तस्सत्थि पिया रंभा रंभाथंभोरू गयदंभा ॥४॥
ताणत्थि सत्थसत्थोहपारगो धारगो गुणगणाण । तणओ बुहजणपणओ नामेणं भुवणमल्लोत्ति ॥५॥
सहपंसुकीलिओ कीलिउव्व हियएण सह कुमारस्स । सिरिसेहरमंतिसुओ सीहो नामेण से मित्तं ॥६॥
अह जुव्वणम्मि पत्तो कुमरो कइयावि रायपासम्मि । जा चिट्ठइ उवविट्ठो ता पडिहारो तहिं पत्तो ॥७॥
विन्नवइ देव ! बाहिं पुरिसो एगो पहुस्स पयकमलं । दट्ठुं इच्छइ नय सो अप्पाणं कहइ कोवि अहं ॥८॥
भणइ नरिंदो मुंचसु मुक्को पत्तो नरिंददिट्ठिपहं । तो हसिउं भणइ निवो गोवसि किं करह ! अप्पाणं ? ॥९॥
तो सो दंडपणामं काउं पडिभणइ करहओ तुज्झ । अवयारणयं किज्जउ सामिय ! सहिययसिरोमणिणो ॥
ओ पाणिग्गहणमहूसवम्मि सुगहीयनामधेयाए । महपहुगुरुभइणीए तइया रंभाए देवीए ॥११॥
सिरिसिरिसेणस्स नराहिवस्स दिट्ठो कुमारभावम्मि । धारयमाणो पाउआओ ओलक्खिओ एवं ॥१२॥
नामंपि न वीसरियं राया तो भणइ पाउया मज्झ । ठवियाओ कणयसयं घित्तूणं अप्पिया एवं ॥१३॥
उवयारी कह वीसरासि मज्झ इय भणिवि दाहिणो हत्थो । पायलग्गस्स दिन्नो पिट्ठीए, पुच्छिओ तह य ॥१४॥

---

अर्थानर्थसमुत्थं व्युच्छेदं भक्तपानकादीनाम् । कुर्वञ्जीवानां सिंह इव भ्रमति भवगहने ॥१॥
जलधिजलमेखलाया विलसितृसुरसरित्प्रवाहहारायाः । महीमहिलाया मुखमिव कुसुमपुरमस्ति वरनगरम् ॥२॥
तत्र नरेन्द्रः प्रतिपक्षकामिनीवदनकमलहिमप्रसरः । नाम्ना हेमचन्द्रश्चन्द्र इव सुजनकुमुदानाम् ॥३॥
रूपविनिर्जितरम्भा विहितारम्भा सदापि सुकृतेषु । तस्यास्ति प्रिया रम्भा रम्भास्तम्भोरूर्गतदम्भा ॥४॥
तयोरस्ति शास्त्रशास्त्रौघपारगो धारको गुणगणानाम् । तनयो बुधजनप्रणतो नाम्ना भुवनमल्ल इति ॥५॥
सहपांशुक्रीडितः कीलित इव हृदयेन सह कुमारस्य । श्रीशेखरमन्त्रिसुतः सिंहो नाम्ना तस्य मित्रम् ॥६॥
अथ यौवनं प्राप्तः कुमारः कदापि राजपार्श्वे । यावत् तिष्ठत्युपविष्टस्तावत्प्रतिहारस्तत्र प्राप्तः ॥७॥
विज्ञपयति देव ! बहिः पुरुष एकः प्रभोः पादकमलम् । द्रष्टुमिच्छति न च स आत्मानं कथयति कोऽप्यहम् ॥८॥
भणति नरेन्द्रो मुञ्च मुक्तः प्राप्तो नरेन्द्रदृष्टिपथम् । ततो हसित्वा भणति नृपो गोपयसि किं करभ ! आत्मानम् ?॥
ततः स दण्डप्रणामं कृत्वा प्रतिभणति करभतस्तव । अवतारणकं क्रियतां स्वामिन् ! सहृदयशिरोमणेः ॥१०॥
आः पाणिग्रहणमहोत्सवे सुगृहीतनामधेयायाः । मत्प्रभुगुरुभगिन्यास्तदा रम्भाया देव्याः ॥११॥
श्रीषेणस्य नराधिपस्य दृष्टः कुमारभावे । धारयमाणः पादुका उपलक्षित एवम् ॥१२॥
नामापि न विस्मृतं राजा ततो भणति पादुके मम । स्थापिते कनकशतं गृहीत्वाऽर्पिते एवम् ॥१३॥
उपकारी कथं विस्मर्यसे ममेति भणित्वा दक्षिणो हस्तः । पादलग्नस्य दत्तः पृष्ठे, पृष्टस्तथा च ॥१४॥

कुसलं सिरिसेणनराहिवस्स सो भणइ कामिए तित्थे। पेमामयसंपन्ने तुम्ह वसंतम्मि हियम्मि ॥१५॥
कुसलं चिय पहुणो कारणं तु मह पेसणे इमं तत्थ। नामेण रयणमाला अत्थि सुया तस्स किं बहुणा ?॥
रमणीयं रमणीयं विहिणो रमणीयणं घडंतस्स। आसंसारं मन्ने विन्नाणप्पगरिसो बाला ॥१७॥
सावि हु कयप्पइन्ना राहावेहं करेइ जो कोइ। सो चिय मह होइ वरो राया वा रायकुमरो वा ॥१८॥
राया पुण बहु मन्नइ तीइ वरं भुवणमल्लकुमरवरं। तहवि न कुमरीवयणं पडिकूलइ इय विचिंतंतो॥१९॥
कित्तियमित्तं राहावेहो कुमरस्स भुवणमल्लस्स। तो कुमरदंसणूसुयमणेण सिरिसेणनरवइणा ॥२०॥
पहु! तुह पायमूलम्मि पेसिओ निव्विलंबमह कुमरो। नियदंसणामएणं दिट्ठिं निव्ववउ सामिस्स॥२१॥
तो अवलोयइ राया गणयमुहं सो य भणइ कुमरस्स। अज्जं चिय संझाए जत्ता सव्वत्थसिद्धिकरा॥२२॥
तो राया परिचिंतइ कल्लाणपरंपरा कुमारस्स। एसा, जं आसन्नं लद्धं लग्गं समग्गगुणं ॥२३॥

यत उक्तम्:—

"लघूत्थानान्यविघ्नानि संभवात् साधनानि च। कथयन्ति गुरुं सिद्धिं कारणान्येव कर्मणाम् ॥"

अह सेणावइसामंतपमुहमाणवइ परियणं सारं। कुमरेण समं गमणे संवाहत्थं तु चंपाए ॥२४॥
इत्थंतरम्मि वारुणिआसापासायमाविसइ सूरो। कुमरेण समं गमणे संवाहत्थं तु चंपाए ॥२५॥
विप्फुरियकिरणरुइरो नक्खत्तगणो विहाइ गयणम्मि। कुमरसहचलियरयणीपरिहियलंकारभारुव्व ॥२६॥
अह कयमंगलकिच्चो कुलदेवयजणणिजणयपभिईणि। पुज्जाइं नमंसेउं जणयाओ पाविउं सिक्खं ॥२७॥
मणपवणसउणपरियणअणुकूलत्तेण लग्गसमयम्मि। चउरंगबलसमेओ कुमरो संचलइ नयराओ ॥२८॥

---

कुशलं श्रीषेणनराधिपस्य स भणति कामिते तीर्थे। प्रेमामृतसंपन्ने तव वसतो हृदये ॥१५॥
कुशलमेव प्रभोः कारणं तु मम प्रेषणे इदं तत्र। नाम्ना रत्नमालाऽस्ति सुता तस्य किं बहुना ? ॥१६॥
रमणीयं रमणीयं विधे रमणीजनं घटयतः। आसंसारं मन्ये विज्ञानप्रकर्षो बाला ॥१७॥
सापि खलु कृतप्रतिज्ञा राधावेधं करोति यः कोऽपि। स एव मम भवति वरो राजा वा राजकुमारो वा॥१८॥
राजा पुनर्बहु मन्यते तस्या वरं भुवनमल्लकुमारवरम्। तथापि न कुमारीवचनं प्रतिकूलयतीति विचिन्तयन्॥
कियन्मात्रं राधावेधः कुमारस्य भुवनमल्लस्य। ततः कुमारदर्शनोत्सुकमनसा श्रीषेणनरपतिना ॥२०॥
प्रभो! तव पादमूले प्रेषितो निर्विलम्बमथ कुमारः। निजदर्शनामृतेन दृष्टिं निर्वापयतु स्वामिनः ॥२१॥
ततोऽवलोकते राजा गणकमुखं स च भणति कुमारस्य। अद्यैव संध्यायां यात्रा सर्वार्थसिद्धिकरा ॥२२॥
ततो राजा परिचिन्तयति कल्याणपरम्परा कुमारस्य। एषा, यदासन्नं लब्धं लग्नं समग्रगुणम् ॥२३॥
अथ सेनापतिसामन्तप्रमुखमाज्ञपयति परिजनं सारम्। कुमारेण समं गमने संवाहार्थं तु चम्पायाम् ॥२४॥
अत्रान्तरे वारुण्याशाप्रासादमाविशति सूरः। कुमारेण समं गमने संवाहार्थं तु चम्पायाम् ॥२५॥
विस्फुरितकिरणरुचिरो नक्षत्रगणो विभाति गगने। कुमारसहचलितरजनिपरिहितालङ्कारभार इव ॥२६॥
अथ कृतमङ्गलकृत्यः कुलदेवताजननीजनकप्रभृतीनि। पूज्यानि नमस्यित्वा जनकात् प्राप्य शिक्षाम् ॥२७॥

तुरयखुरखणियधूलीमिसेण खोणी नहम्मि संलग्गा । कुमरगुणेसुवरत्ता पत्ता सिन्नस्स छत्तत्तं ॥२९॥
बहुगामागरनगनगरखेडकब्बडसमाउलं वसुहं । मग्गनराहिवबहुविहियसागओ लंघिउं कुमरो ॥३०॥
सिद्धत्थपुरासन्ने संपत्तो जाव ताव तप्पहुणा । पेसियवरपुरिसेहिं विन्नत्तो तुम्ह आवासो ॥३१॥
खीरसरस्सासन्ने तत्थागमणेण किज्जउ पसाओ । तो कयउचियालावो आवासइ तत्थ गंतूण ॥३२॥
जेण चिय तत्थ कज्जं सिद्धत्थपुराहिवेण तं सव्वं । अन्नंपि कुमरसिबिरस्स अप्पियं, अह कुमारोवि ॥३३॥
रमणीयउववणाई सव्वत्तो विम्हएण जा नियइ । सिद्धत्थपुरदिसाओ ता पिच्छइ छन्नगयणाइं ॥३४॥
डिंडीरपिंडपरिपंडुराइं इंताइं पुंडरीयाइं । हयघट्टाइं च तहा करिणो करेणुयाई य ॥३५॥
तो सिद्धत्थपुराहिवपुरिसे पुच्छइ किमेयमेयंति ? । ते विन्नविंति सम्मं न मुणेमो किंतु सयमेव ॥३६॥
सिरिमूलदेवदेवो आगच्छइ इत्थ नत्थि संदेहो । जं कुमरागमवत्तायन्नणसमया मुहुत्तंपि ॥३७॥
मन्नइ देवो संवच्छरंव इय जाव ते पयंपंति । ता विलसिरपडिहारो पडिहारो विन्नवइ एवं ॥३८॥
सिद्धत्थपुरनरिंदो उत्तिन्नो करिवराउ चरणेहिं । इंतो इत्तो दीसइ आयन्नेऊण इय कुमरो ॥३९॥
सिंहासणं विमोत्तुं संमुहमइ एइ जाव किर गंतुं । तो परिमियपरिवारो पत्तो सो झत्ति तत्थेव ॥४०॥
तो दट्ठूण कुमारं रूवेणं मुत्तिमंतमिव मयणं । मुच्छानिमीलियच्छो सहसत्ति महीयले पडिओ ॥४१॥
तो हाहारवमुहले अत्थाणजणे ससंभमं कुमरो । चंदणरससेयाईउवयारं करेइ कारइ य ॥४२॥

---

मनःपवनशकुनपरिजनानुकूलत्वेन लग्नसमये । चतुरङ्गबलसमेतः कुमारः संचलति नगरात् ॥२८॥
तुरगखुरखनितधूलीमिषेण क्षोणी नभसि संलग्ना । कुमारगुणेषूपरक्ता प्राप्ता सैन्यस्य च्छत्रत्वम् ॥२९॥
बहुग्रामाकरनगनगरखेटकर्बटसमाकुलां वसुधाम् । मार्गनराधिपबहुविहितस्वागतो लङ्घयित्वा कुमारः ॥३०॥
सिद्धार्थपुरासन्ने संप्राप्तो यावत् तावत् तत्प्रभुणा । प्रेषितवरपुरुषैर्विज्ञप्तो युष्माकमावासः ॥३१॥
क्षीरसरस आसन्ने तत्रागमनेन क्रियतां प्रसादः । ततः कृतोचितालाप आवसति तत्र गत्वा ॥३२॥
येनैव तत्र कार्यं सिद्धार्थपुराधिपेन तत् सर्वम् । अन्यदपि कुमारशिबिरस्यार्पितम्, अथ कुमारोऽपि ॥३३॥
रमणीयोपवनादीन् सर्वतो विस्मयेन यावत् पश्यति । सिद्धार्थपुरदिशस्तावत् पश्यति च्छन्नगगनानि ॥३४॥
डिण्डीरपिण्डपरिपाण्डुराण्यायन्ति पुण्डरीकाणि । हयघट्टानि च तथा करिणः करेणुकाश्च ॥३५॥
ततः सिद्धार्थपुराधिपपुरुषान् पृच्छति किमेतदेतदिति । ते विज्ञपयन्ति सम्यग् न जानीमः किन्तु स्वयमेव ॥
श्रीमूलदेवदेव आगच्छत्यत्र नास्ति संदेहः । यत् कुमारागमवार्ताकर्णनसमयाद् मुहूर्तमपि ॥३७॥
मन्यते देवः संवत्सरमिवेति यावत् ते प्रजल्पन्ति । तावद् विलसितृप्रतिहारः प्रतिहारो विज्ञपयत्येवम् ॥३८॥
सिद्धार्थपुरनरेन्द्र उत्तीर्णः करिवराच्चरणाभ्याम् । आयन्नितो दृश्यत आकर्ण्येति कुमारः ॥३९॥
सिंहासनं विमुच्य संमुखमयैति यावत्किल गत्वा । ततः परिमितपरिवारः प्राप्तः स झटिति तत्रैव ॥४०॥
ततो दृष्ट्वा कुमारं रूपेण मूर्तिमन्तमिव मदनम् । मूर्च्छानिमीलिताक्षः सहसेति महीतले पतितः ॥४१॥

---

१ क. नहरमा° । २ ग आग° । ३ ग. °उ मह ए° ।

अह लद्धचेयणं तं खणेण भद्दासणे निवेसेउं। परिपुच्छेद् कुमारो किं बाहइ तुम्ह अंगम्मि? ॥४३॥
अह उम्मीलियनयणो अवलोइय किंपि चलिरदिट्ठीए। कंडुअइ वामकण्णं नाहिपएसं परिमुसेइ ॥४४॥
लज्जं नाडइ नय देइ उत्तरं पुच्छिओवि कुमरेण। वामपयंगुट्ठेण ओणयवयणो लिहइ धरणिं ॥४५॥
इय तस्स चिट्ठियं पासिऊण चिंतइ सविम्हयं कुमरो। समयणरमणिवियारा किं कारणमित्थ दीसंति? ॥
एवं च वियक्कंतो सुणइ झुणी सजलघणसमुद्दामं। तो भणइ अमयवुट्ठीकल्लाणं कस्स वयणमिणं? ॥४७॥
तो कहइ मंतिपुत्तो एसं झुणी अभयसूरिअइसइणो। तो तेण निवेण समं कुमरो पत्तो तहिं तुरियं ॥४८॥
कंचणगिरिंव उन्नइसमन्नियं सयललोयमज्झत्थं। थिरयासंजुयमतुलं जच्चसुवन्नच्छविच्छायं ॥४९॥
वरपवहणंव भवजलहिपडियजंतूण तारणसमत्थं। हारंव सुगुणकलियं पणमंति कुमारनरवइणो ॥५०॥
मुणिनाहचरणकमले मंती सीहोवि कुमरपाणपिओ। सामंताई य तहा उवविट्ठा उचियठाणेसु ॥५१॥
तो ताण हियट्ठाए धम्मं वागरइ अभयसूरीवि। जीवो अणाइनिहणो अणाइकयकम्मसंबंधो ॥५२॥
रागस्स व दोसस्स व वसगो पावाइं कुणइ विविहाइं। घाएइ पाणिनिवहं अलियं जंपेइ खुद्दमणो ॥५३॥
अवहरइ परस्स धणं लुद्धो संतेवि वरकलत्तम्मि। विलसइ परनारीहिं इहपरलोयाण निरविक्खो ॥५४॥
बहुजीवविघायकरे आरंभे कुणइ कारवेइ तहा। अणुमन्नइ अन्नकए तन्निउणजणं पसंसंतो ॥५५॥
मिच्छाभिमाणनडिओ करेइ एवं अणेगहा पावं। तस्सोदयम्मि अवसो विनडिज्जइ घोरनरएसु ॥५६॥

---

ततो हाहारवमुखर आस्थानजने ससंभ्रमं कुमारः। चन्दनरससेकाद्युपचारं करोति कारयति च ॥४२॥
अथ लब्धचेतनं तं क्षणेन भद्रासने निवेश्य। परिपृच्छति कुमारः किं बाधते युष्माकमङ्गे? ॥४३॥
अथोन्मीलितनयनोऽवलोक्य किमपि चलितदृष्ट्या। कण्डूयति वामकर्णं नाभिप्रदेशं परिमृश्नाति ॥४४॥
लज्जां नटयति न च ददात्युत्तरं पृष्टोऽपि कुमारेण। वामपादाङ्गुष्ठेनावनतवदनो लिखति धरणिम् ॥४५॥
इति तस्य चेष्टितं दृष्ट्वा चिन्तयति सविस्मयं कुमारः। समदनरमणीविकाराः किं कारणमत्र दृश्यन्ते? ॥४६॥
एवं च वितर्कयन् शृणोति ध्वनिं सजलघनसमुद्दामम्। ततो भणत्यमृतवृष्टिकल्याणं कस्य वचनमिदम्? ॥४७॥
ततः कथयति मन्त्रिपुत्र एष ध्वनिरभयसूर्यतिशयिनः। ततस्तेन नृपेण समं कुमारः प्राप्तस्तत्र त्वरितम् ॥४८॥
काञ्चनगिरिमिवोन्नतिसमन्वितं सकललोकमध्यस्थम्। स्थिरतासंयुतमतुलं जात्यसुवर्णच्छविच्छायम् ॥४९॥
वरप्रवहणमिव भवजलधिपतितजन्तूनां तारणसमर्थम्। हारमिव सुगुणकलितं प्रणमतः कुमारनृपती ॥५०॥
मुनिनाथचरणकमलं मन्त्री सिंहोऽपि कुमारप्राणप्रियः। सामन्तादयश्च तथोपविष्टा उचितस्थानेषु ॥५१॥
ततस्तेषां हितार्थं धर्मं व्याकरोत्यभयसूरिरपि। जीवोऽनादिनिधनोऽनादिकृतकर्मसंबन्धः ॥५२॥
रागस्य वा द्वेषस्य वा वशगः पापानि करोति विविधानि। घातयति प्राणिनिवहमलीकं जल्पति क्षुद्रमनाः ॥
अपहरति परस्य धनं लुब्धः सत्यपि वरकलत्रे। विलसति परनारीभिरिहपरलोकयोर्निरपेक्षः ॥५४॥
बहुजीवविघातकरानारम्भान् करोति कारयति तथा। अनुमन्यतेऽन्यकृतांस्तन्निपुणजनं प्रशंसन् ॥५५॥
मिथ्याभिमाननटितः करोत्येवमनेकधा पापम्। तस्योदयेऽवशो विनट्यते घोरनरकेषु ॥५६॥

रागदोसवसट्टो तत्थवि संचिणिय पावमइघोरं । तिरिएसु सहइ दुक्खं पुणोवि नरएसु तिरिएसु ॥५७॥
एवं दुहरिंछोलिं विसहंतो दीणमाणसो अवसो । जुगसमिलानाएणं लहेइ कहकहवि मणुयत्तं ॥५८॥
तत्थवि पावइ जीवो पुव्वज्जियदुकयपरिणइवसेण । वहबंधणमरणाइं धणावहाराइवसणाइं ॥५९॥
दारिद्दरोगदोहग्गसोगबहुआवईहिं परिकलिओ । चिंतासंतावेणं दुकुलत्तेणं परिब्भूओ ॥६०॥
तो चिंतेइ नियमणे अन्नभवे किं मए कयं पावं । जेणेसो हं विहिओ विहिणा दुक्खाण गुरुखाणी?॥६१॥
तत्तो धम्ममईए काउमहम्मं पुणोवि कुगईसु । विनडिज्जइणेगविहं पावइ कोवि हु कुदेवत्तं ॥६२॥
तत्थ वि वंतरभावेवि किंकराणंपि किंकरो कोइ । होइ नडिज्जइ तत्थवि तेसिं आणाए अणवरयं ॥६३॥
दासावि माणुसत्ते सामीहिंतो लहंति भत्ताई । तो ते तेसिं आणं वहु मन्नतावि हु कुणंति ॥६४॥
अभिओगियदेवा पुण लहंति न हु किंपि सामिपासाओ । आणाइक्कमणे उण ते ताडिज्जंति तेहिं तहा॥
जह वेयणाभिभूया नारयवासाओ नारयव्व तओ । वहु मन्नंति भवंतरगमणं, अन्ने पुणो केइ ॥६६॥
अज्झवसायविसेसा इड्ढिविसेसंपि किंपि संपत्ता । दट्ठुं महिड्ढिइड्ढिं ईसाकवलियमणा तह य ॥६७॥
रागद्दोसवसट्टा न लहंति रइं मइं च जिणधम्मे । रुद्दज्झाणोवगया चुया य पावंति तो कुगइं ॥६८॥
तो रागदोसाणं असेसदुक्खोहखाणिभूयाणं । उज्जमह निग्गहम्मी सो पुण जिणधम्मसेवाए ॥६९॥
धम्मोवि य दुविगप्पो जइधम्मो तह गिहत्थधम्मो य । जइधम्मो दसभेओ सावगधम्मो दुवालसहा॥७०॥

---

रागद्वेषवशार्तस्तत्रापि संचित्य पापमतिघोरम् । तिर्यक्षु सहते दुःखं पुनरपि नरकेषु तिर्यक्षु ॥५७॥
एवं दुःखपङ्क्तिं विषहमाणो दीनमानसोऽवशः । युगशम्यान्यायेन लभते कथंकथमपि मनुजत्वम् ॥५८॥
तत्रापि प्राप्नोति जीवः पूर्वोपार्जितदुष्कृतपरिणतिवशेन । वधबन्धनमरणानि धनापहारादिव्यसनानि ॥५९॥
दारिद्र्यरोगदौर्भाग्यशोकबह्वापद्भिः परिकलितः । चिन्तासंतापेन दुष्कुलत्वेन परिभूतः ॥६०॥
ततश्चिन्तयति निजमनस्यन्यभवे किं मया कृतं पापम् । येनैषोऽहं विहितो विधिना दुःखानां गुरुखनिः? ॥
ततो धर्ममत्या कृत्वाऽधर्मं पुनरपि कुगतिषु । विनट्यतेऽनेकविधं प्राप्नोति कोऽपि खलु कुदेवत्वम् ॥६२॥
तत्र च व्यन्तरभावेऽपि किंकराणामपि किंकरः कोऽपि । भवति नट्यते तत्रापि तेषामाज्ञयाऽनवरतम् ॥६३॥
दासा अपि मनुष्यत्वे स्वामिभ्यो लभन्ते भक्तादीन् । ततस्ते तेषामाज्ञां बहु मन्यमाना अपि खलु कुर्वन्ति॥६४
आभियोगिकदेवाः पुनर्लभन्ते न खलु किमपि स्वामिपार्श्वात् । आज्ञातिक्रमणे पुनस्ते ताड्यन्ते तैस्तथा ॥६५॥
यथा वेदनाभिभूता नारकवासाद् नारका इव ततः । बहु मन्यन्ते भवान्तरगमनम्, अन्ये पुनः केचित् ॥६६॥
अध्यवसायविशेषादृद्धिविशेषमपि कमपि संप्राप्ताः । दृष्ट्वा महर्द्धिकऋद्धिमीर्ष्याकवलितमनसस्तथा च ॥६७॥
रागद्वेषवशार्ता न लभन्ते रतिं मतिं च जिनधर्मे । रौद्रध्यानोपगताश्च्युताश्च प्राप्नुवन्ति ततः कुगतिम् ॥६८॥
ततो रागद्वेषयोरशेषदुःखौघखानिभूतयोः । उद्यच्छत निग्रहे स पुनर्जिनधर्मसेवया ॥६९॥
धर्मोऽपि च द्विविकल्पो यतिधर्मस्तथा गृहस्थधर्मश्च । यतिधर्मो दशभेदः श्रावकधर्मो द्वादशधा ॥७०॥

---

१ ग. °सवित्त° । २ क. ग. दुकल । ३ क वि ।

असमत्थो जइधम्मे ता सम्मं कुणउ देसविरइंपि । तत्थवि असमत्थो तंपि देसओ कुणउ, तेणावि ॥७१॥
पत्तसुदेवत्तसुमाणुसत्तसम्मत्तसुद्धजइधम्मो । अब्भासवसाओ निहयरागद्दोसो अहक्खायं ॥७२॥
लद्धूण चरित्तं घाइकम्ममुम्मूलिऊण संपत्तो । केवलनाणं तत्तो पावइ ठाणं निराबाहं ॥७३॥
इय निसुणिऊण कुमरो सूरिं विन्नवइ मज्झ गिहिधम्मे । पढमवयं कहसु तहा तद्दोसे, सूरिणावि तओ ॥
वहबंधाइविसुद्धं कहियं वित्थारिऊण पढमवयं । पडिवन्नं कुमरेणं सचिवसुएणंपि सीहेण ॥७५॥
सम्मत्तेण समेयं समयविहाणेण परमसद्धाए । तो पुट्ठो कुमरेणं सूरी तन्नयरनिवचरियं ॥७६॥
कह एसो मं दट्ठुं मुच्छाए निवडिओ, कहं कुणइ । रमणीमयणवियारे पुरिसोवि, तो कहइ सूरी ॥७७॥
सिंहपुरे आसि तुमं पुव्वभवे नरवरो रयणसारो । भज्जा य मयणरेहा दढनेहा आसि तुज्झ पिया ॥
एमेव कहवि तीए तुमं विरत्तो, इमा तह चेव । तइ अणुरत्तावि दढं दट्ठुं अवमाणमइदुसहं ॥७९॥
उब्बंधेऊण मया सिद्धत्थपुरम्मि सुंदरनिवस्स । अज्झवसायविसेसा जाया धूयाऽणवच्चस्स ॥८०॥
मूले नक्खत्तम्मी नरनाहो तीइ जम्मसमयम्मि । भवियव्वयावसाओ सहसा पंचत्तमणुपत्तो ॥८१॥
एईए पुत्तत्तं सुमइअमच्चेण पयडंतेण । अहिसित्ता रज्जम्मी इत्थित्तं गोवियं च दढं ॥८२॥
मरिऊण रयणसारो उप्पन्नो तं समागओ एत्थ । पुव्वभवब्भासाओ तइ दिट्ठे पसरिए मोहे ॥८३॥
किं मह पीई एवं इमम्मि इय विमरिसप्पयरिसम्मि । जाए जाईसरणे तं जायं जं तए पुट्ठं ॥८४॥

---

असमर्थो यतिधर्मे तदा सम्यक् करोतु देशविरतिमपि । तत्राप्यसमर्थस्तामपि देशतः करोतु, तेनापि ॥७१॥
प्राप्तसुदेवत्वसुमनुष्यत्वसम्यक्त्वशुद्धयतिधर्मः । अभ्यासवशाद् निहतरागद्वेषो यथाख्यातम् ॥७२॥
लब्ध्वा चारित्रं घातिकर्मोन्मूल्य संप्राप्तः । केवलज्ञानं ततः प्राप्नोति स्थानं निराबाधम् ॥७३॥
इति श्रुत्वा कुमारः सूरिं विज्ञपयति मम गृहिधर्मे । प्रथमव्रतं कथय तथा तद्दोषान्, सूरिणापि ततः ॥७४॥
वधबन्धादिविशुद्धं कथितं विस्तार्य प्रथमव्रतम् । प्रतिपन्नं कुमारेण सचिवसुतेनापि सिंहेन ॥७५॥
सम्यक्त्वेन समेतं समयविधानेन परमश्रद्धया । ततः पृष्टः कुमारेण सूरिस्तन्नगरनृपचरितम् ॥७६॥
कथमेष मां दृष्ट्वा मूर्च्छया निपतितः, कथं करोति । रमणीमदनविकारान् पुरुषोऽपि, ततः कथयति सूरिः ॥
सिंहपुरे आसीस्त्वं पूर्वभवे नरवरो रत्नसारः । भार्या च मदनरेखा दृढस्नेहाऽऽसीद् तव प्रिया ॥७८॥
एवमेव कथमपि तस्यां त्वं विरक्त, इयं तथैव । त्वय्यनुरक्तापि दृढं दृष्ट्वाऽपमानमतिदुःसहम् ॥७९॥
उद्बध्य मृता सिद्धार्थपुरे सुन्दरनृपस्य । अध्यवसायविशेषाज्जाता दुहिताऽनपत्यस्य ॥८०॥
मूले नक्षत्रे नरनाथस्तस्या जन्मसमये । भवितव्यतावशात् सहसा पञ्चत्वमनुप्राप्तः ॥८१॥
एतस्याः पुत्रत्वं सुमत्यमात्येन प्रकटयता । अभिषिक्ता राज्ये स्त्रीत्वं गोपितं च दृढम् ॥८२॥
मृत्वा रत्नसार उत्पन्नस्त्वं समागतोऽत्र । पूर्वभवाभ्यासात् त्वयि दृष्टे प्रसृते मोहे ॥८३॥
किं मम प्रीतिरियमस्मिन्निति विमर्षप्रकर्षे । जाते जातिस्मरणे तज्जातं यत् त्वया पृष्टम् ॥८४॥

---

१ ग गेहिधम्ममवि ।

तो मुणिवइवयणाओ संजाए चरणमोहविरमम्मि । सा नियरज्जं कुमरे ठविऊणं लेइ पव्वज्जं ।।८५।।
सिद्धत्थपुरे गंतुं सचिवे सुमइम्मि ठविय रज्जभरं । कुमरो चलिओ पुरओ पंथे पत्तो य अडवीए ।।
जा भारहियकहा इव भीमज्जुणनउलसउणिसोहिल्ला । खित्तपुहइव्व भद्दयकरि-सयउवसोहिया रम्मा ।।
तित्थेसरवसही इव नाणाविहसावएहिं परिकलिया । सरसविसालसरोवरसिरीव-घणपुंडरीइल्ला ।।८८।।
एवंविहाडवीए कुमरो गंतूण नियबलसमेओ । दसजोयणाण अंते आवासइ वरुणनईतीरे ।।८९।।
कइवयपुरिससमेओ पत्तो कोऊहलेण वणगहणं । अवलोयंतो पिच्छइ विज्जाहररइयजिणभवणं ।।९०।।
अइनिम्मलफलिहसिलाविणिम्मियं ससहरस्सव विमाणं । राहुस्स संभमाओ ओइन्नं वसुमईपीढे ।।९१।।
तत्थ य संकंताइं तडसंठियतरुवराण कुसुमाइं । परिचुंबंति य भमरा पीडियवयणा लहु वलंति ।।९२।।
तम्मि जिणेसरभवणे सविम्हयं जाव पविसइ कुमारो । कयउब्भडसिंगारं ता[1] पिच्छइ देविनिउरंबं ।।९३।।
काओवि तहिं पुंजयपुंछणछउमेण नियपावरयं । अवणिंतीओ इव सारविंति जिणमंदिरंगणयं ।।९४।।
अन्नाओ जिणधम्मे रायममायंतयंव हिययम्मि । कुंकुमच्छडयमिसेणं ठवंति जिणभवणपंगणए ।।९५।।
एक्का य तत्थ बाला अच्चंतसुयंधकुसुममालाहिं । नाणाविच्छित्तीहिं पूअइ गब्भहरजिणबिंबं ।।९६।।
एवंविहसुरविलयाउलम्मि भवणम्मि संठियं दिट्ठं । सोम्मं कंचणवन्नं बिंबं सिरिरिसहसामिस्स ।।९७।।
तं दट्ठूणं गुरुभत्तिपवरसमुप्पन्नबहलरोमंचो । मउलियकरकमलजुओ थुणिऊण जिणेसमुवविसइ ।।९८।।

---

ततो मुनिपतिवचनात् संजाते चरणमोहविरामे । सा निजराज्यं कुमारे स्थापयित्वा लाति प्रव्रज्याम् ।।८५।।
सिद्धार्थपुरे गत्वा सचिवे सुमतौ स्थापयित्वा राज्यभरम् । कुमारश्चलितः पुरतः पथि प्राप्तश्चाटव्याम् ।।८६।।
या भारतीयकथेव भीमार्जुननकुलशकुनिशोभावती । क्षेत्रपृथिवीव भद्रककरिशत(कर्षक)उपशोभिता रम्या ।।
तीर्थेश्वरवसतिरिव नानाविधश्वापदैः (श्रावकैः) परिकलिता । सरसविशालसरोवरश्रीरिव घनपुण्डरीका ।।८८।।
एवंविधाटव्यां कुमारो गत्वा निजबलसमेतः । दशयोजनानामन्ते आवासयति वरुणानदीतीरे ।।८९।।
कतिपयपुरुषसमेतः प्राप्तः कुतूहलेन वनगहनम् । अवलोकमानः पश्यति विद्याधररचितजिनभवनम् ।।९०।।
अतिनिर्मलस्फटिकशिलाविनिर्मितं शशधरस्येव विमानम् । राहोः संभ्रमादवतीर्णं वसुमतीपीठे ।।९१।।
तत्र च संक्रान्तानि तटसंस्थिततरुवराणां कुसुमानि । परिचुम्बन्ति च भ्रमराः पीडितवदना लघु वलन्ते ।।९२।।
तस्मिञ्जिनेश्वरभवने सविस्मयं यावत्प्रविशति कुमारः । कृतोद्भटशृङ्गारं तावत्पश्यति देवीनिकुरम्बम् ।।९३।।
का अपि तत्र रजःप्रोञ्छनच्छद्मना निजपापरजः । अपनयन्त्य इव समारचयन्ति जिनमन्दिराङ्गणकम् ।।९४।।
अन्या जिनधर्मे रागममान्तमिव हृदये । कुङ्कुमच्छटामिषेण स्थापयन्ति जिनभवनप्राङ्गणके ।।९५।।
एका च तत्र बालाऽत्यन्तसुगन्धकुसुममालाभिः । नानाविच्छित्तिभिः पूजयति गर्भगृहजिनबिम्बम् ।।९६।।
एवंविधसुरवनिताकुले भवने संस्थितं दृष्टम् । सौम्यं काञ्चनवर्णं बिम्बं श्रीऋषभस्वामिनः ।।९७।।
तद् दृष्ट्वा गुरुभक्तिप्रवरसमुत्पन्नबहलरोमाञ्चः । मुकुलितकरकमलयुतः स्तुत्वा जिनेशमुपविशति ।।९८।।

---

१ ग. पिच्छइ ता ।

ताओ असुरवहूओ पइदिणकिच्चाइ तत्थ काऊण । पिच्छणय आरत्तियमंगलदीवाइय सव्व ॥९९॥
नियनियठाणेसु गया कुमरोवि समुट्ठिऊण जिणभवण । जा जोयइ सव्वत्तो ता पच्छिमदारबाहिम्मि ॥
पीणपयोहरसुहगा नवकुवलयनयणपीवरसिरीया । वरहसगया वावी दिट्ठा कुमरेण रमणिव्व ॥१०१॥
त पिच्छिऊण कुमरो सीयलमहुरेण निम्मलजलेण । गुरुवयणेणव सोहइ अप्पाण मग्गरयमलिण ॥१०२॥
जलपाण काऊणं उवविट्ठो जाव तीइ तद्दिदेसे । ता वानरीए सहिओ पवगमो आगओ एगो ॥१०३॥
अहिणवहलिद्दवन्नो गुजाहलहारभूसियसरीरो । सल्लइसाहाहत्थो तारासहिओव्व सुग्गीवो ॥१०४॥
कुमरसिरपवरमणिणो तत्तो कुमरस्स भुवणमल्लस्स । काऊण पणिवाय पयपए मणुयवाणीए ॥१०५॥
असरणसरण्ण दयगुणपवन्न अइ असमविहियदक्खिन्न । परउवयाररसन्नय सुणेहि मह कुमर! विन्नत्ति ॥
इह अडवीए मज्झे कुमार ! निवसामि सव्वकालपि । एसा य वानरी पहु! मणइट्ठा भारिया मज्झ॥१०७॥
एसा मज्झ सरीर एसावि धण च जीविय एसा । एयाए विरहिओ खलु खणपि न खमो अह ठाउ ॥
किंपुण इह अडवीए सयावि मह वानरेसु सामित्त । त पुण वणतरे मह गयस्स कज्जतरवसेण ॥१०९॥
दुट्ठेण वानरेण अहिट्ठिय, त च निग्गहेउमह । जइवि समत्थो तहवि हु एसा अइकायरत्तेण ॥११०॥
मइ नेहनिब्भरा देइ जुज्झिउ नेय कहवि पिक्खती । एगागिणिं च एय मोत्तु सक्केमि नेय अह ॥१११॥
लोयणमहूसवकरो सपइ पुन्नोदयप्पगरिसेण । दिट्ठो तुम महायस ! मुत्तो धम्मोव्व पच्चक्ख ॥११२॥
तो तुह भुयछायाए निवसउ निरुवद्दवा इमा ताव । जा तस्स दुन्नयफल अहमुवदसेमि गतूण॥११३॥

---

ता असुरवध्व प्रतिदिनकृत्यानि तत्र कृत्वा । प्रेक्षणकमारात्रिकमङ्गलदीपादिक सर्वम् ॥९९॥
निजनिजस्थानेषु गता कुमारोऽपि समुत्थाय जिनभवनम् । यावत् पश्यति सर्वतस्तावत् पश्चिमद्वारबहि ॥
पीनपयोम(ध)रसुभगा नवकुवलयनयनपीवरश्रीका । वरहसगता वापी दृष्टा कुमारेण रमणीव ॥१०१॥
ता दृष्ट्वा कुमार शीतलमधुरेण निर्मलजलेन । गुरुवचनेनेव शोधयत्यात्मान मार्गरजोमलिनम् ॥१०२॥
जलपान कृत्वोपविष्टो यावत् तस्यास्त दिशे । तावद् वानर्या सहित प्लवगम आगत एक ॥१०३॥
अभिनवहरिद्रावर्णो गुञ्जाफलहारभूषितशरीर । सल्लकीशाखाहस्तस्तारासहित इव सुग्रीव ॥१०४॥
कुमारशिर प्रवरमणेस्तत कुमारस्य भुवनमल्लस्य । कृत्वा प्रणिपात प्रजल्पति मनुजवाण्या ॥१०५॥
अशरणशरण्य ! दयागुणप्रपन्न ! अयि ! असमविहितदाक्षिण्य ! । परोपकाररसज्ञ ! शृणु मम कुमार ! विज्ञप्तिम् ॥
इहाटव्या मध्ये कुमार ! निवसामि सर्वकालमपि । एषा च वानरी प्रभो ! मनइष्टा भार्या मम ॥१०७॥
एषा मम शरीरमेषैव धन च जीवितमेषा । एतया विरहित खलु क्षणमपि न क्षमोऽह स्थातुम् ॥१०८॥
किन्त्विहाटव्या सदापि मम वानरेषु स्वामित्वम् । तत् पूर्ववनान्तरे मम गतस्य कार्यान्तरवशेन ॥१०९॥
दुष्टेन वानरेणाधिष्ठित, त च निग्रहीतुमहम् । यद्यपि समर्थस्तथापि स्वल्वेषातिकातरत्वेन ॥११०॥
मयि स्नेहनिर्भरा ददाति योद्धु नैव कथमपि प्रेक्षमाणा । एकाकिनीं चैता मोक्तु शक्नोमि नैवाहम् ॥१११॥
लोचनमहोत्सवकर सप्रति पुण्योदयप्रकर्षेण । दृष्टस्त्व महायश ! मूर्तो धर्म इव प्रत्यक्षम् ॥११२॥

इय भणिऊण पवंगो विणिग्गओ तत्थ पिययमं मोत्तुं । तो कुमरो परिचिंतइ दीसइ अच्चब्भुयं एयं ११४
साहामिगोवि एसो माणुसभासाए जं पयंपेइ । मइपुव्विया य वित्ती कहवा पसुणोवि य इमस्स ? ॥११५॥
अह खणमेगं गमिउं भणिओ कुमरो पवंगमपियाए । अइबलिओ सो सत्तू मारिस्सइ मज्झ मणदइयं ११६
तो तस्स मरणवत्ता मह एइ न सवणगोयरं जाव। ता जीवियं चइस्सं इय भणिउं पडइ वावीए॥११७॥
तो कुमरो परिचिंतइ हा ! महसरणागयाए एईए । न हु मरणमुवक्खेउं जुत्तं इय तीइ पट्ठीए ॥११८॥
परियणअपरिन्नायाभिप्पाओ तरणसत्तिसंजुत्तो । तीए कड्ढणहेउं झंपं जा देइ कुमरोवि ॥११९॥
ताव न सा वानरिया नय वावी नेय पाणियं तत्थ । कोमलतूलिसणाहे अप्पाणं नियइ पल्लंके॥१२०॥
कुमरस्स भिच्चवग्गो अइदुहिओ तक्खणेण तट्ठाणं । किंकायव्वविमूढो संपत्तो निययसिबिरम्मि ॥१२१॥
साहइ सचिवाईणं, तेवि हु करितुरयरहवराईयं । पगुणंति बलमसेसं कारिंति य संतिकम्माइं ॥१२२॥
कुमरोवि तत्थ भवणं पिच्छइ वरफलिहभित्तिमणिजालं । जालगवक्खंतरनीहरंतवरधूवधूमसिहं ॥१२३॥
धूमसिहामयलीकिज्जमाणअइविउलविमलगयणयलं । गयणयलगरुयसंलग्गधयवडाडोयकमणीयं ॥१२४॥
कमणीयचलिरसुरवहुसंघउक्खुडियकडयमणिनियरं । मणिनियरजडियलंबंतदामकिरणोहदिप्पंतं ॥१२५॥
दिप्पंतकणयथंभोहघडियवरसालहंजियारम्मं । रम्ममहिवीढविरइयसुयंधसियपुप्फपयरोहं ॥१२६॥
पुप्फपयरोहमयरंदलुद्धगुंजंतभमिरभमरउलं । भमिरभमरउलअइमहुरसद्दबहिरियदिसाभोयं ॥१२७॥

---

ततस्तव भुजच्छायायां निवसतु निरुपद्रवेयं तावत् । यावत्तस्य दुर्नयफलमहमुपदर्शयामि गत्वा ॥११३॥
इति भणित्वा प्लवंगो विनिर्गतस्तत्र प्रियतमां मुक्त्वा । ततः कुमारः परिचिन्तयति दृश्यतेऽत्यद्भुतमेतत् ॥
शाखामृगोऽप्येष मनुष्यभाषया यत्प्रजल्पति । मतिपूर्विका च वृत्तिः कथं वा पशोरपि चास्य ? ॥११५॥
अथ क्षणमेकं गमयित्वा भणितः कुमारः प्लवंगमप्रियया । अतिबलितः स शत्रुर्मारयिष्यति मम मनोदयितम् ॥
ततस्तस्य मरणवार्ता ममैति न श्रवणगोचरं यावत् । तावज्जीवितं त्यक्ष्यामीति भणित्वा पतति वाप्याम् ॥
ततः कुमारः परिचिन्तयति हा ! मच्छरणागतायाः एतस्याः । न खलु मरणमुपेक्षितुं युक्तमिति तस्याः पृष्ठे ॥११८॥
परिजनापरिज्ञाताभिप्रायस्तरणशक्तिसंयुक्तः । तस्याः कर्षणहेतोर्झम्पां यावद्ददाति कुमारोऽपि ॥११९॥
तावन्न सा वानरी न च वापी नैव पानीयं तत्र । कोमलतूलीसनाथ आत्मानं पश्यति पल्यङ्के ॥१२०॥
कुमारस्य भृत्यवर्गोऽतिदुःखितस्तत्क्षणेन तत्स्थानम् । किंकर्तव्यविमूढः संप्राप्तो निजशिबिरे ॥१२१॥
कथयति सचिवादीनां, तेऽपि खलु करितुरगरथवरादिकम् । प्रगुणयन्ति बलमशेषं कारयन्ति च शान्तिकर्माणि ॥
कुमारोऽपि तत्र भवनं पश्यति वरस्फटिकभित्तिमणिजालम् । जालगवाक्षान्तरनिःसरद्वरधूपधूमशिखम् ॥१२३॥
धूमशिखामलिनीक्रियमाणातिविपुलविमलगगनतलम् । गगनतलगुरुसंलग्नध्वजपटाटोपकमनीयम् ॥१२४॥
कमनीयचलितसुरवधूसंघत्रुटितकटकमणिनिकरम् । मणिनिकरजटितलम्बमानदामकिरणौघदीप्यमानम् ॥१२५॥
दीप्यमानकनकस्तम्भौघघटितवरशालभञ्जिकारम्यम् । रम्यमहीपीठविरचितसुगन्धसितपुष्पप्रकरौघम् ॥१२६॥
पुष्पप्रकरौघमकरन्दलुब्धगुञ्जद्भ्रमितृभ्रमरकुलम् । भ्रमितृभ्रमरकुलातिमधुरशब्दबधिरितदिगाभोगम् ॥१२७॥

इय एरिसम्मि भवणे दिट्ठो कुमरेण कुंडलाहरणो। एगो देवो पुरओ आहरणपहाहिं चिचइओ ॥१२८॥
सो देवो भणइ तओ मा अन्नं किंपि इह वियप्पेसु। कारणवसेण भो कुमर! आणीओ इह मए तं सि ॥१२९॥
तो तं पइ सो जंपइ को देसो एस को पहू एत्थ। को सि तुमं किमहं पुण इहाणिओ कहह मज्झ इमं? ॥
इय निसुणिऊण देवो पडिजंपइ कुमर! जं तए भणियं। तं निसुणह सविसेसं साहिप्पंतं इमं इण्हि ॥१३१॥
एयं कीलाभवणं विउव्विउं नियपणइणीसहिओ। कीलामि अहं निच्चं अमियगई नाम असुरो हं ॥
एयस्स सामिसालो, अहन्नया रेवयम्मि संचलिओ। चारणमुणिकेवलिणो नमंसणत्थं विभूईए ॥१३३॥
नियदेवीए समेओ जाहे वचामि थेवभूभागं। ता पिच्छामि मसाणे उवविट्ठं जोगिअं एगं ॥१३४॥
रत्तंदणकयतिलयं परिहियमिगचम्मचेडयरउद्दं। सुविचित्तियमत्थयटोपिआइ पच्छाइयसिरग्गं ॥१३५॥
कसिणसरीसवतणुचम्मविहिअवरजोगपट्टिआबंधं। मिल्लंतं हुंकारं अइगरुयं दारुणं तत्थ ॥१३६॥
तस्स य पुरओ दिट्ठो सुहुहुओ हुयवहो महाजालो। वामे पासम्मि पुणो चिट्ठइ वरबालिया एगा ॥१३७॥
अह तं पिच्छित्तु मए देवी भणिया पिए! पडिक्खेउं। खणमेक्कं पिक्खामो किं ववसइ एस पासंडी ॥१३८॥
एवं च कए कन्नं तं रुयमाणिं स पावपासंडी। संठावइ मंडलए चचइ रत्तंदणेण तओ ॥१३९॥
रत्तकणवीरमालं अवलंबिय तीए कंठदेसम्मि। किर अग्गीए खिविस्सइ तो सो मे तज्जिओ एवं ॥१४०॥
रे रे पाविट्ठ! तुमं एरिसमममंजसं जणविरुद्धं। मम पुरओ काऊणं वचसि किर कत्थ तं मूढ! ॥१४१॥

---

इतीदृशे भवने दृष्टः कुमारेण कुण्डलाभरणः। एको देवः पुरत आभरणप्रभाभिर्मण्डितः ॥१२८॥
स देवो भणति ततो माऽन्यत्किमपीह विकल्पस्व। कारणवशेन भोः कुमार! आनीत इह मया त्वमसि ॥
ततस्तं प्रति स जल्पति को देश एष कः प्रभुरत्र। कोऽसि त्वं किमहं पुनरिहानीतः कथय ममेदम्? ॥१३०॥
इति श्रुत्वा देवः प्रतिजल्पति कुमार! यत्त्वया भणितम्। तच्छृणु सविशेषं कथ्यमानमिदमिदानीम् ॥१३१॥
एतत् क्रीडाभवनं विकृत्य निजप्रणयिनीसहितः। क्रीडाम्यहं नित्यममितगतिर्नामासुरोऽहम् ॥१३२॥
एतस्य स्वामिसारः, अथान्यदा रैवते संचलितः। चारणमुनिकेवलिनो नमस्यनार्थं विभूत्या ॥१३३॥
निजदेव्या समेतो यदा व्रजामि स्तोकं भूभागम्। तदा पश्यामि श्मशान उपविष्टं योगिनमेकम् ॥१३४॥
रक्तचन्दनकृततिलकं परिहितमृगचर्मचेटकरौद्रम्। सुविचित्रितमस्तकोष्णीषेण प्रच्छादितशिरोऽग्रम् ॥१३५॥
कृष्णसरीसृपतनुचर्मविहितवरयोगपट्टिकाबन्धम्। मुञ्चन्तं हुङ्कारमतिगुरुं दारुणं तत्र ॥१३६॥
तस्य च पुरतो दृष्टः सुष्ठु हुतो हुतवहो महाज्वालः। वामे पार्श्वे पुनस्तिष्ठति वरबालिका ॥१३७॥
अथ तं दृष्ट्वा मया देवी भणिता प्रिये! प्रतीक्ष्य। क्षणमेकं प्रेक्षावहे किं व्यवस्यत्येष पाखण्डी ॥१३८॥
एवं च कृते कन्यां तां रुदतीं स पापपाखण्डी। संस्थापयति मण्डलके चर्चति रक्तचन्दनेन ततः ॥१३९॥
रक्तकणवीरमालामवलम्ब्य तस्याः कण्ठदेशे। किलाग्नौ क्षेप्स्यति ततः स मया तर्जित एवम् ॥१४०॥
रे रे पापिष्ठ! त्वमीदृशमसमञ्जसं जनविरुद्धम्। मम पुरतः कृत्वा व्रजसि किल क त्वं मूढ! ॥१४१॥

---

१ ग. बालं।

निल्लज्ज ! किं न लज्जसि एयाणं नियपंचभूयाणं। इहपरलोयविरुद्धं जेणाकज्जं समायरसि ?॥१४२॥
इय मम वयणं सोउं तं बालं चयइ सो पलायंतो। करुणाए परिमुक्को, देवीए समप्पियां कन्ना ॥१४३॥
संपुन्नलक्खणं तं धारिंतिं रूवसंपयं दिव्वं। उच्छंगे काऊणं जंपइ देवी, अहं जाया ॥१४४॥
देवीवि हु सप्पसवा, भणियं च मए न एत्थ संदेहो। लावन्नामयसिंधू कहं इमा माणुसी होइ ? ॥१४५॥
इय जंपंतो पत्तो केवलिपासम्मि, तं च नमिऊण। उवविट्ठो हिययगयं संदेहं जाणिउं सोवि ॥१४६॥
हरिआऊरियवरपंचयन्नघोसोवमेण सद्देण। एयाए बालियाए चरियं कहिउं समाढत्तो ॥१४७॥
तथाहि;—

भरहे इहेव कयमंगलाए नयरीए आसि धणसिट्ठी। तस्सवि य बालविहवा तणया जयसुंदरी नाम॥
तीसे य बंधुणो पंच ते आणाए तीए वट्टंति। जिट्ठस्स पुणो घरणी न वट्टइ तीइ सह सम्मं ॥१४९॥
तं परिणावइ अन्नं कन्नं तह पुव्वभारियाइ कयं। जं वा तं वा दूसइ दुव्वयणेहि य दहइ देहं ॥१५०॥
अक्कोसइ भाउज्जाइयावि एवं च ताउ वट्टंति। वट्टंतीउ ज्झाणे समगं विज्जूए दड्ढाओ ॥१५१॥
वग्घित्तं पत्ताओ परोप्परं दिट्ठिगोयरगयाओ। पुव्ववेराणुबंधा जुज्झिय तइयं गया पुढविं ॥१५२॥
उव्वट्टिऊण तत्तो परिणामविसेसओ गयउरम्मि। भाउज्जाया जाया भज्जा सूरस्स नरवइणो ॥१५३॥
गब्भे तीए नणंदा धूयत्ताए इमा समावन्ना। उव्वट्टिय नरयाओ परिणामविसेसओ तह य ॥१५४॥
पुव्वभवब्भासाओ अप्पीइं कुणइ सावि गब्भम्मि। तह तप्पाडणहेउं सया उवाए कुणइणेगे ॥१५५॥

---

निर्लज्ज ! किं न लज्जसे एतेषां नियतपञ्चभूतानाम्। इहपरलोकविरुद्धं येनाकार्यं समाचरसि ? ॥१४२॥
इति मम वचनं श्रुत्वा तां बालां त्यजति स पलायमानः। करुणया परिमुक्तः, देव्यै समर्पिता कन्या॥१४३॥
संपूर्णलक्षणां तां धारयन्तीं रूपसंपदं दिव्याम्। उत्सङ्गे कृत्वा जल्पति देवी, अहं जाता ॥१४४॥
देव्यपि खलु सप्रसवा, भणितं च मया नात्र संदेहः। लावण्यामृतसिन्धुः कथमियं मानुषी भवेत् ? ॥१४५॥
इति जल्पन् प्राप्तः केवलिपार्श्वे, तं च नत्वा। उपविष्टो हृदयगतं संदेहं ज्ञात्वा सोऽपि ॥१४६॥
हर्यापूरितवरपाञ्चजन्यघोषोपमेन शब्देन। एतस्या बालिकायाश्चरितं कथयितुं समारब्धः ॥१४७॥
भरत इहैव कृतमङ्गलायां नगर्यामासीद् धनश्रेष्ठी। तस्यापि च बालविधवा तनया जयसुन्दरी नाम॥१४८॥
तस्याश्च बन्धवः पञ्च त आज्ञायां तस्या वर्तन्ते। ज्येष्ठस्य पुनर्गृहिणी न वर्तते तया सह सम्यक् ॥१४९॥
तं परिणाययत्यन्यां कन्यां तथा पूर्वभार्यया कृतम्। यद्वा तद्वा दूषयति दुर्वचनैश्च दहति देहम् ॥१५०॥
आक्रोशति भ्रातृजायाप्येवं च ते वर्तेते। वर्तमाने च ध्याने समकं विद्युता दग्धे ॥१५१॥
व्याघ्रीत्वं प्राप्ते परस्परं दृष्टिगोचरगते। पूर्ववैरानुबन्धाद् युद्ध्वा तृतीयां गते पृथिवीम् ॥१५२॥
उद्वृत्य ततः परिणामविशेषतो गजपुरे। भ्रातृजाया जाता भार्या शूरस्य नरपतेः ॥१५३॥
गर्भे तस्या ननान्दा दुहितृतयेयं समापन्ना। उद्वृत्य नरकात् परिणामविशेषतस्तथा च ॥१५४॥
पूर्वभवाभ्यासादप्रीतिं करोति सापि गर्भे। तथा तत्पातनहेतोः सदोपायान् करोत्यनेकान् ॥१५५॥

पाउब्भूओ गब्भो देवीए तम्मि चेव समयम्मि । तो भणइ जणो गब्भो निवसंभोयाउ जइ हुंतो ॥२००॥
ता पुव्वं एयाए अन्नाए अहव रायदेवीए । किं नो पाउब्भूओ एत्तियवरिसेहिं, तं नूणं ॥२०१॥
तत्थ गया परिभुत्ता एसा विज्जाहरेण पच्छा ओ । गुरुजणभणिएण इमं छउमं रइऊण आणीया ॥२०२॥
लोयवयणिज्जमेयं राया आयन्निऊण चिंतेइ । सच्चो एस पवाओ लोओ अलिओ य वलिओ य ॥२०३॥
लोएणं घडियजुत्ती विसए एयम्मि मज्झवि मणम्मि । उप्पायइ सब्भावं, संभाविज्जइ न पुण एयं ॥२०४॥
अहवा सव्वमसच्चं होइ कम्मोदयाउ एईए । तहवि हु इय जणवाओ न सुंदरो कुलप्पसूयाण ॥२०५॥
ता पेसिज्जउ एसा जणयगिहे विरइउं इमं छउमं । जह जणओ अपडुतणू तेणवि मह पेसिओ लेहो॥२०६॥
जं लेहदंसणाओ भवणपडाया झडत्ति मह पासे । पेसइयव्वा तुमए इय कहिउं तीइ तो रन्ना ॥२०७॥
आणत्तो सेणाणी एयं मोत्तूण जणयगेहम्मि । तं आगच्छसु सिग्घं इमीए जणयस्स परिकहिउं ॥२०८॥
जह भणियमिमं रन्ना कारणवसउ इमाए इह पसवो । उचिउत्ति पेसिओ हं एयं घित्तूण इह झत्ति ॥२०९॥
तेणवि तहेव विहियं, सावि गया तत्थ पासिउं जणयं । नीरोगं परिचिंतइ मज्झ विलीयं नरवइस्स॥२१०॥
परिवसइ किंपि चित्ते, छउमं काऊण तेण तेणेह । पेसविया पिउगेहे, तमहं थेवंपि न सरेमि ॥२११॥
विज्जाहरअवहरणे किंचिवि लोयाउ पुण अलीयंपि । निसुणेऊण विलीयं अनिवेएऊण मे पुरओ॥२१२॥
मन्ने परिचत्ता हं, तं मह कम्माण विलसियमसेसं । इय अपरिक्खियकारी कहन्नहा अज्जउत्तोवि ?॥२१३॥

---

नगरे प्रवृत्तमहोत्सवे प्राप्तो नृपः समं तेन । खचरं कीरं च तत्र सम्मान्य विसृजति ॥१९९॥
प्रादुर्भूतो गर्भो देव्यास्तस्मिन्नेव समये । ततो भणति जनो गर्भो नृपसंभोगाद् यद्यभविष्यत् ॥२००॥
तदा पूर्वमेतस्या अन्यस्या अथवा राजदेव्याः । किं नो प्रादुर्भूत एतावद्वर्षैः, तन्नूनम् ॥२०१॥
तत्र गता परिभुक्तैषा विद्याधरेण पश्चात्तु । गुरुजनभणितेनेदं छद्म रचयित्वाऽऽनीता ॥२०२॥
लोकवचनीयमेतद् राजाऽऽकर्ण्य चिन्तयति । सत्य एष प्रवादो लोकोऽलीकश्च पीनश्च ॥२०३॥
लोकेन घटितयुक्तिर्विषय एतस्मिन्ममापि मनसि । उत्पादयति सद्भावं, संभाव्यते न पुनरेतत् ॥२०४॥
अथवा सर्वमसत्यं भवति कर्मोदयादेतस्याः । तथापि खल्विति जनवादो न सुन्दरः कुलप्रसूतानाम् ॥२०५॥
तस्मात् प्रेष्यतामेषा जनकगृहे विरचय्येदं छद्म । यथा जनकोऽपटुतनुस्तेनापि मम प्रेषितो लेखः ॥२०६॥
यल्लेखदर्शनाद् भवनपताका झटिति मम पार्श्वे । प्रेषयितव्या युष्माभिरिति कथयित्वा तस्यै ततो राज्ञा ॥२०७॥
आज्ञप्तः सेनानीरेतां मुक्त्वा जनकगेहे । त्वमागच्छ शीघ्रमस्या जनकस्य परिकथ्य ॥२०८॥
यथा भणितमिदं राज्ञा कारणवशतोऽस्या इह प्रसवः । उचित इति प्रेषितोऽहमेनां गृहीत्वेह झटिति ॥२०९॥
तेनापि तथैव विहितं, सापि गता तत्र दृष्ट्वा जनकम् । नीरोगं परिचिन्तयति मम व्यलीकं नरपतेः ॥२१०॥
परिवसति किमपि चित्ते, छद्म कृत्वा तेन तेनेह । प्रेषिता पितृगेहे, तदहं स्तोकमपि न स्मरामि ॥२११॥
विद्याधरापहरणे किञ्चिदपि लोकात् पुनरलीकमपि । श्रुत्वा व्यलीकमनिवेद्य मे पुरतः ॥२१२॥
मन्ये परित्यक्ताऽहम, तन्मम कर्मणां विलसितमशेषम् । इत्यपरीक्षितकारी कथमन्यथाऽऽर्यपुत्रोऽपि ? ॥२१३॥

पसाउ जाइ संदेसएहिं एइत्ति होइ न हु एयं। इय बुद्धीए तीए सेणाणी न भणिओ किंपि ॥२१४॥
तम्मि गए सा देवी संवरणं काउं नियमणम्मि तओ। झूरइ एवं हा दिव्व! ववसियं कह तए एवं?॥
पइणा सह कुण विरहं विहवं अवणेहि मरणमुवणेहि। जं पुण पयडसि सीले मज्झ कलंकं तमच्छरियं॥
चारेहिंतो विन्नायसव्वतव्वइयरो नरवरोवि। चिंतेइ सिद्धराओ धिरत्थु संसारवासस्स ॥२१७॥
जं कित्तिजलहिराया विवेयनयमंदिरं कयन्नगुरू। सुणिउं नियसवणेहिं विज्जाहरकीरवुत्तंतं ॥२१८॥
निव्वूढसइत्तसिरोमणीए वच्छाए ववसए एवं। परवसणूसवपागयदुज्जणदुव्वयणमित्तेण ॥२१९॥
उच्छंगे ठविऊणं भवणपडायंपि भणइ एगंते। वाहजलाविलनयणो वच्छे! मा खेयमुव्वहसु ॥२२०॥
यतः;–

"न्यग्नीतोऽपि कराघातैरुत्पतत्येव कन्दुकः। प्रायेण हि सुवृत्तानामस्थायिन्यो विपत्तयः॥"

इत्तो य कित्तिजलही राया रहवीरनयरसंपत्तं। चउदसपुव्विं वंदिवि परियणपुरजणसमाउत्तो ॥२२१॥
उचियट्ठाणुवविट्ठो पराए भत्तीए धम्मसवणत्थं। बहुजणउवयारत्थं तप्पुरओ कहइ सुयनाणी ॥२२२॥
कोहाइदूसियमणो जं जंपइ तप्फलं फुडं नरया। सहसा पयंपियंपि हु देइ अलीयं दुहाइं जओ ॥२२३॥
परिहासेण सवत्ती भवणपडायाए अन्नजम्मम्मि। भणिया य 'हट्टगावी' तप्परिणामो इमो जाओ॥२२४॥
भणइ नरिंदो मुणिवर! वुत्तंतमिणं सवित्थरं कहह। तो जंपइ मुणिनाहो, आसि पुरं विजयखेडंति॥
तत्थासि पउमसिट्ठी निरवच्चा तस्स पणइणी पउमा। अइवल्लहा य सा तस्स, तीए तोऽणिच्छमाणोवि॥
परिणाविओ स महिलं अन्नं, धूयंव मन्नए तं सा। अह अन्नया पयट्टे कहापबंधम्मि पउमाए ॥२२७॥

---

प्रसादं यान्ति संदेशकैरेत इति भवति न खल्वेतत्। इति बुद्ध्या तया सेनानीर्न भणितः किमपि ॥२१४॥
तस्मिन् गते सा देवी संवरणं कृत्वा निजमनसि ततः। खिद्यत एवं हा दैव! व्यवसितं कथं त्वयैवम्?॥२१५॥
पत्या सह कुरु विरहं विभवमपनय मरणमुपनय। यत्पुनः प्रकटयसि शीले मम कलङ्कं तदाश्चर्यम् ॥२१६॥
चारेभ्यो विज्ञातसर्वतद्व्यतिकरो नरवरोऽपि। चिन्तयति सिद्धराजो धिगस्तु संसारवासम् ॥२१७॥
यत् कीर्त्तिजलधिराजो विवेकनयमन्दिरं कृतज्ञगुरुः। श्रुत्वा निजश्रवणाभ्यां विद्याधरकीरवृत्तान्तम् ॥२१८॥
निर्व्यूढसतीत्वशिरोमणौ वत्सायां व्यवस्यत्येवम्। परव्यसनोत्सवप्राकृतदुर्जनदुर्वचनमात्रेण ॥२१९॥
उत्सङ्गे स्थापयित्वा भवनपताकामपि भणत्येकान्ते। बाष्पजलाविलनयनो वत्से! मा खेदमुद्वह ॥२२०॥
इतश्च कीर्त्तिजलधी राजा रथवीरनगरसंप्राप्तम्। चतुर्दशपूर्विणं वन्दित्वा परिजनपुरजनसमायुक्तः ॥२२१॥
उचितस्थानोपविष्टः परया भक्त्या धर्मश्रवणार्थम्। बहुजनोपकारार्थं तत्पुरतः कथयति श्रुतज्ञानी ॥२२२॥
क्रोधादिदूषितमना यज्जल्पति तत्फलं स्फुटं नरकाः। सहसा प्रजल्पितमपि खलु ददात्यलीकं दुःखानि यतः॥
परिहासेन सपत्नी भवनपताकयाऽन्यजन्मनि। भणिता च 'हट्टगवी' तत्परिणामोऽयं जातः ॥२२४॥
भणति नरेन्द्रो मुनिवर! वृत्तान्तमिदं सविस्तरं कथय। ततो जल्पति मुनिनाथः, आसीत्पुरं विजयखेटमिति॥
तत्रासीत्पद्मश्रेष्ठी निरपत्या तस्य प्रणयिनी पद्मा। अतिवल्लभा च सा तस्य, तया ततोऽनिच्छन्नपि ॥२२६॥

हट्टगाविति सहसा भणिया एसा, इमं च पउमेण । निसुयं तहेव तं परिणयं च तो वासभवणम्मि।२२८।
दिन्नो न से पवेसो तो सा गंतूण कहइ पउमाए । सावि हु पुच्छइ पउमं तुम्हवरद्धं किमेयाए ? ।२२९।
सो भणइ हट्टगाई भणिया एसा तए, तओ पउमा । 'खिड्डेण मए भणियं एयं' इच्चाइ भणिऊण॥२३०॥
पत्तिज्जावइ पउमं, तो सो पुव्वंव वट्टई तीए । पउमा य देसविरया किंतु अणाभोगओ एवं ॥२३१॥
नो परिचिंतइ एसा बीयम्मि वयम्मि मज्झ अइयारो । सहसा अब्भक्खाणं, आजम्मं पालिउं सम्मं।२३२।
सेसं तु देसविरइं, अंतिमसमयम्मि इममईयारं । अप्पडिक्कमिऊण मया पत्ता सोहम्मकप्पम्मि ॥२३३॥
तत्तो य चुया जाया कमेण तुह भारिया इमा इन्हिं । तव्वयणफलं पत्ता वयणिज्जमिमं सुसीलावि ॥
तं सोउं पुरलोओ भणइ मुणिंदं बहु विसूरंतो । देवीए वयणिज्जं एयं सुविसुद्धसीलाए ॥२३५॥
आरोवियमम्हेहिं, ता पहु ! एयस्स पावकम्मस्स । जह मुच्चामो अम्हे करुणं काउं तहा कुणह ॥२३६॥
पावावगमोवाए कहियम्मि सवित्थरे मुणिंदेण । केहिंपि सव्वविरई गहिया देसेण अन्नेहिं ॥२३७॥
सम्मत्तमित्तमन्नेहिं, नरवरो पुण नमित्तु मुणिनाहं । विन्नवइ पुणो एवं जह मइ करुणं करेऊण ॥२३८॥
ठायव्वमित्थ कइवयदिणाणि कज्जं जमित्थ तं पहुणो । जाणंति पुण सयं चिय इय भणिउं उट्ठिओ तत्तो ॥
नियरज्जकज्जसिक्खं दाउममच्चस्स पवरसुहडेहिं । सह वरतुरयारूढेहिं जाइ कंचणपुरिं नयरिं ॥२४०॥
संपन्नपुत्तरयणं भवणपडायं तओ खमावेइ । लोयवयणेण एयं कयं मए मंदनेहेण ॥२४१॥

---

परिणायितः स महिलामन्याम्, दुहितरमिव मन्यते तां सा । अथान्यदा प्रवृत्ते कथाप्रबन्धे पद्मया ॥२२७॥
हट्टगवीति सहसा भणितैषा, इदं च पद्मेन । श्रुतं तथैव तत् परिणतं च ततो वासभवने ॥२२८॥
दत्तो न तस्याः प्रवेशस्ततः सा गत्वा कथयति पद्माम् । सापि खलु पृच्छति पद्मं तवापराद्धं किमेतया ? ॥
स भणति हट्टगवी भणितैषा त्वया, ततः पद्मा । 'क्रीडया मया भणितमेतत्' इत्यादि भणित्वा ॥२३०॥
प्रत्याययति पद्मं, ततः स पूर्वमिव वर्तते तस्याम् । पद्मा च देशविरता किन्त्वनाभोगत एवम् ॥२३१॥
नो परिचिन्तयत्येषा द्वितीयव्रते ममातिचारः । सहसाऽभ्याख्यानं, आजन्म पालयित्वा सम्यक् ॥२३२॥
शेषं तु देशविरतिम्, अन्तिमसमये इममतीचारम् । अप्रतिक्रम्य मृता प्राप्ता सौधर्मकल्पे ॥२३३॥
ततश्च च्युता जाता क्रमेण तव भार्येयमिदानीम् । तद्वचनफलं प्राप्ता वचनीयमिदं सुशीलापि ॥२३४॥
तत् श्रुत्वा पुरलोको भणति मुनीन्द्रं बहु खिद्यमानः । देव्या वचनीयमेतत् सुविशुद्धशीलायाः ॥२३५॥
आरोपितमस्माभिः, तस्मात्प्रभो ! एतस्मात्पापकर्मणः । यथा मुच्यामहे वयं करुणां कृत्वा तथा कुरुत ॥२३६॥
पापापगमोपाये कथिते सविस्तरे मुनीन्द्रेण । कैरपि सर्वविरतिर्गृहीता देशेनाऽन्यैः ॥२३७॥
सम्यक्त्वमात्रमन्यैः, नरवरः पुनर्नत्वा मुनिनाथम् । विज्ञपयति पुनरेवं यथा मयि करुणां कृत्वा ॥२३८॥
स्थातव्यमत्र कतिपयदिनानि कार्यं यदत्र तत् प्रभवः । जानन्ति पुनः स्वयमेवेति भणित्वोत्थितस्ततः ॥२३९॥
निजराज्यकार्यशिक्षां दत्त्वाऽमात्यस्य प्रवरसुभटैः । सह वरतुरगारूढैर्याति काञ्चनपुरीं नगरीम् ॥२४०॥
संपन्नपुत्ररत्नां भवनपताकां ततः क्षमयति । लोकवचनेनैतत् कृतं मया मन्दस्नेहेन ॥२४१॥

जइं नत्थि फलं वंजुलदुमस्स वडउंवरेसु वा पुप्फं । तह दइए ! तुह देहे न विज्जए दोसलेसोवि॥२४२॥
इच्चाइ जंपिऊणं नियनयरे णेइ गुरुविभूईए । पुत्तं रज्जे ठविउं गिण्हइ पव्वज्जमणवज्जं ॥२४३॥
भवणपडायावि तओ अट्ठमवरिसम्मि लेइ पव्वज्जं । अणवज्जं तं परिपालिऊण पत्ताइं दोवि सिवं॥२४४॥

॥ इति द्वितीयव्रते प्रथमातिचारे भवनपताकाकथा समाप्ता ॥

---

यथा नास्ति फलं वञ्जुलद्रुमस्य वटोदुम्बरयोर्वा पुष्पम् । तथा दयिते ! तव देहे न विद्यते दोषलेशोऽपि॥२४२॥
इत्यादि जल्पित्वा निजनगरे नयति गुरुविभूत्या । पुत्रं राज्ये स्थापयित्वा गृह्णाति प्रव्रज्यामनवद्याम् ॥२४३॥
भवनपताकापि ततोऽष्टमवर्षे लाति प्रव्रज्याम् । अनवद्यां तां परिपाल्य प्राप्तौ द्वावपि शिवम् ॥२४४॥



'रायविरुद्धाइं इमे मंतंति रहम्मि' भणइ जो पिट्ठो। सो मइलियवीयवओ धरणुव्व सुदुक्खिओ होइ ॥१॥
तथाहि; —
अत्थि इह भरहवासे वासवअंगंव सुर-रयणकयग्घं। वीरउरं नाम पुरं राया रणवीरनामोत्ति ॥२॥
जलहिलहरिव्व भज्जा वररयणा अत्थि तस्स रयणवई। ताण सुओ गुणजलही मंतिस्स सुओ य धरणोत्ति॥
ताणं च परुप्परओ पीई तह कहवि वड्ढिया दूरं। नयणनिमेसेणवि जह अदंसणे दुक्खिया हुंति ॥४॥
अह अन्नया वसंते ते संपत्ता मणोरमुज्जाणे। अंदोलयाधिरूढं पिच्छंति वरंगणं एक्कं ॥५॥
महुमहसिरिव्व सव्वंगलग्गअइचंगकुसुमआहरणं। रयणाहरणविहूसियपडिचारियविंदपरियरियं ॥६॥
तं दट्ठूण कुमारो मारवहूरूवविब्भमं रत्तो। सावि कुमरस्स रूवं दट्ठूण ठिया मयणवसया ॥७॥
निद्धनयणावलोयणमन्नोन्नं पिच्छिउं भणइ धरणो। जाणियतयभिप्पाओ कुमार! जह इत्थ चूयम्मि ॥
तह लवइ कोइला जह मणंपि उच्छहइ मह मणं गंतुं। नो पुरओ, तो ठामो इहेव गुरुचूयछायाए॥९॥
अह तत्थ ठिया तरुणीजुयलं पिच्छंति उत्तराहुत्तं। गयणेणं गच्छंतं आगच्छंतं खणेण तओ ॥१०॥
ताहिं समं चिय एक्कं खयरविमाणं तओ य ओयरियं। विज्जाहरनरनाहं छत्ताईककुहकयसोहं ॥११॥
अप्पाभिमुहं इंतं दट्ठूण करेंति उचियपडिवत्तिं। सोवि विमाणे आरोविऊण ते जाइ निवभवणे॥१२॥
कयउवयारो य नरेसरेण सीहासणे सुहासीणो। भणइ रणवीररायं एक्कच्चिय अत्थि मह धूया ॥१३॥
उचियं वरमलहंतस्स तीए नेमित्तिएण मे कहियं। वीरपुरुज्जाणवरे मणोरमे पेसह कुमारिं ॥१४॥

---

'राजविरुद्धानीमे मन्त्रयन्ति रहसि' भणति यो पृष्टः। स मलिनितद्वितीयव्रतो धरण इव सुदुःखितो भवति॥१॥
*अस्तीह भरतवर्षे वासवाङ्गमिव सुरत्नकृता [सुरजनकृता] र्घम्। वीरपुरं नाम पुरं राजा रणवीरनामेति* ॥२॥
जलधिलहरिरिव भार्या वररत्नाऽस्ति तस्य रत्नवती। तयोः सुतो गुणजलधिर्मन्त्रिणः सुतश्च धरण इति ॥३॥
तयोश्च परस्परतः प्रीतिस्तथा कथमपि वृद्धा दूरम्। नयननिमेषेणापि यथाऽदर्शने दुःखितौ भवतः ॥४॥
अथान्यदा वसन्ते तौ संप्राप्तौ मनोरमोद्याने। आन्दोलकाधिरूढां पश्यतो वराङ्गनामेकाम् ॥५॥
मधुमहाश्रियमिव सर्वाङ्गलग्नातिचङ्गकुसुमाभरणाम्। रत्नाभरणविभूषितपरिचारिकावृन्दपरिकरिताम् ॥६॥
तां दृष्ट्वा कुमारो मारवधूरूपविभ्रमां रक्तः। सापि कुमारस्य रूपं दृष्ट्वा स्थिता मदनवशगा ॥७॥
स्निग्धनयनावलोकनमन्योन्यं दृष्ट्वा भणति धरणः। ज्ञाततदभिप्रायः कुमार! यथात्र चूते ॥८॥
*तथा लपति कोकिला यथा मनागप्युत्सहते मम मनो गन्तुम्। नो पुरतः, ततस्तिष्ठाव इहैव गुरुचूतच्छायायाम्*॥९॥
अथ तत्र स्थितौ तरुणीयुगलं पश्यत उत्तराभिमुखम्। गगनेन गच्छदागच्छत् क्षणेन ततः ॥१०॥
ताभ्यां सममेवैकं खचरविमानं ततश्चावतीर्णम्। विद्याधरनरनाथं छत्रादिककुदकृतशोभम् ॥११॥
आत्माभिमुखमायन्तं दृष्ट्वा कुरुत उचितप्रतिपत्तिम्। सोऽपि विमान आरोप्य तौ याति नृपभवने ॥१२॥
कृतोपचारश्च नरेश्वरेण सिंहासने सुखासीनः। भणति रणवीरराजमेकैवास्ति मम दुहिता ॥१३॥

---

१ क. वओ, ख. पत्तो। २ क. मणो मणागंपि गंतुमुच्छहइ। नो।

तत्थट्ठियाए हरिही चित्तं रणवीररायतणओ जो। एईए वरो सो, इय सोउं इह पेसिया कुमरी ॥१५॥
परिणयणलग्गमवि अज्ज चेवं, ता दोण्हमेसिं रयणाणं। निम्मवणे आयासो होउ कयत्थो पयावइणो ॥
इत्तो य सवलमूले ठाऊणं भणइ नरवरं धरणो। जह कुमरस्सवि सम्मयमेयं ता कुणउ लहु देवो॥१७॥
तो पडिवन्नम्मि तहा निवेण वित्ते विवाहपव्वम्मि। सम्माणिऊण खयरो विसज्जिओ जाइ सट्ठाणं॥१८॥
अह अन्नया कुमारो अत्थाणसहाए जणयपासम्मि। जा चिट्ठइ ता पत्तो पडिहारनिरूवियसरूवो ॥१९॥
उज्जाणवालपुरिसो विन्नवइ नरेसरं पणमिऊण। जह अमरचंदसूरी थुव्वंतो अमरविंदेणं ॥२०॥
नंदणवणउज्जाणे समोसढो अज्ज, इय निसामेउं। अमयसित्तोव्व कुमरो विन्नवइ कयंजली जणयं॥२१॥
जइ जंगमतित्थाणं ताणं तायस्स दंसणं जुत्तं। तो तव्वंदणहेउं जाइ नरिंदो सपरिवारो ॥२२॥
तत्थ गओ तं दट्ठुं गइंदखंधाउ उत्तरेऊण। सह कुमरेणं विहिणा वंदइ रोमंचकंचुइओ ॥२३॥
तो दुंदुहिगहिरोद्दामरुंदसद्देण धम्मलाभेण। आणंदिउं नरिंदं तयणु इमं देसणं कुणइ ॥२४॥
तथाहि;—
जं जं इह संपज्जइ मणोरमं रूवरिद्धिमाईयं। तं तं धम्मस्स फलं विवरीयं पुण अहम्मस्स ॥२५॥
धम्माभासेहिं समाउलम्मि भुवणे जहट्ठियं धम्मं। आसन्नभाविभद्दा विरलच्चिय केइ जाणंति ॥२६॥
विरलाणवि ते विरला धम्मविसेसं वियाणिउं सम्मं। जं जह भणियं तं तह कुणंति नियदेहनिरविक्खा ॥
जत्थ य विसयविरागो कसायचाओ गुणेसु अणुरागो। करुणाए अपमाओ सो धम्मो सिवसुहोवाओ॥२८॥

---

उचितं वरमलभमानस्य तस्या नैमित्तिकेन मे कथितम्। वीरपुरोद्यानवरे मनोरमे प्रेषयत कुमारीम् ॥१४॥
तत्र स्थिताया हरिष्यति चित्तं रणवीरराजतनयो यः। एतस्या वरः सः, इति श्रुत्वेह प्रेषिता कुमारी ॥१५॥
परिणयनलग्नमप्यद्यैव, तस्माद् द्वयोरनयो रत्नयोः। निर्मापण आयासो भवतु कृतार्थः प्रजापतेः ॥१६॥
इतश्च श्रवणमूले स्थित्वा भणति नरवरं धरणः। यथा कुमारस्यापि संमतमेतत् तस्मात्करोतु लघु देवः॥१७॥
ततः प्रतिपन्ने तथा नृपेण वृत्ते विवाहपर्वणि। सम्मान्य खचरो विसृष्टो याति स्वस्थानम् ॥ १८ ॥
अथान्यदा कुमार आस्थानसभायां जनकपार्श्वे। यावत्तिष्ठति तावत्प्राप्तः प्रतीहारनिरूपितस्वरूपः ॥१९॥
उद्यानपालपुरुषो विज्ञपयति नरेश्वरं प्रणम्य। यथाऽमरचन्द्रसूरिः स्तूयमानोऽमरवृन्देन ॥२०॥
नन्दनवनोद्याने समवसृतोऽद्य, इति निशम्य। अमृतसिक्त इव कुमारो विज्ञपयति कृताञ्जलिर्जनकम्॥२१॥
यथा जङ्गमतीर्थानां तेषां तातस्य दर्शनं युक्तम्। ततस्तद्वन्दनहेतोर्याति नरेन्द्रः सपरिवारः ॥२२॥
तत्र गतस्तं दृष्ट्वा गजेन्द्रस्कन्धादुत्तीर्य। सह कुमारेण विधिना वन्दते रोमाञ्चकञ्चुकितः ॥२३॥
ततो दुन्दुभिगम्भीरोद्दामविपुलशब्देन धर्मलाभेन। आनन्द्य नरेन्द्रं तदन्विमां देशनां करोति ॥२४॥
यद्यदिह संपद्यते मनोरमं रूपर्द्ध्यादिकम्। तत्तद् धर्मस्य फलं विपरीतं पुनरधर्मस्य ॥२५॥
धर्माभासैः समाकुले भुवने यथास्थितं धर्मम्। आसन्नभाविभद्रा विरला एव केचिज्जानन्ति ॥२६॥
विरलानामपि ते विरला धर्मविशेषं विज्ञाय सम्यक्। यद्यथा भणितं तत्तथा कुर्वन्ति निजदेहनिरपेक्षम्॥२७॥

सो पुण जिणभणिउच्चिय सुहत्थिणा तेण तत्थ जइयव्वं। अन्नह अंबयसद्धाए सेयणं अक्करुक्खाण॥२९॥
तत्थवि जइधम्मोच्चिय कायव्वो होइ अत्थि जइ सत्ती। स समग्गसंगविगमा परमंगं जेण मोक्खस्स॥३०॥
अप्पविरियाण तज्जोगयाए रहियाणगारिधम्मोवि। कालक्कमेण भवभयदुक्खाण जलंजलिं देइ ॥३१॥
इच्चाइदेसणं निसुणिऊण रणवीरराइणा भणियं। भयवं! जइ उचिओ हं जइधम्मं देसु ता मज्झ ॥३२॥
तो भणिओ सो गुरुणा निव्विग्घं होउ तुज्झ एसत्थो। अह राया नियकुमरं गुणजलहिं ठाविउं रज्जे॥३३॥
गिण्हेइ सयं दिक्खं गुणजलहिनिवोवि धरणमित्तजुओ। देसविरइं पवज्जिय नमिउं च गुरुं वयइ गेहे ॥
मोयावइ गुत्तीओ कारइ अट्ठाहिया जिणगिहेसु। साहम्मियवच्छल्लं दीणजणुद्धरणमन्नं च ॥३५॥
पव्वज्जं गिण्हंतो जं राया भणइ कुणइ तं सव्वं। ठवइ धरणं अमच्चं सयं तु उज्जमइ धम्मम्मि ॥३६॥
अह अन्नया नरिंदो रयणीए अद्धरत्तसमयम्मि। पिच्छइ कमलदलच्छि एकं नवजोव्वणं रमणिं॥३७॥
तणुकंतिपहयतिमिरं डमरुयहत्थं सुवन्नदंडकरं। वररयणावलिकंठं सियवत्थं पाउयारूढं ॥३८॥
तो तं पुच्छइ राया का सि तुमं केण कारणेणेह। छणससिसमाणवयणे! संपत्ता, कहइ सावि तओ॥३९॥
ईसिवियसंतवयणा पभणइ पच्चंगिरा अहं विज्जा। एत्तो भवाउ तइए भवम्मि विहियाउ मज्झ तए ॥४०॥
पुव्वुत्तरसेवाओ विहिपुव्वं भत्तिनिब्भरमणेणं। जा किर सिज्झिस्समहं ता तं पंचत्तमणुपत्तो ॥४१॥
पुव्वभवविहियभत्तीए चेव अहमासि तुज्झ अणुकूला। संपइ पुण जिणधम्मे रयस्स तह देसविरयस्स ॥

यत्र च विषयविरागः कषायत्यागश्च गुणेष्वनुरागः। करुणायामप्रमादः स धर्मः शिवसुखोपायः ॥२८॥
स पुनर्जिनभणित एव सुखार्थिना तेन तत्र यतितव्यम्। अन्यथाऽऽम्रश्रद्धया सेचनमर्कवृक्षाणाम् ॥२९॥
तत्रापि यतिधर्म एव कर्तव्यो भवत्यस्ति यदि शक्तिः। स समग्रसङ्गविगमात्परमाङ्गं येन मोक्षस्य ॥३०॥
अल्पवीर्याणां तद्योग्यतया रहितानामगारिधर्मोऽपि। कालक्रमेण भवभयदुःखानां जलाञ्जलिं ददाति ॥३१॥
इत्यादिदेशनां श्रुत्वा रणवीरराजेन भणितम्। भगवन्! यद्युचितोऽहं यतिधर्मं देहि तदा मे ॥३२॥
ततो भणितः स गुरुणा निर्विघ्नं भवतु तवैषोऽर्थः।अथ राजा निजकुमारं गुणजलधिं स्थापयित्वा राज्ये ॥३३॥
गृह्णाति स्वयं दीक्षां गुणजलधिनृपोऽपि धरणमित्रयुतः। देशविरतिं प्रपद्य नत्वा च गुरुं व्रजति गेहे ॥३४॥
मोचयति गुप्तीः कारयत्यष्टाहिका जिनगृहेषु। सार्धर्मिकवात्सल्यं दीनजनोद्धरणमन्यच्च॥ ३५ ॥
प्रव्रज्यां गृह्णन् यद् राजा भणति करोति तत्सर्वम्। स्थापयति धरणममात्यं स्वयं तूद्यच्छति धर्मे ॥३६॥
अथान्यदा नरेन्द्रो रजन्यामर्धरात्रसमये। पश्यति कमलदलाक्षीमेकां नवयौवनां रमणीम् ॥३७॥
तनुकान्तिप्रहततिमिरां डमरुकहस्तां सुवर्णदण्डकराम्। वररत्नावलीकण्ठां सितवस्त्रां पादुकारूढाम् ॥३८॥
ततस्तां पृच्छति राजा काऽसि त्वं केन कारणेनेह। क्षणशशिसमानवदने! संप्राप्ता, कथयति सापि ततः ॥३९॥
ईषद्विकसद्वदना प्रभणति प्रत्यङ्गिन्यहं विद्या। इतो भवात् तृतीये भवे विहिता मम त्वया ॥४०॥
पूर्वोत्तरसेवा विधिपूर्वं भक्तिनिर्भरमनसा। यावत्किल सेत्स्याम्यहं तावत्त्वं पञ्चत्वमनुप्राप्तः ॥४१॥
पूर्वभवविहितभक्त्यैवाहमासं तवानुकूला। संप्रति पुनर्जिनधर्मे रतस्य तथा देशविरतस्य ॥४२॥

रज्जं कुलक्कमागयरिणमिव तुह धन्न ! मन्नमाणस्स । किंकरभावं पत्ता कज्जविसेसेसु सरियव्वा ॥४३॥
तो उट्ठिवि रन्ना दिन्नमासणं तीइ तह इमं भणिया । अणब्भुट्ठाणाविणओ खमियव्वो मज्झ देवीए॥४४॥
तुम्हे गुणाहिया मज्झ अविणओ अविरयाए को तुम्ह ? । इय भणिउं कंठाओ नियाओ रयणावली तीए॥
खित्ता निवस्स कंठे कहियं एवं च तीइ माहप्पं । जह कंठगयाए इमाए जंति अरिणोवि भिच्चत्तं ॥४६॥
इय भणिउं मा रन्नाणुन्नाया वचए नियं ठाणं । रायावि रयणिसेसं धम्मज्झाणेण निग्गमई ॥४७॥
उइयम्मि दिवसनाहे काऊणावस्सयाइकिरियाओ । अत्थाणे उवविट्ठो कंठे रयणावलिं काउं ॥४८॥
तीइ पहावेणं तओ निवस्स अच्चंतपच्चणीयावि । नरवइणो बलगुरुणो सिरेण आणं पडिच्छंति ॥४९॥
तो ठविउं रज्जधुरं धरणामच्चम्मि निच्चलो निच्चं । जिणधम्मकम्मनिरओ गमेइ कालं भवुव्विग्गो ॥५०॥
अह सागरसिट्ठिगिहे सुयाविवाहे पवट्टमाणम्मि । रज्जंतरागएणं वरपिउणा महणदेवेण ॥५१॥
आभव्वदव्वविसए जाए कोलाहले सयणवग्गो । आलोच्चंतो दिट्ठो धरणेणं ठाणठाणेसु ॥५२॥
तो भणइ तुम्ह मंतो एस मए अवगओम्ह मम्माइं । नियरन्नो साहिस्सह, तं सोउं महणदेवसुओ ॥५३॥
दुत्तुंडो तयभिमुहं भणइ जहा लुडियं इमं रट्ठं । तह अम्हेवि हु इच्छसि लूडेउं, तं च सुणिऊण ॥५४॥
कुविओ धराविऊणं बंधावइ तं तओ य तज्जणओ । तप्पडिवक्खे चडिओ जंपंओ सोवि तह चेव॥५५॥
तो मेलियपुरलोओ धरणं विन्नवइ सायरो सिट्ठी । अकयवराहाणेवं किं जुत्तं बंधणमिमेसिं ? ॥५६॥
भणइ धरणो अमच्चो रायविरुद्धाइं मंतयंतावि । अकयवराहा एए तुमंपि, इय वयणपडिवयणे ॥५७॥

---

राज्यं कुलक्रमागतर्णमिव तव धन्य ! मन्यमानस्य । किंकरभावं प्राप्ता कार्यविशेषेषु स्मर्तव्या ॥४३॥
तत उत्थाय राज्ञा दत्तमासनं तस्यास्तथेदं भणिता । अनभ्युत्थानाविनयः क्षन्तव्यो मम देव्या ॥४४॥
यूयं गुणाधिका ममाविनयोऽविरतायाः को युष्माकम् ? । इति भणित्वा कण्ठाद् निजाद् रत्नावली तया ॥४५॥
क्षिप्ता नृपस्य कण्ठे कथितमेवं च तस्या माहात्म्यम् । यथा कण्ठगतायामस्यां यान्त्यरयोऽपि भृत्यत्वम् ॥४६॥
इति भणित्वा सा राज्ञाऽनुज्ञाता व्रजति निजं स्थानम् । राजापि रजनिशेषं धर्मध्यानेन निर्गमयति ॥४७॥
उदिते दिवसनाथे कृत्वाऽऽवश्यकादिक्रियाः । आस्थान उपविष्टः कण्ठे रत्नावलीं कृत्वा ॥४८॥
तस्याः प्रभावेण ततो नृपस्यात्यन्तप्रत्यनीका अपि । नरपतयो बलगुरवः शिरसाऽऽज्ञां प्रतीच्छन्ति ॥४९॥
ततः स्थापयित्वा राज्यधुरां धरणामात्ये निश्चलो नित्यम् । जिनधर्मकर्मनिरतो गमयति कालं भवोद्विग्नः ॥५०॥
अथ सागरश्रेष्ठिगृहे सुताविवाहे प्रवर्तमाने । राज्यान्तरागतेन वरपित्रा महनदेवेन ॥५१॥
आभाव्यद्रव्यविषये जाते कोलाहले स्वजनवर्गः । आलोच्यमानो दृष्टो धरणेन स्थानस्थानेषु ॥५२॥
ततो भणति युष्माकं मन्त्र एष मयावगतोऽस्माकं मर्माणि । निजराजाय कथयिष्यथ, तत् श्रुत्वा महनदेवसुतः॥
दुस्तुण्डस्तदभिमुखं भणति यथा लुण्टितमिदं राष्ट्रम् । तथाऽस्मानपि खल्विच्छसि लुण्टितुं, तच्च श्रुत्वा ॥
कुपितो धारयित्वा बन्धयति तं ततश्च तज्जनकः । तत्प्रतिपक्षे चटितो जल्पन् सोऽपि तथैव ॥५५॥
ततो मेलितपुरलोको धरणं विज्ञपयति सागरः श्रेष्ठी । अकृतापराधयोरेवं किं युक्तं बन्धनमनयोः ? ॥५६॥

वट्टंते कुविओ सागरम्मि धरणो धराविउं तस्स । सव्वंपि हु घरसारं लहसाविय खिवइ भंडारे ॥५८॥
अवगन्नइ सव्वेवि हु पुरप्पहाणेवि तेहिं तो गंतुं । विन्नत्तो नरनाहो. सचिवं हक्कारिउं भणइ ॥५९॥
एए भणंति जं तं किं सच्चं, सो भणेइ किमसच्चं । तुह भंडारं भरिमो जे ते अम्हेच्चिय न सच्चा ?॥
भणइ निवो किं इमिणा, अवराहो जो इमेसिं तं कहह । रायविरुद्धाइं इमे मंतंति इमं कहइ धरणो॥६१॥
तो राया ते पुच्छइ उत्तरपच्चुत्तरेहिं तो तेहिं । विहिओ निरुत्तरो सो रायं पइ जंपए एवं ॥६२॥
पागयजणेण सद्धिं उत्तरपच्चुत्तराइं कारेसि । जो अहमन्नायपरो तुह पडिहासेमि चित्तम्मि ॥६३॥
ता कोवि नयपरो जो तस्स समप्पेह अप्पणो मुद्दं । इय भणिउं हत्थाओ उत्तारिवि खिवइ तं दूरे ॥६४॥
तो राया भणइ इमं किं मुद्दं मुयह, कुणसु नीईए । परिपालणं पयाणं भंडारं भरसु नाएणं ॥६५॥
यतः,—

" अर्थात् त्रिवर्गनिष्पत्तिर्न्यायोपार्जितवर्धनात् । अधर्मानर्थशोकानां विपरीतात्समुद्भवः ॥ "

अन्नंपि तुज्झ एसो बीयम्मि वयम्मि बीयअइयारो । ता आलोयसु एयं गंतूण गुरूण पयमूले ॥६६॥
तो सो अणक्खभरिओ उट्ठिय गेहम्मि जाइ तो ठवइ । राया अन्नममच्चं अप्पावइ वणियघरसारं ॥६७॥
तेण य अन्नाएणं दव्वं लोयाओ अप्पणा गहियं । लद्धावसरो लोओ धरिऊणं लेइ तं तत्तो ॥६८॥
अह कुंढेणेक्केणं लंचादव्वम्मि मग्गमाणेणं । धरियं तं कुट्टावइ भिच्चेहिंतो तहा तेण ॥६९॥
लहिऊण छलं छुरियाए आहओ तह जहा गओ निहणं । रुद्दज्झाणोवगओ पत्तो तच्चाए पुढवीए॥७०॥

---

भणति धरणोऽमात्यो राजविरुद्धानि मन्त्रयन्तोऽपि । अकृतापराधा एते त्वमपि, इति वचनप्रतिवचनेन॥५७॥
वर्तमाने कुपितः सागरे धरणो धारयित्वा तस्य । सर्वमपि खलु गृहसारं लूसित्वा क्षिपति भाण्डागारे ॥५८॥
अवगणयति सर्वाण्यपि खलु पुरप्रधानान्यपि तैस्ततो गत्वा । विज्ञप्तो नरनाथः सचिवं हक्कारयित्वा भणति ॥
एते भणन्ति यत्तत् किं सत्यं, स भणति किमसत्यम् । तव भाण्डागारं भरामो ये ते वयमेव न सत्याः ? ॥
भणति नृपः किमनेन, अपराधो य एषां तं कथयत । राजविरुद्धानीमे मन्त्रयन्तीदं कथयति धरणः ॥६१॥
ततो राजा तान् पृच्छत्युत्तरप्रत्युत्तरैस्ततस्तैः । विहितो निरुत्तरः स राजानं प्रतिजल्पत्येवम् ॥६२॥
प्राकृतजनेन सार्धमुत्तरप्रत्युत्तराणि कारयसि । यद्यहमन्यायपरस्तव प्रतिभासे चित्ते ॥६३॥
तदा कोऽपि नयपरो यस्तस्मै समर्पयतात्मनो मुद्राम् । इति भणित्वा हस्तादुत्तार्य क्षिपति तां दूरे ॥६४॥
ततो राजा भणतीमं किं मुद्रां मुञ्चसि, कुरुष्व नीत्या । परिपालनं प्रजानां भाण्डागारं भर न्यायेन ॥६५॥
अन्यदपि तवैष द्वितीये व्रते द्वितीयातिचारः । तस्मादालोचयैतद् गत्वा गुरूणां पादमूले ॥६६॥
ततः स रोषभृत उत्थाय गृहे याति ततः स्थापयति । राजाऽन्यममात्यमर्पयति वणिग्गृहसारम् ॥६७॥
तेन चान्यायेन द्रव्यं लोकादात्मना गृहीतम् । लब्धावसरो लोको धृत्वा लाति तत् ततः ॥६८॥
अथ कुण्ठेनैकेन लञ्चाद्रव्यं मार्गयमाणेन । धृतं तं कुट्टयति भृत्यैस्तथा तेन ॥६९॥
लब्ध्वा छलं क्षुरिकयाऽऽहतस्तथा यथा गतो निधनम् । रौद्रध्यानोपगतः प्राप्तस्तृतीयां पृथिवीम् ॥७०॥

तत्तो भमिऊण भवे कयाई पाविहइ मोक्खसोक्खंपि । गुण जलहिनरवईवि हु निम्मलगिहियम्मसंजुत्तो॥
जिणसासणम्मि सययं रहजत्तापमुहविविहहेऊहिं । उच्छप्पणा पवत्तइ कारावइ गरुयजिणभवणे ॥७२॥
जिन्नुद्धारपुरस्सरममारिघोसंपि सव्वविसयम्मि । साहम्मियवच्छल्लाई कुणई सद्धम्मकिच्चाई ॥७३॥
पज्जंते पव्वज्जं पवज्जिऊणं समाहिमरणेण । सोहम्मे उववन्नो तइयभवे सिवसुहं लहिही ॥७४॥
इय भमिओ संसारे धरणो बीयव्वयस्स बीएण । अइयारेणं तम्हा वज्जह एयंपि जत्तेण ॥७५॥

॥ इति मृषावादव्रते द्वितीयातिचारविपाके धरणाख्यानकं समाप्तम् ॥

---

ततो भ्रान्त्वा भवे कदाचित्प्राप्स्यसि मोक्षसौख्यमपि । गुणजलधिनरपतिरपि हि निर्मलगृहिधर्मसंयुक्तः ॥७१॥
जिनशासने सततं रथयात्राप्रमुखविविधहेतुभिः । उत्सर्पणाः प्रवर्तयति कारयति गुरुजिनभवनानि ॥७२॥
जीर्णोद्धारपुरस्सरममारिघोषमपि सर्वविषये । सार्धर्मिकवात्सल्यानि करोति सद्धर्मकृत्यानि ॥७३॥
पर्यन्ते प्रव्रज्यां प्रपद्य समाधिमरणेन । सौधर्मे उपपन्नस्तृतीयभवे शिवसुखं लप्स्यते ॥७४॥
इति भ्रान्तः संसारे धरणो द्वितीयव्रतस्य द्वितीयेन । अतिचारेण तस्माद् वर्जयैतमपि यत्नेन ॥७५॥

जो नियकलत्तवीसंभभासियं कहइ कहवि अन्नस्स । बीयव्वयअइयरणा पावइ मयणोव्व सो दुक्खं ॥१॥
तथाहि;-
गयसंखलच्छिकलियं विण्हुतणु पिव सुदंसणाहारं । सुविराइयं वरेहिं रयणेहिं रयणपुरनयरं ॥२॥
तत्थत्थि वणिप्पहाणो सुधणो सिट्ठी धणोव्व धणकलिओ । तस्सवि य पिया सीया सीलगुणग्घवियमाहप्पा ॥
अह अन्नया य ताणं जाओ तणओ गुणाण कुलभवणं । धणसारो नामेणं, मित्तो तस्सत्थि वणियसुओ ॥
नामेणं रूवेण य मयणो धणसारमित्तसहिओ सो । कीलेइ काणणाइसु निरंकुसो मत्तहत्थिव्व ॥५॥
अह अन्नया पयट्टे वसंतसमयम्मि समयसारमुणि । पासइ पसंतमुत्ति उज्जाणे कुसुमसारम्मि ॥६॥
तं दट्ठूणं पभणइ मयणो धणसार ! सारयससिंव । मणनयणाणंदयरं वंदेमो मुणिवरं एयं ॥७॥
इय भणिय वंदिओ सो, झाणं संहरिय धम्मलाभेण । अभिणंदिया इमेणं दिएण एक्केण तो भणियं ॥
किं भो ! मं मुत्तूणं एसो सुद्दोऽभिवाइओ एवं । पत्तम्मि माणससरे को घुंटइ खाइयानीरं ? ॥९॥
तो तेहिं सो भणिओ माहण ! मा भणसु एरिसं वयणं । माहणसद्दत्थजुओ किं एस न माहणो होइ ? ॥
तथाहि;—
मा हण मा हण जीवे मा भण मा भणह अलियवयणाइं । मा हरह परधणाइं मा गिज्झह जुवइदेहेसु ॥११॥
मा मुच्छं कुणह परिग्गहम्मि इच्चाइ देइ उवएसं । अब्बंभाओ विरओ जो खलु तं माहणं बिंति ॥१२॥
तो एवमाइगुणसंगओवि कह सोम ! माहणो नेसो ? । सो चेव होइ सुद्दो जो खलु पुव्वुत्तगुणवियलो ॥
इय वयणामयउवसमियअमियअन्नाणरोयसंतावो । वंदेवि दिओ साहुं सविणयमवणीए उवविट्ठो ॥१४॥

---

यो निजकलत्रविश्रम्भभाषितं कथयति कथमप्यन्यस्य । द्वितीयव्रतातिचरणात्प्राप्नोति मदन इव स दुःखम् ॥
गज (दा) शङ्खलक्ष्मीकलितं विष्णुतनुरिव सुदर्शनाधारम् । सुविराजितं वरैः रत्नैः रत्नपुरनगरम् ॥२॥
तत्रास्ति वणिक्प्रधानः सुधनः श्रेष्ठी धनद इव धनकलितः । तस्यापि च प्रिया सीता शीलगुणपूर्णमाहात्म्या ॥३॥
अथान्यदा च तयोर्जातस्तनयो गुणानां कुलभवनम् । धनसारो नाम्ना, मित्रं तस्यास्ति वणिक्सुतः ॥४॥
नाम्ना रूपेण च मदनो धनसारमित्रसहितः सः । क्रीडति काननादिषु निरङ्कुशो मत्तहस्तीव ॥५॥
अथान्यदा प्रवृत्ते वसन्तसमये समयसारमुनिम् । पश्यति प्रशान्तमूर्त्तिमुद्याने कुसुमसारे ॥६॥
तं दृष्ट्वा प्रभणति मदनो धनसार ! शारदशशिनमिव । मनोनयनानन्दकरं वन्दावहे मुनिवरमेतम् ॥७॥
इति भणित्वा वन्दितः सः, ध्यानं संहृत्य धर्मलाभेन । अभिनन्दितावनेन, द्विजेनैकेन ततो भणितम् ॥८॥
किं भोः ! मां मुक्त्वैष शूद्रोऽभिवादित एवम् । प्राप्ते मानससरसि कः पिबति खातिकानीरम् ? ॥९॥
ततस्ताभ्यां स भणितो ब्राह्मण ! मा भणेदृशं वचनम् । ब्राह्मणशब्दार्थयुतः किमेष न ब्राह्मणो भवति ? ॥१०॥
मा जहि मा जहि जीवान् मा भण मा भणतालीकवचनानि । मा हरत परधनानि मा गृध्यत युवतिदेहेषु ॥११॥
मा मूर्च्छां कुरुत परिग्रह इत्यादि ददात्युपदेशम् । अब्रह्मणो विरतो यः खलु तं ब्राह्मणं ब्रुवन्ति ॥१२॥
तत एवमादिगुणसंगतोऽपि कथं सोम ! ब्राह्मणो नैषः ? । स एव भवति शूद्रो यः खलु पूर्वोक्तगुणविकलः ॥१३॥

तस्स य उचिया मुणिणा पारद्धा धम्मदेसणा जाव । ता बंभणेण पुट्ठो समसारो मुणिवरो एवं ॥१५॥
तुह अतणू तणुलच्छी साहइ वररायलच्छिविच्छड्डं । छड्डिय वयं पवन्नं तुमए, ता कहसु वेरग्गं.॥१६॥
को हेऊ, आह मुणी भवम्मि वेरग्गहेउणो सुलहा । तहवि विसेसेण इहं हेऊ मह पणइणी जाया ॥१७॥
तो तेण पुणो भणियं वुत्तंतमिणं सवित्थरं कहह । जइ पुण तं सोऊणं वेरग्गं होइ अम्हंपि ॥१८॥
तो जंपइ मुणिचंदो इंदोवि हु नियचरियकहणेण । लज्जइ, तहवि कहिज्जइ तुम्हं उवयारहेउत्ति॥१९॥
तथाहि;—
आसी रहवीरपुरं समरकरिंदो निवोवि गुणनिलओ । भज्जा विणयसुसज्जा मयणसिरीनामिया तस्स ॥.
विसयसुहमणुहवंताण ताण सुपसत्थलक्खणोवेओ । जाओ सुओ सुरूवो नामेणं मेघकुमरोत्ति ॥२१॥
अह अन्नया निदाहे दाहज्जरपीडिए नरिंदम्मि । मयणसिरी वरविज्जोवदंसिए ओसहे कुणइ ॥२२॥
कढइ जलं उवउत्ता करेइ सव्वंपि तस्स सयमेव । नियछायव्व सयावि हु तप्पासं मुयइ न कयावि॥२३॥
सत्त दिणाणि य लंघइ समं नरिंदेण पियइ कढियजलं। ओयाइयं च इच्छइ तहेरिसं खित्तदेवीए ॥२४॥
सिल्लेहिं विद्धाहिं बाहाहिं जोडियाहिं दोहिंपि । नियलियपयाए भुवणे कायव्वा तुह मए जत्ता॥२५॥
भवियव्वयावसेणं संजाओ नरवरो पउणदेहो । तीए भणियविहीए देवीए लहु कया जत्ता ॥२६॥
तो नरनाहो एवं चिंतइ देवीए मज्झ उवरिम्मि । अपुव्वो पडिबंधो जीवियमवि चयइ मह कज्जे॥२७॥

---

इति वचनामृतोपशान्तामिताज्ञानरोगसंतापः । वन्दित्वा द्विजः साधुं सविनयमवनावुपविष्टः ॥१४॥
तस्य चोचिता मुनिना प्रारब्धा धर्मदेशना यावत् । तावद् ब्राह्मणेन पृष्टः शमसारो मुनिवर एवम् ॥१५॥
तवातनुस्तनुलक्ष्मीः कथयति वरराजलक्ष्मीविस्तारम् । मुक्त्वा व्रतं प्रपन्नं त्वया, तस्मात्कथय वैराग्यं ॥१६॥
को हेतुः, आह मुनिर्भवे वैराग्यहेतवः सुलभाः । तथापि विशेषेणेह हेतुर्मम प्रणयिनी जाता ॥१७॥
ततस्तेन पुनर्भणितं वृत्तान्तमिमं सविस्तरं कथय । यदि पुनस्तं श्रुत्वा वैराग्यं भवत्यस्माकमपि ॥१८॥
ततो जल्पति मुनिचन्द्र इन्द्रोऽपि खलु निजचरितकथने । लज्जते, तथापि कथ्यते युष्माकमुपकारहेतुरिति॥१९॥
आसीद् रथवीरपुरं समरकरीन्द्रो नृपोऽपि गुणनिलयः । भार्या विनयसुसज्जा मदनश्रीनामिका तस्य ॥२०॥
विषयसुखमनुभवतोस्तयोः सुप्रशस्तलक्षणोपेतः । जातः सुतः सुरूपो नाम्ना मेघकुमार इति ॥२१॥
अथान्यदा निदाघे दाहज्वरपीडिते नरेन्द्रे । मदनश्रीर्वरवैद्योपदर्शितान्यौषधानि करोति ॥२२॥
क्वथति जलमुपयुक्ता करोति सर्वमपि तस्य स्वयमेव । निजच्छायेव सदापि हि तत्पार्श्वं मुञ्चति न कदापि ॥२३॥
सप्त दिनानि च लङ्घते समं नरेन्द्रेण पिबति क्वथितजलम् । उपयाचितं चेच्छति तथेदृशं क्षेत्रदेव्याः ॥२४॥
कुन्तैर्विद्धाभ्यां बाहुभ्यां योजिताभ्यां द्वाभ्यामपि । निगडितपादया भुवने कर्तव्या तव मया यात्रा ॥२५॥
भवितव्यतावशेन संजातो नरवरः प्रगुणदेहः । तया भणितविधिना देव्यां लघु कृता यात्रा ॥२६॥
ततो नरनाथ एवं चिन्तयति देव्या ममोपरि । अपूर्वः प्रतिबन्धो जीवितमपि त्यजति मम कार्ये ॥२७॥

---

१ ग. मगइ मुणिवरिंदो इं° । २ ग. पत्थंपि हु क° ।

तो तीए अणुरत्तो अवहीरइ संयलमन्नमवरोहं । अह अन्नया निसाए तीइच्चियं वासभवणम्मि ॥२८॥
जा चिट्ठइ नरनाहो इय भणियं ताव तत्थ केणावि । ओसुयइ सुही लोओ अज्जवि, तत्तो इमं वयणं ॥२९॥
साहिक्खेवं सोउं सामरिसं भणइ नरवरो एवं । कस्सेसो भो ! सद्दो पाहरिया ! कहह मुणिऊण ॥३०॥
तो संभंता तेवि हु जा किंचिवि जंपिहंति ता देवी । पभणइ का पहु ! संका जामिल्लसयाउले भवणे ?॥३१॥
को सीहगुहं पविसइ को खिवइ करं जलंतजलणम्मि । कंडुयइ कोऽहितुंडं को पियइ पयं च पुल्लीए ? ॥
जत्थ पवणोवि न विसइ दिणकरकिरणावि जत्थ न चरंति । कह तत्थ गिहे तुह विसउ कोवि, ता नाह ! एमेव ॥
निसुओ सद्दो एसो मा भंतिं कुणह परनरपवेसे । तो राया तव्वयणं पवंचपउरं निसुणिऊण ॥३४॥
संकियहियओवि हु निव्वुउव्व कवडेण जाव निद्दाइ । ता सा सणियं सणियं उट्ठिय उग्घाडिय कवाडे ॥
आसन्ने चिय भंडारमंदिरे पविसिऊण आलवइ । दासीवेसं पुरिसं सो य न से देइ पडिवयणं ॥३६॥
पाएसुं निवडिउं सा पभणइ अपियंगसंगदवदड्ढं । निव्ववसु मह सरीरं पिय ! नियसंगामयरसेण ॥३७॥
तहवि हु अवहीरंतं तं सा बंधेत्तु बाहुपासेण । सिहिणंतूलीए ठविउं विमाणए मुक्कसिक्कारं ॥३८॥
अह तम्मग्गे लग्गो समागओ नरवरो तमुद्देसं । पच्चक्खं चिय पासइ सुणइ य तव्ववसियं सव्वं ॥३९॥
तो कोवाओ ताइं जा किल दो खंडिही य खग्गेण । ता तक्खणेणवि चित्तम्मि ठाइ इय पुहइनाहस्स ॥
अरिकरिकुंभप्फालणमुत्तादंतुरकरालकरवालं । कह गलियसीलजीयाण वहउ इय मोहसुत्ताण ? ॥४१॥
इय संवरिउं खग्गं कोवेण समं पुणोवि वासहरे । गंतूणं पल्लंके ओल्लरिओ पसमकयचित्तो ॥४२॥

---

ततस्तस्यामनुरक्तोऽवधीरयति सकलमन्यमवरोधम् । अथान्यदा निशि तस्या एव वासभवने ॥२८॥
यावत्तिष्ठति नरनाथ इति भणितं तावत्तत्र केनापि । अवस्वपिति सुखी लोकोऽद्यापि, तत इदं वचनम् ॥२९॥
साधिक्षेपं श्रुत्वा सामर्षं भणति नरवर एवम् । कस्यैष भोः ! शब्दः प्राहरिकाः ! कथयत ज्ञात्वा ॥३०॥
ततः संभ्रान्तास्तेऽपि हि यावत्किञ्चिदपि जल्पिष्यन्ति तावद्देवी । प्रभणति का प्रभो ! शङ्का यामिकशताकुले भवने ?॥
कः सिंहगुहां प्रविशति कः क्षिपति करं ज्वलज्ज्वलने । कण्डूयति कोऽहितुण्डं कः पिबति पयश्च व्याघ्र्याः ?॥
यत्र पवनोऽपि न विशति दिनकरकिरणा अपि यत्र न चरन्ति । कथं तत्र गृहे तव विशतु कोपि तस्मान्नाथ ! एवमेव ॥
श्रुतः शब्द एष मा भ्रान्तिं कुरुत परनरप्रवेशे । ततो राजा तद्वचनं प्रपञ्चप्रचुरं श्रुत्वा ॥३४॥
शङ्कितहृदयोऽपि खलु निर्वृत इव कपटेन यावन्निद्राति । तावत्सा शनैः शनैरुत्थायोद्घाट्य कपाटान् ॥३५॥
आसन्न एव भाण्डागारमन्दिरे प्रविश्यालपति । दासीवेषं पुरुषं स च न तस्यै ददाति प्रतिवचनम् ॥३६॥
पादयोर्निपत्य सा प्रभणत्यप्रियाङ्गसङ्गदवदग्धम् । निर्वापय मम शरीरं प्रिय ! निजसंगमामृतरसेन ॥३७॥
तथापि खल्ववधीरयन्तं तं सा बद्ध्वा बाहुपाशेन । स्तनतूल्यां स्थापयित्वा विमानयति मुक्तसीत्कारम् ॥३८॥
अथ तन्मार्गे लग्नः समागतो नरवरस्तमुद्देशम् । प्रत्यक्षमेव पश्यति शृणोति च तद्व्यवसितं सर्वम् ॥३९॥
ततः कोपात्तौ यावत्किल द्विधा खण्डयिष्यति च खड्गेन । तावत्तत्क्षणेनापि चित्ते तिष्ठतीति पृथिवीनाथस्य ॥
अरिकरिकुम्भास्फालनमुक्तादन्तुरकरालकरवालः । कथं गलितशीलजीवितौ हन्त्विति मोहसुप्तौ ? ॥४१॥

भावेइ भवसरूवं तणुं च नारीण पणयभावं च। अहह ! भवे जंपि सुहं तंपि हु परमत्थओ दुक्खं ॥४३॥
उक्तं च;–
"दुःखच्छेदे सुखभ्रान्तिर्भ्रातः ! येयं विभाति ते। तां विभावय किं सौख्यं किं दुःखादुःखविस्मृतिः ? ॥"
रमणीणं रमणीयं किमत्थि देहे अमिज्झभरियम्मि ?। बहुछिद्दझरंतासुइरसम्मि तह असुइहेउम्मि ? ॥४४॥
सव्वाउवि रमणीओ रमणीयाओ हवंति ता जाव। आविब्भूयविवेया पिच्छंति न तत्तबुद्धीए ॥४५॥
एयासु अइपसत्ता पुरिसा पावंति विविहदुक्खाइं। अवमाणणाइयाइं निरयानलतिव्वतावाइं ॥४६॥
जो पुण भणेइ'एसा ससणेहा पणइणी मइणुरत्ता'। निस्सिंगो सो गोणो विवेयपरिवज्जियत्ताओ ॥४७॥
कारणवसेण केणइ जणाणुवित्तीए अत्थलोभेण। पयडंति कहवि नेहं, थेवो पुण तासु सब्भावो ॥४८॥
इय चिंततो राया जा चिट्ठइ ताव चरिमराईए। सणियं सणियं परिसक्किऊण तो तस्स सिज्जाए॥४९॥
आगंतूण पसुत्ता गाढं आलिंगिऊण तद्देहं। निद्दावसउव्व निवो पबोहिओ महुरवाणीए ॥५०॥
तक्कालोचियविहिणा रन्ना संभासिउं इमं भणिया। अज्जवि न मुयइ निद्दा मह पासं पणइणि! तुमंव ॥५१॥
अत्रान्तरे पठितं कालनिवेदकेन;–
गमिऊणं गयणसिरी सव्वं दोसायरेण सह रयणिं। पयडंती अणुरायं संपइ दिणनाहमणुसरइ ॥५२॥
इय तव्वयणं सोउं राया उट्ठित्तु गोसकिच्चाइं। काऊणं अत्थाणे उवविसइ हरिव्व सुरमज्झे ॥५३॥
संभासेउं लोयं सव्वंपि जहोचियं उचियसमए। वरकरिखंधारूढो गओ बहिं रायवाडीए ॥५४॥
सहयारतरुस्स तले उवसमपुंजंव मुणिवरं दट्ठुं। उत्तरिउं गयखंधाउ वंदए परमभत्तीए ॥५५॥

---

इति संवृत्य खड्गं कोपेन समं पुनरपि वासगृहे। गत्वा पल्यङ्के सुप्तः प्रशमक्रान्तचित्तः ॥४२॥
भावयति भवस्वरूपं तनूं च नारीणां प्रणयभावं च। अहह! भवे यदपि सुखं तदपि खलु परमार्थतो दुःखम् ॥४३॥
रमणीनां रमणीयं किमस्ति देहेऽमेध्यभृते। बहुच्छिद्रक्षरदशुचिरसे तथाऽशुचिहेतौ ? ॥४४॥
सर्वा अपि रमण्यो रमणीया भवन्ति तावद् यावत्। आविर्भूतविवेकाः पश्यन्ति न तत्त्वबुद्ध्या ॥४५॥
एतास्वतिप्रसक्ताः पुरुषाः प्राप्नुवन्ति विविधदुःखानि। अवमाननादिकानि निरयानलतीव्रतापानि ॥४६॥
यः पुनर्भणति 'एषा सस्नेहा प्रणयिनी मय्यनुरक्ता'। निःशृङ्गः स गौर्विवेकपरिवर्जितत्वात् ॥४७॥
कारणवशेन केनचिज्जनानुवृत्त्याऽर्थलोभेन। प्रकटयन्ति कथमपि स्नेहं, स्तोकः पुनस्तासु सद्भावः ॥४८॥
इति चिन्तयन् राजा यावत्तिष्ठति तावच्चरमरात्रौ। शनैः शनैः परिष्वष्क्य ततस्तस्य शय्यायाम् ॥४९॥
आगत्य प्रसुप्ता गाढमालिङ्ग्य तद्देहम्। निद्रावशग इव नृपः प्रबोधितो मधुरवाण्या ॥५०॥
तत्कालोचितविधिना राज्ञा संभाष्येदं भणिता। अद्यापि न मुञ्चति निद्रा मम पार्श्वं प्रणयिनि ! त्वामिव॥५१॥
गमयित्वा गगनश्रीः सर्वां दोषाकरेण सह रजनिम्। प्रकटयन्त्यनुरागं संप्रति दिननाथमनुसरति ॥५२॥
इति तद्वचनं श्रुत्वा राजोत्थाय प्रातःकृत्यानि। कृत्वाऽऽस्थाने उपविशति हरिरिव सुरमध्ये ॥५३॥
संभाष्य लोकं सर्वमपि यथोचितमुचितसमये। वरकरिस्कन्धारूढो गतो बही राजवाट्याम् ॥५४॥

दाऊण धम्मलाभं मुणिणा भणिओ नरेसरो एवं । अज्जवि इइ विलसिज्जइ मुणिएवि निसाए वुत्तंते ? ॥
तो रन्ना तोसवसा सविसेसं पुच्छिओ मुणी एवं । भयवं ! नाणदिवायर ! कइदियहो ताण संबंधो ? ॥
तो मुणिणा संलत्तं किं चिंताए इमाए नरनाह ! । तं चिंतसु जेण विडंबणाओ नो हुंति पुण एवं॥८८॥
तो पभणइ नरनाहो कहेहि मह नाह ! सुद्धनियधम्मं । तो कहिओ मुणिधम्मो सवित्थरो तेणवि पवन्नो॥
सो य अहं, इय कहियं विसेसनिव्वेयकारणं निययं । इन्हि सुणेह धम्मं सम्मं सिवमग्गगमणरहं ॥९०॥
सो धम्मो होइ दुहा जइगिहिभेएण तत्थ जइधम्मो । पवरमहव्वयमूलो इयरो य अणुव्वयाईओ ॥९१॥
पढमं पढमो कहिओ सवित्थरो ताण तयसमत्थाण । सम्मत्ताई बीओवि साहिओ सप्पवंचोवि ॥९२॥
सह सम्मत्तेण तओ पढमं बीयं चणुव्वयं तेहिं । परियाणिऊण सम्मं पडिवन्नं भावसुद्धीए ॥९३॥
वंदेउं मुणिवसहं नियनियठाणेसु ते गया तत्तो । साहूवि विहारेणं अन्नत्थ गओ, तओ तेवि ॥९४॥
मुणिकहिएणं विहिणा पालिंति पयत्तओ गहियनियमे । सम्मत्ते दढचित्ता परोप्परं परमपीईए ॥९५॥
किंतु पगईए मयणो उत्ताणो परववायभासी य । केलीकिलत्तकलिओ कलिप्पिओ दुप्पियब्भासी ॥९६॥
सो धणसारस्स निच्चं संझाए कहइ सव्वदिणचरियं । जं वा केणवि कहियं गुज्झंपि हु पयडए तंपि ॥९७॥
अन्नम्मि दिणे केणवि मित्तेण रहम्मि साहियं तस्स । अप्पुत्तियस्स अत्थो अमुगस्स गिहे पविट्ठोत्ति ॥९८॥
तं च मयणेण कहियं पुरओ धणसारसुयणसिरमणिणो । तो तेण सो भणिओ न जुत्तमिय पयडिउं तुम्ह ॥

---

सहकारतरोस्तले उपशमपुञ्जमिव मुनिवरं दृष्ट्वा । उत्तीर्य गजस्कन्धाद् वन्दते परमभक्त्या ॥९५॥
दत्त्वा धर्मलाभं मुनिना भणितो नरेश्वर एवम् । अद्यापीति विलस्यते ज्ञातेऽपि निशो वृत्तान्ते ॥९६॥
ततो राज्ञा तोषवशात्सविशेषं पृष्टो मुनिरेवम् । भगवन् ! ज्ञानदिवाकर ! कतिदिवसस्तयोः संबन्धः ? ॥९७॥
ततो मुनिना संलपितं किं चिन्तयाऽनया नरनाथ ! । तच्चिन्तय येन विडम्बना नो भवन्ति पुनरेवम् ॥९८॥
ततः प्रभणति नरनाथः कथय मे नाथ ! शुद्धनिजधर्मम् । ततः कथितो मुनिधर्मः सविस्तरस्तेनापि प्रपन्नः ॥
स चाहम्, इति कथितं विशेषनिर्वेदकारणं निजम । इदानीं शृणुत धर्मं सम्यक् शिवमार्गगमनरथम् ॥९०॥
स धर्मो भवति द्विधा यतिगृहिभेदेन तत्र यतिधर्मः । प्रवरमहाव्रतमूल इतरश्चाणुव्रतादिकः ॥९१॥
प्रथमं प्रथमः कथितः सविस्तरस्तेषां तदसमर्थानाम् । सम्यक्त्वादिर्द्वितीयोऽपि कथितः सप्रपञ्चोऽपि ॥९२॥
सह सम्यक्त्वेन ततः प्रथमं द्वितीयं चाणुव्रतं तैः । परिज्ञाय सम्यक् प्रतिपन्नं भावशुद्ध्या ॥९३॥
वन्दित्वा मुनिवृषभं निजनिजस्थानेषु ते गतास्ततः । साधुरपि विहारेणान्यत्र गतः, ततस्तेऽपि ॥९४॥
मुनिकथितेन विधिना पालयन्ति प्रयत्नतो गृहीतनियमान् । सम्यक्त्वे दृढचित्ताः परस्परं परमप्रीत्या ॥९५॥
किन्तु प्रकृत्या मदन उत्तानः परापवादभाषी च । केलिकिलत्वकलितः कलिप्रियो दुष्प्रियभाषी ॥९६॥
स धनसाराय नित्यं संध्यायां कथयति सर्वदिनचरितम् । यद्वा केनापि कथितं गुह्यमपि प्रकटयति तदपि ॥९७॥
अन्यस्मिन् दिने केनापि मित्रेण रहसि कथितं तस्य । अपुत्रकस्यार्थोऽमुकस्य गृहे प्रविष्ट इति ॥९८॥

---

१ ग ५२:९।

जइ कहवि तेण कहियं रहस्समेयं तहावि तं तुम्ह। नो पयडेउं जुत्तं जम्हा मम्मं परस्स इमं ॥७०॥
तह को जाणइ सच्चं अलियं व इमंति अलियविरईए। एस कलंको जायइ, मित्तरहप्पयडणं च इमं ॥७१॥
सकलत्तमंतभेओ उवलक्खणमेव मंतभेयाणं। सेसाणं, सो तम्हा वज्जेयव्वो पयत्तेण ॥७२॥
एवं धणसारेणं पुणो पुणो सिक्खविज्जमाणोवि। एवंविहवयणाइं जंपंतो विरमए नेय ॥७३॥
तस्सवि घरिणी पउमा धम्मपरा विणयखंतिसंपन्ना। संपुन्नससहरमुही सुसीलकलिया कुलपसूया ॥७४॥
अह अन्नया य मयणं मोएउं सा नियम्मि गामम्मि। नीया नियजणएणं महूसवं कंपि आसज्ज ॥७५॥
तत्तो य समाणीया चिरेण चम्मट्ठिमित्तठियदेहा। पुट्ठा रहम्मि मयणेण किं गया तुममिममवत्थं ? ॥७६॥
तो बाहाविलनयणा पाएसुं निवडिउं भणइ सावि। मा पुच्छ वइयरमिमं उप्पन्नं मह अपुन्नेहिं ॥७७॥
सो जंपइ किं मज्झवि अवलवणिज्जंति सा तओ भणइ। जीवियनाह! न एवं, किंतु पमायाओ जइ तुम्ह ॥
कहवि हु कोवि वियाणइ तो हं पाणे परिचयामि धुवं। तो सो भणइ न एवं होइ जुगंतेवि, कहसु तुमं॥७९॥
तो लज्जावसगग्गयगिराए तीएवि साहियं एवं। मह अत्थि लहू भाया अविणयकुलमंदिरं परमं ॥८०॥
परदाररओ परमम्मभासओ परववायभासी य। वेसाजूयपसत्तो निक्तिंसो अहन्नया कहवि ॥८१॥
लंघियकुलमज्जाओ मज्जं पाऊण आगओ गेहे। इत्तो य तस्स भज्जा कज्जेण गया जणयगेहं ॥८२॥
तीए य अहं भणिया जा बंधू एइ तुज्झ ता तुमए। इह अम्हवासभवणे ठायव्वं, तो अहं तत्थ ॥८३॥

---

तच्च मदनेन कथितं पुरतो धनसारसुजनशिरोमणेः। ततस्तेन स भणितो न युक्तमिति प्रकटयितुं तव ॥६९॥
यदि कथमपि तेन कथितं रहस्यमेतत्तथापि तत्तव। नो प्रकटयितुं युक्तं यस्मान्मर्म परस्येदम् ॥७०॥
तथा को जानाति सत्यमलीकं वेदमित्यलीकविरतेः। एष कलङ्को जायते, मित्ररहःप्रकटनं चेदम् ॥७१॥
स्वकलत्रमन्त्रभेद उपलक्षणमेव मन्त्रभेदानाम्। शेषाणां, स तस्माद् वर्जयितव्यः प्रयत्नेन ॥७२॥
एवं धनसारेण पुनः पुनः शिक्ष्यमाणोऽपि। एवंविधवचनानि जल्पन् विरमति नैव ॥७३॥
तस्यापि गृहिणी पद्मा धर्मपरा विनयक्षान्तिसंपन्ना। संपूर्णशशधरमुखी सुशीलकलिता कुलप्रसूता ॥७४॥
*अथान्यदा च मदनं मुक्त्वा सा निजे ग्रामे। नीता निजजनकेन महोत्सवं कमप्यासाद्य ॥७५॥*
ततश्च समानीता चिरेण चर्मास्थिमात्रस्थितदेहा। पृष्टा रहसि मदनेन किं गता त्वमिमामवस्थाम्? ॥७६॥
ततो बाष्पाविलनयना पादयोर्निपत्य भणति सापि। मा पृच्छ व्यतिकरमिममुत्पन्नं ममापुण्यैः ॥७७॥
स जल्पति किं मदप्यपलपनीयमिति सा ततो भणति। जीवितनाथ! नैवं, किन्तु प्रमादाद् यदि युष्माकम् ॥७८॥
कथमपि हि कोऽपि विजानीयात्ततोऽहं प्राणान्परित्यजामि ध्रुवम्। ततः स भणति नैवं भवेद्युगान्तेऽपि कथय त्वम्॥
ततो लज्जावशगद्गदगिरा तयापि कथितमेवम्। ममास्ति लघुर्भ्राताऽविनयकुलमन्दिरं परमम् ॥८०॥
परदाररतः परमर्मभाषकः परापवादभाषी च। वेश्याद्यूतप्रसक्तो निस्त्रिंशोऽथान्यदा कथमपि ॥८१॥
लङ्घितकुलमर्यादो मद्यं पीत्वाऽऽगतो देहे। इतश्च तस्य भार्या कार्येण गता जनकगेहम् ॥८२॥

सो तव्वयणं सोउं लग्गो आक्कंदिउं दियाराओ । नो ठाइ वारिओवि हु पच्छायावेण संतत्तो ॥११३॥
हा दुट्ठु कयं हा दुट्ठु भासियं अहह अहमचरिओ हं । तहसब्भावपराए न रहस्सं रक्खियमिमीए ।११४।
इच्चाइ विलवमाणो न सुयइ भुंजेइ नेय धम्मंपि । सो कुणइ झुणइ झायइ तं चिय दुच्चरियमणवरयं ॥
तेणं चिय दुक्खेणं मरिऊणं सो करी समुप्पन्नो । धणसारो उण सद्धम्मतप्परो गमिय दियहाइं ॥११६॥
अइयारपंकमुक्कं वयजुयलं पालिउं समाहीए । कालं काउं अमरो जाओ अचिरेण सिद्धो य ॥ ११७॥

॥ इति मृषावादव्रते तृतीयातिचारे मदनकथानकं समाप्तम् ॥

---

निजमित्रमण्डल्यां कथ्यमानं ततश्च तत् श्रुत्वा । बाष्पजलाविलनयना जिनमन्दिराभिमुखं चलिता ॥११२॥
ततस्तद्वचनं श्रुत्वा लग्न आक्रन्दितुं दिवारात्रम् । न तिष्ठति वारितोऽपि खलु पश्चात्तापेन संतप्तः ॥११३॥
हा ! दुष्टु कृतं हा ! दुष्टु भाषितमहह ! अधमचरितोऽहम् । तथासद्भावपराया न रहस्यं रक्षितमस्याः॥११४॥
इत्यादि विलपन् न स्वपिति भुङ्क्ते नैव धर्ममपि । स करोति, जुगुप्सते ध्यायति तदेव दुश्चरितमनवरतम्।११५।
तेनैव दुःखेन मृत्वा स करी समुत्पन्नः । धनसारः पुनः सद्धर्मतत्परो गमयित्वा दिवसानि ॥११६॥
अतिचारपङ्कमुक्तं व्रतयुगलं पालयित्वा समाधिना । कालं कृत्वाऽमरो जातोऽचिरेण सिद्धश्च ॥११७॥

मुद्धो मुसोवएसं दाउं अइयरइ जो वयं वीयं । इहपरलोयदुहाई सो पावइ पउमवणिउव्व ॥१॥
तथाहि;—
सुपओहरपवरसरं सवणमणोहारि दीहरच्छं च । वररमणिसरीरं पिव मलयपुरं नाम इह नयरं ॥२॥
अखलियदाणप्पसरो उन्नयवंसो पलंबकररुइरो । वररयणरेहिरो सुरकरिव्व वीरो तहिं सिट्ठी ॥३॥
सुपओहरा सुहारा गुणपोग्गरसंगया सिरिनिवासा । खग्गलया इव सरला वीरमई पिययमा तस्स ॥४॥
ताण सुओ संजाओ पउमो नामेण पउमसमवयणो । बाहत्तरिकलकुसलो पत्तो य कमेण तारुन्नं ॥५॥
अह सुयसागरसाहू तेसिमगारम्मि जाणसालाए । तेसिमणुन्नाए ठिओ तो तं ते पज्जुवासंति ॥६॥
अह मुणिवंदणहेउं ताणुवविट्ठाण वंतरो एगो । उवविट्ठो सो भणिओ मुणिणा कज्जं विणा एवं ॥७॥
दुक्खं उप्पायंतो जणस्स, अज्जेसि दारुणं पावं । सो पभणइ केलीए होइ कुणंतस्स कह पावं ? ॥८॥
भणइ मुणी किं केलीए कवलियं हणइ नेय तालउडं?।तम्हा जह तह पीडा परस्स नो भद्द! कायव्वा॥
किंच विणा कज्जेणं जो परपीडं करेइ से पावं । अहिययरं संपज्जइ अणत्थदंडो जओ एस ॥१०॥
उक्तं च,—
अट्ठाय तं न बंधइ जमणट्ठाए य बंधए जीवो । अट्ठे कालाईया नियामया न उ अणट्ठाए ॥११॥
तो भणइ वीरसिट्ठी महाणुभावेण मुणिवर! इमेणं । किं विहियं जं एवं सासिज्जइ, तो मुणी भणइ ॥
भो भो वंतर! किं तुह पयडिज्जउ वइयरो इमो एसिं?।सो भणइ किं अजुत्तं, पत्थणमेसिं कुणह सहलं॥

---

मुग्धो मृषोपदेशं दत्त्वातिचरति यो व्रतं द्वितीयम् । इहपरलोकदुःखानि स प्राप्नोति पद्मवणिगिव ॥१॥
सुपयोम(ध)रप्रवरसरस्कं(मालं) श्रवणमनोहारि दीर्घरथ्यं(र्घाक्षं)च। वररमणीशरीरमिव मलयपुरं नामेह नगरम्॥
अस्खलितदानप्रसर उन्नतवंशः प्रलम्बकररुचिरः । वररत्नराजमानः सुरकरीव वीरस्तत्र श्रेष्ठी ॥३॥
सुपयोम(ध)रा सुहा(धा)रा गुणपुद्गलसंगता श्रीनिवासा । खड्गलतेव सरला वीरमती प्रियतमा तस्य ॥४॥
तयोः सुतः संजातः पद्मो नाम्ना पद्मसमवदनः । द्वासप्ततिकलाकुशलः प्राप्तश्च क्रमेण तारुण्यम् ॥५॥
अथ श्रुतसागरसाधुस्तेषामगारे यानशालायाम् । तेषामनुज्ञया स्थितस्ततस्तं ते पर्युपासते ॥६॥
अथ मुनिवन्दनहेतोस्तेषामुपविष्टानां व्यन्तर एकः । उपविष्टः स भणितो मुनिना कार्यं विनैवम् ॥७॥
दुःखमुत्पादयञ्जनस्य, अर्जयसि दारुणं पापम् । स प्रभणति केल्या भवति कुर्वतः कथं पापम् ? ॥८॥
भणति मुनिः किं केल्या कवलितं हन्ति नैव तालपुटम् ?। तस्माद्यथा तथा पीडा परस्य नो भद्र ! कर्तव्या ॥
किञ्च विना कार्येण यः परपीडां करोति तस्य पापम् । अधिकतरं संपद्यतेऽनर्थदण्डो यत एषः ॥१०॥
अर्थाय तन्न बध्नाति यदनर्थाय च बध्नाति जीवः । अर्थे कालादिका नियामका न त्वनर्थे ॥११॥
ततो भणति वीरश्रेष्ठी महानुभावेन मुनिवर! अनेन । किं विहितं यदेवं शिष्यते, ततो मुनिर्भणति ॥१२॥
भो भो व्यन्तर ! किं तव प्रकट्यतां व्यतिकरोऽस्यमेषाम् । स भणति किमयुक्तं, प्रार्थनामेषां कुरुत सफलाम् ॥

---

१ ख. मालं°।

अह चउनाणी भयवं साहइ केलीकिलस्स तं चरियं । जह भरहे कणयपुरे राया रिउमद्दणो नाम ॥१४॥
बुद्धिसमुद्दो मंती तस्स सुओ विस्सुओ विजयसीहो। अह अन्नया नरिंदो सव्वावसरम्मि उवविट्ठो॥१५॥
कारावइ पिच्छणयं ता पडिहारेण सूइए पुरिसो । अट्ठंगनिमित्तधरो संपत्तो रायपासम्मि ॥१६॥
उचियपडिवत्तिपुव्वं पुट्ठो पुहईसरेण सो एयं । जह मह सहाए किंचिवि कहह भविस्सं सुहं असुहं ॥१७॥
नाऊण निमित्तेणं तेणवि नियमत्थए करे काउं । नीससिऊण य दीहं पुणो पुणो मत्थयं धुणियं ॥१८॥
तो भूवइणा भणियं अभयं तुह कहसु नियनिमित्तेण । जस्स सुहं असुहं वा जं दिट्ठं नत्थि तुह दोसो॥
तो नेमित्ती पभणइ सत्तदिणंते इमस्समच्चस्स । सकुडुंबस्स विणासो संभाविज्जइ इमं सोउं ॥२०॥
भणइ नरिंदो को एत्थ पच्चओ, कहइ सोवि जह हत्थी । भग्गालाणक्खंभो जइ एही ता इमं सच्चं ॥२१॥
तं च तहेव य जायं तो संभंतं नरेसरं भणइ । बुद्धिसमुद्दो मंती मा अइखेयं कुणउ देवो ॥२२॥
सोवक्कमनिरुवक्कमभावेणं आवयाउ हुंति दुहा । नेमित्तिएण सह मह वत्तव्वं अत्थि इह अत्थे॥२३॥
इच्चाइसुजुत्तीहिं निवस्स खेयं निवारिउं पच्छा । जोइसिएण समेओ मंती नियमंदिरं पत्तो ॥२४॥
पुच्छइ भुंजावेउं वत्थाहरणेहिं पूइउं च इमं । को हेऊ मह मरणे, तेण विचिंतिय तओ कहियं ॥२५॥
तुह तणओ जो जिट्ठो तस्सवराहाउ नरवरो हेऊ । इय ताव मए नायं निच्छयओ मुणइ सव्वन्नू॥२६॥
सोऊण इमं मंती विसज्जए पूइऊण तं तत्तो । हक्कारिय जिट्ठसुयं वइयरमेयं कहइ सव्वं ॥२७॥
सो भणइ ताय ! हुंते मइ ,अवराहेण मज्झ, इय होइ । अहमेव ता मरिस्सं सव्वाणत्थाण पत्थारी॥२८॥

---

अथ चतुर्ज्ञानी भगवान् कथयति केलीकिलस्य तच्चरितम् । यथा भरते कनकपुरे राजा रिपुमर्दनो नाम॥१४॥
बुद्धिसमुद्रो मन्त्री तस्य सुतो विश्रुतो विजयसिंहः । अथान्यदा नरेन्द्रः सर्वावसर उपविष्टः ॥१५॥
कारयति प्रेक्षणकं तावत्प्रतिहारेण सूचितः पुरुषः । अष्टाङ्गनिमित्तधरः संप्राप्तो राजपार्श्वे ॥१६॥
उचितप्रतिपत्तिपूर्वं पृष्टः पृथिवीश्वरेण स एतत् । यथा मम सभायाः किञ्चिदपि कथय भविष्यच्छुभमशुभम् ॥१७॥
ज्ञात्वा निमित्तेन तेनापि निजमस्तके करौ कृत्वा । निःश्वस्य च दीर्घं पुनः पुनर्मस्तकं धूतम् ॥१८॥
ततो भूपतिना भणितमभयं तव कथय निजनिमित्तेन । यस्य शुभमशुभं वा यद् दृष्टं, नास्ति तव दोषः ॥१९॥
ततो नैमित्तिकः प्रभणति सप्तदिनान्तेऽस्यामात्यस्य । सकुटुम्बस्य विनाशः संभाव्यत इदं श्रुत्वा ॥२०॥
भणति नरेन्द्रः कोऽत्र प्रत्ययः, कथयति सोऽपि यथा हस्ती । भग्नालानस्तम्भो यद्येष्यति तदेदं सत्यम् ॥२१॥
तच्च तथैव च जातं ततः संभ्रान्तं नरेश्वरं भणति । बुद्धिसमुद्रो मन्त्री माऽतिखेदं करोतु देवः ॥२२॥
सोपक्रमनिरुपक्रमभावेनापदो भवन्ति द्विधा । नैमित्तिकेन सह मम वक्तव्यमस्तीहार्थे ॥२३॥
इत्यादिसुयुक्तिभिर्नृपस्य खेदं निवार्य पश्चात् । ज्यौतिषिकेण समेतो मन्त्री निजमन्दिरं प्राप्तः ॥२४॥
पृच्छति भोजयित्वा वस्त्राभरणैः पूजयित्वा चेमम् । को हेतुर्मम मरणे, तेन विचिन्त्य ततः कथितम् ॥२५॥
तव तनयो यो ज्येष्ठस्तस्यापराधान्नरवरो हेतुः । इति तावन्मया ज्ञातं निश्चयतो जानाति सर्वज्ञः॥२६॥
श्रुत्वेदं मन्त्री विसृजति पूजयित्वा तं ततः । हक्कारयित्वा ज्येष्ठसुतं व्यतिकरमेतं कथयति सर्वम् ॥२७॥

एवं ठियम्मि सुत्थं सकुडुंबस्सवि य हवइ तुह ताय!। तो भणियं सचिवेणं तुह मरणे वच्छ! किं सुत्थं?॥
न हु हवइ एस मंतो, जमहं मंतेमि तं तए वच्छ!।कायव्वं सो पभणइ आइसह जमित्थ कायव्वं॥३०॥
भणिओ सचिवेणं सो मंजूसब्भंतरम्मि पविसेउं। गमह दिणाइं सत्तवि फलजलभरियम्मि धम्मपरो ॥३१॥
सो जंपइ आएसो पमाणमिह किंतु कुणह मा करुणं। जलमवि न पिएमि अहं किं फलमाईहिं किल कज्जं॥
तत्तो मंजूसाए रहम्मि पुत्तं पवेसिउं सोवि। गड्डीए आरोविय मुक्का नरनाहभवणम्मि ॥३३॥
विन्नत्तो नरनाहो मह देव! इहत्थि सव्वघरसारो। तह पहु! अव्वयभंडारबीययाइं च सव्वाइं ॥३४॥
तो देवो नियचारुयओयरए वासराइं सत्तेव। मुद्दाय मुद्दियमिमं रक्खावउ अंगरक्खेहिं ॥३५॥
तह चेव कुणइ राया पुच्छइ य जहा इमस्स वसणस्स। पडियारम्मि उवाओ किं लद्धो, तो भणइ सचिवो॥
लद्धो देव! उवाओ विन्नवियव्वो स किंतु देवस्स। आवइकालम्मि गए, दिणाणि तह सत्त एआणि॥
ठायव्वं धम्मपरायणेण नियगिहठिएण चेव मए। भणइ निवो तह किज्जउ जह होइ न आवया तुज्झ ॥३८॥
नियगिहगएण तत्तो भणिओ हक्कारिउं समग्गोवि। निब्भिच्चभिच्चवग्गो जह मह गेहम्मि सत्त दिणे ॥३९॥
आहवसामग्गीसंगएहिं ठायव्वमप्पमत्तेहिं। तेहिवि विहियं तह चेव मंतिसुकयं सरंतेहिं ॥४०॥
धन्निंधणजलतीरणसंगहमह कुणइ सत्तदिणजोग्गं। सज्जावइ पायारं गिहस्स, अह सत्तमे दिवसे॥४१॥
नरवरवल्लहभूयं किल जिट्ठो नंदणो अमच्चस्स। सिज्जंते उवविट्ठो पत्थए,कुविआ य सावि तओ॥४२॥

---

स भणति तात! सति मयि, अपराधेन मम, इति भवेत्। अहमेव तस्मान्मरिष्यामि सर्वानर्थानां प्रस्तरः ॥२८॥
एवं स्थिते सौस्थ्यं सकुटुम्बस्यापि च भवेत् तव तात!। ततो भणितं सचिवेन तव मरणे वत्स! किं सौस्थ्यम्?॥
न खलु भवत्येष मन्त्रः, यदहं मन्त्रयामि तत्त्वया वत्स!। कर्तव्यं स प्रभणत्यादिशत यदत्र कर्तव्यम्॥३०॥
भणितः सचिवेन स मञ्जूषाभ्यन्तरे प्रविश्य। गमय दिनानि सप्तापि फलजलभृते धर्मपरः ॥३१॥
स जल्पत्यादेशः प्रमाणमिह किन्तु कुरुत मा करुणाम्। जलमपि न पिबाम्यहं किं फलादिभिः किल कार्यम्?॥
ततो मञ्जूषायां रहसि पुत्रं प्रवेश्य सोऽपि। गन्त्र्यामारोप्य मुक्ता नरनाथभवने ॥३३॥
विज्ञप्तो नरनाथो मम देव! इहास्ति सर्वगृहसारः। तथा प्रभो! अव्ययभाण्डागारबीजकानि च सर्वाणि ॥३४॥
ततो देवो निजचारुकापवरके वासराणि सप्तैव। मुद्रया मुद्रितामिमां रक्षयत्वङ्गरक्षैः ॥३५॥
तथैव करोति राजा पृच्छति च यथाऽस्य व्यसनस्य। प्रतिकार उपायः किं लब्धः, ततो भणति सचिवः॥३६॥
लब्धो देव! उपायो विज्ञपयितव्यः स किन्तु देवाय। आपत्काले गते, दिनानि तथा सप्तैतानि ॥३७॥
स्थातव्यं धर्मपरायणेन निजगृहस्थितेनैव मया। भणति नृपस्तथा क्रियतां यथा भवति नापत् तव ॥३८॥
निजगृहगतेन ततो भणितो हक्कारयित्वा समग्रोऽपि। निर्भृत्यभृत्यवर्गो यथा मम गेहे सप्त दिनान् ॥३९॥
आहवसामग्रीसंगतैः स्थातव्यमप्रमत्तैः। तैरपि विहितं तथैव मन्त्रिसुकृतं स्मरद्भिः ॥४०॥
धान्येन्धनजलतीरणसंग्रहमथ करोति सप्तदिनयोग्यम्। सज्जयति प्राकारं गृहस्य, अथ सप्तमे दिवसे ॥४१॥

---

१ ग. बहुअ-धय। २ ग. ओयर°।

वाहरइ जामइल्ले तेविं य धावंति सो तओ तीए । पिक्खंताणं ताणं छिंदिय वेणिं करे काउं ॥४३॥
धवलहराओ झंपं दाउं नासेइ तेवि पट्टीए । धावंति तस्स, सोवि हु पविसइ गेहम्मि मंतिस्स ॥४४॥
तत्तो ते वलिऊणं कहंति रायस्स सोवि कोवेण । अंतरिओ सेणावइमाणवइ जहा लहुं दुट्ठं ॥४५॥
सचिवाहममाणावसु बंधावेउं समं कुडुंबेण । सोवि तओ आसन्नं सिन्नं वित्तूण तत्थ गओ ॥४६॥
मंतिगिहप्पायारारूढेहिं धणुद्धरेहिं तस्सिन्नं । आसन्नं दट्ठूणं भणियं रे रे ! इओ पुरओ ॥४७॥
जइ आगच्छह तो नत्थि जीवियं तुम्ह, तं च सुणिऊण । सेणाणी सव्वंपि हु पडिखलिय बलं तओ पुरिसं ॥
संपेसिउं कहावइ मंतिस्स जहा नरेसरो रुट्ठो । सुयवइयरेण तुम्हं ता तं अप्पसु नरिंदस्स ॥४९॥
तं सोऊणं मंती सव्वविभागे गिहस्स निययस्स । तस्स पुरिसस्स दंसिय भणइ इमं मज्झ वयणेण ॥५०॥
सेणावइणो साहसु जहट्ठियं तह य मज्झ पत्थणया । भणह इमं, तुम्हेवि हु जाणह जह रायअत्थाणे ॥५१॥
मह वसणमिमं नेमित्तिएण कहियं निवस्स पच्चक्खं । तो इय सामग्गीए चिट्ठामि अहं ठिओ गेहे ॥५२॥
न य मह पुत्तो एवं ववसइ अन्नोवि कोवि हु सयन्नो । किं कोवि जीवियत्थी कंडुयइ अहिस्स तुंडीए ?॥
सकुडुंबस्सवि पाणा मज्झ नरिंदस्स संतिया चेव । लेउ जहा पडिहासइ, किंतु मए अत्थि मंजूसा ॥५४॥
नरवइभवणे मुक्का अव्वयभंडारबीययाइं तहिं । संति मइच्चिय ताइं कहियाइं चिय मुणिज्जंति ॥५५॥
जाणावेमि तयत्थं नरनाहं, तह ठिओ य तत्थेव । अप्पेमि सुयं जिट्ठं पच्छा इच्छा नरिंदस्स ॥५६॥

---

नरवरवल्लभदुहितरं किल ज्येष्ठो नन्दनोऽमात्यस्य । शय्यान्त उपविष्टः प्रार्थयते, कुपिता च सापि ततः ॥४२॥
आह्वयति यामिकांस्तेऽपि च धावन्ति स ततस्तस्याः । प्रेक्षमाणेषु तेषु छित्त्वा वेणीं करे कृत्वा ॥४३॥
धवलगृहाज्झम्पां दत्त्वा नश्यति तेऽपि पृष्ठे । धावन्ति तस्य, सोऽपि खलु प्रविशति गेहे मन्त्रिणः ॥४४॥
ततस्ते वलित्वा कथयन्ति राज्ञे सोऽपि कोपेन । अन्तरितः सेनापतिमाज्ञापयति यथा लघु दुष्टम् ॥४५॥
सचिवाधममानायय बन्धयित्वा समं कुटुम्बेन । सोऽपि तत आसन्नं सैन्यं गृहीत्वा तत्र गतः ॥४६॥
मन्त्रिगृहप्राकारारूढैर्धनुर्धरैस्तत्सैन्यम् । आसन्नं दृष्ट्वा भणितं रे रे ! इतः पुरतः ॥४७॥
यद्यागच्छेत तदा नास्ति जीवितं युष्माकं, तच्च श्रुत्वा । सेनानीः सर्वमपि हि प्रतिस्खल्य बलं ततः पुरुषम् ॥
संप्रेष्य कथापयति मन्त्रिणे यथा नरेश्वरो रुष्टः । सुतव्यतिकरेण युष्माकं तस्मात्तमर्पय नरेन्द्राय ॥४९॥
तत् श्रुत्वा मन्त्री सर्वविभागान् गृहस्य निजस्य । तस्मै पुरुषाय दर्शयित्वा भणतीदं मम वचनेन ॥५०॥
सेनापतिं कथय यथास्थितं तथा च मम प्रार्थनया । भणतेदं यूयमपि खलु जानीथ यथा राजास्थाने ॥५१॥
मम व्यसनमिदं नैमित्तिकेन कथितं नृपस्य प्रत्यक्षम् । तत इति सामग्र्या तिष्ठाम्यहं स्थितो गेहे ॥५२॥
न च मम पुत्र एवं व्यवस्यत्यन्योऽपि कोऽपि हि सकर्णः । किं कोऽपि जीवितार्थी कण्डूयतेऽहेस्तुण्डेन?॥५३॥
सकुटुम्बस्यापि प्राणा मम नरेन्द्रस्य सत्का एव । लातु यथा प्रतिभासते, किन्तु मयास्ति मञ्जूषा ॥५४॥
नरपतिभवने मुक्ताऽव्ययभाण्डागारबीजकानि तत्र । सन्ति मयैव तानि कथितानि किल ज्ञायन्ते ॥५५॥
ज्ञापयामि तदर्थं नरनाथं, तथा स्थितश्च तत्रैव । अर्पयामि सुतं ज्येष्ठं पश्चादिच्छा नरेन्द्रस्य ॥५६॥

इय मह अणुरोहेणं सेणाणी नरवइं सयं गंतुं। विन्नविउं हक्कारउ मं तत्थ, तओ य सो पुरिसो ॥५७॥
तं कहइ दंडवइणो, करेइ सोवि हु तहेव तं सव्वं। उग्घाडइ मंजूसं तं नरवइणो पुरो मंती ॥५८॥
वेणीपाणिं पिच्छइ मंतिसुयं तत्थ नरवरो तत्तो। भणइ अमच्च! किमेयं, विन्नवइ तओ य सो सव्वं ॥५९॥
नेमित्तियपडिपुच्छणमंजूसापुत्तपक्खिवणपभिइं। वुत्तंतं, तो राया भणइ विलक्खो पयडमेवं ॥६०॥
कस्सवि विलसियमेयं मन्ने केलीकिलस्स देवस्स। मंजूसाए मज्झे एसा कह अन्नहा वेणी? ॥६१॥
ता नो इममच्छरियं, दो अच्छरियाइं मच्चलोयम्मि। मह रन्नो तुच्छत्तं मइविहवो तह अमच्चस्स ॥६२॥
इय विसमम्मिवि बुद्धीए जस्स तह कहवि अहह विप्फुरियं। सुपइट्ठियंपि वयणं इमंपि जह अन्नहा जायं ॥
यथा किल;—

"अन्यथा शास्त्रगर्भिण्या धिया धीरोऽर्थमीक्षते। स्वामीव प्राक्तनं कर्म विदधाति तमन्यथा ॥"

इय संदोइयवसणं पुराकयं निव्विवेयसिररयणं। सामिं च ममं सचिवेण तहवि कयमप्पणो कुसलं ॥६४॥
एतच्च सत्यापितम्;—

"निजकर्मकरणदक्षः सह वसति दुरात्मनापि निरपायम्। किं न कुशलेन रसना दशनानामन्तरे चरति?॥"

इय भणिवि नरिंदेणं सचिवो सम्माणिओ सुयसमेओ। एत्तो कुमरीए सिरे वेणीवि तहट्ठिया दिट्ठा॥६५॥
ता वीरसावय! इमो इमस्सणत्थस्स कारणं जाओ। केलीकिलत्तणेणं न कज्जमन्नं इह इमस्स ॥६६॥
तप्पच्चयं च चिणियं चिक्कणकम्मं इमेण इय एस। अणुसासिज्जइ एवं, इय सोउं वंतरो भणइ ॥६७॥
इत्तो नो इय काहं, भणइ मुणी जुत्तमेयमन्नं च। संयप्पओयणेसु वावारिज्जउ सया अप्पा ॥६८॥
इहपुव्वभवकयाणं मुंचसि पावाण जेण, तह होइ। सुलहा धम्मे बोही, तं पडिवज्जिय गओ सोवि ॥६९॥

---

इति ममानुरोधेन सेनानीर्नरपतिं स्वयं गत्वा। विज्ञप्य हक्कारयतु मां तत्र, ततश्च स पुरुषः ॥५७॥
तत्कथयति दण्डपतये, करोति सोऽपि खलु तथैव तत्सर्वम्। उद्घाटयति मञ्जूषां तां नरपतेः पुरो मन्त्री॥५८॥
वेणीपाणिं पश्यति मन्त्रिसुतं तत्र नरवरस्ततः। भणत्यमात्य! किमेतत्, विज्ञपयति ततश्च स सर्वम् ॥५९॥
नैमित्तिकपरिपृच्छामञ्जूषापुत्रप्रक्षेपणप्रभृतिम्। वृत्तान्तं, ततो राजा भणति विलक्षः प्रकटमेवम् ॥६०॥
कस्यापि विलसितमिदं मन्ये केलीकिलस्य देवस्य। मञ्जूषाया मध्ये एषा कथमन्यथा वेणी? ॥६१॥
तस्मान्नो इदमाश्चर्यं, द्वे आश्चर्ये मर्त्यलोके। मम राज्ञस्तुच्छत्वं मतिविभवस्तथाऽमात्यस्य ॥६२॥
इति विषमेऽपि बुद्ध्या यस्य तथा कथमप्यहह! विस्फुरितम्। सुप्रतिष्ठितमपि वचनमिदमपि यथाऽन्यथा जातम्॥
इति संढौकितव्यसने पुराकृते निर्विवेकशिरोरत्ने। स्वामिनि च मयि सचिवेन तथापि कृतमात्मनः कुशलम्॥६४॥
इति भणित्वा नरेन्द्रेण सचिवः सम्मानितः सुतसमेतः। इतः कुमार्याः शिरसि वेण्यपि तथास्थिता दृष्टा ॥६५॥
तस्माद् वीरश्रावक! अयमस्यानर्थस्य कारणं जातः। केलिकिलत्वेन न कार्यमन्यदिहास्य ॥६६॥
तत्प्रत्ययं च चितं चिक्कणकर्माऽनेनेत्येषः। अनुशिष्यत एवं, इति श्रुत्वा व्यन्तरो भणति ॥६७॥
इतो नो इति करिष्ये, भणति मुनिर्युक्तमेतदन्यच्च। स्वप्रयोजनेषु व्याप्रार्यतां सदाऽऽत्मा ॥६८॥

अह सिट्ठी पउमजुओ सम्मत्ताणुव्वयाइगिहिधम्मं । पडिवज्जिय जाइ गिहं, विहरइ अन्नत्थ साहूवि ॥७०॥
अह कोवि तत्थ धुत्तो समागओ सोवि बहुपवंधेहिं । विम्हावइ मुद्धजणं, कइयावि हु तस्स पासम्मि॥
पउमोवि गओ कोऊहलेहिं विहिओ अणेण हयहियओ। ईसरपुत्तोत्ति पयंसियं च से कप्पटिप्पणयं ॥७२॥
तत्थ य रसिंदकप्पो तहेव भंगरयवित्तकप्पो य । आसंधिवंभितुलसीसुंठीपाढाइकप्पा य ॥७३॥
एएसुं च समत्थो कहिओ दारिद्दखंडणे कोवि । बहुवाहिजराविद्दवणपचलो कोइ तह कोवि ॥७४॥
वंझाए सुयजणओ कोवि हु सोहग्गकारओ अन्नो । कोवि तह अदिसत्तणपसाहओ इय पवंचेउं ॥७५॥
उवजीविऊण य तओ सुबहुं दविणं गओ स अन्नत्थ । तक्कहियविहाणेणं पउमो सच्चवइ ते कप्पे ॥७६॥
न य किंपि तेहिं सिज्झइ हवइ दविणक्खओ किलेसो य । तहवि कुणइ संवरणं पयडइ न जहट्ठियं लोए ॥
अन्नो य तस्स मित्तो धुत्तेणं तेण धुत्तिओ एवं । सो तं पुच्छइ तुह फुरइ किंपि किं कप्पविसयम्मि ? ॥७८॥
सो भणइ फुरइ आमं कहन्नहा मज्झ भोगवित्थारो ?। तो इयरेणं भणियं वंधव ! न हु किंपि मे फुरइ ॥७९॥
जइ पुण धुत्तेण अहं वियारिओ, भणइ तो इमं पउमो । किं कप्पेहिं बहूहिं वंझाकप्पं तुमं एगं ॥८०॥
सिक्खेसु जेण जणओ दव्वं पाविहसि, तेण इय सोउं । भणियं तं मह पसिऊण कहसु, पउमेण तो कहिओ॥
अलिओ वंझाकप्पो सोवि हु वंझाण ओसहे देइ । अह दिन्नमन्नया नरवरस्स भज्जाए वंझाए ॥८२॥
गब्भत्थमोसहं, तेण तीए सूलं तहा समुप्पन्नं । जह पाणा संदेहे चडिया, सो निवइणा तत्तो ॥८३॥

---

इहपूर्वभवकृतेभ्यो मुच्यसे पापेभ्यो येन, तथा भवति । सुलभो धर्मे बोधिः, तत्प्रतिपद्य गतः सोऽपि ॥६९॥
अथ श्रेष्ठी पद्मयुतः सम्यक्त्वाणुव्रतादिगृहिधर्मम् । प्रतिपद्य याति गृहं, विहरत्यन्यत्र साधुरपि ॥७०॥
अथ कोऽपि तत्र धूर्तः समागतः सोऽपि बहुप्रबन्धैः । विस्माययति मुग्धजनं, कदापि हि तस्य पार्श्वे ॥७१॥
पद्मोऽपि गतः कुतूहलैर्विहितोऽनेन हृतहृदयः । ईश्वरपुत्र इति प्रदर्शितं च तस्मै कल्पटिप्पनकम् ॥७२॥
तत्र च रसेन्द्रकल्पस्तथैव भृङ्गरजवित्तकल्पश्च । अश्वगन्धिब्राह्मीतुलसीशुण्ठीपाठादिकल्पाश्च ॥७३॥
एतेषु च समर्थः कथितो दारिद्र्यखण्डने कोपि । बहुव्याधिजराविद्रवणप्रत्यलः कोऽपि तथा कोऽपि ॥७४॥
वन्ध्यायाः सुतजनकः कोऽपि च सौभाग्यकारकोऽन्यः । कोऽपि तथाऽदृश्यत्वप्रसाधक इति प्रपञ्च्य ॥७५॥
उपजीव्य च ततः सुबहु द्रविणं गतः सोऽन्यत्र । तत्कथितविधानेन पद्मः सत्यापयति तान्कल्पान् ॥७६॥
नच किमपि तैः सिध्यति भवति द्रविणक्षयः क्लेशश्च । तथापि करोति संवरणं प्रकटयति न यथास्थितं लोके ॥
अन्यच्च तस्य मित्रं धूर्तेन तेन धूर्तितमेवम् । तत् तं पृच्छति तव स्फुरति किमपि किं कल्पविषये ? ॥७८॥
स भणति स्फुरत्याम कथमन्यथा मम भोगविस्तारः ? । तत इतरेण भणितं बान्धव ! न खलु किमपि मे स्फुरति॥
यदि पुनर्धूर्तेनाहं विप्रतारितः, भणति तत इदं पद्मः । किं कल्पैर्बहुभिर्वन्ध्याकल्पं त्वमेकम् ॥८०॥
शिक्षस्व येन जनको द्रव्यं प्राप्स्यसि, तेनेति श्रुत्वा । भणितं तं मम प्रसद्य कथय, पद्मेन ततः कथितः ॥८१॥
...को वन्ध्याकल्पः सोऽपि खलु वन्ध्याभ्य औषधानि ददाति । अथ दत्तमन्यदा नरवरस्य भार्यायै वन्ध्यायै ॥
...म्, तेन तस्याः शूलं तथा समुत्पन्नम् । यथा प्राणाः संदेहे चटिताः, स नृपतिना ततः ॥८३॥

वंधाविओ पयंपइ दिन्ना पउमेण मह इमा बुद्धी। तो राया मोएउं अहिरणविहूसियं काउं ॥८४॥
उववेसिउं तं गरुयआसणे नरवरो ससम्माणं। हक्काराविय पउमं पभणइ एवं जइ अवंझो ॥८५॥
वंझाए जेण गब्भो संपज्जइ ओसहेण तव्विसओ। उवएसो तुम्भेहिं दिन्नो एयस्स, तो पउमो ॥८६॥
आमंति भणइ तत्तो राया जंपइ इमेण देवीए। ओसहमिणं पउत्तं तेण य सूलं समुप्पन्नं ॥८७॥
ता तस्स परित्ताणं करेहि, खुद्धो य सो भणइ इत्तो। मह एयस्सवि एए कप्पा अन्नेण परिकहिया॥८८॥
तो तम्मित्तो पभणइ सच्चमिणं किंतु तुहुवएसेण। सविसेसं इह कम्मे पयट्टिओ, भणइ तो राया ॥८९॥
भो पउम! विणा कज्जं इमाओवि णडाविओ तए लोओ। तह कंठगयप्पाणा देवीवि हु वट्टए इण्हिं ॥९०॥
इय भणिवि अंगरक्खे निरूविउं ते धराविया रन्ना। धरणपठिओ विचिंतइ तो पउमो कहवि जइ देवी॥
पाणेहिं परिमुचइ ता मारइ मं विडंविउं राया। जं तइयावि हु इमिणा पहाणभावेण मइ दोसो ॥९२॥
आरोविओ नियमणे, जीवइ देवीवि कहवि जइ, तहवि। मं निग्गहइ अवस्सं राया इय अट्टझाणम्मि॥९३॥
अइपगरिससंपत्ते मुक्को पाणेहिं जंतुओ जाओ। तब्भवकयजिणधम्मं सफलेही भमियणंतभवे ॥९४॥
देवीवि कया पउणा नरवइविज्जेण, मंदकोवत्तं। तो संपत्तो राया सोऊणं मरणवुत्तंतं ॥९५॥
पउमं अप्पइ वीरस्स सेट्ठिणो, सो य नायवुत्तंतो। तक्किचाइं काउं विसेसओ रमइ जिणधम्मे ॥९६॥
दंडेवि पउममित्तं निवारिउं तह य दंभविसयम्मि। मुक्को रन्ना, तम्हा नाउं पउमस्स इय वसणं ॥९७॥

---

*बन्धितः प्रजल्पति दत्ता पद्मेन ममेयं बुद्धिः। ततो राजा मोचयित्वाऽऽभरणविभूषितं कृत्वा ॥८४॥*
*उपवेश्य तं गुर्वासने नरवरः ससम्मानम्। हक्कारयित्वा पद्मं प्रभणत्येवं यथाऽवन्ध्यः ॥८५॥*
*वन्ध्याया येन गर्भः संपद्यत औषधेन तद्विषयः। उपदेशो युष्माभिर्दत्त एतस्मै, ततः पद्मः ॥८६॥*
*आमेति भणति ततो राजा जल्पत्यनेन देव्याः। औषधमिदं प्रयुक्तं तेन च शूलं समुत्पन्नम् ॥८७॥*
*तस्मात्तस्य परित्राणं कुरु, क्षुब्धश्च स भणतीतः। ममैतस्याप्येते कल्पा अन्येन परिकथिताः ॥८८॥*
*ततस्तन्मित्रं प्रभणति सत्यमिदं किन्तु तवोपदेशेन। सविशेषमिह कर्मणि प्रवृत्तः, भणति ततो राजा ॥८९॥*
*भोः पद्म! विना कार्यमस्मादपि नटितस्त्वया लोकः। तथा कण्ठगतप्राणा देव्यपि हि वर्तत इदानीम् ॥९०॥*
*इति भणित्वाऽङ्गरक्षान् निरूप्य तौ धारितौ राज्ञा। धरणस्थितो विचिन्तयति ततः पद्मः कथमपि यदि देवी॥*
*प्राणैः परिमुच्येत तदा मारयेद् मां विडम्ब्य राजा। यत्तदापि ह्यनेन प्रधानभावेन मयि दोषः ॥९२॥*
*आरोपितो निजमनसि, जीवति देव्यपि कथमपि यदि, तथापि। मां निगृह्णात्यवश्यं राजा, इत्यार्तध्याने॥९३॥*
*अतिप्रकर्षसंप्राप्ते मुक्तः प्राणैर्जन्तुको जातः। तद्भवकृतजिनधर्मं सफलयिष्यति भ्रान्त्वाऽनन्तभवान् ॥९४॥*
*देव्यपि कृता प्रगुणा नरपतिवैद्येन, मन्दकोपत्वम्। ततः संप्राप्तो राजा श्रुत्वा मरणवृत्तान्तम् ॥९५॥*
*पद्ममर्पयति वीराय श्रेष्ठिने, स च ज्ञातवृत्तान्तः। तत्कृत्यानि कृत्वा विशेषतो रमते जिनधर्मे ॥९६॥*
*दण्डयित्वा पद्ममित्रं निवार्य तथा च दम्भविषये। मुक्तो राज्ञा, तस्माज्ज्ञात्वा पद्मस्येति व्यसनम् ॥९७॥*

जायं मुसोवएसा इह लोए ताव मरणपज्जंतं । परलोएऽणंतदुहं, तम्हा तं चयह सुहकामा ! ॥९८॥

॥ इति मृषोपदेशे पर्वतकथानकं समाप्तम् ॥

---

जातं मृषोपदेशादिह लोके तावन्मरणपर्यन्तम् । परलोकेऽनन्तदुःखं, तस्मात्तं त्यजत शुभकामाः ॥९८॥



जो लिहइ कूडलेहं अलीयवयणम्मि गहियनियमोवि । इहलोए परलोए स बंधुदत्तोव्व लहइ दुहं ॥१॥
तथाहि ;—
सुरयणसोहं सुरकरितणुंव तिदिवंव सुकविकव्वंव । रोहणगिरिव्व गयपुरमिहत्थि राया य कुमरगिरी॥२॥
रिउकरिकुंभनिब्भेयभिन्नमुत्तालिकलियखग्गलया । सियसियकुसुमा रेहइ जयसिरिवेणिव्व जस्स करे॥३॥
वि-ब्भम-र-हियावि विलाससंगया रणिरहंसयसणाहा । तस्सत्थि पिया नलिणिव्व गुणहरा कमलिणी नाम॥
तस्सवि य बंधुदत्तो मंती, अहन्नया य अवराहं । दट्ठूणं सो मुद्दं रन्ना मोयाविओ सहसा ॥५॥
ठविओ य विस्सदत्तो मंती सुरमंतिसरिसमइविहवो । सम्मत्तपत्तलीहो पयइनिरीहो सवसजीहो ॥६॥
कूरो य बंधुदत्तो पयईए पुणोवि मुद्दगहणत्थं । पयभट्ठोवि हु पासं खणंपि न मुयइ नरिंदस्स ॥७॥
अह अन्नया नरिंदो पत्तो दूरम्मि वाहियालीए । सचिवेण बंधुदत्तेण संजुओ वाहए तुरए ॥८॥
विवरीयसिक्खवसओ मंतिनिवाणं तुरंगमा तुरियं । वच्चंता संपत्ता वणगहणे, तेहिं अह तत्थ ॥९॥
दिट्ठं मुणीण जुयलं असोयवरपायवस्स हिट्ठम्मि । तुरयावि परिस्संता थक्का तम्मि पएसम्मि ॥१०॥
तो उत्तरिउं ते दोवि पणमिउं मुणिजुयं समुवविट्ठा । अह दट्ठुं कणिट्ठमुणिं जिट्ठमुणिं भणइ इय राया ॥
जह अवमन्नइ मयणं इमो मुणी तणुसिरीए तह एसा । साहइ वररायसिरिं इमस्स, ता कह णु तवाओ ?॥
भणइ मुणी रहमद्दणपुरपहुलीलाविलासनरवइणो । लीलावइदेवीए पुत्तो नामेण गुणसेणो ॥१३॥

---

यो लिखति कूटलेखमलीकवचने गृहीतनियमोऽपि । इहलोके परलोके स बन्धुदत्त इव लभते दुःखम् ॥१॥
*सुरत्नशोभं सुरकरितनुरिव त्रिदिवमिव सुकविकाव्यमिव । रोहणगिरिरिव गजपुरमिहास्ति राजा च कुमारगिरिः॥*
रिपुकरिकुम्भनिर्भेदभिन्नमुक्तालिकलितखड्गलता । सितसितकुसुमा राजते जयश्रीवेणीव यस्य करे ॥३॥
वि-भ्रम-र-हितापि विलाससंगता रणमानहंसकसनाथा । तस्यास्ति प्रिया नलिनीव गुणधरा कमलिनी नाम ॥४॥
तस्यापि च बन्धुदत्तो मन्त्री, अथान्यदा चापराधम् । दृष्ट्वा स मुद्रां राज्ञा मोचितः सहसा ॥५॥
*स्थापितश्च विश्वदत्तो मन्त्री सुरमन्त्रिसदृशमतिविभवः । सम्यक्त्वप्राप्तरेखः प्रकृतिनिरीहः स्ववशजिह्वः ॥६॥*
क्रूरश्च बन्धुदत्तः प्रकृत्या पुनरपि मुद्राग्रहणार्थम् । पदभ्रष्टोऽपि हि पार्श्वं क्षणमपि न मुञ्चति नरेन्द्रस्य ॥७॥
अथान्यदा नरेन्द्रः प्राप्तो दूरे वाह्याल्या । सचिवेन बन्धुदत्तेन संयुतो वाहयति तुरगान् ॥८॥
विपरीतशिक्षावशतो मन्त्रिनृपयोस्तुरङ्गमौ त्वरितम् । व्रजन्तौ संप्राप्तौ वनगहने, ताभ्यामथ तत्र ॥९॥
दृष्टं मुन्योर्युगलमशोकवरपादपस्याधः । तुरगावपि परिश्रान्तौ स्थितौ तस्मिन् प्रदेशे ॥१०॥
तत उत्तीर्य तौ द्वावपि प्रणम्य मुनियुगं समुपविष्टौ । अथ दृष्ट्वा कनिष्ठमुनिं ज्येष्ठमुनिं भणतीति राजा ॥११॥
यथाऽवमन्यते मदनमयं मुनिस्तनुश्रिया तथैषा । कथयति वरराजश्रियमस्य, तस्मात्कथं नु तपः ? ॥१२॥
भणति मुनी रथमर्दनपुरप्रभुलीलाविलासनरपतेः । लीलावतीदेव्याः पुत्रो नाम्ना गुणसेनः ॥१३॥

---

१ नगरपक्षे सुरत्नशोभम्, सुरकरितनुपक्षे सुरत्नशोभं सुरजनशोभं वा, त्रिदिवपक्षे सुरजनशोभम्, सुकविकाव्यपक्षे सुरचनाशोभम्, रोहणगिरिपक्षे सुरत्नशोभमिति । २ ग. °रिमुद्दंव ।

अइवल्लहो पिऊणं कीलइ दुल्ललियबालकीलाए । गिण्हइ कलाकलावं पिऊण गुरुणोवरोहेण ॥१४॥
उम्मुक्कबालभावो महानरिंदाण पवरधूयाओ । परिणाविओ विलासे करेइ दुगुंदुगोव्व सुरो ॥१५॥
अह अन्नया वसंते उज्जाणे भारियाहिं परियरिओ । कीलइ जलकीलाए कीलावावीसु, तह तत्थ ॥१६॥
मणिरयणसिंगियाए घुसिणागुरुसुमिगनाहिसलिलेण । छंटइ नियभज्जाओ छंटिज्जइ सोवि ताहिंपि॥१७॥
अह एक्काए पहओ पओहरेणं पओहरेणेव । थूलकढिणेण तत्तो वलिओ सो तीइ लहु समुहो ॥१८॥
सा नट्ठा वेगेणं सोवि हु पट्ठीए धाविओ गहीउं । भरियजलं गुरुसिंगिं ता जाव असोयवणमज्झे ॥१९॥
मिलिओ तीए, सावि हु उस्सग्गठियस्स साहुणो सरणं । पडिवन्ना, तो थंभइ जलं मुयंतस्स से बाहुं ॥
मुणिभत्तदेवया, तो सो उवविट्ठो विलक्खओ होउं । मुणिणाढत्ता अंतरमलखालणवयणजलकीला॥२१॥
तद्यथा;—
संसारो दुहहेऊ हेऊ कम्माण तस्स पुण उदओ । सो तेसिं बद्धाणं, बंधो कम्माण पुण दुविहो॥२२॥
अत्थेण अणत्थेणं, तत्थत्थेणं विणा इमं जेणं । निव्वहइ नो सरीरं कीरइ सो तस्स अत्थम्मि ॥२३॥
जो पुण उम्मायाओ कज्जेण विणावि कोवि वावारो । तत्तो जो बंधो सो अणत्थहेउत्ति नायव्वो।२४।
एकम्मि उदगबिंदुम्मि जे जीवा जिणवरेहिं पन्नत्ता । ते पारेवयमित्ता जंबूदीवे ण माएज्जा ॥२५॥
जलघडसयाण जीवे तुम्हे एवं मुहा विराहंता । जं बंधह कम्मभरं नित्थरिहह तं कहं भद्द ! ॥२६॥
उवलक्खणं च एयं अन्नेवि हु थावरे तसे तह य । घायह तुम्मे जीवे तत्तो पावं तओ नरओ ॥२७॥

---

अतिवल्लभः पित्रोः क्रीडति दुर्ललितबालक्रीडया । गृह्णाति कलाकलापं पित्रोर्गुरुणोपरोधेन ॥१४॥
उन्मुक्तबालभावो महानरेन्द्राणां प्रवरदुहितॄः । परिणायितो विलासान् करोति दौगुन्दुक इव सुरः ॥१५॥
अथान्यदा वसन्त उद्याने भार्याभिः परिकरितः । क्रीडति जलक्रीडया क्रीडावापीषु, तथा तत्र ॥१६॥
मणिरत्नशृङ्गिकया घुसृणागुरुसुमृगनाभिसलिलेन । उक्षति निजभार्या उक्ष्यते सोऽपि ताभिरपि ॥१७॥
अथैकया प्रहतः पयोभरेण पयोधरेणेव । स्थूलकाठिनेन ततो वलितः स तस्या लघु संमुखः ॥१८॥
सा नष्टा वेगेन सोऽपि हि पृष्ठे धावितो गृहीत्वा । भृतजलां गुरुशृङ्गीं तावद्यावदशोकवनमध्ये ॥१९॥
मिलितस्तया, सापि खलूत्सर्गस्थितस्य साधोः शरणम् । प्रतिपन्ना, ततः स्तम्भाति जलं मुञ्चतस्तस्य बाहुम् ॥
मुनिभक्तदेवता, ततः स उपविष्टो विलक्षो भूत्वा । मुनिनारब्धाऽन्तरमलक्षालनवचनजलक्रीडा ॥२१॥
संसारो दुःखहेतुर्हेतुः कर्मणां तस्य पुनरुदयः । स तेषां बद्धानां, बन्धः कर्मणां पुनर्द्विविधः ॥२२॥
अर्थेनाऽनर्थेन, तत्रार्थेन विनेदं येन । निर्वहति नो शरीरं क्रियते स तस्यार्थे ॥२३॥
यः पुनरुन्मादात् कार्येण विनापि कोऽपि व्यापारः । ततो यो बन्धः सोऽनर्थहेतुरिति ज्ञातव्यः॥२४॥
एकस्मिन्नुदकबिन्दौ ये जीवा जिनवरैः प्रज्ञप्ताः । ते पारापतमात्रा जम्बूद्वीपे न मायेरन् ॥२५॥
जलघटशतानां जीवान् यूयमेवं मुधा विराधयन्तः । यं बध्नीथ कर्मभरं निस्तरिष्यथ तं कथं भद्र ! ॥२६॥
उपलक्षणं चैतदन्यानपि हि स्थावरांस्त्रसांस्तथा च । घातयथ यूयं जीवांस्ततः पापं ततो नरकः॥२७॥

तत्र च दुःखस्य किं वर्ण्यते, यतः,

अच्छिनिमीलणमित्तं नत्थि सुहं दुक्खमेव अणुबद्धं । नरए नेरइयाणं अहोनिसिं पच्चमाणाणं ॥२८॥
तणुसयणपरियणट्ठा जं पावं तंपि रागवसयत्ता । अन्नाणंधा जीवा कुणंति तत्तं अयाणंता ॥२९॥
अन्नह इमेण तणुणा कायव्वं किंपि होइ तं, जेण । भववुच्छेओ निरुवमअणंतसिवसोक्खसंपत्ती ॥३०॥
ता बहुपुन्नुवलद्धे एत्थ सरीरम्मि पोयकप्पम्मि । पंचमहव्वयसियवडमारोविय तरह भवजलहिं ॥३१॥

उक्तं च;—

"महता पुण्यपण्येन क्रीतेयं कायनौस्त्वया । पारं दुःखोदधेर्गन्तुं त्वर यावन्न भिद्यते ॥"

इय एवमाइ सुणिउं मुणिवयणं नायधम्मपरमत्थो । पत्थइ जा जइधम्मं ता पत्तो परियणो तत्थ ॥३२॥
दट्ठूणं मुणिपुरओ धरोवविट्ठं सभज्जयं कुमरं । मित्ता य कलत्ताणि य भणंति किं अणुचियं एवं॥३३॥
इह उवविट्ठा चिट्ठह, उट्ठेह पुरचचरीओ एयाओ । सफलपरिस्समाओ करेह नियदिट्ठिदाणेण ॥३४॥
भणइ कुमारो किं चचरीहिं उवविसिय मुणिसयासम्मि । सुव्वउ धम्मो, किज्जउ एस कयत्थो मणुयजम्मो ॥
तो तेहिं सो भणिओ कोऽवसरो एस धम्मसवणस्स । एवं पयट्टमाणे महूसवे पउरलोयस्स ? ॥३६॥
उट्ठह मुणिपासाओ, भणिओ साहूवि तेहिं 'मुंच इमं' । तो मुणिणा संलत्तं अहं न एयं पडिखलेमि॥३७
तो कुमरेणं कहियं ताणं मा कोवि किंपि मं भणउ । मज्झ पइन्ना एसा मोत्तव्वं गहियदिक्खेण ॥३८॥
तो तस्सवरोहेणं भणियं मा नाह ! एरिसं कुणसु । आगच्छ तायपासे पच्छा सिच्छा तुह इहत्थे ॥३९॥
तो कुमरेणं भणियं किं पुणरुत्तेण, नियनियपिऊणं । गच्छह भवणे तुम्हे पव्वज्जं वावि गिन्हेह ॥४०॥

---

अक्षिनिमीलनमात्रं नास्ति सुखं दुःखमेवानुबद्धम् । नरके नैरयिकाणामहोनिशं पच्यमानानाम् ॥२८॥
तनुस्वजनपरिजनार्थं यत्पापं तदपि रागवशप्राप्ताः । अज्ञानान्धा जीवाः कुर्वन्ति तत्त्वमजानन्तः ॥२९॥
अन्यथाऽनया तन्वा कर्तव्यं किमपि भवति तत्, येन । भवव्युच्छेदो निरुपमानन्तशिवसौख्यसंप्राप्तिः ॥३०॥
तस्माद् बहुपुण्योपलब्धेऽत्र शरीरे पोतकल्पे । पञ्चमहाव्रतसितपटमारोप्य तरत भवजलधिम् ॥३१॥
इत्येवमादि श्रुत्वा मुनिवचनं ज्ञातधर्मपरमार्थः । प्रार्थयते यावद्यतिधर्मं तावत्प्राप्तः परिजनस्तत्र ॥३२॥
दृष्ट्वा मुनिपुरतो धरोपविष्टं सभार्यकं कुमारम् । मित्राणि च कलत्राणि च भणन्ति किमनुचितमेवम् ॥३३॥
इहोपविष्टास्तिष्ठथ, उत्तिष्ठत पुरचर्चरीरेताः । सफलपरिश्रमाः कुरुत निजदृष्टिदानेन ॥३४॥
भणति कुमारः किं चर्चरीभिरुपविश्य मुनिसकाशे । श्रूयतां धर्मः, क्रियतामेतन् कृतार्थं मनुजजन्म ॥३५॥
ततस्तैः स भणितः कोऽवसर एष धर्मश्रवणस्य । एवं प्रवर्तमाने महोत्सवे पौरलोकस्य ? ॥३६॥
उत्तिष्ठत मुनिपार्श्वात्, भणितः साधुरपि तैः 'मुञ्चेमम्' । ततो मुनिना संजल्पितमहं नैनं प्रतिस्खलयामि॥३७॥
ततः कुमारेण कथितं तेभ्यो मा कोऽपि किमपि मां भणतु । मम प्रतिज्ञैषा मोक्तव्यं गृहीतदीक्षेण ॥३८॥
ततस्तस्यावरोधेन भणितं मा नाथ ! ईदृशं कुरु । आगच्छ तातपार्श्वे पश्चात्स्वेच्छा तवेहार्थे ॥३९॥
ततः कुमारेण भणितं किं पुनरुक्तेन, निजनिजपितॄणाम् । गच्छत भवने यूयं प्रव्रज्यां वापि गृह्णीत ॥४०॥

तो तस्स निच्छयं जाणिऊण मित्तेण रायपासम्मि। गंतूण कुमरविलसियमेगंते साहियं सव्वं ॥४१॥
तो तक्खणेण राया देवीए समन्निओ कुमरपासं। संपत्तो कुमरेणवि नमिउं अब्भुट्ठिउं भणिओ ॥४२॥
पणमह एयं साहुं तस्सुवरोहेण नमिय भणिओ सो। मा मज्झ पुत्तमेयं वुग्गाहसु पयइसरलंपि ॥४३॥
एयाण बालियाणं तारुन्नभरम्मि वट्टमाणाणं। मा गिण्हसु तं वट्टं वियसिंदकंदोट्टनयणाणं ॥४४॥
तो कुमरेणं भणियं मा ताय! भणेसु पागयनरोव्व। जो दंसेइ सुमग्गं भुल्लाणं भाविभद्दाणं ॥४५॥
किं सो वट्टं पाडइ, पाडइ सो तं सुमग्गपडिकूलो। जो विसए हि निमंतइ हिओ हमेयस्सिय मईए ॥४६॥
जइ तुह तायणुकंपा मइ, तह जइ वल्लभो हमंबाए। ता निग्गच्छंतं भवदवाओ तत्थेव मा छुहह ॥४७॥
उक्तं च;—
भवगिहमज्झम्मि पमायजलणजलियम्मि मोहनिद्दाए। जो जग्गवइ स मित्तं, वारंतो सो पुण अमित्तं॥
इच्चाइदेसणाए पियरे पडिबोहिऊण पव्वज्जा। गहिया इमेण विहिणा पच्छा गच्छे बहूहिंपि ॥४९॥
तो भणियं भूवइणा भयवं! एयारिसं पुरिसरयणं। विरला जणेइ जणणी जणियाच्छरियं तिहुयणस्स॥
अम्हारिसाणवि इमो जुत्तो मग्गो इमेण जो विहिओ। किंपुण असमत्थो हं, दंसह मग्गंतरं अम्ह ॥५१॥
तो मुणिणा गिहिधम्मो कहिओ अंगीकओ य सो तेहिं। तम्मि खणे तस्सिन्नं समागयं नमिवि मुणिजुयलं॥
संपत्ता नियनयरं धम्मं पालिंति दोवि जहगहियं। किंपुण सचिवो मग्गइ अहिणवसचिवस्स छिद्दाइं॥
नय पावइ, तो कूडं लेहं लिहिऊण अन्नया छन्नं। निब्भिच्चभिच्चपासम्मि अप्पिउं देइ सो सिक्खं ॥५४॥

---

ततस्तस्य निश्चयं ज्ञात्वा मित्रेण राजपार्श्वे। गत्वा कुमारविलसितमेकान्ते कथितं सर्वम् ॥४१॥
ततस्तत्क्षणेन राजा देव्या समन्वितः कुमारपार्श्वम्। संप्राप्तः कुमारेणापि नत्वाऽभ्युत्थाय भणितः ॥४२॥
प्रणमतैतं साधुं तस्योपरोधेन नत्वा भणितः सः। मा मम पुत्रमेतं व्युद्ग्राहय प्रकृतिसरलमपि ॥४३॥
एतासां बालिकानां तारुण्यभरे वर्तमानानाम्। मा गृहाण त्वं पन्थानं विकसितेन्दीवरनयनानाम् ॥४४॥
ततः कुमारेण भणितं मा तात! भण प्राकृतनर इव। यो दर्शयति सुमार्गं भ्रष्टानां भाविभद्राणाम् ॥४५॥
किं स पन्थानं पातयति, पातयति स तं सुमार्गप्रतिकूलः। यो विषयान् हि निमन्त्रयति हितोऽहमेतस्येति मत्या॥
यदि तव तातानुकम्पा मयि, तथा यदि वल्लभोऽहमम्बायाः। तदा निर्गच्छन्तं भवदवात् तत्रैव मा क्षिपत ॥
भवगृहमध्ये प्रमादज्वलनज्वलिते मोहनिद्रायाः। यो जागरयति स मित्रं, वारयन्स पुनरमित्रम् ॥४८॥
इत्यादिदेशनया पितरौ प्रतिबोध्य प्रव्रज्या। गृहीताऽनेन विधिना पश्चाद् गच्छे बहुभिरपि ॥४९॥
ततो भणितं भूपतिना भगवन्! एतादृशं पुरुषरत्नम्। विरला जनयति जननी जनिताश्चर्यं त्रिभुवनस्य ॥५०॥
अस्मादृशामप्ययं युक्तो मार्गोऽनेन यो विहितः। किन्त्वसमर्थोऽहं, दर्शयत मार्गान्तरमस्माकम् ॥५१॥
ततो मुनिना गृहिधर्मः कथितोऽङ्गीकृतश्च स ताभ्याम्। तस्मिन् क्षणे तत्सैन्यं समागतं, नत्वा मुनियुगलम् ॥
संप्राप्तौ निजनगरं धर्मं पालयतो द्वावपि यथागृहीतम्। किन्तु सचिवो मृगयतेऽभिनवसचिवस्य छिद्राणि॥५३॥
न च प्राप्नोति, ततः कूटं लेखं लिखित्वाऽन्यदा छन्नम्। निर्भृत्यभृत्यपार्श्वेऽर्पयित्वा ददाति स शिक्षाम्॥५४॥

तो उद्धूलियजंघो सोवि बहिं वाहियालिदेसम्मि। कडिवट्टीए खिविउं लेहं सुत्तो किलंतुव्व ॥५५॥
रायावि रायवाडीए निग्गओ तेण चेव मग्गेण। तत्थ पसुत्तो दिट्ठो सो जग्गविओ भडेहिं तओ ॥५६॥
संभंतं अप्पाणं दंसंतस्सुट्ठियस्स तस्स तहिं। कडिवट्टीओ पडिओ लेहो गहिओ निवभडेहिं ॥५७॥
कस्स तुमंति य पुट्ठो खुद्धुव्व न जाव जंपए किंपि। तो दंसिओ निवइणो सोवि हु तं वायए लेहं॥
सिरिवद्धमाणनयरा राया रिउमद्दणो कुसलपुव्वं। सिरिविस्सदत्तमंतिं ससणेहं सायरं भणइ ॥५९॥
संपत्तो तुह लेहो मए य अवहारिओ य तस्सत्थो। तह चेव निव्विलंबं तयणुट्ठाणे जइस्सामि ॥६०॥
जेसिं मंडलियाणं जत्तियमप्पावियं तए कणयं। तेत्तियमित्तं तेसिं पेसियमंगीकयं तेहिं ॥६१॥
तुज्झ निमित्तं तु मए लक्खं कणयस्स धवलवणिहत्थे। संपेसियं स एही थेवेहिं दिणेहिं तुह पासे॥६२॥
इयएवमाइअत्थं लेहस्स वियाणिउं नरवरिंदो। तं लेहवाहगनरं समप्पए अंगरक्खाण ॥६३॥
लेहं च विस्सदत्तस्स दंसए, सोवि वाइउं भणइ। पहु! विन्नाणं एयं कस्सवि मह असहमाणस्स ॥६४॥
तो लेहवाहगं तं राया चड्डावए तहा जह सो। मरइव्व किल तहावि हु न अप्पए कहवि सब्भावं॥६५॥
तो भणइ विस्सदत्तो तस्सेसो कूडलेहकारिस्स। निब्भिच्चो, ता सुद्धी मह कीरउ कालियाकुंडे ॥६६॥
एवं होउत्ति नरेसरेण भणियम्मि सत्तमीदिवसे। कयउववासो बंभव्वयधारी भूमिसयणिज्जो ॥६७॥
पंचनमोक्कारपरो गमिउं रयणिं पभायसमयम्मि। कालीभवणम्मि गओ रन्नो तह पवरलोयस्स ॥६८॥
पच्चक्खं होउं कालियाए अग्गम्मि भणइ सो एवं। इह मगरगाहतिमिसुंसुमारकलिए अगाहम्मि ॥६९॥

---

तत उद्धूलितजङ्घः सोऽपि बहिर्वाह्यालीदेशे। कटीपट्यां क्षिप्त्वा लेखं सुप्तः क्लान्त इव ॥५५॥
राजापि राजवाट्यां निर्गतस्तेनैव मार्गेण। तत्र प्रसुप्तो दृष्टः स जागरितो भटैस्ततः ॥५६॥
संभ्रान्तमात्मानं दर्शयत उत्थितस्य तस्य तत्र। कटीपटीतः पतितो लेखो गृहीतो नृपभटैः ॥५७॥
कस्य त्वमिति च पृष्टः क्षुब्ध इव न यावज्जल्पति किमपि। ततो दर्शितो नृपतये सोऽपि हि तं वाचयति लेखम्॥
श्रीवर्धमाननगराद् राजा रिपुमर्दनः कुशलपूर्वम्। श्रीविश्वदत्तमन्त्रिणं सस्नेहं सादरं भणति ॥५९॥
संप्राप्तस्तव लेखो मया चावधारितश्च तस्यार्थः। तथैव निर्विलम्बं तदनुष्ठाने यतिष्ये ॥६०॥
येभ्यो मण्डलिकेभ्यो यावदर्पितं त्वया कनकम्। तावन्मात्रं तेभ्यः प्रेषितमङ्गीकृतं तैः ॥६१॥
तव निमित्तं तु मया लक्षं कनकस्य धवलवणिग्घस्ते। संप्रेषितं स एष्यति स्तोकैर्दिनैस्तव पार्श्वे ॥६२॥
इत्येवमाद्यर्थं लेखस्य विज्ञाय नरवरेन्द्रः। तं लेखवाहकनरं समर्पयत्यङ्गरक्षाणाम् ॥६३॥
लेखं च विश्वदत्तस्य दर्शयति, सोऽपि वाचयित्वा भणति। प्रभो! विज्ञानमेतत्कस्यापि मामसहमानस्य॥६४॥
ततो लेखवाहकं तं राजा मर्दयति तथा यथा सः। म्रियत इव किल तथापि हि नार्पयति कथमपि सद्भावम्॥
ततो भणति विश्वदत्तस्तस्यैष कूटलेखकारिणः। निर्भृत्यः, तस्माच्छुद्धिर्मम क्रियतां कालिकाकुण्डे ॥६६॥
एवं भवत्विति नरेश्वरेण भणिते सप्तमीदिवसे। कृतोपवासो ब्रह्मव्रतधारी भूमिशयनीयः ॥६७॥
पञ्चनमस्कारपरो गमयित्वा रजनिं प्रभातसमये। कालीभवने गतो राज्ञस्तथा प्रवरलोकस्य ॥६८॥

कुंडे जमतुंडे इव मज्झ पविट्ठस्स होउ निग्गमणं। निव्विग्घं चिय जइ इत्थ कुमरगिरिपुहइनाहम्मि ॥७०॥
मणवायाकाएहिं करणेणं करावणेण अणुमइणा। हियमेव सव्वकालं अणुट्ठियं, जइ पुण कयावि ॥७१॥
अहिए अत्थि पवित्ती ता मह कुंडम्मि इह पविट्ठस्स। मा होउ निवित्ती, इय भणिऊणं जाइ कुंडतडे॥७२॥
काऊणं सागारं पच्चक्खाणं मणे फुरंतेसु। पंचसु परमिट्ठिसु झत्ति देइ झंपं तहिं कुंडे ॥७३॥
तो विमलदीहदलकोमलम्मि कमलम्मि सो समारूढो। कमलासणोव्व रेहइ सज्जणवयणे वियासंतो ॥७४॥
भमइ जलमज्झयारे चुंटंतो कमलकुवलयाईणि। तत्तो सुद्धो सुद्धोत्ति जणरवो झत्ति उच्छलिओ ॥७५॥
तालारवसंमिस्सो, उग्घुट्टं तह य वंदिवसहेण। तच्चरियचमक्कियमाणसेण उब्भिन्नपुलएण ॥७६॥
तद्यथा;—
जयइ जिणेसरसासणु जहिं सुपरिट्ठियहं, दुत्तरआवयसरसी गोपयहं।
जिणवरवयणु समग्गु जु मिल्लइ पुण पुरिसु, तसु दुरियावली मिलियह जायइ दिणु वरिसु ॥७७॥
अह नरपवरु पयंपइ तं पइ हिट्ठमणु, तुह सव्वह थलु जलनिहि कुंडह पुणु कवणु ?।
जलि रमंतु दीसंतु जिव तोसहि नयण, तिव नियतणुउच्छाइणि मह भुय करि पउण ॥७८॥
इय रन्ना आहूओ समागओ कुंडतीरदेसम्मि। दाऊण सयं बाहुं तत्तो उत्तारिओ झत्ति ॥७९॥
आरोविओ जयकुंजरम्मि सह अप्पणा नरिंदेण। गरुयप्पभावणाए पवेसिओ नियभवणम्मि ॥८०॥
सो लेहवाहओ अभयदाणपुव्वं पुणोवि नरवइणा। पुट्ठो चिंतइ संपइ जइ नो पयडेमि सब्भावं ॥८१॥

---

प्रत्यक्षं भूत्वा काल्या अग्रे भणति स एवम्। इह मकरग्राहतिमिसुंसुमारकलितेऽगाधे ॥६९॥
कुण्डे यमतुण्ड इव मम प्रविष्टस्य भवतु निर्गमनम्। निर्विघ्नमेव यद्यत्र कुमारगिरिपृथिवीनाथे ॥७०॥
मनोवाक्कायैः करणेन कारणेनानुमत्या। हितमेव सर्वकालमनुष्ठितं, यदि पुनः कदापि ॥७१॥
अहितेऽस्ति प्रवृत्तिस्तदा मम कुण्ड इह प्रविष्टस्य। मा भवतु निवृत्तिः, इति भणित्वा याति कुण्डतटे ॥७२॥
कृत्वा साकारं प्रत्याख्यानं मनसि स्फुरत्सु। पञ्चसु परमेष्ठिषु झटिति ददाति झम्पां तत्र कुण्डे ॥७३॥
ततो विमलदीर्घदलकोमले कमले स समारूढः। कमलासन इव राजते सज्जनवदनानि विकासयन् ॥७४॥
भ्रमति जलमध्ये चिन्वन् कमलकुवलयादीनि। ततः शुद्धः शुद्ध इति जनरवो झटित्युच्छलितः ॥७५॥
तालारवसंमिश्रः, उद्घुष्टं तथा च वन्दिवृषभेण। तच्चरितचमत्कृतमानसेनोद्भिन्नपुलकेन ॥७६॥
जयति जिनेश्वरशासनं यत्र सुप्रतिष्ठितस्य, दुस्तराऽऽपत्सरसी गोष्पदः।
जिनवरवचनं समग्रं यो मुञ्चति पुनः पुरुषः, तस्य दुरितालीमिलितस्य जायते दिनं वर्षम् ॥७७॥
अथ नरप्रवरः प्रजल्पति तं प्रति हृष्टमनाः, तव सर्वथा स्थलं जलनिधिः कुण्डः पुनः कियान्?।
जले रममाणो दृश्यमानो यथा तोषयसि नयने, तथा निजतनुपरिरम्भेण मम भुजं कुरु प्रगुणम् ॥७८॥
इति राज्ञाऽऽहूतः समागतः कुण्डतीरदेशे। दत्त्वा स्वयं बाहुं तत उत्तारितो झटिति ॥७९॥
आरोपितो जयकुञ्जरे सहात्मना नरेन्द्रेण। गुरुप्रभावनया प्रवेशितो निजभवने ॥८०॥

तो मह मरणं सरणं मंती पुण छुट्टिही जह तहेव। तो कहइ जहावित्तं, अह रन्ना वंधुदत्तोवि ॥८२॥
हक्कारिऊण पुट्ठो निरुत्तरो जाव जंपइ न किंपि। ता सव्वस्सं गहिउं रन्ना वज्झो समाणत्तो ॥८३॥
किच्छेण विस्सदत्तेण मोइओ कहवि सोवि लज्जाए। लोयाणं गच्छंतो तत्तो अन्नत्थ देसम्मि ॥८४॥
पुव्विं विराहिएणं चरडेण हओ मओ य जुज्झंतो। रुद्दज्झाणोवगओ पत्तो पढमाए पुढवीए ॥८५॥
विन्नत्तो य नरिंदो एयं सचिवेण विस्सदत्तेण। गिण्हामि वयं संपइ उक्कंपइ मह मणो जेणं ॥८६॥
एयारिसावि पुरिसा लद्धविवेयावि जिणमयठियावि। विनडंति इयप्पाणं अहह अहो! मोहमाहप्पं ॥
कंठट्ठियजीएहिं ईयरेहिवि जं न किज्जइ नरेहिं। तंपि हु कुणंति गुणिणो अहह अहो! मोहमाहप्पं[1] ॥
बहुलोयसम्मयाणवि एवंविहविहवसंगयाणंपि। ताणवि मई अकज्जे फुरइ, अहो! मोहमाहप्पं ॥८९॥
इच्चाइ जंपिऊणं अप्पाणं मोइऊण रायाओ। गरुयपभावणपुव्वं घित्तुं दिक्खं सिवं पत्तो ॥९०॥
ता अइयारविमुक्कं सच्चं भासिज्ज सव्वकालंपि। जं धम्मस्स पइट्ठा सच्चम्मि निवेसिया लोए ॥९१॥
चंदणरसोव्व जलणो जायइ भुयगोवि रज्जुसमकज्जो। हालाहलंपि अमयं सच्चपइन्नाण पुरिसाण॥९२॥

॥ इति मृषावादव्रते कूटलेखकरणविपाके वन्धुदत्तकथानकं समाप्तम् ॥
॥ तत्समाप्तौ सातिचारं समाप्तं द्वितीयाणुव्रतम् ॥

---

स लेखवाहकोऽभयदानपूर्वं पुनरपि नरपतिना। पृष्टश्चिन्तयति संप्रति यदि नो प्रकटयामि सद्भावम् ॥८१॥
ततो मम मरणं शरणं मन्त्री पुनर्मोक्ष्यते यथा तथैव। ततः कथयति यथावृत्तं, अथ राज्ञा वन्धुदत्तोऽपि ॥
हक्कारयित्वा पृष्टो निरुत्तरो यावज्जल्पति न किमपि। तावत्सर्वस्वं गृहीत्वा राज्ञा वध्यः समाज्ञप्तः ॥८३॥
कृच्छ्रेण विश्वदत्तेन मोचितः कथमपि सोऽपि लज्जया। लोकानां गच्छंस्ततोऽन्यत्र देशे ॥८४॥
पूर्वं विराधितेन चरटेन हतो मृतश्च युध्यमानः। रौद्रध्यानोपगतः प्राप्तः प्रथमायां पृथिव्याम् ॥८५॥
विज्ञप्तश्च नरेन्द्र एतत्सचिवेन विश्वदत्तेन। गृह्णामि व्रतं संप्रत्युत्कम्पते मम मनो येन ॥८६॥
एतादृशा अपि पुरुषा लब्धविवेका अपि जिनमतस्थिता अपि। विनटयन्तीत्यात्मानमहह अहो! मोहमाहात्म्यम् ॥
कण्ठस्थितजीवितैरितरैरपि यन्न क्रियते नरैः। तदपि हि कुर्वन्ति गुणिनोऽहह! अहो! मोहमाहात्म्यम्॥८८॥
बहुलोकसंमतानामप्येवंविधविभवसंगतानामपि। तेषामपि मतिरकार्ये स्फुरति, अहो! मोहमाहात्म्यम्॥८९॥
इत्यादि जल्पित्वाऽऽत्मानं मोचयित्वा राज्ञः। गुरुप्रभावनापूर्वं गृहीत्वा दीक्षां शिवं प्राप्तः ॥९०॥
तस्मादतिचारविमुक्तं सत्यं भाषेत सर्वकालमपि। यद् धर्मस्य प्रतिष्ठा सत्ये निवेशिता लोके ॥९१॥
चन्दनरस इव ज्वलनो जायते भुजगोऽपि रज्जुसमकार्यः। हालाहलमप्यमृतं सत्यप्रतिज्ञानां पुरुषाणाम्॥९२॥

---

१ ग. जं नहु किज्जइ नरेहिं तं किंपि। तंपि हु मण'।

गामागरनगराइसु सचित्ताचित्तमीसयं सययं । चोरंकारकरं जं थूलमदत्तं तयं वज्जे ॥१॥
लिट्ठोवलतिणसरिसं परदव्वं जस्स, तस्स जसपडहो । वज्जइ जयम्मि गरुओ देवजसस्सेव सड्ढस्स ॥२॥
तथाहि;—

वज्जहरं सुमणनिसेवियं च अंबयसहस्सपरिकलियं । हरिणोव्व सरीरं अत्थि इह पुरं नाम हरिसउरं॥
तत्थ निवो नयसारो मुणिव्व गयपरिग्गहोवि सकलत्तो । वेसमणोव्व उदारो तहावि गयदाणविक्खाओ॥
तस्सत्थि पिया वरसीलसालिणी दलियकमलदलनयणा । गइविजियरायहंसी देवी सुरसुंदरी नाम॥५॥
तम्मि धणड्ढो नामेण अत्थि सिट्ठी पिया य से सदया । मलयमईनामेणं देवजसो नाम ताण सुओ ॥
रूवविणिज्जियमयणो विवेयनयणो सुलद्धगुणरयणो । भावियजिणवरवयणो बंधुव्व पिओ धरणिवइणो ॥
आसि कलत्तं नामेण रुप्पिणी तस्स पेम्मकुलभवणं । सावि वरसाविया भाविया य सम्मं जिणमएण ॥
अह बारसविहधम्मं पालंतो सव्वपव्वदियहेसु । पोसहपडिमब्भासं कुणमाणो देवजससड्ढो ॥९॥
पत्तो परं पसिद्धिं विसुद्धचरिएण लोयमज्झम्मि । ववहारेण य दव्वं विढवइ अणुवासरं पउरं ॥१०॥
तस्स य पित्तियपुत्तो वहइ पओसं सयावि धणदेवो । जह जह तस्स पसंसं सुणेइ तह तह कुकम्मवसा॥
जइ कयसुद्धिं वन्नइ तप्पुरओ कोवि तस्स तो भणइ । मा वन्नसु मह पुरओ तुच्छं तं कूडववहारिं॥१२॥
पंचदिणाणं उवरिं तुमंपि पिच्छिहसि जारिसो होही । संपइ निवप्पसाया उत्ताणो भमइ ता भमउ॥१३॥
घोलाविया य बहुया अम्हेहिं एरिसा इह पुरम्मि । जंताण ताण धूली न हु दिट्ठा फारचरियाण॥१४॥

---

ग्रामाकरनगरादिषु सचित्ताचित्तमिश्रं सततम् । चौर्यकारकरं यत् स्थूलमदत्तं तद् वर्जयेत् ॥१॥
लेष्टूपलतृणसदृशं परद्रव्यं यस्य, तस्य यशःपटहः । वाद्यते जगति गुरुर्देवयशस इव श्राद्धस्य ॥२॥

वज्रधरं सुमनोनिषेवितं च आम्रक[अम्बक] सहस्रपरिकलितम्। हरेरिव शरीरमस्तीह पुरं नाम हर्षपुरम् ॥
तत्र नृपो नयसारो मुनिरिव गज[गत]परिग्रहोऽपि सकलत्रः । वैश्रमण इवोदारस्तथापि गत(ज)दानविख्यातः॥
तस्यास्ति प्रिया वरशीलशालिनी दलितकमलदलनयना । गतिविजितराजहंसीका देवी सुरसुन्दरी नाम ॥५॥
तस्मिन् धनाढ्यो नाम्नाऽस्ति श्रेष्ठी प्रिया च तस्य सदया । मलयमतीनाम्ना देवयशा नाम तयोः सुतः॥६॥
रूपविनिर्जितमदनो विवेकनयनः सुलब्धगुणरत्नः । भावितजिनवरवचनो बन्धुरिव प्रियो धरणिपतेः ॥७॥
आसीत्कलत्रं नाम्ना रुक्मिणी तस्य प्रेमकुलभवनम् । सापि वरश्राविका भाविता च सम्यग् जिनमतेन ॥८॥
अथ द्वादशविधधर्मं पालयन् सर्वपर्वदिवसेषु । पौषधप्रतिमाभ्यासं कुर्वाणो देवयशःश्राद्धः ॥९॥
प्राप्तः परां प्रसिद्धिं विशुद्धचरितेन लोकमध्ये । व्यवहारेण च द्रव्यमर्जयत्यनुवासरं प्रचुरम् ॥१०॥
तस्य च पैतृकपुत्रो वहति प्रद्वेषं सदापि धनदेवः । यथा यथा तस्य प्रशंसां शृणोति तथा तथा कुकर्मवशात् ॥
यदि कृतशुद्धिं वर्णयति तत्पुरतः कोऽपि तस्य ततो भणति । मा वर्णय मम पुरतस्तुच्छं तं कूटव्यवहारिणम् ॥
पञ्चदिनानामुपरि त्वमपि द्रक्ष्यसि यादृशो भविष्यति । संप्रति नृपप्रसादादुत्तानो भ्रमति ततो भ्रमतु ॥१३॥

---

१ ख. ग. रम्मु° । २ ग. सीमनसीना° । ३ क. °ह य क° ।

इअ असमंजसभासी तस्स परोक्खे, गओ य से पासे । तच्छिद्दे मग्गेउं कुणइ अणेगाइं चाडूणि ॥१५॥
सो पुण सब्भावेणं पासइ पीईए बंधुबुद्धीए । संभासइ संमाणइ तहवि न सो चयइ नियपगइं ॥१६॥
यतः;—

"खलः सत्क्रियमाणोऽपि ददाति कलहं सताम् । दुग्धधौतोऽपि किं याति वायसः कलहंसताम् ? ॥"

अह अन्नया य तेणं देवजसो देववंदणनिमित्तं । उज्जाणे जिणभवणे जंतो अवलोइउं भणिओ ॥१७॥
अहमवि समागमिस्सं तुब्भेहिं समं जिणिंदभवणम्मि । ता इत्थेव विलंबह जा परिहियएमि सुइवत्थे ॥१८॥
तत्थ ठिओ देवजसो रन्ना वलिएण वाहियालीओ । दिट्ठो पुट्ठो किं इह, सो पभणइ पणमिउं रायं॥१९॥
गच्छिस्सं जिणभवणे इय संभासिय गयम्मि नरनाहे। परिचिंतइ देवजसो अज्जवि नो एइ धणदेवो॥२०॥
जइ एही तो मिलिही जिणभवणे इय विचिंतिउं चलिओ । पिच्छइ निवंगुलीयं थोवरयच्छाइयं सहसा॥
देवजसेणं तत्तो चत्तो मग्गोवि अहिभएणेव । पुट्ठिठिओ धणदेवो 'किमेस वलिओ ?' विचिंतेइ॥२२॥
किं मग्गे इह सप्पो चिट्ठइ जं एस एयठाणाओ । वलिओ झडत्ति,'तो तं ठाणं सो नियइ सविसेसं॥२३॥
सच्छब्भपडलपिहियं तरणिंव फुरंतकिरणनिउरंबं । तो रयकणसंछन्नं पासइ तं मुद्दियारयणं ॥२४॥
अवलोइउं दिसाओ गहिउं तं घत्तिऊण वट्टीए । तप्पट्टिमग्गलग्गो पत्तो जिणमंदिरस्संतो ॥२५॥
देवजसेणं समगं पूयासक्कारवंदणे काउं । जिणपडिमाणं तत्तो विणियत्तो तग्गिहे गंतुं ॥२६॥
देवजसेणं सद्धिं भुत्तो सुत्तो य रयणिसमयम्मि । चिंतेइ एस समओ एयस्सुच्छेयणे मज्झ ॥२७॥

---

गमिताश्च बहवोऽस्माभिरीदृशा इह पुरे । यातां धूलिर्न खलु दृष्टा स्फारचरितानाम् ॥१४॥
इत्यसमञ्जसभाषी तस्य परोक्षे, गतश्च तस्य पार्श्वे । तच्छिद्राणि मार्गयितुं करोत्यनेकानि चाटूनि ॥१५॥
स पुनः सद्भावेन पश्यति प्रीत्या बन्धुबुद्ध्या । संभाषते सम्मानयति तथापि न स त्यजति निजप्रकृतिम् ॥१६॥
अथान्यदा च तेन देवयशा देवबन्दननिमित्तम् । उद्याने जिनभवने यान् अवलोक्य भणितः ॥१७॥
अहमपि समागमिष्यामि युष्माभिः समं जिनेन्द्रभवने । तस्मादत्रैव विलम्बध्वं यावत्परिदधामि शुचिवस्त्राणि॥
तत्र स्थितो देवयशा राज्ञा वलितेन वाह्यालीतः । दृष्टः पृष्टः किमिह, स प्रभणति प्रणम्य राजानम् ॥१९॥
गमिष्यामि जिनभवन इति संभाष्य गते नरनाथे । परिचिन्तयति देवयशा अद्यापि नैति धनदेवः ॥२०॥
यद्येष्यति ततो मिलिष्यति जिनभवन इति विचिन्त्य चलितः । पश्यति नृपाङ्गुलीयं स्तोकरजश्छादितं सहसा ॥
देवयशसा ततस्त्यक्तो मार्गोऽप्यहिभयेनेव । पृष्ठस्थितो धनदेवः ' किमेष वलितः ?' विचिन्तयति ॥२२॥
किं मार्गे इह सर्पस्तिष्ठति यदेष एतत्स्थानात् । वलितो झटिति, ततस्तत्स्थानं स पश्यति सविशेषम् ॥२३॥
स्वच्छाभ्रपटलपिहितं तरणिमिव स्फुरत्किरणनिकुरम्बम् । ततो रजःकणसंछन्नं पश्यति तन्मुद्रिकारत्नम् ॥
अवलोक्य दिशो गृहीत्वा तद् गोपयित्वा वस्त्रांशे । तत्पृष्ठमार्गलग्नः प्राप्तो जिनमन्दिरस्यान्तः ॥२५॥
देवयशसा समं पूजासत्कारवन्दनानि कृत्वा । जिनप्रतिमानां ततो विनिवृत्तो तद्गृहे गत्वा ॥२६॥
देवयशसा सार्धं भुक्तः सुप्तश्च रजनिसमये । चिन्तयत्येष समय एतस्योच्छेदने मम ॥२७॥

तत्तो मुद्दारयणं खिवेइ तप्पेडमज्झभागम्मि । उक्खुडिय चम्मसंधी जह न य तं कोवि पिच्छेइ ॥२८॥
इत्तो य नरवरिंदो उत्तारइ जाव सव्वमाहरणं । तो अंगुलीयरयणं नो पेच्छइ मुणइ पडियमिणं ॥२९॥
आरक्खियस्स तो कहइ सोवि आगंतुगं पुरजणं च । सोहइ विविहोवाएहिं वाहियालीए तह मग्गे ॥३०॥
धूलीधोएहिंतो रेणुं सोहावए असेसंपि । नो लहइ, कहइ तत्तो इमं सरूवं नरिंदस्स ॥३१॥
तेणावि तत्थ नयरे दवाविओ पडहओ समग्गम्मि । जेणं केणवि पत्तं मुद्दारयणं समप्पेउ ॥३२॥
अभयं तस्स पयच्छामि, पंचदिवसाण जइ परं कहवि । पुत्तेणवि तं गहियं जाणिस्सं, सोवि मह वज्झो ॥
तत्तो तं देवजसो सोउं हक्कारिऊण धणदेवं । भणइ जहा वच्छ ! तए तइया तं दिट्ठमंगुलियं ? ॥३४॥
तइया कइया, इच्चाइ पभणिए तेण भणइ देवजसो । जइया मह पिट्ठीए गओ सि उज्जाणजिणभवणे ॥
तं दिट्ठं आसि जया मएवि, ता जइ इमं तए गहियं । तो अप्पसु नरवइणो होही पच्छा उ तमपत्थं ॥
तह तक्करधिक्कारो वच्छ ! अतुच्छो इमस्स वंसस्स । तो तेणं पडिभणियं न हु ते संगाओ फलमन्नं ॥
चोरंकारकलंकंपि मज्झ तं देसि नत्थि तुह सरिसो । अन्नो विसिट्ठसुयणो, अलाहि ता तुज्झ संगेण ॥
इय भणिउं नियभवणे पत्तो सो नियमणम्मि संतुट्ठो । अह रन्नो पडिहारो एगंते तेण विन्नत्तो ॥३९॥
नरवइणोच्चिय कज्जं विन्नवियव्वं निवस्स अत्थि मए । अच्चंतं एगंते तो मं दंसेहि नरवइणो ॥४०॥
तह तेण कए सोवि हु रायं विन्नवइ देव ! देवजसो । धम्मिछलेण जेणं मुसिओवि न चेयए लोओ ॥
सो चलिओ जिणभवणे जम्मि दिणे पडियमंगुलीयं ते । तप्पिट्ठीए गओ हं तेणं उग्गुडिय धरणीओ ॥

---

ततो मुद्रारत्नं क्षिपति तत्पेटामध्यभागे । त्रुटित्वा चर्मसंधी यथा न च तत्कोऽपि पश्यति ॥२८॥
इतश्च नरवरेन्द्र उत्तारयति यावत् सर्वमाभरणम् । ततोऽङ्गुलीयरत्नं नो पश्यति जानाति पतितमिदम् ॥२९॥
आरक्षिकस्य ततः कथयति सोऽप्यागन्तुकं पुरजनं च । शोधयति विविधोपायैर्वाह्याल्यास्तथा मार्गान् ॥३०॥
धूलीधोतृभ्यो रेणु शोधयत्यशेषमपि । नो लभते, कथयति तत इदं स्वरूपं नरेन्द्रस्य ॥३१॥
तेनापि तत्र नगरे दापितः पटहः समग्रे । येन केनापि प्राप्तं मुद्रारत्नं समर्पयतु ॥३२॥
अभयं तस्य प्रयच्छामि, पञ्चदिवस्या यदि परं कथमपि । पुत्रेणापि तद् गृहीतं ज्ञास्यामि, सोऽपि मम वध्यः॥
ततस्तद् देवयशाः श्रुत्वा हक्कारयित्वा धनदेवम् । भणति यथा वत्स ! त्वया तदा तद् दृष्टमङ्गुलीयम्?॥३४॥
तदा कदा, इत्यादौ प्रभणिते तेन भणति देवयशाः । यदा मम पृष्ठे गतोऽस्युद्यानजिनभवने ॥३५॥
तद् दृष्टमासीद्यदा मयापि, ततो यदीदं त्वया गृहीतम् । तदोऽर्पय नरपतये भविष्यति पश्चात्तु तदपथ्यम् ॥३६॥
तथा तस्करधिक्कारो वत्स ! अतुच्छोऽस्य वंशस्य । ततस्तेन प्रतिभणितं न खलु ते सङ्गात्फलमन्यत् ॥३७॥
चौर्यकारकलङ्कमपि मम त्वं ददासि नास्ति तव सदृशः । अन्यो विशिष्टसुजनः, अलं तस्मात्तव सङ्गेन ॥३८॥
इति भणित्वा निजभवनं प्राप्तः स निजमनसि संतुष्टः । अथ राज्ञः प्रतीहार एकान्ते तेन विज्ञप्तः ॥३९॥
नरपतेरेव कार्यं विज्ञपयितव्यं नृपायास्ति मया । अत्यन्तमेकान्ते ततो मां दर्शय नरपतये ॥४०॥
तथा तेन कृते सोऽपि खलु राजानं विज्ञपयति देव ! देवयशाः । धर्मिच्छलेन येन मुषितोऽपि न चेतति लोकः ॥

गहियं किंपि वियक्केमि जाव ता तेण मुद्दियारयणं। गोविज्जंतं दिट्ठं सयणीयगेहम्मि पेडाए ॥४३॥
पहुकज्जं भणिऊणं साहिज्जइ तुज्झ, अन्नहा निययं। को नियउदरं दारइ, जम्हा सो होइ मह बंधू॥४४॥
तो राया परिचिंतइ संभवइ इमंपि तम्मि समयम्मि। जं दिट्ठो देवजसो मएवि तम्मि प्पएसम्मि ॥४५॥
इय चिंतिय भणइ तयं, उचियं भत्तीए तुह करिस्सामि। किंतु जहिं पडिहारो ठवइ तत्थेव ठाह खणं ॥
तो पडिहारस्स तयं समप्पिउं तव्वरस्स पासाओ। हक्कारवइ कज्जंतरमुद्दिसिऊण देवजसं ॥४७॥
तो एगंते राया तं पभणइ अंगुलीयरयणं मे। तम्मि समयम्मि तुमए लद्धं जिणभवणमग्गम्मि ॥४८॥
इय सुव्वइ, ता सच्चं जइ एयं ता समप्पसु तमिणिंह। अज्जवि तुह अभयं चिय, नाहं काहं तुह विरूवं ॥
रज्जट्ठिईवि एयप्पभावओ अम्ह गिज्जए वंसे। तो पभणइ देवजसो न मए लद्धं इमं देव ! ॥५०॥
अभए उ न संदेहो देवे सच्चप्पइन्नसिररयणे। पयइएच्चिय अणुजीविवच्छले किंतु इह लोए ॥५१॥
परलोए पुण तइयव्वयभंगसमुब्भवस्स पावस्स। नरयाइसु दुक्खनिबंधणस्स मोक्खो कओ होइ ? ॥५२॥
पाणच्चएवि तम्हा एवं ववसेमि नाह ! नेय अहं। भणइ निवो एवमिणं, किंपुण निययम्मि वासगिहे ॥५३॥
खट्टासमीवपेडाए गोवियं कहइ सो, तओ पेडं। तं तुब्भे एत्थ ठिया अप्पावह मज्झ पुरिसाण ॥५४॥
तो तत्थ अदीसंते मुद्दारयणम्मि तं अहं पिसुणं। कारिस्सं भूयबलिं, तह चेव करेइ देवजसो ॥५५॥
तो तीए पेडाए अंतो राया परिग्गहपमाणं। पासइ कहंपि कत्थइ नवकारफलं च टिप्पणए ॥५६॥

---

स चलितो जिनभवने यस्मिन् दिने पतितमङ्गुलीयं ते। तत्पृष्ठे गतोऽहं तेन नम्रीभूय धरणीतः ॥४२॥
गृहीतं किमपि वितर्कयामि यावत्तावत्तेन मुद्रिकारत्नम्। गोप्यमानं दृष्टं शयनीयगेहे पेटायाम् ॥४३॥
प्रभुकार्यं भणित्वा कथ्यते तव, अन्यथा नियतम्। को निजोदरं दारयेत्, यस्मात् स भवति मम बन्धुः॥४४॥
ततो राजा परिचिन्तयति संभवतीदमपि तस्मिन् समये। यद् दृष्टो देवयशा मयापि तस्मिन्प्रदेशे ॥४५॥
इति चिन्तयित्वा भणति तं, उचितं भक्तेस्तव करिष्यामि। किन्तु यत्र प्रतीहारः स्थापयति तत्रैव तिष्ठ क्षणम्॥
ततः प्रतिहारस्य तं समर्प्य पुररक्षकस्य पार्श्वात्। हक्कारयति कार्यान्तरमुद्दिश्य देवयशसम् ॥४७॥
तत एकान्ते राजा तं प्रभणत्यङ्गुलीयरत्नं मे। तस्मिन् समये त्वया लब्धं जिनभवनमार्गे ॥४८॥
इति श्रूयते, तस्मात्सत्यं यद्येतत् ततः समर्पय तदिदानीम्। अद्यापि तवाभयमेव नाहं करिष्ये तव विरूपम् ॥
राज्यस्थितिरप्येतत्प्रभावतोऽस्माकं गीयते वंशे। ततः प्रभणति देवयशा न मया लब्धमिदं देव ! ॥५०॥
अभये तु न संदेहो देवे सत्यप्रतिज्ञशिरोरत्ने। प्रकृत्यैवानुजीविवत्सले किन्त्विह लोके ॥५१॥
परलोके पुनस्तृतीयव्रतभङ्गसमुद्भवस्य पापस्य। नरकादिषु दुःखनिबन्धनस्य मोक्षः कुतो भवति ? ॥५२॥
प्राणत्यागेऽपि तस्मादेवं व्यवस्यामि नाथ ! नैवाहम्। भणति नृप एवमिदं, किन्तु निजे वासगृहे ॥५३॥
खट्वासमीपपेटायां गोपितं कथयति सः, ततः पेटाम्। तां यूयमत्र स्थिता अर्पयत मम पुरुषाणाम् ॥५४॥
ततस्तत्रादृश्यमाने मुद्रारत्ने, तमहं पिशुनम्। करिष्यामि भूतबलिं, तथैव करोति देवयशाः ॥५५॥
ततस्तस्याः पेटाया अन्तो राजा परिग्रहप्रमाणम्। पश्यति कथमपि क्वाचिन्नमस्कारफलं च टिप्पनके ॥५६॥

तम्मि य वाइज्जंते तस्स परिग्गहपमाणटिप्पणए। परिचिंतइ नरनाहो इमस्स जस्सेरिसा नियमा ॥५७॥
सो कहमेवं ववसइ, तत्तो पडिहारमाइसइ एवं। तं आणावसु सिग्घं जेण इमं मज्झ परिकहियं ॥५८॥
आहूओ धणदेवो, भणियं तुह वयणमन्नहा जायं। तो सो पेडं पक्खोडिऊण पाडेइ तं मुद्दं ॥५९॥
तो पासट्ठियलोओ जंपइ अमयंपि कुणइ विसकज्जं। नरनाहोवि हु रुट्ठो देवजसं तज्जए एवं ॥६०॥
रे धिट्ठ कूडधम्मिय! किमिमं, सो भणइ विलसियं विहिणो। भणइ निवो सच्चमिणं इय बुद्धी तेण तुह दिन्ना ॥
तो रन्ना सो वज्झो आणत्तो बहुविडंबणापुव्वं। आरक्खिएण तत्तो खरम्मि आरोविओ वूढे ॥६२॥
गेरुयकयंगराओ सुरत्तकणवीररइयगलमालो। डमडमियडिंडिमग्गो पहेसु भामिज्जइ पुरस्स ॥६३॥
गुरुवंसग्गविलग्गं मुद्दारयणं भमेइ नरहत्थे। पुक्करिउमनायं पुरसिरिए नं उब्भिओ हत्थो ॥६४॥
सयणेण परजणेण य रुन्नं तं पिच्छिऊणं तह कहवि। रोयाविया पसूविहु सुदुक्खिया पक्खिणोवि तहा ॥
उच्छलिओ लोयरवो अहो अजुत्तं कयं इमं रन्ना। एयस्सवि जं विहिओ दंडो सारीरिओ एवं ॥६६॥
अवराहोवि हु एसो संभाविज्जइ इमस्स न हु, किंतु। धणदेवस्सेव कहंपि विलसियं पावचरियस्स ॥६७॥
तो देसस्स पुरस्सवि रज्जस्स य राइणो य देहस्स। होयव्वमणिट्ठेणं मा भंतिं कोवि इह कुणउ ॥६८॥
धणदेवोवि हु दट्ठुं देवजसं भणइ तह नडिज्जंतं। जो मंगुलं विचिंतइ परस्स तं पडइ तस्सेव ॥६९॥
रायपुरिसेहिं रुद्धं दट्ठूणं नियघरं तहा सोउं। नियपइणो तमवत्थं तब्भज्जा मुच्छिया झत्ति ॥७०॥
परियणकओवयारा पच्चागयचेयणा अइदुहट्टा। तो पलविउं पउत्ता हा हा हा दिव्व पाविट्ठ! ॥७१॥

---

तस्मिंश्च वाच्यमाने तस्य परिग्रहप्रमाणटिप्पनके। परिचिन्तयति नरनाथोऽस्य यस्येदृशा नियमाः ॥५७॥
स कथमेवं व्यवस्येत, ततः प्रतिहारमादिशत्येवम्। तमानायय शीघ्रं येनेदं मम परिकथितम् ॥५८॥
आहूतो धनदेवः, भणितं तव वचनमन्यथा जातम्। ततः स पेटां विकोश्य पातयति तां मुद्राम् ॥५९॥
ततः पार्श्वस्थितलोको जल्पत्यमृतमपि करोति विषकार्यम्। नरनाथोऽपि हि रुष्टो देवयशसं तर्जयत्येवम् ॥६०॥
रे धृष्ट कूटधार्मिक! किमिदं, स भणति विलसितं विधेः। भणति नृपः सत्यमिदमिति बुद्धिस्तेन तव दत्ता ॥६१॥
ततो राज्ञा स वध्य आज्ञप्तो बहुविडम्बनापूर्वम्। आरक्षिकेण ततः खरे आरोपितः पृष्ठे (?) ॥६२॥
गैरिककृताङ्गरागः सुरक्तकणवीररचितगलमालः। उद्घुष्टडिण्डिमाग्रः पथिषु भ्राम्यते पुरस्य ॥६३॥
गुरुवंशाग्रविलग्नं मुद्रारत्नं भ्रमति नरहस्ते। पूत्कर्तुमन्यायं पुरश्रिया नूर्ध्वितो हस्तः ॥६४॥
स्वजनेन परजनेन च रुदितं तद् दृष्ट्वा तथा कथमपि। रोदिताः पशवोऽपि हि सुदुःखिताः पक्षिणोऽपि तथा ॥
उच्छलितो लोकरवोऽहो अयुक्तं कृतमिदं राज्ञा। एतस्यापि यद् विहितो दण्डः शारीरिक एवम् ॥६६॥
अपराधोऽपि खल्वेष संभाव्यतेऽस्य न खलु, किन्तु। धनदेवस्यैव कथमपि विलसितं पापचरितस्य ॥६७॥
ततो देशस्यापि पुरस्यापि राज्यस्य च राज्ञश्च देहस्य। भवितव्यमनिष्टेन मा भ्रान्तिं कोऽपीह करोतु ॥६८॥
धनदेवोऽपि खलु दृष्ट्वा देवयशसं भणति तथा नट्यमानम्। योऽनिष्टं विचिन्तयति परस्य तत्पतति तस्यैव ॥
राजपुरुषै रुद्धं दृष्ट्वा निजगृहं तथा श्रोतुम्। निजपत्युस्तामवस्थां तद्भार्या मूर्छिता झटिति ॥७०॥

तं कह पहरसि एवं एवंविहपुरिसरयणदेहम्मि । वियलियकलंकसंकाण देसि गरुयं कलंकंपि ॥७२॥
अहवा किं खेएणं, करेमि जं इत्थ होइ कायव्वं । इय ववसिऊण पविसइ पोसहसालाए सुइभूया ॥७३॥
कुणइ य काउस्सग्गं सासणदेविं मणे करेऊण । नासग्गनिसियदिट्ठी सरमाणा पंचपरमिट्ठि ॥७४॥
तो तक्खणागयाए देवीए पभणिया जहा वच्छे ! । मा कुणसु खेयमेवं सव्वं भव्वं करिस्सामि ॥७५॥
अह सहसच्चिय निवमंदिरम्मि जलपन्नअन्नपूंगाई । अवहरियाँ देवीए मंतिपमुहाणवि गिहेसु ॥७६॥
अह राया जा नीरं पाउं मग्गेइ ताव जलभरिओ । गगरिकरगाईसुं न नियइ बिंदुंपि सलिलस्स ॥७७॥
तो भीओ सो रन्नो विन्नवइ जहा जलस्स भरिएसु । निच्छिड्डेसुवि दीसइ न नीरबिंदूवि ठाणेसु ॥७८॥
थइयग्गाही भणिओ वीडगमप्पेसु ताव तुममेगं । सो थइयाए हत्थं खिवेइ जा सावि ता रित्ता ॥७९॥
एवं जं जं पुच्छइ तं तं नत्थित्ति निसुणिउं राया । हक्काराविय मंतिं कहइ सरूवं इमं तस्स ॥८०॥
सो भणइ गिहे मज्झवि वुत्तंतो एस तह य अन्नेसिं । तुम्हपयसेवयाणं गिहेसु वट्टइ असेसाण ॥८१॥
भणइ निवो परिभावह किं कारणमित्थ, भणइ तो मंती । निद्दोसो देवजसो संभाविज्जइ जओ जेण ॥
धणदेवेणं दोसो इमम्मि आरोविओ स दुट्ठप्पा । तस्सेव किंपि विलसियमेयं, न हु देव ! देवजसो ॥
पाणच्चएवि एवं करेइ, तत्तो य चमरधारीए । अवयरिउं सासणदेवयाए भणियं जहा मूढ ! ॥८४॥
मंती तुमंपि वुच्चसि जो सम्मुवक्खेसि नियपसामिंपि । एवमकज्जपयट्टं, अह भणसि न मज्झ कहियमिणं॥

---

परिजनकृतोपचारा प्रत्यागतचेतनाऽतिदुःखार्ता । ततः प्रलपितुं प्रवृत्ता हा हा हा दैव पापिष्ठ ! ॥७१॥
त्वं कथं प्रहरस्येवमेवंविधपुरुषरत्नदेहे । विगलितकलङ्कशङ्कानां ददासि गुरुं कलङ्कमपि ॥७२॥
अथवा किं खेदेन, करोमि यदत्र भवति कर्तव्यम् । इति व्यवसाय प्रविशति पौषधशालायां शुचिभूता ॥७३॥
करोति च कायोत्सर्गं शासनदेवीं मनसि कृत्वा । नासाग्रन्यस्तदृष्टिः स्मरन्ती पञ्च परमेष्ठिनः ॥७४॥
ततस्तत्क्षणागतया देव्या प्रभणिता यथा वत्से ! । मा कुरुष्व खेदमेवं सर्वं भव्यं करिष्यामि ॥७५॥
अथ सहसैव नृपमन्दिराज्जलपर्णान्नपूगादयः । अपहृता देव्या मन्त्रिप्रमुखाणामपि गृहेभ्यः ॥७६॥
अथ राजा यावन्नीरं पातुं मार्गयति तावज्जलभृत्यः । गर्गरीकरकादिषु न पश्यति बिन्दुमपि सलिलस्य ॥७७॥
ततो भीतः स राज्ञे विज्ञपयति यथा जलस्य भृतेषु । निश्छिद्रेष्वपि दृश्यते न नीरबिन्दुरपि स्थानेषु ॥७८॥
स्थगिकाग्राही भणितो वीटकमर्पय तावत् त्वमेकम् । स स्थगिकायां हस्तं क्षिपति यावत्सापि तावद्रिक्ता ॥७९॥
एवं यद्यत् पृच्छति तत्तद् नास्तीति श्रुत्वा राजा । हक्कारयित्वा मन्त्रिणं कथयति स्वरूपमिदं तस्य ॥८०॥
स भणति गृहे ममापि वृत्तान्त एष तथा चान्येषाम् । युष्मत्पादसेवकानां गृहेषु वर्ततेऽशेषाणाम् ॥८१॥
भणति नृपः परिभावय किं कारणमत्र, भणति ततो मन्त्री । निर्दोषो देवयशाः संभाव्यते यतो येन ॥८२॥
धनदेवेन दोषोऽस्मिन्नारोपितः स दुष्टात्मा । तस्यैव किमपि विलसितमेतत्, न खलु देव! देवयशाः ॥८३॥
प्राणत्यागेऽप्येवं करोति, ततश्च चामरधारिण्याम् । अवतीर्य शासनदेवतया भणितं यथा मूढ ! ॥८४॥

---

१ क. पुग्गाई, ग. पूग्गाई । २ क. ग. °याई दे° । ३ क मूढा ।

रन्ना सयमेव कओ एस वियारो, इमंपि नो जुत्तं । जं तुह तं वीसरियं जं भणियं नीइसत्थम्मि ॥८६॥
"दुर्वृत्तेष्वप्यपत्येषु यथा माता हितैषिणी । दुर्वृत्तेऽपि तथा राज्ञि नोपेक्षां सचिवोऽर्हति ॥"
धणदेवेणं एसा मुद्दा निहिया छलेण पेडाए । देवजसमच्छरेणं कयं च पावेण सयलमिणं ॥८७॥
एवं च तं भणंति सोउं नाऊण देवया इत्थं । अवयरिया कावि तओ नमंति नरनाहसचिवाई ॥८८॥
विहियविविहोवयारा खमिंति य जाव ताव धणदेवो । ठियपच्छामुहवयणो कुट्टिज्जंतोव्व लउडेहिं ॥८९॥
अइविरसमारसंतो समागओ भणइ मच्छरेण मए । पावेण विलसियमिमं देवजसे फलिहविमलम्मि ॥९०॥
देवजसोवि य दीसइ आगासगयं विमाणमारूढो । थुव्वंतो सुयणेहिं हरिसंसुकिलिन्ननयणेहिं ॥९१॥
सुव्वंति य आरक्खियभिच्चाणं तव्विडंबणकराणं । दीणाणं धाहाओ उब्भियबाहाण विरसाओ ॥९२॥
धवलहरे पत्ताओ तओ विमाणाओ उत्तरंतम्मि । देवजसे अब्भुट्ठइ सा चामरधारिणी झत्ति ॥९३॥
रायाइणोवि एवं, उत्तरमाणस्स तो विमाणाओ । सा देइ सयं बाहं, उत्तिन्नं पुण निमंतेइ ॥९४॥
सीहासणेण राया उवविसइ आसणम्मि अन्नम्मि । भणइ य सासणदेवी देवजसं तुम्ह एएहिं ॥९५॥
जिणवयणरयस्स दयालुयस्स पडिवन्नसुगिहिधम्मस्स । निद्दोसस्सवि जेहिं विडंबणा विरइया एवं ॥९६॥
ते निग्गहेमि सव्वे जिणसासणकिंकरी अहं जेण । तुज्झ घरिणीए काउं काउस्सग्गं इहाहूया ॥९७॥
सो जंपइ देवजसो कम्मेहिं विडंबणा कया मज्झ । देवि !-इमा, ता ताणुम्मूलणपउणो अहं विहिओ॥९८॥
पाणे रक्खंतीए अयसकलंकं तहा फुसंतीए । देवीइच्चिय, सव्वं एयं तु जणं कुणउ देवी ॥९९॥

---

मन्त्री त्वमप्युच्यसे यः समुपेक्षसे निजस्वामिनमपि । एवमकार्यप्रवृत्तं, अथ भणसि च मम कथितमिदम् ॥८५॥
राज्ञा स्वयमेव कृत एष विचारः, इदमपि नो युक्तम् । यत्तव तद् विस्मृतं यद् भणितं नीतिशास्त्रे ॥८६॥
धनदेवेनैषा मुद्रा निहिता छलेन पेटायाम् । देवयशोमात्सर्येण कृतं च पापेन सकलमिदम् ॥८७॥
एवं च तां भणन्तीं श्रुत्वा ज्ञात्वा देवतात्र । अवतीर्णा कापि ततो नमन्ति नरनाथसचिवादयः ॥८८॥
विहितविविधोपचाराः क्षमयन्ति च यावत्तावद्-धनदेवः । स्थितपश्चान्मुखवदनः कुट्यमान इव लगुडैः ॥८९॥
अतिविरसमारसन् समागतो भणति मात्सर्येण मया । पापेन विलसितमिदं देवयशसि स्फटिकविमले ॥९०॥
देवयशा अपि च दृश्यते आकाशगतं विमानमारूढः । स्तूयमानः सुजनैर्हर्षाश्रुक्लिन्ननयनैः ॥९१॥
श्रूयन्ते चारक्षिकभृत्यानां तद्विडम्बनकराणाम् । दीनानां राव्य ऊर्ध्वितबाहूनां विरसाः ॥९२॥
धवलगृहे प्राप्तात् ततो विमानादुत्तरति । देवयशस्यभ्युत्तिष्ठति सा चामरधारिणी झटिति ॥९३॥
राजादयोऽप्येवम्, उत्तरतस्ततो विमानात् । सा ददाति स्वयं बाहुम्, उत्तीर्णं पुनर्निमन्त्रयति ॥९४॥
सिंहासनेन राजोपविशत्यासनेऽन्यस्मिन् । भणति च शासनदेवी देवयशसं त्वैतैः ॥९५॥
जिनवचनरतस्य दयालोः प्रतिपन्नसुगृहिधर्मस्य । निर्दोषस्यापि यैर्विडम्बना विरचितैवम् ॥९६॥
तान् निगृह्णामि सर्वाञ्जिनशासनकिंकरी अहं येन । तव गृहिण्या कृत्वा कायोत्सर्गमिहाहूता ॥९७॥
सो जल्पति देवयशाः कर्मभिर्विडम्बना कृता मम । देवि! इयं, तस्मात्तेषामुन्मूलनप्रगुणोऽहं विहितः॥९८॥

सव्वोवद्दवरहियं मइ वच्छल्लं कयं हवइ एवं। तो तब्भणियं काउं अणुजाणाविय गया देवी ॥१००॥
धणदेवो आणत्तो रन्ना वज्झो विडंवणापुव्वं। करुणाए देवजसेण मोइओ नरवरं भणिउं ॥१०१॥
अह पट्टमहादेविं पेसिय राया सुहासणारूढं। आणावइ देवजसस्स गेहिणिं रुप्पिणिं तत्थ ॥१०२॥
पत्ता य दिट्ठिगोयरमब्भुट्ठिय पडइ तीइ पाएसु। सा भणइ सयलकल्लाणभायणं होसु नरपवर! ॥१०३॥
भद्दासणे निवेसिय काउं करसंपुडं णिडालम्मि। सव्वसभापच्चक्खं कयन्तुसिरसेहरो राया ॥१०४॥
भणइ इमं अपरिक्खियकारिं एवंविहाओ पावाओ। मं मोयंतीए तए सुवहिणि! तं किंपि उवयरियं॥
जस्स न निक्कयमहमेमि रट्ठरज्जेण अहव देहेणं। तो वावारसु एयाइं जत्थ पडिहाइ तुह तत्थ ॥१०६॥
देवजसस्स य पुत्तो सयणेहिं धन्नखेडउवनयरे। ठविओ आसि दुवारे समागओ नरवरिंदस्स ॥१०७॥
कहिओ पडिहारेणं रन्ना मोयाविओ, तओ झत्ति। रायं जणयं जणणिं पणमइ तो नरवरेणेसो॥१०८॥
आलिंगिय उच्छंगे निवेसिओ, तो भणइ देवजसो। देवेणं आयत्तं सव्वंपि हु रुप्पिणीए कयं॥१०९॥
सा पुण मह आयत्ता ता संपइ भोयणं करेऊणं। जेसिं अहमायंत्तो ते वंदिज्जंतु सुहगुरुणो ॥११०॥
ते पुण अज्जेव इहं समोसढा नंदणम्मि उज्जाणे। दिट्ठा इह इंतेणं विमाणचडिएण पणया य ॥१११॥
तो ताणं आएसो कायव्वो रुप्पिणीए सह इण्हिं। तुब्भेहिंवि सत्तीए, तत्तो भुत्तुत्तरे राया ॥११२॥
महया विच्छड्डेणं सह देवजसेण रुप्पिणीए य। ताण सुएणं सद्धिं पत्तो सूरीण पयमूले ॥११३॥

---

प्राणान् रक्षन्त्याऽयशः कलङ्कं तथा मृजत्या। देव्यैवं, सर्वमेतं तु जनं करोतु देवी ॥९९॥
सर्वोपद्रवरहितं मयि वात्सल्यं कृतं भवत्येवम्। ततस्तद्भणितं कृत्वाऽनुज्ञाप्य गता देवी ॥१००॥
धनदेव आज्ञप्तो राज्ञा वध्यो विडम्बनापूर्वम्। करुणया देवयशसा मोचितो नरवरं भणित्वा ॥१०१॥
अथ पट्टमहादेवीं प्रेष्य राजा सुखासनारूढाम्। आनाययति देवयशसो गेहिनीं रुक्मिणीं तत्र ॥१०२॥
प्राप्ता च दृष्टिगोचरमभ्युत्थाय पतति तस्याः पादयोः। सा भणति सकलकल्याणभाजनं भव नरप्रवर! ॥
भद्रासने निवेश्य कृत्वा करसंपुटं ललाटे। सर्वसभाप्रत्यक्षं कृताञ्जुशिरःशेखरो राजा ॥१०४॥
भणतीममपरीक्षितकारिणमेवंविधात् पापात्। मां मोचयन्त्या त्वया सुभगिनि! तत्किमप्युपकृतम् ॥१०५॥
यस्य न निष्क्रयमहमेमि राष्ट्रराज्येनाथवा देहेन। ततो व्यापारयैतानि यत्र प्रतिभाति तव तत्र ॥१०६॥
देवयशसश्च पुत्रः स्वजनैर्धान्यखेटोपनगरे। स्थापित आसीद् द्वारे समागतो नरवरेन्द्रस्य ॥१०७॥
कथितः प्रतीहारेण राज्ञा मोचितः, ततो झटिति। राजानं जनकं जननीं प्रणमति ततो नरवरेणैषः॥१०८॥
आलिङ्ग्योत्सङ्गे निवेशितः, ततो भणति देवयशाः। देवेनायत्तं सर्वमपि हि रुक्मिण्याः कृतम् ॥१०९॥
सा पुनर्ममायत्ता तस्मात् संप्रति भोजनं कृत्वा। येषामहमायत्तस्ते वन्द्यन्तां शुभगुरवः ॥११०॥
ते पुनरद्यैवेह समवसृता नन्दनं उद्याने। दृष्टा इहाऽऽयता विमानचटितेन प्रणताश्च ॥१११॥
ततस्तेषामादेशः कर्तव्यो रुक्मिण्या सहेदानीम्। युष्माभिरपि शक्त्या, ततो भुक्तोत्तरे राजा ॥११२॥

---

१ क, एत्थ।

सूरीहिं जइधम्मे गिहिधम्मेवि य सवित्थरे कहिए । रन्ना य परिन्नाए, देवजसो रुप्पिणीए समं॥११४॥
अणुजाणावइ रायं वित्तुं दिक्खं तओ य सो भणइ । कायव्वं चिय एवं किंपुण दसदिवसपज्जंते॥११५॥
तेहिवि तह पडिवन्ने पुणोवि वंदिय विहीए गुरुचरणे । देवजसाईहिं समं राया नियमंदिरं पत्तो ॥११६॥
तेसिं पासे आणिय गोत्तिं मेलावए समग्गंपि । तह सव्वत्थ अमारिं उग्घोसावइ पुरे तत्थ ॥११७॥
तह नियभंडाराओ देइ जहिच्छाए चेइयहरेसु । दावइ दविणं सुबहुं पूयइ य चउव्विहं संघं ॥११८॥
तह दीणाणाहाणं दावइ दाणं तओ सबहुमाणं । सिट्ठिपए तप्पुत्तं ठावइ दाउं सुबहुदविणं ॥११९॥
तो विहिपुव्वं तेसिं दावइ दिक्खं सयं च गिहिधम्मं । पडिवज्जिय उच्छप्पइ सव्वत्तो जिणमयं तत्तो ॥
साहू देवजसो रुप्पिणी य परिपालिउं वयं सम्मं । लहिउं केवलनाणं तेणेव भवेण सिद्धाइं ॥१२१॥

॥ इति तृतीयाणुव्रते देवयशःकथानकं समाप्तम् ॥

---

महता विस्तारेण सह देवयशसा रुक्मिण्या च । तयोः सुतेन सार्धं प्राप्तः सूरीणां पादमूले ॥११३॥
सूरिभिर्यतिधर्मे गृहिधर्मेऽपि च सविस्तरे कथिते । राज्ञा च परिज्ञाते, देवयशा रुक्मिण्या समम् ॥११४॥
अनुज्ञापयति राजानं ग्रहीतुं दीक्षां ततश्च स भणति । कर्तव्यमेवैवं किन्तु दशदिवसपर्यन्ते ॥११५॥
ताभ्यामपि तथा प्रतिपन्ने पुनरपि वन्दित्वा विधिना गुरुचरणान् । देवयशआदिभिः समं राजा निजमन्दिरं प्राप्तः॥
तेषां पार्श्वे आनीय गोत्रिणं मेलयति समग्रमपि । तथा सर्वत्रामारिमुद्घोषयति पुरे तत्र ॥११७॥
तथा निजभाण्डागाराद्ददाति यदृच्छया चैत्यगृहेषु । दापयति द्रविणं सुबहु पूजयति च चतुर्विधं संघम्॥११८॥
तथा दीनानाथेभ्यो दापयति दानं ततः सबहुमानम् । श्रेष्ठिपदे तत्पुत्रं स्थापयति दत्त्वा सुबहु द्रविणम्॥११९॥
ततो विधिपूर्वं तयोर्दापयति दीक्षां स्वयं च गृहिधर्मम् । प्रतिपद्यते उत्सर्पति सर्वतो जिनमतं ततः ॥१२०॥
साधुर्देवयशा रुक्मिणी च परिपाल्य व्रतं सम्यक् । लब्ध्वा केवलज्ञानं तेनैव भवेन सिद्धौ ॥१२१॥

तेणेहिं समाणीयं गिण्हइ काणक्कएण जो वणिओ । सो नाहडोव्व वहबंधभायणं होइ इहइंपि ॥१॥
तथाहि;—
आसि जलहिव्व विद्दुममणोहरं विउललच्छिकुलभवणं । भद्दिलपुरं पसिद्धं सिट्ठी तत्थत्थि थिरदेवो॥२॥
भज्जा तस्स सुसीला कमलसिरी ताण नाहडो पुत्तो । सो य पयईए लुद्धो हट्टे ववहरइ भयरहिओ॥३॥
अह अन्नया स केणवि मित्तेण पलोभिओ जहा बाहिं । वणिजारयाण सत्थो बहुभंडो आगओ अत्थि॥
तो सो तेण समं चिय तहिं गओ पणियसट्टिकरणत्थं । पभणइ मित्तं वाणिज्जकारए ते पयंसेहि ॥५॥
तो उज्जाणे सूरिं सो दंसइ साहुपरिवुडं तस्स । सो जंपइ निग्गंथा एए, इयरो भणेइ तहवि ॥६॥
बहुमुल्लभंडकलिया दिंति य नियभंडयं अइमहग्घं । तल्लाभेण सलोभो नासइ दालिद्दवेयालो ॥७॥
तो नमिऊणं सूरिं भणियं मित्तेण एस वणिपुत्तो । वणिजत्थं इह पत्तो ता दंसह किंपि नियभंडं ॥८॥
नियहिययगंठिठवियं बहुमुल्लं रयणमुत्तियाईयं । तो तेहिं सो भणिओ गाहगबुद्धी जइ इमस्स ॥९॥
ता दंसिमो समग्गं अन्नह किं आलुयारभणिएहिं । आयासिज्जइ अप्पा तद्दंसणसट्टिसन्नाहिं ? ॥१०॥
तो नाहडेण भणियं छोडह गंठी पयंसह मणीओ । न हि थवियमोत्तियाणं नणु अग्घो तीरए काउं॥११॥
तो सवणामयसुहएण गहिरसद्देण मुणिवरो भणइ । सम्मत्तमहारयणं जइ तुह पडिहाइ तो गिण्ह ॥१२॥
जिणसासणसुद्धागरसंभूयं भूरिगुणगणग्घवियं । चिंतामणिव्व मणवंछियत्थसंपायणपवीणं ॥१३॥
तह विमलं सच्छायं दुइयं मुत्ताभिरामयं हारं । पाणिवहविरइनामं तिविहं तिविहेण नवसरियं ॥१४॥

---

स्तेनैः समानीतं गृह्णाति काणक्रयेण यो वणिक् । स नाहट इव वधबन्धभाजनं भवतीहापि ॥१॥
आसीज्जलधिवद् विद्रुममनोहरं विपुललक्ष्मीकुलभवनम् । भद्दिलपुरं प्रसिद्धं श्रेष्ठी तत्रास्ति स्थिरदेवः ॥२॥
भार्या तस्य सुशीला कमलश्रीस्तयोर्नाहटः पुत्रः । स च प्रकृत्या लुब्धो हट्टे व्यवहरति भयरहितः ॥३॥
अथान्यदा स केनापि मित्रेण प्रलोभितो यथा बहिः । वाणिज्यकारकाणां सार्थो बहुभाण्ड आगतोऽस्ति ॥४॥
ततः स तेन सममेव तत्र गतः पण्यविनिमयकरणार्थम् । प्रभणति मित्रं वाणिज्यकारकांस्तान् प्रदर्शय ॥५॥
तत उद्याने सूरिं स दर्शयति साधुपरिवृतं तस्य । स जल्पति निर्ग्रन्था एते, इतरो भणति तथापि ॥६॥
बहुमूल्यभाण्डकलिता ददति च निजभाण्डमतिमहार्घम् । तल्लाभेन सलोभो नश्यति दारिद्र्यवेतालः ॥७॥
ततो नत्वा सूरिं भणितं मित्रेणैष वणिक्पुत्रः । वाणिज्यार्थमिह प्राप्तस्तस्माद् दर्शय किमपि निजभाण्डम् ॥८॥
निजहृदयग्रन्थिस्थापितं बहुमूल्यं रत्नमौक्तिकादिकम् । ततस्तैः स भणितो ग्राहकबुद्धिर्यद्यस्य ॥९॥
तदा दर्शयामः समग्रमन्यथा किं निरर्थकभणितैः । आयस्यत आत्मा तद्दर्शनविनिमयसंज्ञाभिः ? ॥१०॥
ततो नाहटेन भणितं छोटयत ग्रन्थीन् प्रदर्शयत मणीन् । नहि स्तुतमौक्तिकानां नन्वर्घः शक्यते कर्तुम् ॥११॥
ततः श्रवणामृतसुखदेन गभीरशब्देन मुनिवरो भणति । सम्यक्त्वमहारत्नं यदि तव प्रतिभाति ततो गृहाण॥१२॥
जिनशासनशुद्धाकरसंभूतं भूरिगुणगणपूर्णम् । चिन्तामणिवद् मनोवाञ्छितार्थसंपादनप्रवीणम् ॥१३॥

---

१ क. ग. काग° । २ क. °यारे ।

इच्चाइसाहुधम्मो गिहिधम्मोवि हु पवंचओ कहिओ। कम्मखओवसमाओ पडिवन्नो तेहिं समगंपि ॥१५॥
नमिऊण मुणिं दुन्निवि संपत्ता नियगिहेसु कुव्वंति। जहगिहियं गिहिधम्मं अहन्नया नाहडो हट्टे ॥१६॥
ववहरइ जाव तत्तो चोरा गहिऊण कणयमाईयं। आणंति तस्स हट्टे पच्छन्नं गिण्हए सोवि ॥१७॥
काणक्कयं कुणंतो कयाइ दिट्ठो स तेण मित्तेण। भणिओ न जुत्तमेयं तइयवयं तुज्झ सकलंकं ॥१८॥
एवं होइत्ति, तओ पयंपए नाहडो जहा मित्त !। अदिन्नादाणं चिय पच्चक्खायं मए न इमं ॥१९॥
इयरो भणइ गुरूहिं तइयम्मि वयम्मि एस अइयारो। तेनाहडकयरूवो कहिओ तम्हा चयसु एयं ॥२०॥
इय भणिय गओ मित्तो, ठावइ पुण नाहडो मणे एवं। जइधम्मोवि हु कहिओ गुरूहिं किं तंपि पालेमि? ॥
अह एक्कतक्करेणं पवरा रयणावली समाणीया। तह चेव नाहडेणं गहिया सा थेवमुल्लेण ॥२२॥
ववहरइ तस्स हट्टे निवस्स भंडारिओ विमलनामा। तव्वेलाए सोवि हु संपत्तो तस्स पासम्मि ॥२३॥
पभणइ पडिपट्टउलयकप्पडकोडीसयं पयंसेसु। गिण्हामो अभिरुइयं जेणं तो सो समुट्ठेउं ॥२४॥
सयमेव य पुट्टलियं गहिउं बाहिं समागओ जाव। ताव य कडिवट्टीओ पडिया रयणावली झत्ति ॥२५॥
तं गहिऊणं भणियं भूवइभंडारिएण भो सिट्ठि!। किं एयंति तओ सो खुहिओ जंपेइ न हु किंपि ॥२६॥
ता गहिऊणं हत्थे भणिओ अन्नंपि कुंडलाईयं। समगं गयमेईए ता किं तंपि हु तुह सयासे? ॥२७॥
तं सोउं सो जंपइ, एसा देसागयाण वणियाण। हत्थाओ मए गहिया लक्खेणं, भणइ तो इयरो ॥२८॥

---

तथा विमलं सच्छायं द्वितीयं मुक्ताभिरामं हारम्। प्राणिवधविरतिनामानं त्रिविधं त्रिविधेन नवमालम् ॥१४॥
इत्यादिसाधुधर्मो गृहिधर्मोऽपि खलु प्रपञ्चतः कथितः। कर्मक्षयोपशमात् प्रतिपन्नस्ताभ्यां समकमपि ॥१५॥
नत्वा मुनिं द्वावपि संप्राप्तौ निजगृहयोः कुरुतः। यथागृहीतं गृहिधर्ममथान्यदा नाहटो हट्टे ॥१६॥
व्यवहरति यावत् ततश्चौरा गृहीत्वा कनकादिकम्। आनयन्ति तस्य हट्टे प्रच्छन्नं गृह्णाति सोऽपि ॥१७॥
काणक्रयं कुर्वन् कदाचिद् दृष्टः स तेन मित्रेण। भणितो न युक्तमेतत् तृतीयव्रतं तव सकलङ्कम् ॥१८॥
एवं भवतीति, ततः प्रजल्पति नाहटो यथा मित्र!। अदत्तादानमेव प्रत्याख्यातं मया नेदम् ॥१९॥
इतरो भणति गुरुभिस्तृतीये व्रत एषोऽतिचारः। स्तेनाहृतक्रतरूपः कथितस्तस्मात् त्यजैतम् ॥२०॥
इति भणित्वा गतं मित्रं, स्थापयति पुनर्नाहटो मनस्येवम्। यतिधर्मोऽपि हि कथितो गुरुभिः किं तमपि पालयामि ?॥
अथैकतस्करेण प्रवरा रत्नावली समानीता। तथैव नाहटेन गृहीता सा स्तोकमूल्येन ॥२२॥
व्यवहरति तस्य हट्टे नृपस्य भाण्डागारिको विमलनामा। तद्वेलायां सोऽपि हि संप्राप्तस्तस्य पार्श्वे ॥२३॥
प्रभणति पट्टपटकुलकर्पटकोटिशतं प्रदर्शय। गृह्णीमोऽभिरुचितं येन ततः स समुत्थाय ॥२४॥
स्वयमेव च पोटलिकां गृहीत्वा बहिः समागतो यावत्। तावच्च कटीपटीतः पतिता रत्नावली झटिति ॥२५॥
तां गृहीत्वा भणितं भूपतिभाण्डागारिकेण भोः श्रेष्ठिन्!। किमेतदिति ततः स क्षुभितो जल्पति नाहि किमपि ॥
तां गृहीत्वा हस्ते भणितोऽन्यदपि कुण्डलादिकम्। समं गतमेतया तस्मात्किं तदपि हि तव सकाशे ? ॥२७॥
तत् श्रुत्वा स जल्पति, एषा देशागतानां वणिजाम्। हस्ताद् मया गृहीता लक्षेण, भणति तत इतरः ॥२८॥

मा जंप असंबद्धं जं एसा निवइणो हिययहरणा। वरपणइणिव्व सगुणा ता सयमप्पसु नरवइस्स ॥२९॥
अन्नह निवेण नाए धणेण देहेण छुट्टसि न वच्छ!। इय तत्थ भणंताणं पत्तो आरक्खिओ सहसा ॥३०॥
हण हण हणत्ति भणिरेण तेणमभिहणिय खग्गजवएहिं। बद्धो तेण रडंतो सो वरओ नाहडो वणिओ॥३१॥
भंडारिएण पुट्ठं किमिमं, आरक्खिओ भणइ एत्थ। एक्को पत्तो चोरो सेहिज्जंतेण तेणेसो ॥३२॥
कहिओ मोसट्ठाणं रायाभरणाइयाण सव्वाण। अह रयणावलिसहिओ नीओ सो तेण निवपासे ॥३३॥
तह विन्नत्तं रन्नो तक्करचक्केण देव! वणिओवि। हारावइउं एसो मोसं गिण्हइ समग्गंपि ॥३४॥
तो रन्नो मंतिमुहम्मि निवडिया कोवतरलिया दिट्ठी। तेणवि वणिओ भणिओ निवआहरणं समग्गंपि ॥
अप्पसु जं गहियं तह अन्नजणस्सावि संतियं तुज्झ। जं मोसमत्थि पासे तं, अन्नहा निच्चुलं मरसि ॥३६॥
तो तेणं पडिभणियं सव्वं अप्पेमि जं मया कीयं। मोत्तुं हारं एक्कं गओ स जम्हा अवगईए ॥३७॥
तइलोक्कसारहारं हा रे! जइ तंपि नो समप्पेसि। तो नत्थि तुज्झ जीयं इय भणिउं मोरबंधेहिं ॥३८॥
बंधाविय ताडावइ कसाय घाएहिं घोरतरएहिं। तहवि न मन्नइ हारं समप्पिउं मंतिणा तत्तो ॥३९॥
हक्कारिय तज्जणओ भणिओ पुच्छेहि नियसुयं एयं। तेणवि रहम्मि भणिओ रे रे कुलपंसण! सुणेहि॥
मइ वारंतस्स तए तया समं चरडचोरमाईहिं। पारद्धो ववहारो तस्स फलं एरिसं जायं ॥४१॥
अइलोहग्गहगहिओ रायविरुद्धंपि कुणसि ववहारं। काउव्व नियसि पिंडं न पिट्ठओ लउडयपहारं॥४२॥

---

मा जल्पासंबद्धं यदेषा नृपतेर्हृदयहरणी। वरप्रणयिनीव सगुणा तस्मात्स्वयमर्पय नरपतये ॥२९॥
अन्यथा नृपेण ज्ञाते धनेन देहेन छुट्यसे न वत्स!। इति तत्र भणतोः प्राप्त आरक्षिकः सहसा ॥३०॥
हत हत हतेति भणित्रा तेनाभिहत्य खड्गजवैः। बद्धस्तेन रटन् स वराको नाहटो वणिक् ॥३१॥
भाण्डागारिकेण पृष्टं किमिदम्, आरक्षिको भणत्यत्र। एकः प्राप्तश्चौरो नश्यता तेनैषः ॥३२॥
कथितो मोषस्थानं राजाभरणादिकानां सर्वेषाम्। अथ रत्नावलीसहितो नीतः स तेन नृपपार्श्वे ॥३३॥
तथा विज्ञप्तं राज्ञे तस्करचक्रेण देव! वणिगपि। हारयित्वैष मोषं गृह्णाति समग्रमपि ॥३४॥
ततो राज्ञो मन्त्रिमुखे निपतिता कोपतरलिता दृष्टिः। तेनापि वणिग् भणितो नृपाभरणं समग्रमपि ॥३५॥
अर्पय यद् गृहीतं, तथान्यजनस्यापि संबन्धी तव। यो मोषोऽस्ति पार्श्वे तम्, अन्यथा निस्तुलं म्रियसे ॥३६॥
ततस्तेन प्रतिभणितं सर्वमर्पयामि यद् मया क्रीतम्। मुक्त्वा हारमेकं गतः स यस्मादपगत्या ॥३७॥
त्रैलोक्यसारहारं हा रे! यदि तमपि नो समर्पयसि। ततो नास्ति तव जीवितमिति भणित्वा मोरबन्धैः ॥३८॥
बन्धयित्वा ताडयति कशाया घातैर्घोरतरैः। तथापि न मन्यते हारं समर्पयितुं, मन्त्रिणा ततः ॥३९॥
हक्कारयित्वा तज्जनको भणितः पृच्छ निजसुतमेतत्। तेनापि रहसि भणितो रे रे कुलपांसन! शृणु ॥४०॥
मम वारयतस्त्वया तदा समं चरटचौरादिभिः। प्रारब्धो व्यवहारस्तस्य फलमीदृशं जातम् ॥४१॥
अतिलोभग्रहगृहीतो राजविरुद्धमपि करोषि व्यवहारम्। काक इव पश्यसि पिण्डं न पृष्ठतो लगुडप्रहारम् ॥

अव्ववहारविढत्तो अत्थोऽणत्थस्स कारणं होइ ।-इह परलोए य तहा देइ अणेगाइं दुक्खाइं ॥४३॥
वीससियघायणेणं तहेव मुद्धाण वंचणेणं वा । परपीडाजणएणं अन्नेण य तह उवाएण ॥४४॥
जो विप्पइ परकीओ अत्थो निरु निग्घिणेण चित्तेण । सो कुणइ भयं घोरं खयं च पुव्विल्लअत्थस्स ॥४५॥
ता तुज्झ इहं होही मरणं, रक्खेमि जइ पुण कहेसि । हारो जत्थ तए सो मुक्को दिन्नो व कस्साधि॥४६॥
तो तेण पिया भणिओ नहु नहु हारस्स ताय ! वत्तावि । कायव्वा जेणं सो दिन्नो मित्तस्स अंमुयस्स ॥४७॥
मा तस्स होउ नासो सद्व्वसकुडुंबयस्स रायाओ । मह होउ इमं सव्वं दुन्नयकारिस्स पावस्स ॥४८॥
इय निच्छयं निएउं पुत्तस्स मणम्मि रंजिओ सिट्ठी । एयंपि सुपुरिसत्तं इमस्स जं रक्खए मित्तं॥४९॥
तो तप्पासं मोत्तुं सिट्ठी निवअंतियम्मि संपत्तो । विन्नवइ देव ! कीरउ मज्झ पसाओ नियवणिस्स॥५०॥
हारविवज्जं सव्वं सरूवओ चेव अप्पिही एस । मज्झ य अत्थनिहाणे पण कोडीओ सुवन्नस्स ॥५१॥
तम्मज्झाओ गिण्हउ देवो हारस्स मुल्लमहियंपि । तह एयस्सवि दंडे लेउ सुवन्नंति इय सोउं ॥५२॥
भणइ निवो उप्पज्जइ विसममयाओ तमित्थ अच्छरियं । थिरदेवसरीराओ जं उप्पन्नो इमो पुत्तो॥५३॥
एयारिसम्मि समए पयडंपि हु गोवए धणं अन्नो । एस निहाणगयंपि हु पयडइ इय रिउमइत्ताए ॥५४॥
तो नाहडमाणाविय अप्पइ सिट्ठिस्स भणइ तुह मुक्को । एसो, आहरणं पुणा अप्पावसु इय निसामेउं ॥
भणिउं महापसायं पणमिय तह नरवरं गिहं पत्तो । सह पुत्तेण सिट्ठी रायाइट्ठं अणुट्ठेइ ॥५६॥

---

अव्यवहारार्जितोऽर्थोऽनर्थस्य कारणं भवति । इह परलोके च तथा ददात्यनेकानि दुःखानि ॥४३॥
विश्वस्तघातनेन तथैव मुग्धानां वञ्चनेन वा । परपीडाजनकेनाऽन्येन च तथोपायेन ॥४४॥
यो गृह्यते परकीयोऽर्थो निश्चितं निर्घृणेन चित्तेन । स करोति भयं घोरं क्षयं च पूर्वीयार्थस्य ॥४५॥
तस्मात् तवेह भविष्यति मरणं, रक्षामि यदि पुनः कथयसि । हारो यत्र त्वया स मुक्तो दत्तो वा कस्यापि॥
ततस्तेन पिता भणितो नहि नहि हारस्य तात ! वार्तापि । कर्तव्या येन स दत्तो मित्रायाम्शुकाय ॥४७॥
मा तस्य भवतु नाशः सद्रव्यसकुटुम्बकस्य राज्ञः । मम भवत्विदं सर्वं दुर्नयकारिणः पापस्य ॥४८॥
इति निश्चयं दृष्ट्वा पुत्रस्य मनसि रञ्जितः श्रेष्ठी । एतदपि सुपुरुषत्वमस्य यद् रक्षति मित्रम् ॥४९॥
ततस्तत्पार्श्वं मुक्त्वा श्रेष्ठी नृपान्तिके संप्राप्तः । विज्ञपयति देव ! क्रियतां मम प्रसादो निजवणिजे ॥५०॥
हारविवर्जं सर्वं स्वरूपत एवार्पयिष्यत्येषः । मम चार्थनिधाने पञ्च कोट्यः सुवर्णस्य ॥५१॥
तन्मध्याद् गृह्णातु देवो हारस्य मूल्यमधिकमपि । तथैतस्यापि दण्डे लातु सुवर्णमिति श्रुत्वा ॥५२॥
भणति नृप उत्पद्यते विषममृतात्तदत्राश्चर्यम् । स्थिरदेवशरीराद् यदुत्पन्नोऽयं पुत्रः ॥५३॥
एतादृशे समये प्रकटमपि हि गोपायति धनमन्यः । एष निधानगतमपि हि प्रकटयतीति ऋजुमतित्वात्॥५४॥
ततो नाहटमानाय्यार्पयति श्रेष्ठिने भणति तव मुक्तः । एषः, आभरणं पुनरर्पयेति निशम्य ॥५५॥
भणित्वा महाप्रसादं प्रणम्य तथा नरवरं गृहं प्राप्तः । सह पुत्रेण श्रेष्ठी राजादिष्टमनुतिष्ठति ॥५६॥

---

१ क मुद्धाण वंचणेणं वा ।

सो य तओ ठाणाओ अप्पडिक्कंतो मओ गओ नरयं। इय नाउं अईयारं वज्जह एयं पयत्तेण ॥५७॥

॥ इति तृतीयाणुव्रते प्रथमातिचारदृष्टान्ते नाहडकथा समाप्ता ॥

---

स च ततः स्थानादप्रतिक्रान्तो मृतो गतो नरकम्। इति ज्ञात्वाऽतीचारं वर्जयैनं प्रयत्नेन ॥५७॥

जो विंत्तुं तइयव्वयमुच्छाहइ तक्करे जणे मुसिउं । इहलोए परलोए दुक्खं सो लहइ महणोव्व ॥१॥
तथाहि;—
सप्पायारं वहुसउणसेवियं पउरसावयाइन्नं । अत्थि नयरं पसिद्धं महाअरण्णंव कुसुमपुरं ॥२॥
उव्वूढखमाभारो निव्वूढदओ परूढगुरुवंसो । वरपव्वउव्व सुथिरो राया वइरोयणो तत्थ ॥३॥
महुमहतणुव्व लच्छीए परिगया वरविलासकयसोहा । ललिया तस्सत्थि पिया सारंगसुदंसणसणाहा॥४॥
ताणं दुल्लहराओ पुत्तो असुरोव्व सुरसमूहस्स । गुरुदुक्खलक्खखाणी महणो नामेण से मित्तो ॥५॥
कस्सवि हरेइ दव्वं कस्सवि महिलं बलावि गिण्हेइ । उम्मिट्ठकरिवरो इव उम्मूलइ नयसमूहं सो ॥६॥
तो पउरजणो रावं करेइ रायस्स अग्गओ एवं । देव ! अनाहव्व पुरी कुमरेण विलुंटिया अहियं ॥७॥
तो नरनाहो कुमरं रुट्ठो तज्जेइ रे दुरायार ! । मह सीमं मुत्तूणं गच्छसु सिच्छाए निच्छयओ ॥८॥
न हु होसि तुमं पुत्तो जो मह पुव्विल्लपुरिसपंतीए । जत्तेण पालियाओ पयाउ लूडेसि लीलाए ॥९॥
पसुपुत्तपवित्तिय तुल्लयं खु रज्जव्वयं वयंति बुहा । तं विवरीयं जायइ तुह दोसे मह सहंतस्स ॥१०॥
एसो य लक्खहोमो एयं सरकूवदेवगिहकरणं । नीईए पालिज्जइ जं नियरज्जे जणो सव्वो ॥११॥
उक्तं च;—

"दुष्टस्य दण्डः सुजनस्य पूजा न्यायेन कोशस्य च संप्रवृद्धिः ।
अपक्षपातो रिपुराष्ट्ररक्षा पञ्चैव यज्ञाः कथिता नृपाणाम् ॥
किं देवकार्येण नराधिपानां कृत्वा हि मन्युं विषमस्थितानाम् ? ।

---

यो गृहीत्वा तृतीयव्रतमुत्साहयति तस्कराञ्जनान् मोषितुम् । इहलोके परलोके दुःखं स लभते महन इव ॥१॥
सप्राका(र्पाधा)रं वहुसगुण(शकुन)सेवितं प्रचुरश्रावका(श्वापदा)कीर्णम् ।
अस्ति नगरं प्रसिद्धं महारण्यमिव कुसुमपुरम् ॥२॥
उद्व्यूढक्षमाभारो निर्व्यूढदयः (दकः) प्ररूढगुरुवंशः । परपर्वत इव सुस्थिरो राजा वैरोचनस्तत्र ॥३॥
मधुमथतनुरिव लक्ष्म्या परिगता वरविलासकृतशोभा । ललिता तस्यास्ति प्रिया सा(स)रङ्गसुदर्शनसनाथा॥४॥
तयोर्दुर्लभराजः पुत्रोऽसुर इव सुरसमूहस्य । गुरुदुःखलक्षखानिर्महनो नाम्ना तस्य मित्रम् ॥५॥
कस्यापि हरति द्रव्यं कस्यापि महिलां बलादपि गृह्णाति । उन्मुक्तकरिवर इवोन्मूलयति नय(नग)समूहं सः॥
ततः पौरजनो रावं करोति राज्ञोऽग्रत एवम् । देव ! अनाथेव पुरी कुमारेण विलुण्टिताऽधिकम् ॥७॥
ततो नरनाथः कुमारं रुष्टस्तर्जयति रे दुराचार ! । मम सीमानं मुक्त्वा गच्छ स्वेच्छया निश्चयतः ॥८॥
न खलु भवसि त्वं पुत्रो यो मम पूर्वीयपुरुषपङ्क्त्या । यत्नेन पालिताः प्रजा लुण्टसि लीलया ॥९॥
पशुपुत्रप्रवृत्ती तुल्यं खलु राज्यव्रतं वदन्ति बुधाः । तद् विपरीतं जायते तव दोषान् मम सहमानस्य ॥१०॥
एष च लक्षहोम एतत् सरःकूपदेवगृहकरणम् । नीत्या पाल्यते यद् निजराज्ये जनः सर्वः ॥११॥

---

१ क. °डुवसन, ख. °डुमवन ।

तद्दैवकार्यं च स एव यशो यदश्रुपाता न पतन्ति राष्ट्रे ॥"

किञ्च।

सीयं खुहं पिवासं सहेमि जेसिं कए सयावि अहं। तेसिं तं घरसारं दारे य हढेण अवहरसि ॥१२॥
ता न तए मह कज्जं सज्जो रज्जं चएसु महतणयं। वर सुन्नच्चिय साला मा भरिया चोरचरडाणं॥१३॥
तो रायवयणवणदवगुरुयरजालावलीपलित्तंगो। कुमरो महणसमेओ चलिओ नयरं विमुत्तूण ॥१४॥
ता जा कम्मिवि नयरे तलायपालीए मुणिवरो तेण। दिट्ठो सिद्धसुएणं संवाहिज्जंतपयकमलो ॥१५॥
तं वंदिऊण सोवि हु उवविट्ठो तत्थ चिट्ठए जाव। ता तन्नयरपहाणं विलासिणीवंदमणुपत्तं ॥१६॥
एक्काए तो भणियं हला हला! पिच्छ पिच्छ अच्छरियं। नयणमहूसवभूयं रूवं एयस्स भिक्खुस्स॥१७॥
नियरूवगव्वियाए ता भणिया थुक्किऊण अन्नाए। चुंछियगल्लं एयं मा भत्तारं हला! कुणसु ॥१८॥
तं सुणिय सिद्धपुत्तो कुविओ गुरुपरिभवोत्ति कलिऊण। विज्जाबलेण तं लहु कुणइ मुणिं पइ सकाममणं॥
*अह सा पिच्छंतीणं अन्नाणं भणइ मुणिवरं सुहय!।* रहियाए तए पाया वहंति नो मह इओ गंतुं॥२०॥
इयराउ भणंति हला! दट्ठुमिमं थुक्कियस्स तुह तस्स। इय निव्वाणं जायं तो सा दीणाणणा भणइ॥
मा मह खयम्मि खारं खिवेह सहपंसुकीलिया होउं। मन्नावह किंतु इमं जलंजलिं देह वा मज्झ ॥२२॥
अह निविडपीडिया सा पडिया भूमीए विलवए सुबहुं। तो विज्जं संहरिउं सा भणिया सिद्धपुत्तेण॥२३॥
रमणीउ एस मन्नइ मायंगीउव्व जो अछिप्पाओ। ता तुह इत्थ किलेसो होही विफलो विरम तम्हा॥२४॥
किञ्च।

---

शीतं क्षुधं पिपासां सहे येषां कृते सदाप्यहम्। तेषां त्वं गृहसारं दारांश्च हठेनापहरसि ॥१२॥
तस्मान्न तव मम कार्यं सद्यो राज्यं त्यज मदीयम्। वरं शून्यैव शाला मा भृता चौरचरटैः ॥१३॥
ततो राजवचनवनदवगुरुतरज्वालावलीप्रदीप्ताङ्गः। कुमारो महनसमेतश्चलितो नगरं विमुच्य ॥१४॥
तावद्यावत्कस्मिन्नपि नगरे तडाकपाल्यां मुनिवरस्तेन। दृष्टः सिद्धसुतेन संवाह्यमानपदकमलः ॥१५॥
तं वन्दित्वा सोऽपि खलूपविष्टस्तत्र तिष्ठति यावत्। तावत्तन्नगरप्रधानं विलासिनीवृन्दमनुप्राप्तम् ॥१६॥
एकया ततो भणितं हला हला! पश्य पश्याश्चर्यम्। नयनमहोत्सवभूतं रूपमेतस्य भिक्षोः ॥१७॥
निजरूपगर्वितया तदा भणिता थूत्कृत्यान्यया। परिशोषितगल्लमेतं मा भर्तारं हला! कुरुष्व ॥१८॥
तच्छ्रुत्वा सिद्धपुत्रः कुपितो गुरुपरिभव इति कलयित्वा। विद्याबलेन तां लघु करोति मुनिं प्रति सकाममनसम् ॥
अथ सा पश्यतीष्वन्यासु भणति मुनिवरं सुभग!। रहितया त्वया पादौ वहतो नो ममेतो गन्तुम् ॥२०॥
इतरा भणन्ति हला! दृष्ट्वेमं थूत्कृतस्य तव तथ्यं। इदं निर्वाणं जातं ततः सा दीनानना भणति ॥२१॥
मा मम क्षते क्षारं क्षिपत सहपांशुक्रीडिता भूत्वा। मानयत किन्त्विमं जलाञ्जलिं दत्त वा मम ॥२२॥
अथ निबिडपीडिता सा पतिता भूमौ विलपति सुबहु। ततो विद्यां संहृत्य सा भणिता सिद्धपुत्रेण ॥२३॥
रमणीरेष मन्यते मातङ्गीरिव योऽस्पृश्याः। तस्मात्तवात्र क्लेशो भविष्यति विफलो विरम तस्मात् ॥२४॥

जइ तुह इत्थणुराओ मन्नसि अप्पाणमेयआयत्तं। ता कुण वयणमिमेसिं अविचलपरमत्थसुहजणयं॥२५॥
तो भणइ मुणिं वेसा जं कायव्वं मए तमाइसह। तो कहिउं संसारं दुक्खाणं खणिं मुणी तेसिं॥२६॥
वन्नइ मुत्तीए सुहं तीए उवायं जिणिंदधम्मं च। कहइ अहिंसारूवं तं च कसायाण परिहारा॥२७॥
मुक्कारंभाणं सो, विसयविरत्ताण सा पुण अवत्था। इच्चाइ पवंचेउं महव्वयाणुव्वए कहइ॥२८॥
सम्मत्तेणं सहिए, एयं च तेडट्ठिओ कुमारोवि। सुणिउं तप्परमत्थं मुणिउं च मुणिं पणमिऊण॥२९॥
भणइ अकारणवच्छल निच्छउम मुणिंद परमकारुणिय!। मोत्तुं विसयपिवासं जुत्तं तुह पासमणुसरिउं॥
किंतु समयंतरे तं होही तुहपयपसायओ नाह!। गिहिधम्मेण पसाओ ता किज्जउ मज्झ लहु इन्हिं॥३१॥
तन्निमित्तो महणोवि हु तहेव वेसा अणंगसेणावि। पत्थइ सावयधम्मं तव्वयणं सलहइ मुणीवि॥३२॥
पासट्ठियवेसाओ काओवि चयंति मज्जमंसाइं। साहम्मिउत्ति कुमरं अणंगसेणा गिहं नेइ॥३३॥
उवयरइ सबहुमाणं अह तीए सरूवमवितहं कहिउं। कुमरो जा चलइ पुरो ता सा सह चलइ तेणेव॥
तत्तो कमेण जंतेण तेण पत्तं पुरं पुरं नाम। पिउविसयसंधिदेसे देसे निववि[1]स्ससेणस्स॥३५॥
तत्थ सकलत्तमित्तो जा जिणभवणम्मि वंदए देवे। ता तप्पुराहिगारी समागओ तत्थ तम्मि खणे॥३६॥
जिणवरदंसणहेउं, दिट्ठो कुमरोवि तेण भत्तिवसा। रोमंचंचियगत्तो जिणबिंवनिविट्ठदिट्ठिजुओ॥३७॥
तो सो चिंतइ इमिणा आगारेणं न होइ सामन्नो। एस नरो, तन्निमित्तं तो पुच्छइ वाहराविउं॥३८॥

---

यदि तवात्रानुरागो मन्यस आत्मानमेतदायत्तम्। तदा कुरु वचनमेषामविचलपरमार्थसुखजनकम्॥२५॥
ततो भणति मुनिं वेश्या यत्कर्तव्यं मया तदादिशत। ततः कथयित्वा संसारं दुःखानां खनिं मुनिस्तासाम्॥
वर्णयति मुक्तेः सुखं तस्या उपायं जिनेन्द्रधर्मं च। कथयत्यहिंसारूपं तच्च कषायाणां परिहारात्॥२७॥
मुक्तारम्भाणां सः; विषयविरक्तानां सा पुनरवस्था। इत्यादि प्रपञ्च्य महाव्रताणुव्रतानि कथयति॥२८॥
सम्यक्त्वेन सहितानि, एतच्च तटस्थितः कुमारोऽपि। श्रुत्वा तत्परमार्थं ज्ञात्वा च मुनिं प्रणम्य॥२९॥
भणत्यकारणवत्सल निश्छद्मन् मुनीन्द्र परमकारुणिक!। मुक्त्वा विषयपिपासां युक्तं तव पार्श्वमनुसर्तुम्॥३०॥
किन्तु समयान्तरे तद् भविष्यति त्वत्पदप्रसादतो नाथ!। गृहिधर्मेण प्रसादस्तावत्क्रियतां मम लघ्विदानीम्॥
तन्निमित्तं महनोऽपि खलु तथैव वेश्याऽनङ्गसेनापि। प्रार्थयते श्रावकधर्मं तद्वचनं श्लाघते मुनिरपि॥३२॥
पार्श्वस्थितवेश्याः का अपि त्यजन्ति मद्यमांसानि। साधर्मिक इति कुमारमनङ्गसेना गृहं नयति॥३३॥
उपचरति सबहुमानमथ तस्यै स्वरूपमवितथं कथयित्वा। कुमारो यावच्चलति पुरस्तावत्सा सह चलति तेनैव॥
ततः क्रमेण याता तेन प्राप्तं पुरं पुरं नाम। पितृविषयसंधिदेशे देशे नृपविश्वसेनस्य॥३५॥
तत्र सकलत्रमित्रो यावज्जिनभवने वन्दते देवान्। तावत्तत्पुराधिकारी समागतस्तत्र तस्मिन्क्षणे॥३६॥
जिनवरदर्शनहेतोः, दृष्टः कुमारोऽपि तेन भक्तिवशात्। रोमाञ्चाञ्चितगात्रो जिनबिम्बनिविष्टदृष्टियुतः॥३७॥
ततः स चिन्तयत्यनेनाकारेण न भवति सामान्यः। एष नरः, तन्निमित्तं ततः पृच्छत्याहूय॥३८॥

---

१ क. तविठि°।

सोवि हु तव्वुत्तंतं जहट्ठियं साहए अहहिगारी । जोडियहत्थो कुमरं पत्थिय नियमंदिरं नेइ ॥३९॥
सम्माणइ सक्कारइ, इत्तो य जमालिपल्लिनाहेण । सुयअलियनरेसरविस्ससेणपंचत्तवत्तेण ॥४०॥
आगंतूणं रुद्धं तं पुरमित्तो जलं न तम्मज्झे । बाहिरजलं निरुद्धं परचक्केणं तओ लोओ ॥४१॥
अच्चंतमाउलत्तं पत्तो अहिगारिणं भणइ एवं । पुरमेयस्स समप्पह काऊण दयं उवरि अम्ह ॥४२॥
किंकायव्वविमूढो अहिगारी जाव चिट्ठए ताव । तो कुमरेणं भणियं एगंते, भणह लोयमिणं ॥४३॥
जह जं जुत्तं होही तं काहमहं पभायसमयम्मि । तो तेण तहेव कयं पच्छा कुमरं भणइ सोवि ॥४४॥
किं कायव्वमियाणि कुमरो तं भणइ जमिह कायव्वं । तं तुम्ह पभाएच्चिय कहियव्वं संपयं नेय ॥४५॥
तो रयणीए कुमरो पायारं लंघिऊण किरणेण । विज्जुक्खित्तेण गओ आवासे पल्लिनाहस्स ॥४६॥
तस्स य सयणट्ठाणं संचारिमकट्ठमेडयस्सुवरिं । तह चेव तत्थ चडिओ तं सुत्तं धरिय बाहाए ॥४७॥
भणइ अहं इत्थ पुरे जक्खो आरक्खगो य एयस्स । ता जइ इत्थ पभाए चिट्ठसि तो मरसि निब्भंतं ॥
इय भणिउं नामंकियमुद्दारयणं च तस्स हत्थाओ । घित्तुं तहेव किरणं दाऊणं जाइ सट्ठाणं ॥४९॥
पल्लिवईवि हु भीओ तक्खणमेव य पयाणयं देइ । कहिउं जहट्ठियं परियणस्स आसन्नवत्तिस्स ॥५०॥
अह अहिगारिचरावि हु पिच्छंता तं तहेव सुणिऊणं । साहंति तस्स सोवि हु हिट्ठो कुमरस्स तं कहइ ॥५१॥
पभणइ कुमरो पुन्नोदएण तुह जायमेयमह सोवि । कुमरंगुलीए पासइ मुद्दारयणं सुदिप्पंतं ॥५२॥
कोऊहलेण हत्थाउ तस्स गहिऊण तं पलोयंतो । पल्लीवइस्स नामं दट्ठुं रंजियमणो भणइ ॥५३॥

---

सोऽपि हि तद्वृत्तान्तं यथास्थितं कथयत्यधिकारी । योजितहस्तः कुमारं प्रार्थ्य निजमन्दिरं नयति ॥३९॥
सम्मानयति सत्कारयति, इतश्च जमालिपल्लीनाथेन । श्रुतालीकनरेश्वरविश्वसेनपञ्चत्ववार्तेन ॥४०॥
आगत्य रुद्धं तत्पुरमितो जलं न तन्मध्ये । बाह्यजलं निरुद्धं परचक्रेण ततो लोकः ॥४१॥
अत्यन्तमाकुलत्वं प्राप्तोऽधिकारिणं भणत्येवम् । पुरमेतस्मै समर्पयत कृत्वा दयामुपर्यस्माकम् ॥४२॥
किंकर्तव्यविमूढोऽधिकारी यावत्तिष्ठति तावत् । ततः कुमारेण भणितमेकान्ते, भणत लोकमिमम् ॥४३॥
यथा यद् युक्तं भविष्यति तत्करिष्येऽहं प्रभातसमये । ततस्तेन तथैव कृतं पश्चात्कुमारं भणति सोऽपि॥४४॥
किं कर्तव्यमिदानीं कुमारस्तं भणति यदिह कर्तव्यम् । तद् युष्माकं प्रभात एव कथयितव्यं सांप्रतं नैव॥४५॥
ततो रजन्यां कुमारः प्राकारं लङ्घित्वा किरणेन । विद्योत्क्षिप्तेन गत आवासे पल्लीनाथस्य ॥४६॥
तस्य च शयनस्थानं संचारिमकाष्ठमालाया उपरि । तथैव तत्र चटितस्तं सुप्तं धृत्वा बाहुना ॥४७॥
भणत्यहमत्र पुरे यक्ष आरक्षकश्चैतस्य । तस्माद् यद्यत्र प्रभाते तिष्ठसि ततो म्रियसे निर्भ्रान्तम् ॥४८॥
इति भणित्वा नामाङ्कितमुद्रारत्नं च तस्य हस्तात् । गृहीत्वा तथैव किरणं दत्त्वा याति स्वस्थानम् ॥४९॥
पल्लीपतिरपि खलु भीतस्तत्क्षणमेव च प्रयाणकं ददाति । कथयित्वा यथास्थितं परिजनस्यासन्नवर्तिनः ॥५०॥
अथाधिकारिचरा अपि हि पश्यन्तस्तत्तथैव श्रुत्वा । कथयन्ति तस्य सोऽपि हि हृष्टः कुमारस्य तत्कथयति॥५१॥
प्रभणति कुमारः पुण्योदयेन तव जातमेतदथ सोऽपि । कुमाराङ्गुल्यां पश्यति मुद्रारत्नं सुदीप्यमानम् ॥५२॥

तुह पुरिसरयण ! एसो ववसाओ साहसिक्करसियस्स । सो भणइ सच्चमेयं किंपुण तइयव्वयं भग्गं ॥५४॥
सो आह एवमेयं किंपुण साहम्मियम्मि वच्छल्लं । मइ तुम्भेहिं विहियं तं पुण उवयारि संजायं ॥५५॥
संघस्स परमभट्टारयस्स जिणनाहचेइयाणं च । तहवि इह संति गुरुणो, आलोइज्जउ इमं तेसिं ॥५६॥
कुमरेण तो तहेव य विहियं, इत्तो य विस्ससेणोवि । नरनाहो नीरोगो जाओत्ति समागया वत्ता ॥५७॥
पुव्वुत्तवइयरेणं पुरस्स अभयंति सह कुमारेण । निवविस्ससेणमंगलकरणत्थं जाइ अहिगारी ॥५८॥
कहइ कुमरस्सरूवं तं सोउं नरवरो विचिंतेइ । पुत्तरहियस्स पुत्तो एसोच्चिय होउ मह इन्हिं ॥५९॥
थूलाणवराहाणं जंतूण वहम्मि एस जं विरओ । तो विस्सासगयस्सवि मह अत्थि भयं न एयाओ ॥६०॥
इय तं जुवरायपए ठविय निक्खिवइ तम्मि रज्जभरं । उच्छप्पइ तस्संगाउ जिणमयं लद्धसम्मत्तो ॥६१॥
पुव्वुत्थाइयनरवरदेसे दंडाहिवं ठवइ महणं । तद्देसट्ठियचरडा रज्जंतरनियडदेसठियं ॥६२॥
लुंटंति जणं आणंति तद्धणं माणुसं च, महणो य । उच्छाहइ ते, तेवि य दिंति पयत्थाण छब्भागे ॥६३॥
सो लोहग्गहग्घत्थो न गणइ तइयव्वयस्स मालिन्नं । सीमालदेसराओवि जाणिउं चिंतइ, न देसं ॥६४॥
लूडावंतो गाही एसो तो घायगाओ सो महणं । ववरोयावइ, सोवि हु विहिऊणं तइयवयभंगं ॥६५॥
संचियपवरपयत्थेसु मुच्छिओ घायगम्मि अइकुद्धो । रुद्दज्झाणोवगओ पत्तो तचाए पुढवीए ॥६६॥
भमिही भवम्मि सुचिरं तम्हा तइयव्वयम्मि अइयारं । तक्करपओगरूवं वज्जह जइ महह सिवसोक्खं॥६७॥

---

कुतूहलेन हस्तात्तस्य गृहीत्वा तत्प्रलोकमानः । पल्लीपतेर्नाम दृष्ट्वा रञ्जितमना भणति ॥५३॥
तव पुरुषरत्न ! एष व्यवसायः साहसैकरसिकस्य । स भणति सत्यमेतत् किन्तु तृतीयव्रतं भग्नम् ॥५४॥
स आहैवमेतत् किन्तु साधर्मिकेऽपि वात्सल्यम् । मयि युष्माभिर्विहितं तत्पुनरुपकारि संजातम् ॥५५॥
संघस्य परमभट्टारकस्य जिननाथचैत्यानां च । तथापीह सन्ति गुरवः, आलोच्यतामिदं तेभ्यः ॥५६॥
कुमारेण ततस्तथैव च विहितम्, इतश्च विश्वसेनोऽपि । नरनाथो नीरोगो जात इति समागता वार्ता ॥५७॥
पूर्वोक्तव्यतिकरेण पुरस्याभयमिति सह कुमारेण । नृपविश्वसेनमङ्गलकरणार्थं यात्यधिकारी ॥५८॥
कथयति कुमारस्वरूपं तत् श्रुत्वा नरवरो विचिन्तयति । पुत्ररहितस्य पुत्र एष एव भवतु ममेदानीम् ॥५९॥
स्थूलानपराधानां जन्तूनां वध एष यद् विरतः । ततो विश्वासगतस्यापि ममास्ति भयं नैतस्मात् ॥६०॥
इति तं युवराजपदे स्थापयित्वा निक्षिपति तस्मिन्राज्यभरम् । उत्सर्पयति तत्सङ्गाज्जिनमतं लब्धसम्यक्त्वः ॥६१॥
पूर्वोत्थापितनरवरदेशे दण्डाधिपं स्थापयति महनम् । तद्देशस्थितचरटा राज्यान्तरनिकटदेशस्थितम् ॥६२॥
लुण्टन्ति जनमानयन्ति तद्धनं मानुषं च, महनश्च । उत्साहयति तान्, तेऽपि च ददति पदार्थानां षष्ठभागान् ॥
स लोभग्रहग्रस्तो न गणयति तृतीयव्रतस्य मालिन्यम् । सीमस्थदेशराजोऽपि ज्ञात्वा चिन्तयति, न देशम् ॥६४॥
लुण्टयन् स्थास्यत्येष ततो घातकात्स महनम् । व्यपरोपयति, सोऽपि खलु विधाय तृतीयव्रतभङ्गम् ॥६५॥
संचितप्रवरपदार्थेषु मूर्च्छितो घातकेऽतिक्रुद्धः । रौद्रध्यानोपगतः प्राप्तस्तृतीयायां पृथिव्याम् ॥६६॥

---

१ ग वावरोयावइ।

कुमरोवि रज्जधम्मं सुसाहुधम्मं च पालिउं सुचिरं। पत्तो ठाणं सासयमणंगसेणावि तह चेव ॥६८॥

॥ इति तृतीयाणुव्रते द्वितीयातिचारविपाके महनकथा समाप्ता ॥

---

भ्रमिष्यति भवे सुचिरं तस्मात् तृतीयव्रतेऽतिचारम्। तस्करप्रयोगरूपं वर्जयत यदि काङ्क्षत शिवसौख्यम्॥६७॥
कुमारोऽपि राज्यधर्मं सुसाधुधर्मं च पालयित्वा सुचिरम्। प्राप्तः स्थानं शाश्वतमनङ्गसेनापि तथैव ॥६८॥



नियनिवविरुद्धरज्जे वाणिज्जं उदयणोव्व जो कुणइ । तइयव्वयमइयरंतो सो लहइ धणतणुविणासं च ॥१॥
तथाहि:—
बहुमुणिपयसुपवित्तं सत्तरिसिनिसेवियं नहं हसइ । जं बहुबुहमेगबुहं तं नयरं अत्थि सिवभद्दं ॥२॥
बहुकणओ सुरयणसेविओ य सनंदणो सुरगिरिव्व । तत्थत्थि थिरपगई सिट्ठी रयणायरो नाम ॥३॥
तस्सत्थि वहू सुरसुंदरिव्व थिरजुव्वणा कणयकंती । अणमिसनयणा बहुविबुहसंमया सुंदरी नाम ॥४॥
ताण तणओ विणीओ विणयातणउव्व सउणकयसेवो । नामेण रायपालो सव्वासु कलासु अइकुसलो॥५॥
कणयद्धयसिट्ठिसुओ तम्मित्तं उदयणोत्ति विक्खाओ । तेण समं सो कीलइ सरिसरआराममाईसु ॥६॥
अह दिट्ठा वरबाला कीलंतेहिं नईए अन्नदिणे । जलदेवयव्व दिव्वंगसंगया सारलंकारा ॥७॥
कट्ठविलग्गं मज्जणनिम्मज्जणेहिं मयंव अप्पाणं । मन्नंती दूराओ दट्ठूणं ते इमं भणइ ॥८॥
मरणभयभीरुयाए सरणविहूणाए दीणवयणाए । देह मह पाणभिक्खं मोवेक्खह, तो खणद्धेण ॥९॥
उत्तारिऊण तेहिं नइप्पवाहाओ पुच्छिया एवं । का सि तुमं को हेऊ इहागमे, कहइ सा एवं ॥१०॥
अत्थि नयरं पसिद्धं सिद्धेसरनामयं, धणसमिद्धो । तत्थ वणी गुणसेणो तब्भज्जा जयसिरी नाम॥
सत्तसुयाणं उवरिं जाया उवजाइएहिं तेसिमहं । अइवल्लहत्ति काउं दुल्लहदेवी कयं नाम ॥१२॥
अह जुव्वणपत्ताए वणिपुत्ता इंति मज्झ वरणत्थं । नाहं मन्नेमि तए भणियावि हु अम्मयाईहिं ॥१३॥
सावयकुले पसूया अणवरयं साहुसंगपरया य । लहुकम्मयावसेणं नाहं मणसावि गिहिवासं ॥१४॥

---

निजनृपविरुद्धराज्ये वाणिज्यमुदयन इव यः करोति । तृतीयव्रतमतिचरन् स लभते धनतनुविनाशं च ॥१॥
बहुमुनिपदसुपवित्रं सप्तर्षिनिषेवितं नभो हसति । यद् बहुबुधमेकबुधं तन्नगरमस्ति शिवभद्रम् ॥२॥
बहुकनकः सुरत्न [ जन ] सेवितश्च सनन्दनः सुरगिरिरिव । तत्रास्ति स्थिरप्रकृतिः श्रेष्ठी रत्नाकरो नाम ॥३॥
तस्यास्ति वधूः सुरसुन्दरीव स्थिरयौवना कनककान्तिः । अनिमिषनयनी बहुविबुधसंमता सुन्दरी नाम ॥४॥
तयोस्तनयो विनीतो विनतातनय इव सगुण[ कुन ]कृतसेवः । नाम्ना राजपालः सर्वासु कलास्वतिकुशलः ॥५॥
कनकध्वजश्रेष्ठिसुतस्तन्मित्रमुदयन इति विख्यातः । तेन समं स क्रीडति सरित्सरआरामादिषु ॥६॥
अथ दृष्टा वरबाला क्रीडद्भ्यां नद्यामन्यदिने । जलदेवतेव दिव्याङ्गसंगता सारालङ्कारा ॥७॥
काष्ठविलग्नं मज्जननिमज्जनैर्मृतमिवात्मानम् । मन्यमाना दूराद् दृष्ट्वा ताविदं भणति ॥८॥
मरणभयभीरोः शरणविहीनाया दीनवदनायाः । दत्तं मम प्राणभिक्षां मोपेक्षाथां, ततः क्षणार्धेन ॥९॥
उत्तार्य ताभ्यां नदीप्रवाहात् पृष्टैवम् । काऽसि त्वं को हेतुरिहागमे, कथयति सैवम् ॥१०॥
अस्ति नगरं प्रसिद्धं सिद्धेश्वरनामकं, धनसमृद्धः । तत्र वणिग् गुणसेनस्तद्भार्या जयश्रीर्नाम ॥११॥
सप्तसुतानामुपरि जातोपयाचितैस्तयोरहम् । अतिवल्लभेति कृत्वा दुर्लभदेवी कृतं नाम ॥१२॥
अथ यौवनप्राप्ताया वणिक्पुत्रा आयन्ति मम वरणार्थम् । नाहं मन्ये तान् भणितापि अम्बादिभिः ॥१३॥
श्रावककुले प्रसूताऽनवरतं साधुसंगमरता च । लघुकर्मतावशेन नाहं मनसापि गृहिवासम् ॥१४॥

पत्थेमि संजमं चिय परं पिया नेहपरवसो मज्झ । न विसज्जइ तो य अहं सावयधम्मंपि पालेमि ॥१५॥
सुहलालिया पिऊहिं चिट्ठेमि गिहम्मि, अन्नया चलिया । जिणभवणे ता दिट्ठा ठक्कुरपुत्ताण जुयलेण ॥
एक्केण तओ भणिया मयच्छि ! पसिऊण मं पलोएसु । तुहदिट्ठिअमयवुट्ठीए छंटिओ निव्वुओ होमि ॥
बीएण पुणो भणिया जइ सच्चं साविया दयपहाणा । ता मं मोत्तुं अन्नो मणसावि न पत्थणिज्जो ते॥१८॥
अन्नह कए य नियमा मम पाणा पविसिहंति परलोए । इअ असमंजसवयणे सोऊणं ताण वेगेण ॥१९॥
जिणभवणं तो पत्ता पूएवि विहीए वंदिउं देवे । चलिया जाव गिहं पइ ता मग्गं वंधिउं दोवि ॥२०॥
थक्का य, ते य दट्ठुं नट्ठा उम्मग्गओ गया दूरं । पिट्ठीए तेवि दिट्ठा आगच्छंता तुरियतुरियं ॥२१॥
तो हं संकरगेहे पविसेउं बंधिऊण तद्दारं । जाव ठिया ता तेवि हु परोप्परं जुज्झिउं लग्गा ॥२२॥
पभणइ एगो मह भारिया इमा बीयओ भणइ मज्झ । तो पढमेण खग्गेण आहओ सोवि बीएण॥२३॥
इय असमंजसमेयं नाउं उग्घाडिऊण तद्दारं । अवलोइया मए ते दुन्निवि दिट्ठा गयप्पाणा ॥२४॥
तो चिंतियं अहं चिय हद्धी मरणस्स कारणमिमेसिं । संजाया अहवा मोहविलसियं मज्झ को दोसो ? ॥
असुईरसनिज्झरणे हड्डुक्करडम्मि चम्मनसनद्धे । को नाम किमिं मोत्तुं रमेइ देहम्मि रमणीणं ? ॥२६॥
कामिणिनियंवबिंबं कंदप्पविलासरायहाणिन्ति । न मुणइ अमेज्झपोट्टं अहह अहो ! मोहमाहप्पं ॥२७॥
तिवलीतरंगसंगयनाहिं रमणीण अमयकुंडंति । मन्नंति न उण नीसंखदुक्खलक्खखणिं मूढा ॥२८॥

---

प्रार्थये संयममेव परं पिता स्नेहपरवशो मम । न विसृजति ततश्चाहं श्रावकधर्ममपि पालयामि ॥१५॥
सुखलालिता पितृभ्यां तिष्ठामि गृहे, अन्यदा चलिता । जिनभवने तदा दृष्टा ठक्कुरपुत्रयोर्युगलेन ॥१६॥
एकेन ततो भणिता मृगाक्षि ! प्रसद्य मां प्रलोकय । त्वद्दृष्ट्यमृतवृष्टयोक्षितो निर्वृतो भवामि ॥१७॥
द्वितीयेन पुनर्भणिता यदि सत्यं श्राविका दयाप्रधाना । तदा मां मुक्त्वाऽन्यो मनसापि न प्रार्थनीयस्ते ॥१८॥
अन्यथा कृते च नियमान्मम प्राणाः प्रवेक्ष्यन्ति परलोके । इत्यसमञ्जसवचनानि श्रुत्वा तयोर्वेगेन ॥१९॥
जिनभवनं ततः प्राप्ता पूजयित्वा विधिना वन्दित्वा देवान् । चलिता यावद् गृहं प्रति तावन्मार्गं बद्ध्वा द्वावपि॥२०॥
स्थितौ च, तौ च दृष्ट्वा नष्टोन्मार्गतो गता दूरम् । पृष्ठे तावपि दृष्टावागच्छन्तौ त्वरितत्वरितम् ॥२१॥
ततोऽहं शङ्करगेहे प्रविश्य बद्ध्वा तद्द्वारम् । यावत्स्थिता तावत्तावपि हि परस्परं योद्धुं लग्नौ ॥२२॥
प्रभणत्येको मम भार्येयं द्वितीयो भणति मम । ततः प्रथमेन खड्गेन हतः सोऽपि द्वितीयेन ॥२३॥
इत्यसमञ्जसमेतज्ज्ञात्वोद्घाट्य तद्द्वारम् । अवलोकितौ मया तौ द्वावपि दृष्टौ गतप्राणौ ॥२४॥
ततश्चिन्तितमहमेव हा धिग् मरणस्य कारणमनयोः । संजाताऽथवा मोहविलसितं मम को दोषः ॥२५॥
अशुचिरसनिर्झरणेऽस्थिविष्ठाराशौ चर्मनसनद्धे । को नाम कृमिं मुक्त्वा रमते देहे रमणीनाम् ? ॥२६॥
कामिनीनितम्बबिम्बं कन्दर्पविलासराजधानीमिति । न जानात्यमेध्यपोट्टलीमहह अहो ! मोहमाहात्म्यम् ॥२७॥
त्रिवलीतरङ्गसंगतनाभिं रमणीनाममृतकुण्डमिति । मन्यन्ते न पुनर्निःसंख्यदुःखलक्षखनिं मूढाः ॥२८॥

---

१ क ख. पेमप०।

एवंपि इमे दट्ठुं मं मूढा जह मया तहन्नेवि । मा मुज्झंतु मरंतु य चिंतिय पडिया नईए अहं ॥२९॥
पच्छा पुणो विचिंतियमहह ! महापावमेयमायरियं । अप्पाणम्मि परम्मि य वहो निसिद्धो जिणिंदेहिं ॥
इय मरणभीरुया हं तुम्हाणं दिट्ठिगोयरं पत्ता । निक्कारणकरुणारसपरेहिं जीवाविया एवं ॥३१॥
तो तेहिं सा भणिया भइणी अम्हाण तं महाभागे ! । आगच्छ गिहे पच्छा पिऊण पासे नइस्सामो॥३२॥
तो तेहिं समं रयणायरस्स सिट्ठिस्स सा गिहं पत्ता । कहिया य तस्स वत्ता तेण कया उचियपडिवत्ती॥३३॥
भणिओ तत्तो तीए सिट्ठी रयणायरो मह पिऊणं । होइ अधिई, तेसिं तो जाणावह मह सरूवं ॥३४॥
तेणावि तहेव कयं सावि पुणो तम्मि चेव समयम्मि । न गया 'इमाइं धम्मे ठावेमी' इय विचिंतेउं॥३५॥
गिहिधम्मं तो तीए सम्मं जाणावियाइं सव्वाइं । तेहिवि सो सत्तीए पडिवन्नो सुगुरुमूलम्मि ॥३६॥
तज्जणयाइं तत्थागयाइं थेवेहिं चेव दियहेहिं । गउरवियाइं रयणायरेण कहियं च तेसिमिमं ॥३७॥
तुम्ह विओए तुम्हं सुयाए अम्हाण सफलिओ जम्मो । जिणधम्मपयाणेणं, इमं च सच्चं कयं वयणं ॥३८॥
"यद्यपि विपदि विनश्यति परमुपकुरुते तथापि खलु सुजनः । स्वयमगुरुर्दह्यन्न[?]पि समीपलोकं तु सुरभयति॥"
तो तीसे पियराइं चिंतंति जहा इमीए विसएसुं । गिद्धिं जणइस्सामो आसामित्तं इमं अम्ह ॥३९॥
जा इय अन्नंपि जणं विसएसु विरंजई ठवइ धम्मे । तीसे सयमासत्ती विसएसु कओ इह भवम्मि ?॥४०॥
इत्तो य सा पयंपइ चलणेसुं पणमिऊण पियराण । किज्जउ मे अणुकंपा दिक्खा दाविज्जउ इहेव ॥४१॥
जं मह एयावत्था मरणस्स निबंधणं वरायाणं । संजाया तेसिमहं, विवेयवियलत्तणेणं च ॥४२॥

---

एवमपीमौ दृष्ट्वा मां मूढौ यथा मृतौ तथान्येऽपि । मा मुह्यन्तु म्रियन्तां च चिन्तयित्वा पतिता नद्यामहम् ॥
पश्चात् पुनर्विचिन्तितमहह ! महापापमेतदाचरितम् । आत्मनः परस्य च वधो निषिद्धो जिनेन्द्रैः ॥३०॥
इति मरणभीरुरहं युवयोर्दृष्टिगोचरं प्राप्ता । निष्कारणकरुणारसपराभ्यां जीवितैवम् ॥३१॥
ततस्ताभ्यां सा भणिता भगिन्यावयोस्त्वं महाभागे ! । आगच्छ गृहे पश्चात् पित्रोः पार्श्वे नेष्यावः ॥३२॥
ततस्ताभ्यां समं रत्नाकरस्य श्रेष्ठिनः सा गृहं प्राप्ता । कथिता च तस्य वार्ता तेन कृतोचितप्रतिपत्तिः ॥३३॥
भणितस्ततस्तया श्रेष्ठी रत्नाकरो मम पित्रोः । भवत्यधृतिः, तौ तस्माज्ज्ञापय मम स्वरूपम् ॥३४॥
तेनापि तथैव कृतं सापि पुनस्तस्मिन्नेव समये । न गता 'इमान् धर्मे स्थापयामि' इति विचिन्त्य ॥३५॥
गृहिधर्मं ततस्तया सम्यग् ज्ञापिताः सर्वे । तैरपि स शक्त्या प्रतिपन्नः सुगुरुमूले ॥३६॥
तज्जननीजनकौ तत्रागतौ स्तोकैरेव दिवसैः । गौरवितौ रत्नाकरेण कथितं च तयोरिदम् ॥३७॥
युवयोर्वियोगे युवयोः सुतयाऽस्माकं सफलितं जन्म । जिनधर्मप्रदानेन, इदं च सत्यं कृतं वचनम् ॥३८॥
ततस्तस्याः पितरौ चिन्तयतो यथाऽस्या विषयेषु । गृद्धिं जनयिष्याम आशामात्रमिदमस्माकम् ॥३९॥
यैत्यन्यमपि जनं विषयेषु विरञ्जयति स्थापयति धर्मे । तस्याः स्वयमासक्तिर्विषयेषु कुत इह भवे ? ॥४०॥
इतश्च सा प्रजल्पति चरणौ प्रणम्य पित्रोः । क्रियतां मय्यनुकम्पा दीक्षा दाप्यतामिहैव ॥४१॥
यद् ममैतदवस्था मरणस्य निबन्धनं वराकयोः । संजाता तयोरहं, विवेकविकलत्वेन च ॥४२॥

तुम्मेहिं पालिओ लालिओ य देहो भवुब्भवदुहाणं। निट्ठावणे समत्थो नईए खित्तो, तओ एए ॥४३॥
जइ नो उत्तारिंता तो हं मरिऊण बालमरणेण। भवअडविदुक्खलक्खाण भायणं आसि संपत्ता ॥४४॥
तो जंपइ तीए पिया विवेयकुलमंदिरं सुयं वच्छे!। अम्हंपि हु सुगुरूणं वयणमियं परिणयं इण्हिं॥४५॥
"शब्दाद्याः सुमनोरमाः प्रियमनो रम्यः प्रभुत्वोज्ज्वला लक्ष्मीरित्यनुभावयन्किल हितोऽस्म्यस्येति बुद्ध्या जनः।
नो मित्रं परमार्थतो भवदवज्वालाकरालीकृतं सिञ्चन्नेव घृतैरिमैः, स हि सुहृद्योऽस्माद् बहिर्मुञ्चति ॥"
ता वच्छाए सहलं काउं अब्भत्थणं पवत्तेमो। इह अम्हे अप्पाणं, किंतु तहिं सयणवग्गस्स ॥४६॥
तुह असमसीलसुविवेयवयणविणएहिं रंजियमणस्स। सहसा अदंसणेणं अरइसमुद्दे निमग्गस्स ॥४७॥
होइ तरंडं तुह चेव दंसणं, ता तहिं लहु एहि। काहमहं गयमित्तो सहलं तुह वंछियं वच्छे! ॥४८॥
अह रयणायरसिट्ठिं नयरे सिद्धेसरम्मि गमणत्थं। आपुच्छइ गुणसेणो सिट्ठी तो सो भणइ एवं ॥४९॥
धम्मे ठावंतीए दुल्लहदेवीए कप्पतरुकप्पे। पसुणोव्वि य अम्हे माणुसत्तणं पाविया जम्हा ॥५०॥
उक्तं च;—

"आहारनिद्राभयमैथुनानि तुल्यानि सार्धं पशुभिर्नराणाम्।
ज्ञानं विशेषः पशुमानुषाणां ज्ञानेन हीनाः पशवो मनुष्याः ॥"

इय वयणविणयपुव्वं वत्थाहरणेहिं रइयसम्माणं। तेणं विसज्जियाइं पत्ताइं ताइं तत्थ पुरे ॥५१॥
दुल्लहदेवी दिक्खं घित्तूणं सुगुरुपायमूलम्मि। एक्कारस अंगाइं अहिज्जिउं विहरिउं च चिरं ॥५२॥
केवलनाणं उप्पाडिऊण उत्तारिउं बहुं लोयं। संसारसायराओ संपत्ता सासयं ठाणं ॥५३॥
इत्तो य सिट्ठी रयणायरोवि अंगीकयम्मि गिहिधम्मे। उज्जमइ कुडुंबजुओ तस्स सुओ रायपालोवि॥५४॥

---

युष्माभिः पालितो लालितश्च देहो भवोद्भवदुःखानाम्। निष्ठापने समर्थो नद्यां क्षिप्तः, तत एतौ ॥४३॥
यदि नो उदतारयिष्यतां ततोऽहं मृत्वा बालमरणेन। भवाटवीदुःखलक्षाणां भाजनमभविष्यं संप्राप्ता ॥४४॥
ततो जल्पति तस्याः पिता विवेककुलमन्दिरं सुतां वत्से!। अस्माकमपि सुगुरूणां वचनमिदं परिणतमिदानीम् ॥
तस्माद् वत्सायाः सफलं कर्तुमभ्यर्थनं प्रवर्तयामः। इह वयमात्मानं, किन्तु तत्र स्वजनवर्गस्य ॥४६॥
तवासमशीलसुविवेकवचनविनयै रञ्जितमनसः। सहसाऽदर्शनेनाऽरतिसमुद्रे निमग्नस्य ॥४७॥
भवति तरण्डं तवैव दर्शनं, तस्मात्तत्र लघ्वेहि। करिष्याम्यहं गतमात्रः सफलं तव वाञ्छितं वत्से! ॥४८॥
अथ रत्नाकरश्रेष्ठिनं नगरे सिद्धेश्वरे गमनार्थम्। आपृच्छते गुणसेनः श्रेष्ठी ततः स भणत्येवम् ॥४९॥
धर्मे स्थापयन्त्या दुर्लभदेव्या कल्पतरुकल्पे। पशवोऽपि च वयं मानुषत्वं प्रापिता यस्मात् ॥५०॥
इतिवचनविनयपूर्वं वस्त्राभरणै रचितसम्मानम्। तेन विसृष्टाः प्राप्तास्ते तत्र पुरे ॥५१॥
दुर्लभदेवी दीक्षां गृहीत्वा सुगुरुपादमूले। एकादशाङ्गान्यधीत्य विहृत्य च चिरम् ॥५२॥
केवलज्ञानमुत्पाद्योत्तार्य बहुं लोकम्। संसारसागरात् संप्राप्ता शाश्वतं स्थानम् ॥५३॥

---

१ ख °पत्ता।

तस्संसगाओ उदयणोवि उज्जमइ धम्मकज्जेसु । ववहारंपि हु पायं कुणंति ते दोवि सममेव ॥५५॥
अह अन्नया पयट्टे पोयणपुररायसयलदेसम्मि । दुब्भिक्खे अइघोरे, सिवभद्दपुरे सदेसे उ ॥५६॥
सव्वत्थ सुभिक्खेच्चिय तद्देसनराहिवेण सव्वोवि । लोओ भणाविओ जइ माणयमिक्कंपि धन्नस्स ॥५७॥
पोयणपुरदेसम्मी जो पेसिस्सइ वणी अहं तस्स । काहामि महादंडं तहेव सव्वस्सअवहरणं ॥५८॥
इय जाणिउंपि धन्नं पच्छन्नं उदयणो तहिं देसे । पेसइ वणिउत्तेहिं तं नायं रायपालेण ॥५९॥
तो भणइ उदयणं सो तुज्झ न जुत्तं विरुद्धरज्जम्मि । ववहरिउं ता संहर जइ सुमरसि निवइणो आणं॥६०॥
किञ्च ।
जम्हा तइयवयम्मी एवं अइयारमायरंतस्स । होही धम्मविरुद्धं कोवाओ तह नरिंदस्स ॥६१॥
अत्थब्भंसो माणस्स खंडणं जीवियस्स संदेहो । अहमजणाणं कीला पीला तह सयणवग्गस्स ॥६२॥
इअ वारिओवि विरमइ जाव न सो नरवरेण तो नाओ । अवहरिउं सव्वस्सं निज्जंतो वज्झठाणम्मि॥६३॥
किच्छेण रायपालेण मोइओ नरवराओ करुणाए । तो मरिउमपडिक्कंतो भमिही भवसायरे सुचिरं॥६४॥
गिहिधम्मं परिपालिय रयणायरसावयस्सवि कुडुंबं । लद्धसुदेवत्तसुमाणुसत्तमचिरा सिवं पत्तं ॥६५॥

॥ इति तृतीयाणुव्रते विरुद्धराज्यातिक्रमातिचारे उदयनकथानकं समाप्तम् ॥

---

इतश्च श्रेष्ठी रत्नाकरोऽप्यङ्गीकृते गृहिधर्मे । उद्यच्छति कुटुम्बयुतस्तस्य सुतो राजपालोऽपि ॥५४॥
तत्संसर्गादुदयनोऽप्युद्यच्छति धर्मकार्येषु । व्यवहारमपि हि प्रायः कुरुतस्तौ द्वावपि सममेव ॥५५॥
अथान्यदा प्रवृत्ते पोतनपुरराजसकलदेशे । दुर्भिक्षेऽतिघोरे शिवभद्रपुरे स्वदेशे तु ॥५६॥
सर्वत्र सुभिक्ष एव तद्देशनराधिपेन सर्वोऽपि । लोको भाणितो यथा माणकमेकमपि धान्यस्य ॥५७॥
पोतनपुरदेशे यः प्रेषयिष्यति वणिगहं तस्य । करिष्यामि महादण्डं तथैव सर्वस्वापहरणम् ॥५८॥
इति ज्ञात्वापि धान्यं प्रच्छन्नमुदयनस्तत्र देशे । प्रेषयति वणिक्पुत्रैस्तज्ज्ञातं राजपालेन ॥५९॥
ततो भणत्युदयनं स तव न युक्तं विरुद्धराज्ये । व्यवहर्तुं तस्मात्संहर यदि स्मरसि नृपतेराज्ञाम् ॥६०॥
यस्मात् तृतीयव्रत एवमतिचारमाचरतः । भविष्यति धर्मविरुद्धं कोपात् तथा नरेन्द्रस्य ॥६१॥
अर्थभ्रंशो मानस्य खण्डनं जीवितस्य संदेहः । अधमजनानां क्रीडा पीडा तथा स्वजनवर्गस्य ॥६२॥
इति वारितोऽपि विरमति यावन्न स नरवरेण ततो ज्ञातः । अपहृत्य सर्वस्वं नीयमानो वध्यस्थाने ॥६३॥
कृच्छ्रेण राजपालेन मोचितो नरवरात् करुणया । ततो मृत्वाऽप्रतिक्रान्तो भ्रमिष्यति भवसागरे सुचिरम् ॥
गृहिधर्मं परिपाल्य रत्नाकरश्रावकस्यापि कुटुम्बम् । लब्धसुदेवत्वसुमानुषत्वमचिराच्छिवं प्राप्तम् ॥६५॥

जो तइयव्वयधारी कूडतुलाईहिं कुणइ ववहारं। इह परभवे य दुक्खं वरुणोव्व स पावइ अवस्सं ॥१॥
तथाहि;—
महुमहदेहंव सुवन्नसंगयं तह य पवरगयठाणं। इह भरहम्मि पसिद्धं नयरं नामेण मणिखेडं ॥२॥
हरिविक्कमाभिहाणो तं पालइ नरवरो गयंदुव्व। अणवरयदाणपसरो तब्भज्जा चंदलेहत्ति ॥३॥
तम्मि पुरे पुरजिट्ठो सिट्ठी नामेण देवसेणोत्ति। भज्जा विजयभिहाणा वरुणो नामेण ताण सुओ ॥४॥
से य कलाकुलभवणंपि भवणओ पिउवणे तहोववणे। परिभमइ मित्तकलिओ विरइअलीलो अणत्थेसु॥
अह जणदयाए रन्ना पयट्टियं हट्टमज्झयारम्मि। सिरिभरहचक्कवट्टिस्स नाडयं तं च वरुणोवि ॥६॥
जा पिच्छिउं पयत्तो लिखयपुत्तेण ता तहिं समए। आयंसगिहपवेसो भरहनरिंदस्स सच्चविओ ॥७॥
तत्थ अलंकारविभूसियं नियतणुं पलोयमाणो अ। गलियम्मि अंगुलीए गयसोहं अंगुलिं दट्ठुं ॥८॥
जह मुक्कालंकारो विगलियसोहं नियं तणुं दट्ठुं। संसारे वत्थूणं मन्नंतो कित्तिमं सोहं ॥९॥
वेरग्गमग्गपत्तो खणेण उप्पन्नकेवलन्नाणो। देवयअप्पियलिंगो नमंसिओ जह सुरिंदेण ॥१०॥
निग्गममणो उ जहा भवणाओ अणुगओ नरवराणं। पंचहिं सएहिं सद्धिं तह दट्ठुं अभिणइज्जंतं ॥
सोउं च सवेरग्गे वयणे संवेगरंगसालाए। पविसइ विवेयवसओ तो पुच्छइ सुत्तहारं सो ॥१२॥
एएहिं महासत्तेहिं अणुगओ भरहसामिणो मग्गो। निस्सत्ताणं अम्हारिसाण किं अत्थि कावि गई?॥१३॥
अत्थित्ति भणिय तेणं सम्मत्ताई दुवालसविहोवि। कहिओ गिहियम्मो अहिगओ य वरुणेण सह पिउणा॥

---

यस्तृतीयव्रतधारी कूटतुलादिभिः करोति व्यवहारम्। इह परभवे च दुःखं वरुण इव स प्राप्नोत्यवश्यम्॥१॥
मधुमथदेहमिव सुवर्णसंगतं तथा च प्रवरगज [गदा] स्थानम्। इह भरते प्रसिद्धं नगरं नाम्ना मणिखेटम्॥२॥
हरिविक्रमाभिधानस्तत्पालयति नरवरो गजेन्द्र इव। अनवरतदानप्रसरस्तद्भार्या चन्द्रलेखेति ॥३॥
तस्मिन्पुरे पुरज्येष्ठः श्रेष्ठी नाम्ना देवसेन इति। भार्या विजयाभिधाना वरुणो नाम्ना तयोः सुतः ॥४॥
स च कलाकुलभवनमपि भवनतः पितृवने तथोपवने। परिभ्रमति मित्रकलितो विरचितलीलोऽनर्थेषु ॥५॥
अथ जनदयया राज्ञा प्रवर्तितं हट्टमध्ये। श्रीभरतचक्रवर्तिनो नाटकं तच्च वरुणोऽपि ॥६॥
यावद् द्रष्टुं प्रवृत्तो लिङ्खकपुत्रेण तावत्तत्र समये। आदर्शगृहप्रवेशो भरतनरेन्द्रस्य सत्यापितः ॥७॥
तत्रालंकारविभूषितां निजतनूं प्रलोकमानश्च। गलितेऽङ्गुलीये गतशोभामङ्गुलिं दृष्ट्वा ॥८॥
यथा मुक्तालङ्कारो विगलितशोभां निजां तनूं दृष्ट्वा। संसारे वस्तूनां मन्यमानः कृत्रिमां शोभाम् ॥९॥
वैराग्यमार्गप्राप्तः क्षणेनोत्पन्नकेवलज्ञानः। देवतार्पितलिङ्गो नमस्यितो यथा सुरेन्द्रेण ॥१०॥
निर्गच्छंस्तु यथा भवनादनुगतो नरवराणाम्। पञ्चभिः शतैः सार्धं तथा दृष्ट्वाऽभिनीयमानम् ॥११॥
श्रुत्वा च सवैराग्याणि वचनानि संवेगरङ्गशालायाम्। प्रविशति विवेकवशतस्ततः पृच्छति सूत्रधारं सः॥१२॥
एतैर्महासत्त्वैरनुगतो भरतस्वामिनो मार्गः। निःसत्त्वानामस्मादृशां किमस्ति कापि गतिः?॥१३॥

---

१ क. तओ य वणे। २ ग. °सियंगमप्पं प°।

अह वुड्ढत्ते पिउणो ववहरइ सयंपभो स हट्टम्मि । विढवइ य तत्तियं जत्तिएण निव्वहइ सकुडुंबो ॥१५॥
किंपुण इड्ढीपत्ते अन्ने दट्ठुं जणम्मि गउरविए । द्रविणपिवासानडिओ परिवडिओ सुद्धभावाओ ॥१६॥
गरुयाए लेइ लहुयाए देइ तोलेवि तुलाए धरिमाइ । कणनेहमप्पएहिवि तह काउं ववहरइ वरुणो ॥१७॥
जणएण वारिओवि हु नो विरमइ कहइ सोवि दिट्ठंतं । जह वच्छ ! सालिगामे निवसइ वणिओ धणो नाम॥
पगईइवि सो सच्चो ववहरए तह य अप्पलाभेण । जाया इयप्पसिद्धी हट्टे मोत्तूण तो अन्ने ॥१९॥
ववहरइ तस्स हट्टे लोओ भुत्तुंपि सो य कट्ठेण । लहइ जणाओ तो भणइ मज्झ हट्टं न इह एक्कं ॥२०॥
ता चयह मज्झ पुट्ठिं पज्जत्तं मज्झ अहियलाभेण । परमन्नभोयणंपि हु अइमत्तं जणइ उव्वेयं ॥२१॥
एवं जंपतस्सवि विरमइ लोओ न तस्स हट्टाओ । बहुययरो आगच्छइ मोत्तुं सेसाणि हट्टाणि ॥२२॥
तं सोउं संनिहिया वणिणो जंपंति जह अहो लोया ! । इय तज्जियावि न मुयह किं दुत्तुंडस्स तं हट्टं ? ॥
एसोवि ताव वणिज्जं करेइ लाहत्थमेव नहु इहरा । न विणा कयाणगेणं मुल्लं अम्हेवि घिच्छामो॥२४॥
तो पडिभणियं केहिवि तोलंतमवितएहिं तुब्भेहिं । चोरेहिं जणो मुसिओ सव्वो वणिवेसधारीहिं॥२५॥
सच्चेण ववहरंतो एस दुत्तुंडोवि वल्लहो अम्ह । उवजीविज्जइ कडुयंपि ओसहं समइ जं रोगं ॥२६॥
तं सोउं सविसेसं धणम्मि ते मच्छरं परिवहंता । छिड्डं सव्वत्थ गवेसयंति न लहंति थेवंपि ॥२७॥
अह तम्मज्झे केणवि दिट्ठं अहिणवमयं लहुं डिंभं । तो तेहिं अन्नेहिं सह मंतिवि कावि आहीरी॥२८॥

---

अस्तीति भणित्वा तेन सम्यक्त्वादिर्द्वादशविधोऽपि । कथितो गृहिधर्मोऽधिगतश्च वरुणेन सह पित्रा ॥१४॥
अथ वृद्धत्वे पितुर्व्यवहरति स्वयंप्रभः स हट्टे । अर्जयति च तावद् यावता निर्वहति सकुटुम्बः ॥१५॥
किन्तु ऋद्धिप्राप्तानन्यान् दृष्ट्वा जने गौरवितान् । द्रविणपिपासानटितः परिपतितः शुद्धभावात् ॥१६॥
गुर्व्या लाति लघ्व्या ददाति तोलयित्वा तुलया धरिमादि । कणस्नेहमापकैरपि तथा कृत्वा व्यवहरति वरुणः ॥
जनकेन वारितोऽपि खलु नो विरमति कथयति सोऽपि दृष्टान्तम् । यथा वत्स ! शालिग्रामे निवसति वणिग्धनो नाम॥
प्रकृत्याऽपि स सत्यो व्यवहरते तथा चाल्पलाभेन । जातेति प्रसिद्धिर्हट्टान् मुक्त्वा ततोऽन्यान् ॥१९॥
व्यवहरति तस्य हट्टे लोको भोक्तुमपि स च कष्टेन । लभते जनात्, ततो भणति मम हट्टं नेहैकम् ॥२०॥
*तस्मात्त्यजत मम पृष्ठं पर्याप्तं ममाधिकलाभेन । परमान्नभोजनमपि खल्वतिमात्रं जनयत्युद्वेगम् ॥२१॥*
एवं जल्पतोऽपि विरमति लोको न तस्य हट्टात् । बहुतर आगच्छति मुक्त्वा शेषान् हट्टान् ॥२२॥
तच्छ्रुत्वा संनिहिता वणिजो जल्पन्ति यथाऽहो लोकाः ! । इति तर्जिता अपि न मुञ्चत किं द्वितुण्डस्य तं हट्टम् ॥
एषोऽपि तावद्वाणिज्यं करोति लाभार्थमेव न खल्वितरथा । न विना क्रयाणकेन मूल्यं वयमपि जिघृक्षामः॥२४॥
ततः प्रतिभणितं कैरपि तोलयन्तमवितथैर्युष्माभिः । चौरैर्जनो मुषितः सर्वो वणिग्वेषधारिभिः ॥२५॥
सत्येन व्यवहरन्नेष द्वितुण्डोऽपि वल्लभोऽस्माकम् । उपजीव्यते कटुकमप्यौषधं शमयति यद् रोगम् ॥२६॥
तत् श्रुत्वा सविशेषं धने ते मत्सरं परिवहन्तः । छिद्रं सर्वत्र गवेषयन्ति न लभन्ते स्तोकमपि ॥२७॥

---

१ क. °माई ।

लोभविउं आरोविय कडीए तं चीरवेढियं डिंभं । पट्ठविया धणहट्टे मग्गइ सुत्तेण सा तिल्लं ॥२९॥
अन्नेहिं हट्टहारेहिं वावडं वणियपुत्तसहियं तं । सा भणइ किराड ! न उत्तरंपि तं देसि अम्हाणं॥३०॥
तो कुविएणं तेणं थोवं सा पिल्लिया मयगडिंभं । पाडेउं धरणीए मुट्ठा मुट्ठत्ति पोक्करइ ॥३१॥
तो धाविया तलारा धणमाहीरिं मयं च तं डिंभं । चित्तूण गामपहुणो अप्पंति कहंति वुत्तंतं ॥३२॥
मित्तस्सव पुत्तस्सव जणयस्सव तस्स आवइं नाउं । सव्वोवि गामलोओ भोइयगेहम्मि संपत्तो ॥३३॥
सव्वंपि इममलीयं अहं समत्थेमि इय विचिंतेउं । दुंट्ठुं पट्टइलेणं भणियाहीरी जहा रंडे ! ॥३४॥
मयगं वालं घित्तुं कडीए भणिएण आगया जस्स । तं कहसु अन्नहा तुह छिंदिस्सं कन्ननासाओ॥३५॥
तो खुद्धा सा जंपइ देसंतरिया अहं अणाहा य । वच्छव्व, वणियसंपेसियाए एवं मए विहियं ॥३६॥
तो मेलावयमज्झे समागए दंसए य ते वणिए । गामपहूवि समत्थइ तव्वयणं इय विचिंतंतो ॥३७॥
जइ सच्चो निल्लोभोत्ति सम्मओ बहुजणस्स सिट्ठिधणो । मायाविणो य सेसा इइ विहियं तेहिं मच्छरओ ॥
ता एएसिं निवडउ कूडं बहुउत्तरे करंताणं । आहीरीए गहियं दविणं आणाविउं सोवि ॥३९॥
काउं निरुत्तरे ते सव्वस्सं तेसिं लूडिउं लेइ । तह अप्पइ गुत्तीए धणं तु सम्माणिउं मुअइ ॥४०॥
सव्वोवि गामलोओ धणस्स वद्धावओ घरे जाइ । भणइ य विसट्टहरिसो 'सच्चं जयइ'त्ति सच्चमिणं॥४१॥
धणभणिएणं गामेण मोइया तेवि अंगमित्तेण । ता वच्छ ! चयसु कूडं ववहारं कुणसु मह वयणं ॥४२॥

---

अथ तन्मध्ये केनापि दृष्टोऽभिनवमृतो लघुडिम्भः । ततस्तेषामन्यैः सह मन्त्रयित्वा काप्यामीरी ॥२८॥
लोभयित्वाऽऽरोप्य कट्यां तं चीरवेष्टितं डिम्भम् । प्रस्थापिता धनहट्टे मृगयते सूत्रेण सा तैलम् ॥२९॥
अन्यैर्हट्टभारैर्व्यापृतं वणिक्पुत्रसहितं तम् । सा भणति किरात ! नोत्तरमपि त्वं ददास्यस्माकम् ? ॥३०॥
ततः कुपितेन तेन स्तोकं सा प्रेरिता मृतकडिम्भम् । पातयित्वा धरण्यां मुष्टा मुष्टेति पूत्करोति ॥३१॥
ततो धाविताः पुरारक्षका धनमाभीरीं मृतं च तं डिम्भम् । गृहीत्वा ग्रामप्रभोरर्पयन्ति कथयन्ति वृत्तान्तम् ॥
मित्रस्येव पुत्रस्येव जनकस्येव तस्यापदं ज्ञात्वा । सर्वोऽपि ग्रामलोको ग्रामप्रभुगेहे संप्राप्तः ॥३३॥
सर्वमपीदमलीकमहं समर्थये इति विचिन्त्य । दुष्ट्वा पट्टेशेन भणिताऽऽभीरी यथा रण्डे ! ॥३४॥
मृतकं बालं गृहीत्वा कट्यां भणितेनाऽऽगता यस्य । तं कथयान्यथा तव छेत्स्यामि कर्णनासाः ॥३५॥
ततः क्षुब्धा सा जल्पति देशान्तरिताऽहमनाथा च । वत्सेव, वणिक्संप्रेषितयैवं मया विहितम् ॥३६॥
ततो मेलकमध्ये समागतान् दर्शयति च तान् वणिजः । ग्रामप्रभुरपि समर्थयति तद्वचनमिति विचिन्तयन् ॥
यथा सत्यो निर्लोभ इति सम्मतो बहुजनस्य श्रेष्ठिधनः । मायाविनश्च शेषा इति विहितं तैर्मत्सरतः ॥३८॥
तस्मादेतेषु निपततु कूटं बहूत्तराणि कुर्वत्सु । आभीर्या गृहीतं द्रविणमानाय्य सोऽपि ॥३९॥
कृत्वा निरुत्तरांस्तान् सर्वस्वं तेषां लुण्टित्वा लाति । तथाऽर्पयति गुप्तौ धनं तु सम्मान्य मुञ्चति ॥४०॥
सर्वोऽपि ग्रामलोको धनस्य वर्धको गृहे याति । भणति च विकसितहर्षः 'सत्यं जयति' इति सत्यमिदम् ॥

---

१ ख. दुट्ठय, ग. दुट्ठुय । २ क. ग. लूडिउं ।

इय वारिओवि वरुणो तहेव ववहरइ सेट्ठिणा तत्तो । सयणसमक्खं भागं दाऊणं सो पुढो विहिओ ॥४३॥
अह केणइ खरडेणं किणिउं हट्टम्मि वरुणवणियस्स । गुडजीरगाइ मित्तेण तस्स पुण अन्नहट्टम्मि॥४४॥
तं चिय किणियं दिट्ठं इयरेणं, तं समेवि मोल्लम्मि । पडिहासियमहियं से तो सो एगम्मि हट्टम्मि॥४५॥
नियकीयं तोलाविय मवावए जाव तं तिभागूणं । संजायं तो कहियं गंतूणं तेणमच्चस्स ॥४६॥
तेण य सह वरुणेणं आणेविय तस्स हट्टमप्पाणि । संखावियाणि ऊणाहिआणि सव्वाणि जायाइं॥४७॥
बहुबंधेहिं सुदिढं मंती बंधावए तओ वरुणं । तो देवसेणसेट्ठी जाइ अमच्चस्स पासम्मि ॥४८॥
विन्नवइ अमच्चं जाव ताव तेणावि सो उवालद्धो । तुज्झवि पुत्तो होउं एवं ववहरइ एस कहं ? ॥४९॥
भणइ अमच्चं सिट्ठी जायमिमं ताव संपयमिमस्स । किं कायव्वं तुब्भेहिं, भणइ एवं तओ मंती ॥५०॥
हत्थच्छेओ नयणाण कड्ढणं सव्वदविणअवहरणं । जुत्तं इह अवराहे जाणेसि तुमंपि इय ताव ॥५१॥
तहवि हु घरसारद्धं देहो य इमस्स तुमं मए मुक्को । तं पडिवज्जइ सेट्ठी कुणइ अमच्चो तहेव तओ ॥५२॥
बंधेहिं मोडियंगो सो पत्तो मंदिरम्मि नियम्मि । उप्पन्नतिव्ववियणो मुक्को पाणेहिं तइयदिणे ॥५३॥
अट्टज्झाणोवगओ तत्तो सो सूयरो समुप्पन्नो । भमिऊण भवमणंतं अणंतमवि पाविही ठाणं ॥५४॥
सिट्ठी सावयधम्मं सम्मं परिपालिऊण पज्जंते । अणसणविहिणा मरिउं सोहम्मे सुरवरो जाओ ॥५५॥

॥ इति तृतीयाणुव्रते चतुर्थातिचारविपाके वरुणकथा समाप्ता ॥

---

धनभणितेन भ्रमेण मोचितास्तेऽप्यङ्गमात्रेण । तस्माद् वत्स ! त्यज कूटं व्यवहारं कुरु मम वचनम् ॥४२॥
इति वारितोऽपि वरुणस्तथैव व्यवहरति श्रेष्ठिना ततः । स्वजनसमक्षं भागं दत्त्वा स पृथग् विहितः ॥४३॥
अथ केनचित् खरेण क्रीत्वा हट्टे वरुणवणिजः । गुडजीरकादि मित्रेण तस्य पुनरन्यहट्टे ॥४४॥
तदेव क्रीतं दृष्टमितरेण; तत् समेऽपि मूल्ये । प्रतिभासितमधिकं तस्य ततः स एकस्मिन् हट्टे ॥४५॥
निजीयं तोलयित्वा मापयति यावत्तत् त्रिभागोनम् । संजातं ततः कथितं गत्वा तेनामात्यस्य ॥४६॥
तेन च सह वरुणेनानाय्य तस्य हट्टमानानि । संख्यापितान्यूनाधिकानि सर्वाणि जातानि ॥४७॥
बहुबन्धैः सुदृढं मन्त्री बन्धयति ततो वरुणम् । ततो देवसेनश्रेष्ठी यात्यमात्यस्य पार्श्वे ॥४८॥
विज्ञपयत्यमात्यं यावत्तावत् तेनापि स उपालब्धः । तवापि पुत्रो भूत्वैवं व्यवहरत्येष कथम् ? ॥४९॥
भणत्यमात्यं श्रेष्ठी जातमिदं तावत् सांप्रतमस्य । किं कर्तव्यं युष्माभिः, भणत्येवं ततो मन्त्री ॥५०॥
हस्तच्छेदो नयनयोः कर्षणं सर्वद्रविणापहरणम् । युक्तमिहापराधे जानासि त्वमपीदं तावत् ॥५१॥
तथापि हि गृहसारार्धं देहश्चास्य तव मया मुक्तः । तत् प्रतिपद्यते श्रेष्ठी करोत्यमात्यस्तथैव ततः ॥५२॥
बन्धैर्मोटिताङ्गः स प्राप्तो मन्दिरे निजे । उत्पन्नतीव्रवेदनो मुक्तः प्राणैस्तृतीयदिने ॥५३॥
आर्तध्यानोपगतस्ततः स शूकरः समुत्पन्नः । भ्रान्त्वा भवमनन्तमनन्तमपि प्राप्स्यति स्थानम् ॥५४॥
श्रेष्ठी श्रावकधर्मं सम्यक् परिपाल्य पर्यन्ते । अनशनविधिना मृत्वा सौधर्मे सुरवरो जातः ॥५५॥

तप्पडिरूवं दव्वं खिविउं जो भव्वदव्वमज्झम्मि । विक्किणइ किणइ दुक्खं सागरचंदोव्व सो इहइं ॥१॥
तथाहि ;—
विसभासियं सनंदि नंदिउरं नाम पुरवरं अत्थि । केलाससेलसिहरंव सहइ वरभूइधवलहरं ॥२॥
समरगइंदो राया चंदो इव सुयणकुमुयसंडस्स । तं पालइ, तस्स पिया सुविणीया कुमुइणी नाम ॥३॥
तत्थत्थि थिरपगई सिट्ठी सुमई, पिया य से सुलसा । ताणं च सुया दोन्नि य सागरचंदो य गुणचंदो ॥
दोन्निवि कलासु कुसला दोन्निवि अन्नोन्ननेहपडिबद्धा । वियरंति सइच्छाए ववहारविहारकज्जेसु ॥५॥
कज्जवसेणं गामंतरम्मि समगंपि दोण्णिवि पयट्टा । कोसदुगं च गएहिं ता दिट्ठो मुणिवरो एगो ॥६॥
तो भणियं जिट्ठेणं मा गम्मउ वच्छ ! एस अवसउणो । लाहस्स विग्घकारी जं भणियं सउणसत्थेसु ॥७॥
मलमइलवत्थदेहो मुंडियसिरतुंडओ असुइवयणो । मुक्कविभूसो मग्गे दिट्ठो कज्जं न साहेइ ॥८॥
गुणचंदेणं भणियं मा बंधव ! भणसु एरिसं वयणं । जइ एसोवि न सउणो तो सउणो नत्थि भुवणेवि॥९॥
जो दिट्ठोवि हु पावं पणासए वंदिओ य पणयाण । कल्लाणाइं पणामइ अवसउणो कह णु सो होइ ? ॥१०॥
तो सागरेण भणियं संसग्गी सावएहिं सह तुज्झ । तेणेह पक्खवाओ पावफलं अणुहवंतम्मि ॥११॥
तो इयरेणं भणिअं जं तुह एयम्मि मुणिवरे चित्तं । तेण गयस्स ठियस्सवि बंधव ! नणु दुल्लहं कुसलं ॥
जइवि इमे भयवंतो मंगलभूया सहावओ हुंति । तहवि हु निदिज्जंता दिंति अमंगलफलं विउलं ॥१३॥
इह लोए ता एवं परलोए दुग्गइं अबोहिं च । दुक्खाइं अणंताइं ता दुट्ठं चिंतियं तुमए ॥१४॥

---

तत्प्रतिरूपं द्रव्यं क्षिप्त्वा यो भव्यद्रव्यमध्ये । विक्रीणाति क्रीणाति दुःखं सागरचन्द्र इव स इह ॥१॥
वृषभासितं सनन्दि नन्दिपुरं नाम पुरवरमस्ति । कैलासशैलशिखरमिव राजते वरभूतिधवलगृह (हर)म् ॥२॥
समरगजेन्द्रो राजा चन्द्र इव सुजनकुमुदषण्डस्य । तत्पालयति, तस्य प्रिया सुविनीता कुमुदिनी नाम ॥३॥
तत्रास्ति स्थिरप्रकृतिः श्रेष्ठी सुमतिः, प्रिया च तस्य सुलसा । तयोश्च सुतौ द्वौ च सागरचन्द्रश्च गुणचन्द्रः ॥४॥
द्वावपि कलासु कुशलौ द्वावप्यन्योन्यस्नेहप्रतिबद्धौ । विचरतः स्वेच्छया व्यवहारविहारकार्येषु ॥५॥
कार्यवशेन ग्रामान्तरे समकमपि द्वावपि प्रवृत्तौ । क्रोशद्विकं च गताभ्यां तावद् दृष्टो मुनिवर एकः ॥६॥
ततो भणितं ज्येष्ठेन मा गम्यतां वत्स ! एषोऽपशकुनः । लाभस्य विघ्नकारी यद् भणितं शकुनशास्त्रेषु ॥७॥
मलमलिनवस्त्रदेहो मुण्डितशिरस्तुण्डकोऽशुचिवदनः । मुक्तविभूषो मार्गे दृष्टः कार्यं न साधयति ॥८॥
गुणचन्द्रेण भणितं मा बान्धव ! भणेदृशं वचनम् । यद्येषोऽपि न शकुनस्ततः शकुनो नास्ति भुवनेऽपि ॥९॥
यो दृष्टोऽपि खलु पापं प्रणाशयति वन्दितश्च प्रणतानाम् । कल्याणानि प्रणमयत्यपशकुनः कथं नु स भवति ? ॥
ततः सागरेण भणितं संसर्गः श्रावकैः सह तव । तेनेह पक्षपातः पापफलमनुभवति ॥११॥
तत इतरेण भणितं यत्तवैतस्मिन् मुनिवरे चित्तम् । तेन गतस्य स्थितस्यापि बान्धव ! ननु दुर्लभं कुशलम् ॥
यद्यपीमे भगवन्तो मङ्गलभूताः स्वभावतो भवन्ति । तथापि हि निन्द्यमाना ददत्यमङ्गलफलं विपुलम् ॥१३॥
इह लोके तावदेवं परलोके दुर्गतिमबोधिं च । दुःखान्यनन्तानि तस्माद् दुष्टं चिन्तितं युष्माभिः ॥१४॥

दिट्ठम्मि सुबहुमाणं मह पुण कल्लाणकुलहरे इत्थ । होही गयस्स नूणं कल्लाणपरंपरा गरुई ॥१५॥
ता अज्जवि तं बंधव! फुरंततवजायतेयदुद्धरिसं । एयं खमाविऊणं तुरियं कुण अप्पणो संतिं ॥१६॥
तत्तो जंपइ जिट्ठो एएण खमाविएण जा संती । तीए मह नत्थि कज्जं जं जासि तुमं तु तत्थ अहं ॥१७॥
हियए डज्झंतेवि हु करेमि किं जं तुमं अइवियड्ढं । अप्पाणं मन्नंतो मं गणसि न गोणतुल्लंपि ॥१८॥
इय भणिय वलइ जिट्ठो इयरो उण जाइ पणमिऊण मुणिं। वहिऊण दिणं सुत्तो रयणीए पुरस्स एक्कस्स ॥
वाहिं हरिदेवउले जा चिट्ठइ अद्धरत्तसमयम्मि। तो निसुणइ इय सद्दं सामिय ! गुणचंद ! उट्ठेहि॥२०॥
आरुहह रहे सिग्घं पेत्ता सा सामिणी रहारूढा । तो सो चिंतइ एयं तम्मुणिदंसणफलं किंपि ॥२१॥
अन्नह कहमणुकूलो इय सद्दो सवणगोयरं एइ ? । तो सद्दकारिणीए करम्मि लग्गो गओ तत्थ ॥२२॥
गहिऊण करेण करं रहम्मि आरोविओ रहठियाए । भरियं फलोहलीए कच्चोलयमप्पियं हत्थे ॥२३॥
कणयंकरगेण नीरं पाइय तंबोलमप्पियं तह य । घणसारमीसिएणं लित्तो चंदणरसेण सयं ॥२४॥
वेगेण रहो जंतो जा पत्तो अट्ठजोयणं भूमिं। तो अरुणोदयसमए दिट्ठो कुमरीए गुणचंदो ॥२५॥
कयसंकेयाउ नराउ सुंदरो पढमजोव्वणत्थो य । तो भणिओ सो तीए परिणेसु ममं इहज्जेव ॥२६॥
विहिणा तुमं विइन्नो मह भत्ता अन्नहा कहं एवं। अन्नेण समं घडिए संघडिओ सुभगरयण ! तुमं ? ॥२७॥
ता हुज्ज जो व सो वा तुमं गई मज्झ कोडिमुल्लाइं । आहरणाइं इमाइं वावारसु निययइच्छाए ॥२८॥

---

दृष्टे सुबहुमानो मम पुनः कल्याणकुलगृहेऽत्र । भविष्यति गतस्य नूनं कल्याणपरम्परा गुर्वी ॥१५॥
तस्मादद्यापि त्वं बान्धव ! स्फुरत्तपोजाततेजोदुर्धर्षम् । एनं क्षमयित्वा त्वरितं कुर्वात्मनः शान्तिम् ॥१६॥
ततो जल्पति ज्येष्ठ एतेन क्षमितेन या शान्तिः । तया मम नास्ति कार्यं यद् यासि त्वं तु तत्राहम् ॥१७॥
हृदये दह्यमानेऽपि हि करोमि किं यत्त्वमतिविदग्धम् । आत्मानं मन्यमानो मां गणयसि न गोतुल्यमपि॥१८॥
इति भणित्वा वलते ज्येष्ठ इतरः पुनर्याति प्रणम्य मुनिम् । ऊढ्वा दिनं सुप्तो रजन्यां पुरस्यैकस्य ॥१९॥
बहिर्हरिदेवकुले यावत्तिष्ठत्यर्धरात्रसमये । ततः शृणोतीति शब्दं स्वामिन् ! गुणचन्द्र ! उत्तिष्ठ ॥२०॥
आरोह रथे शीघ्रं प्राप्ता सा स्वामिनी रथारूढा । ततः स चिन्तयत्येतत्तन्मुनिदर्शनफलं किमपि ॥२१॥
अन्यथा कथमनुकूल इति शब्दः श्रवणगोचरमेति ? । ततः शब्दकारिण्याः करे लग्नो गतस्तत्र ॥२२॥
गृहीत्वा करेण करं रथ आरोपितो रथस्थितया । भृतं फलौघेन पात्रमर्पितं हस्ते ॥२३॥
कनककरकेण नीरं पाययित्वा ताम्बूलमर्पितं तथा च । घनसारमिश्रितेन लिप्तश्चन्दनरसेन स्वयम् ॥२४॥
वेगेन रथो यान् यावत्प्राप्तोऽष्टयोजनां भूमिम् । ततोऽरुणोदयसमये दृष्टः कुमार्या गुणचन्द्रः ॥२५॥
कृतसंकेताद् नरात् सुन्दरः प्रथमयौवनस्थश्च । ततो भणितः स तया परिणय मामिहैव ॥२६॥
विधिना त्वं वितीर्णो मम भर्त्ताऽन्यथा कथमेवम् । अन्येन समं घटिते संघटितः सुभगरत्न! त्वम् ॥२७॥
तस्माद् भवतु यो वा स वा त्वं गतिर्मम कोटिमूल्यानि । आभरणानीमानि व्यापारय निजेच्छया ॥२८॥

---

१ ख, ग संपत्ता सामि॰ ।

कस्स पसाया तुब्भे विलसह एवं विसाललच्छीए? । तो तेहिं संलत्तं तुज्झ पसाएण नन्नस्स ॥१४॥
गुणसुंदरीए पढिया सीसं धुणिऊण उच्चसद्देण । भवियव्वयावसेणं निवनिरवेक्खं इमा गाहा ॥१५॥
सा जयउ जए लच्छी जीइ पसाएण ईसरजणस्स । सच्चमलियंपि वयणं सयाणपुरिसावि मन्नंति ॥१६॥
तब्भावं मुणिऊण पयईए कोवणो भणइ राया । तं कस्स पसाएणं विलससि, तो तीए इय पढियं॥१७॥
सव्वो पुव्वकयाणं कम्माणं पावए फलविवागं । अवराहेसु गुणेसु य निमित्तमित्तं परो होइ ॥१८॥
तो रन्ना आणत्तो कोवि नरो जह पओयणं अत्थि । निब्भग्गसिरोरयणं रोरनरं कमवि आणेहि ॥१९॥
तो तेण तारिसो कट्ठहारओ कोवि झत्ति आणीओ। परिणाविओ य गुणसुंदरिं स रन्नावि तुट्ठेण॥२०॥
सा पुण वत्थाईयं उद्दालिय लिहियवहियखंडाइं । परिहावेउं भणिया जाह इओ सुकयमणुहवसु ॥२१॥
भणिओ य जणो सव्वो आलवंपि हु इमीए जो काही । तस्स मए सारीरो दंडोऽवस्सं विहेयव्वो॥२२॥
नियपइद्दमगेण समं पत्ता सा तग्घरम्मि उवविसिउं । जा तस्स सिरे चिहुरे विवरइ ता ताण वरगंधो ॥२३॥
उच्छलिओ छलिउं पिव गंधं गोसीसचंदणवणस्स। तो तीए सो पुट्ठो कट्ठभरो तुम्ह अज्ज कहिं?॥२४॥
कंदोइयस्स हट्टे मुक्को तो सो कहेइ, तेण समं । सा गंतुं तं भारयमाणावइ नियगेहम्मि ॥२५॥
तत्तो चंदणफलीउ वणियहट्टम्मि विक्किउं कइवि। कणवत्थाइं किंचिवि किणेइ मुल्लेण सा तेण॥२६॥
सो जत्तो रुक्खाओ आणीओ कट्ठभारओ तेण । सो मुद्धजणेहिंतो खंडाइंडं करेऊण ॥२७॥
आणाविओ निसीहे गिहम्मि तत्तो य चंदणे तम्मि । विक्कीयम्मि कमेणं कणयसहस्सो समुप्पन्नो ॥२८॥

---

कस्य प्रसादाद् यूयं विलसतैवं विशाललक्ष्म्या?। ततस्तैः संलपितं तव प्रसादेन नान्यस्य ॥१४॥
गुणसुन्दर्या पठिता शीर्षं धूनयित्वोच्चशब्देन । भवितव्यतावशेन नृपनिरपेक्षमियं गाथा ॥१५॥
सा जयतु जगति लक्ष्मीर्यस्याः प्रसादेनेश्वरजनस्य । सत्यमलीकमपि वचनं सज्ञानपुरुषा अपि मन्यन्ते॥१६॥
तद्भावं ज्ञात्वा प्रकृत्या कोपनो भणति राजा । त्वं कस्य प्रसादेन विलससि, ततस्तयेति पठितम् ॥१७॥
सर्वः पूर्वकृतानां कर्मणां प्राप्नोति फलविपाकम् । अपराधेषु गुणेषु च निमित्तमात्रं परो भवति ॥१८॥
ततो राज्ञाऽऽज्ञप्तः कोऽपि नरो यथा प्रयोजनमस्ति । निर्भाग्यशिरोरत्नं रोरनरं कमप्यानय ॥१९॥
ततस्तेन तादृशः काष्ठहारकः कोऽपि झटित्यानीतः । परिणायितश्च गुणसुन्दरीं स राज्ञापि तुष्टेन ॥२०॥
सा पुनर्वस्त्रादिकमुद्दाल्य लिखितवहिकाखण्डानि । परिधाप्य भणिता याहीतः सुकृतमनुभव ॥२१॥
भणितश्च जनः सर्व आलापमपि ह्यनया यः करिष्यति । तस्य मया शारीरो दण्डोऽवश्यं विधातव्यः ॥२२॥
निजपतिद्रमकेण समं प्राप्ता सा तद्गृहे उपविश्य । यावत्तस्य शिरसि निकुरान् विधुणोति तावत्तेभ्यो वरगन्धः ॥
उच्छलितश्छलयितुमिव गन्धं गोशीर्षचन्दनवनस्य । ततस्तया स पृष्टः काष्ठभरो युष्माकमद्य क्व? ॥२४॥
कान्दविकस्य हट्टे मुक्तस्ततः स कथयति, तेन समम् । सा गत्वा तं भारमानाययति निजगृहे ॥२५॥
ततश्चन्दनफलकान् वणिग्हट्टे विक्रीय कत्यपि । कणवस्त्रादि किञ्चिदपि क्रीणाति मूल्येन सा तेन ॥२६॥
स यतो वृक्षादानीतः काष्ठभारस्तेन । स मुग्धजनेभ्यः खण्डखण्डं कृत्वा ॥२७॥

अह विहियउचियपरियणवाहणसामग्गियाइं ताइं तओ। ववसायत्थं देसंतरम्मि पत्ताइं तो कुमरी ॥२९॥
निवदिन्नाइं वहियावत्थाइं वायए तओ तेसु। अक्खरपंतीओ वालियाओ सव्वाओ पिक्खंती ॥३०॥
एगत्थ कणयसिद्धिप्पओगमवलोयए तओ सव्वं। तं सामग्गिं काउं पउंजए जाव तो तत्थ ॥३१॥
तावच्छेयकसेहिं सुद्धं पासइ सुवन्नमुप्पन्नं। तो तेणं पओगेणं मेलिय कणयस्स लक्खाइं ॥३२॥
वहुवाहणपरियणपरिगया य गंतूण गउडदेसम्मि। तत्थ पवराइं किणिउं भद्दकरीणं दस सयाइं ॥३३॥
पत्ता य भद्दिलपुरं नरवरदंसावियम्मि भूभागे। वीयंव भद्दिलपुरं ठविऊण ठिया य सा तत्थ ॥३४॥
तीए भत्तावि ठिओ कलासु कुसलो जणम्मि विक्खाओ। नामेण पुन्नपालो वियड्ढकेलीण कुलभवणं ॥
उक्तं च;—
"श्रीपाचियाजडा अपि भवन्त्यभिज्ञा विदग्धचरितानाम्। उपदिशति कामिनीनां यौवनमद एव ललितानि॥"
तेणवि पाहुडपुव्वं विहियं निवदंसणं विभूईए। रायावि तस्स पासे मुणिऊणं पवरकरिहेडं ॥३६॥
भणइ महायणविहिएण देहि मुल्लेण मज्झ करिसहस्सं। सो भणइ देव ! नाहं काहं जम्मंतरेवि इमं ॥
किंपुण मह आवासे आगंतु भोयणं कुणउ देवो। हत्थिसहस्संपि हु लेउ मज्झ मोल्लेण नो कज्जं॥३८॥
तो आवज्जियहियओ नरेसरो तस्स तेण वयणेण। पत्तो तस्सावासे चलंतवरदारुपासाए ॥३९॥
खंभसयसंनिविट्ठे तत्थ य चउवारयम्मि नरनाहो। भुंजइ सा परिवेसइ एक्का गुणसुंदरी किंतु ॥४०॥
परिवेसिऊण पढमं फलोहलिं पविसई गिहस्संतो। अन्नं काउं वेसं आगच्छइ दुइयदारेण ॥४१॥

---

आनायितो निशीथे गृहे ततश्च चन्दने तस्मिन्। विक्रीते क्रमेण कनकसहस्रः समुत्पन्नः ॥२८॥
अथ विहितोचितपरिजनवाहनसामग्रीकौ तौ ततः। व्यवसायार्थं देशान्तरे प्राप्तौ ततः कुमारी ॥२९॥
नृपदत्तानि वहिकावस्त्राणि वाचयति ततस्तेषु। अक्षरपङ्क्तीर्वालिताः सर्वाः प्रेक्षमाणा ॥३०॥
एकत्र कनकसिद्धिप्रयोगमवलोकते ततः सर्वाम्। तां सामग्रीं कृत्वा प्रयुङ्क्ते यावत्तनस्तत्र ॥३१॥
तापच्छेदकषैः शुद्धं पश्यति सुवर्णमुत्पन्नम्। ततस्तेन प्रयोगेण मेलयित्वा कनकस्य लक्षाणि ॥३२॥
बहुवाहनपरिजनपरिगता च गत्वा गौडदेशे। तत्र प्रवराणि क्रीत्वा भद्रकरिणां दश शतानि ॥३३॥
प्राप्ता च भद्दिलपुरं नरवरदर्शिते भूभागे। द्वितीयमिव भद्दिलपुरं स्थापयित्वा स्थिता च सा तत्र ॥३४॥
तस्या भर्तापि स्थितः कलासु कुशलो जने विख्यातः। नाम्ना पुण्यपालो विदग्धकेलीनां कुलभवनम्॥३५॥
तेनापि प्राभृतपूर्वं विहितं नृपदर्शनं विभूत्या। राजापि तस्य पार्श्वे ज्ञात्वा प्रवरकरिघटाम् ॥३६॥
भणति महाजनविहितेन देहि मूल्येन मम करिसहस्रम्। स भणति देव ! नाहं करिष्ये जन्मान्तरेऽपीदम्॥
किन्तु ममावासे आगत्य भोजनं करोतु देवः। हस्तिसहस्रमपि हि लातु मम मूल्येन नो कार्यम् ॥३८॥
तत आवर्जितहृदयो नरेश्वरस्तस्य तेन वचनेन। प्राप्तस्तस्यावासे चलद्वरदारुप्रासादे ॥३९॥
स्तम्भशतसंनिविष्टे तत्र च चतुर्द्वारे नरनाथः। भुङ्क्ते सा परिवेवेष्टि एका गुणसुन्दरी किन्तु ॥४०॥

---

१ म. ग. तुल्लेण।

परिवेसइ पक्कन्नं, वंजणवरओयणाइं अन्नेण । अन्नेणं वेसेणं घयाइं ता जाव पइवत्थुं ॥४२॥
नवनवसिंगारेणं निवस्स परिवेसियं तओ राया । पुच्छइ कइ बहुयाओ हेडाउ य तुम्ह इह संति ?॥४३॥
सो भणइ जत्तियाओ दिट्ठा देवेण, तो निवो भोत्तुं । सुत्तो उवरिमभूमीपल्लंके गंगपुलिणसमे ॥४४॥
अह वड्डियाखंडेहिं निवइविइन्नेहिं पुव्वमिव वेसं । काऊणं निवपासे नमिउं गुणसुंदरी भणइ ॥४५॥
मं उवलक्खह होउं उवउत्ता तो नरेसरो भणइ । वाहाविलनयणजुओ आरोवंतो तमंकम्मि ॥४६॥
मह दुप्पिउणो तणया वच्छे ! गुणसुंदरित्ति नाम तुमं । भोयणकाले वच्छा दिट्ठावि मए न विन्नाया॥४७॥
अवरावरसिंगाराणेगवहूविब्भमो जओ जाओ । उचियं वेसं काउं आगच्छसु संपयं एत्थ ॥ ४८ ॥
तह चेव कए तीए आहूए तह य पुन्नपालम्मि । परिपुट्ठविहववत्तो राया गुणसुंदरिं भणइ ॥४९॥
दिट्ठंतेण वच्छाए चेव मह परिणयं इमं ताव । जह विहवो धम्मफलं धम्मं पुण कहउ मे वच्छा ॥५०॥
सा पुण कुलक्कमेणं जणणीए साविंयाए जिणधम्मे । बालत्तेवि य निउणा आसि कया तहवि इय भणइ ॥
इह आवासासन्ने अत्थि मुणी सो विसेसओ धम्मं । जाणेइ परिकहेइ य तो राया जाइ तत्थेव ॥५२॥
सह पुन्नपालगुणसुंदरीहिं आयन्निउं तओ धम्मं । भणइ मुणिंदं राया काउं रज्जट्ठिइं सुत्थं ॥५३॥
अहमणुसरामि इण्हिं तुह चरणे, तो भणइ मुणिपवरो । नरनाह ! इत्थ अत्थे निरुज्जमेहिं न होयव्वं॥५४॥
तो राया धवलहरे गंतु सह मंतिउं पहाणेहिं । पुत्ताभावे ठविउं तं चिय जामाउयं रज्जे ॥५५॥

---

परिविष्य प्रथमं फलौघं प्रविशति गृहस्यान्तः । अन्यं कृत्वा वेशमागच्छति द्वितीयद्वारेण ॥४१॥
परिवेवेष्टि पक्वान्नं, व्यञ्जनवरौदनान्यन्येन । अन्येन वेशेन घृतादि तावद्यावत्प्रतिवस्तु ॥४२॥
नवनवशृङ्गारेण नृपस्य परिवेषितं ततो राजा । पृच्छति कति वध्वो दास्यश्च युष्माकमिह सन्ति ? ॥४३॥
स भणति यावत्यो दृष्टा देवेन, ततो नृपो भुक्त्वा । सुप्त उपरितनभूमीपल्यङ्के गङ्गापुलिनसमे ॥४४॥
अथ वटिकाखण्डैर्नृपतिवितीर्णैः पूर्वमिव वेशम् । कृत्वा नृपपार्श्वे नत्वा गुणसुन्दरी भणति ॥४५॥
मामुपलक्षयत भूत्वोपयुक्तास्ततो नरेश्वरो भणति । बाष्पाविलनयनयुत आरोपयंस्तामङ्के ॥४६॥
मम दुष्पितुस्तनया वत्से ! गुणसुन्दरीति नाम त्वम् । भोजनकाले वत्सा दृष्टापि मया न विज्ञाता ॥४७॥
अपरापरशृङ्गारानेकवधूविभ्रमो यतो जातः । उचितं वेशं कृत्वाऽऽगच्छ सांप्रतमत्र ॥४८॥
तथैव कृते तयाऽऽहूते तथा च पुण्यपाले । परिपृष्टविभववार्तो राजा गुणसुन्दरीं भणति ॥४९॥
दृष्टान्तेन वत्साया एव मम परिणतमिदं तावत् । यथा विभवो धर्मफलं धर्मं पुनः कथयतु मे वत्सा ॥५०॥
सा पुनः कुलक्रमेण जनन्या श्राविकया जिनधर्मे । बालत्वेऽपि च निपुणाऽऽसीत्कृता तथापीति भणति ॥५१॥
इहावासासन्नेऽस्ति मुनिः स विशेषतो धर्मम् । जानाति परिकथयति च ततो राजा याति तत्रैव ॥५२॥
सह पुण्यपालगुणसुन्दरीभ्यामाकर्ण्य ततो धर्मम् । भणति मुनीन्द्रं राजा कृत्वा राज्यस्थितिं सुस्थाम् ॥५३॥
अहमनुसरामीदानीं तव चरणौ, ततो भणति मुनिप्रवरः । नरनाथ ! अत्रार्थे निरुद्यमैर्न भवितव्यम् ॥५४॥
ततो राजा धवलगृहे गत्वा सह मन्त्रयित्वा प्रधानैः । पुत्राभावे स्थापयित्वा तमेव जामातरं राज्ये ॥५५॥

विहिणा गिण्हइ दिक्खं परिपालइ पुन्नपालनरनाहो । नीईए चिरं रज्जं जिणिंदधम्मं पभाविंतो ॥५६॥
गुणसुंदरीए तणयं सुलोयणं ठाविऊण रज्जम्मि । लेइ सह तीइ दिक्खं कमेण पाउणइ तह मोक्खं॥५७॥
ता धम्मिच्चिय उज्जमह उज्जमेहिं विणावि अन्नेहिं । जेणं सिज्झंति समीहियाइं इह परभवे तुम्ह॥५८॥
तो ते भणंति अम्हे असमत्था नाह ! साहुधम्मस्स । तो गिहमचयंताणं जो धम्मो, कहह तं अम्ह॥५९॥
तत्तो सम्मत्ताई गिहिधम्मो तेण ताण वित्थरओ । कहिओ तेहिंवि गहिओ बारसभेओवि सो विहिणा ॥
तो वंदिऊण चलिया उज्जेणीए तओ य ववहरिउं । संपत्ता नियठाणे तो सयमंगीकयं धम्मं ॥६१॥
जणओ पालइ सम्मं दुलहो पुण दुल्लहंपि तं लद्धुं । अइयरइ चउत्थवयं एयं परिकप्पणं काउं ॥६२॥
परदारे मह नियमो न वज्जियव्वा अणाहकुलडाओ । विहवकुलडं रमंतो अह दिट्ठो सो तलारेण॥६३॥
डंगाए जज्जरिउं बद्धो, मिल्लाविओ य दाऊण । दंडं पिउणा एवं बद्धो मुक्को य सो बहुहा ॥६४॥
तहवि न विरमइ दुलहो अणाहकुलडाए संगमे तत्तो । कालक्खरिओ पिउणा सक्कइ न नियत्तिउं तहवि ॥
अह अन्नया य कस्सवि दुहियाए खत्तियस्स मयणंधो । बालविहवाए विढिओ वाहरिउं तीइ तो मिलिओ ॥
बंधुजणो तीए तयं कुट्टइ ताडेइ लेट्टुलउडेहिं । दोसायरोत्ति कलिउंव झत्ति चत्तो स पाणेहिं ॥६७॥
पढमपुढवीए पत्तो पच्छायावेण तत्थ मुज्झेउं । पत्तमणुयत्तजिणमयदिक्खो मोक्खं समणुपत्तो ॥६८॥
सेट्ठी गोभद्दोवि हु अकलंकवओ तओ य मरिऊण । सोहम्मे उववन्नो तइयभवे सिज्झिही तत्थ ॥६९॥

---

विधिना गृह्णाति दीक्षां परिपालयति पुण्यपालनरनाथः । नीत्या चिरं राज्यं जिनेन्द्रधर्मं प्रभावयन् ॥५६॥
गुणसुन्दर्यास्तनयं सुलोचनं स्थापयित्वा राज्ये । लाति सह तया दीक्षां क्रमेण प्राप्नोति तथा मोक्षम् ॥५७॥
तस्माद् धर्म एवोद्यच्छतमुद्यमैर्विनाऽप्यन्यैः । येन सिध्यन्ति समीहितानीह परभवे युवयोः ॥५८॥
ततस्तौ भणत आवामसमर्थौ नाथ ! साधुधर्मस्य । ततो गृहमत्यजतोर्यो धर्मः, कथयत तमावयोः ॥५९॥
ततः सम्यक्त्वादिर्गृहिधर्मस्तेन तयोर्विस्तरतः । कथितस्ताभ्यामपि गृहीतो द्वादशभेदोऽपि स विधिना ॥६०॥
ततो वन्दित्वा चलितावुज्जयिन्यां ततश्च व्यवहृत्य । संप्राप्तौ निजस्थाने ततः स्वयमङ्गीकृतं धर्मम् ॥६१॥
जनकः पालयति सम्यग् दुर्लभः पुनर्दुर्लभमपि तं लब्ध्वा । अतिचरति चतुर्थव्रतमेतत्परिकल्पनं कृत्वा॥६२॥
परदारेषु मम नियमो न वर्जयितव्या अनाथकुलटाः । विधवकुलटां रमयन्नथ दृष्टः स पुररक्षेण ॥६३॥
यष्ट्या जर्जरयित्वा बद्धः, मोचितश्च दत्त्वा । दण्डं पित्रैवं बद्धो मुक्तश्च स बहुधा ॥६४॥
तथापि न विरमति दुर्लभोऽनाथकुलटायाः संगमे ततः । कालक्षरितः पित्रा शक्यते न निवर्तयितुं तथापि ॥
अथान्यदा च कस्यापि दुहित्रा क्षत्रियस्य मदनान्धः । बालविधवया वेष्टितो व्याहृत्य तया ततो मिलितः॥६६॥
बन्धुजनस्तस्यास्तं कुट्टयति ताडयति लेष्टुलगुडैः । दोषाकर इति कलयित्वेव झटिति त्यक्तः स प्राणैः॥६७॥
प्रथमपृथिव्यां प्राप्तः पश्चात्तापेन तत्र मुग्ध्वा । प्राप्तमनुजत्वजिनमतदीक्षो मोक्षं समनुप्राप्तः ॥६८॥
श्रेष्ठी गोभद्रोऽपि खल्वकलङ्कव्रतस्ततश्च मृत्वा । सौधर्म उपपन्नस्तृतीयभवे सेत्स्यति तत्र ॥६९॥

---

१ ग °लरयर।

अपरिग्गहियागमणं एवं दुक्खाण कारणं सम्मं । चत्तपरदारसंगा परिवज्जह भो ! पयत्तेण ॥७०॥

॥ इति चतुर्थव्रतद्वितीयातिचारे दुर्लभकथा समाप्ता ॥

वक्खोरुहवयणाई रमणीणमणंगकीलणकएण । जो रागंधो सेवइ स लहइ दुक्खाइं धणउव्व ॥१॥
तथाहि;—
गयरायजणियसोहं सोहम्मसहंव विबुहसंकिन्नं । विक्कमपुरं पसिद्धं तं पालइ विक्कमनरिंदो ॥२॥
तत्थत्थि सिद्धितिलओ निलओ लच्छीए से पिया लच्छी । ताणं च दुवे पुत्ता धणधणदेवत्ति विक्खाया॥
दुन्निवि कलासु कुसला सुकुलुग्गयबालियाण भत्तारा । पगईए धणो कामी धणदेवो धम्मिओ धणियं ॥
जह अन्नया य केणवि नीया खित्तम्मि पामरनरेण । हुरडयफलीणपव्वे पुरपच्चासन्नगामम्मि ॥५॥
तो तस्स पुव्वभाए सहयारवणम्मि मुणिवरो दिट्ठो । मयणोव्व मुत्तिमंतो तिगुत्तिगुत्तो य चउनाणी॥६॥
दट्ठूणं तं वणिया पुच्छंति कुडुंबियं किमेस मुणी । नासग्गनिसियदिट्ठी चिट्ठइ कट्ठंव निच्चिट्ठो ? ॥७॥
कोडुंबिएण भणियं इह चिट्ठंतस्स मासमवि होही । न सुयइ एसो न य भुंजए य एमेव चिट्ठेइ ॥८॥
तो ते तेण समेया गंतूणं मुणिं नमित्तु पुच्छंति । को हेऊ वयगहणे पढमवए वट्टमाणस्स ? ॥९॥
तो भणइ मुणी निसुणह संसाराओ न अन्नओ हेऊ । नवरं मह वयगहणे विसेसओ कारणं भज्जा॥१०॥
धणदेवेणं भणियं जाया जाया कहं नु तुह हेऊ । वयगहणस्स महायस ! कहेसु, तो कहइ सो एवं॥११॥

---

अपरिगृहीतागमनमेवं दुःखानां कारणं सम्यक् । त्यक्तपरदारसङ्गाः परिवर्जयत भोः ! प्रयत्नेन ॥७०॥

वक्षोरुहवदनादीन् रमणीनामनङ्गक्रीडनकृतेन । यो रागान्धः सेवते स लभते दुःखानि धनद इव ॥१॥
गजराजजनितशोभं सौधर्मसभेव विबुधसंकीर्णम् । विक्रमपुरं प्रसिद्धं तत्पालयति विक्रमनरेन्द्रः ॥२॥
तत्रास्ति सिद्धितिलको निलयो लक्ष्म्यास्तस्य प्रिया लक्ष्मीः । तयोश्च द्वौ पुत्रौ धनधनदेवाविति विख्यातौ ॥
द्वावपि कलासु कुशलौ सुकुलोद्गतबालिकयोर्भर्तारौ । प्रकृत्या धनः कामी धनदेवो धार्मिको गाढम् ॥४॥
अथान्यदा च केनापि नीतौ क्षेत्रे पामरनरेण । होलिकाफलीनपर्वणि पुरप्रत्यासन्नग्रामे ॥५॥
ततस्तस्य पूर्वभागे सहकारवने मुनिवरो दृष्टः । मदन इव मूर्तिमांस्त्रिगुप्तिगुप्तश्च चतुर्ज्ञानः ॥६॥
दृष्ट्वा तं वणिजौ पृच्छतः कौटुम्बिकं किमेष मुनिः । नासाग्रन्यस्तदृष्टिस्तिष्ठति काष्ठमिव निश्चेष्टः ? ॥७॥
कौटुम्बिकेन भणितमिह तिष्ठतो मासोऽपि भविष्यति । न स्वपित्येष न च भुङ्क्ते चैवमेव तिष्ठति ॥८॥
ततस्तौ तेन समेतौ गत्वा मुनिं नत्वा पृच्छतः । को हेतुर्व्रतग्रहणे प्रथमवयसि वर्तमानस्य ? ॥९॥
ततो भणति मुनिः शृणुत संसाराद् नान्यो हेतुः । केवलं मम व्रतग्रहणे विशेषतः कारणं भार्या ॥१०॥
धनदेवेन भणितं जाया जाता कथं नु तव हेतुः ? । व्रतग्रहणस्य महायशः ! कथय, ततः कथयति स एवम्॥

---

१ ग. भद्दरा ।

इह अत्थि सुहावासं नयरं रिउमद्दणो तहिं राया । मंती विसालबुद्धी भज्जा रइसुंदरी तस्स ॥१२॥
तप्पुरपुरत्थभाए उज्जाणे चिट्ठए रिसहभवणं । सुरविज्जाहरकिंनरनिसेवियं तस्स दारम्मि ॥१३॥
चिट्ठइ सहयारतरू सव्वोउयफलभरेण निरु नमिओ । पारसियकीरमिहुणं निवसइ सुहियं सया तत्थ॥१४॥
जाओ य सुओ तस्स य पालंति परोप्परं, अह कयाइ । परकीरीआसत्तो जाओ कीरो कहवि नाओ॥१५॥
कीरीए तो भणिओ हुं पज्जत्तं खु तुज्झ संगेण । गच्छसु तीइवि नीडे मा नियडीहोसु मं रमिउं॥१६॥
यतः,
अन्नासत्ते पेम्मं पावम्मि मई अणुज्जमो धम्मे । मा दिज्ज दिव्व ! कहवि हु जइ रुट्ठो होसि सयवारं ॥१७॥
तो कीरेणं भणियं खमसु पिए ! मज्झ एयमवराहं । तो कीरीए भणियं मा मरुसुहसंमुहो होसु ॥१८॥
एक्कं ता उच्छिट्ठं वायसविट्टालियं च सविसं च । को भुंजेइ सयन्नो अन्नासत्तं जहव अन्नं ? ॥१९॥
तो वायाडो पभणइ जइ एवं मं चएसि ता पुत्तं । गहिऊण गमिस्सामि सा पभणइ नेय अप्पेमि॥२०॥
इय जाओ संवाओ तेसिं पुत्तस्स कारणे गरुओ । तो कीरेणं भणियं रायसमीवे समागच्छ ॥२१॥
जस्सप्पिही नरिंदो पुत्तं, तस्सेव होहिही इत्थ । सुईवि भणइ एवं गयाइं दोन्निवि निवसयासं ॥२२॥
कहिओ नियवुत्तंतो तेहिं, तो पभणियं नरिंदेण । नीइवयणं विभाविवि निसुणह एगग्गचित्ताइं ॥२३॥
पुत्तो तायस्स भवे धूया जणणीए, अहव धूयावि । पिउणो भवेइ जम्हा बीयं बीयत्तियस्सेव ॥२४॥
कोडुंबिओ य खित्ते धन्नं पयरेइ तस्स तं सव्वं । न लहामि अहं किंचिवि दाणिं मोत्तूण, इय नाओ ॥२५॥

---

इहास्ति शुभावासं नगरं रिपुमर्दनस्तत्र राजा । मन्त्री विशालबुद्धिर्भार्या रतिसुन्दरी तस्य ॥१२॥
तत्पुरपौरस्त्यभागे उद्याने तिष्ठति ऋषभभवनम् । सुरविद्याधरकिन्नरनिषेवितं तस्य द्वारे ॥१३॥
तिष्ठति सहकारतरुः सर्वर्तुकफलभरेण निश्चितं नतः । पारसीककीरमिथुनं निवसति सुखितं सदा तत्र ॥१४॥
जातश्च सुतस्तं च पालयतः परस्परं, अथ कदाचित् । परकीर्यासक्तो जातः कीरः कथमपि ज्ञातः ॥१५॥
कीर्या ततो भणितो हुं पर्याप्तं खलु तव सङ्गेन । गच्छ तस्या एव नीडे मा निकटीभव मां रमयितुम्॥१६॥
अन्यासक्ते प्रेम पापे मतिरनुद्यमो धर्मे । मा दा दैव ! कथमपि हि यदि रुष्टो भवसि शतकृत्वः ॥१७॥
*ततः कीरेण भणितं क्षमस्व प्रिये ! ममैतमपराधम् । ततः कीर्या भणितं मा मन्युसुखसंमुखो भव ॥१८॥*
एकं तावदुच्छिष्टं वायसोद्वालितं च सविषं च । को भुङ्क्ते सकर्णोऽन्यासक्तं यथावाऽन्नम् ? ॥१९॥
ततो वाचाटः प्रभणति यद्येवं मां त्यजसि तदा पुत्रम् । गृहीत्वा गमिष्यामि सा प्रभणति नैवापयामि ॥२०॥
इति जातः संवादस्तयोः पुत्रस्य कारणे गुरुः । ततः कीरेण भणितं राजसमीपे समागच्छ ॥२१॥
यस्यार्पयिष्यति नरेन्द्रः पुत्रं, तस्यैव भविष्यत्यत्र । शुक्यपि भणत्येवं गतौ द्वावपि नृपसकाशम् ॥२२॥
कथितो निजवृत्तान्तस्ताभ्यां, ततः प्रभणितं नरेन्द्रेण । नीतिवचनं विभाव्य शृणुतमेकाग्रचित्तौ ॥२३॥
पुत्रस्तातस्य भवेद् दुहिता जनन्याः, अथवा दुहितापि । पितुर्भवेद् यस्माद् बीजं वप्तुरेव ॥२४॥
कौटुम्बिकश्च क्षेत्रे धान्यं वपति तस्य तत् सर्वम् । न लभेऽहं किञ्चिदपि करं मुक्त्वा, इति न्यायः ॥२५॥

तो कीरीए भणियं एवं चिय होउ किंच सिरिकरणे। लिहसु वहियाए एयं अज्जप्पभिई इमा नीई ॥२६॥
तेणवि तहेव विहियं कीरी कीरेण सह गया ठाणे। अप्पइ कीरस्स सुयं, सुयनाणि मुणिवरं तत्थ॥२७॥
पासइ सहयारतले तं वंदिय पुच्छए नियं आउं। कहइ मुणी तइयदिणे मरिऊणं इत्थ सचिवगिहे॥२८॥
उप्पज्जसि तणया तं नरभवबद्धाउयत्तजोगेण। तत्तो इह निवभज्जा इय सुणिउं जाइ जिणभवणे॥२९॥
वंदित्तु जिणं कस्सवि पासाओ भवणउत्तरंगम्मि। पुव्वुत्तअक्खराइं लिहावए इइ मणे धरिउं ॥३०॥
जइवि हु विहिवसएणं कहवि भमंतीए अक्खरे दट्ठुं। उप्पज्जइ मह जाईसुमरणमह जाइ मुणिपासे ॥३१॥
गिण्हइ विहिणाणसणं समाहिजोगेण पत्तपज्जंता। पाणविमुक्का तत्तो विसालबुद्धिस्स भज्जाए ॥३२॥
रइसुंदरीए तणया उत्तत्तसुवन्ननिग्घससमवन्ना। उप्पन्ना कयपुन्ना भुवणाणंदत्ति नामेणं ॥३३॥
उचिओ कलाकलावो वियाणिओ तीए थेवदियहेहिं। अह अन्नदिणे पत्ता उज्जाणे जिणहरस्संतो ॥
अक्खरपंतिं दट्ठुं पुव्वुत्तं जायजाइसरणा सा। जाणइ कीरभवं तं सवइयरं तो इमं मुणइ ॥३५॥
एयस्स पभावेणं जिणस्स जाया अहं सचिवगेहे। तो पइदिणंपि पूयइ वंदइ भत्तीए तं देवं ॥३६॥
सचिवस्स गिहे चिट्ठइ पहाणतुरओ, निवस्स तुरगीणं। तेण य जाया बहुया तुरंगमा मंतिगेहाओ॥३७॥
आणावइ ते राया, भुवणाणंदा न देइ अप्पेउं। महतायकिसोरेणं जाया सव्वे जओ एए ॥३८॥
ता तायस्स इमे खलु हवंति नो नरवइस्स जेण पुरा। कीरमिहुणस्स जाए पुत्तविवाए इमं लिहियं॥३९॥
सिरिकरणीयवहीए 'धीयं बीयत्तियस्स हवइ' त्ति। तो विम्हिएण रन्ना सा वहिया वाइया जाव ॥४०॥

---

ततः कीर्या भणितमेवमेव भवतु किञ्च श्रीकरणे। लिख वहिकायामेतदद्यप्रभृतीयं नीतिः ॥२६॥
तेनापि तथैव विहितं कीरी कीरेण सह गता स्थाने। अर्पयति कीराय सुतं, श्रुतज्ञानिनं मुनिवरं तत्र ॥२७॥
पश्यति सहकारतले तं वन्दित्वा पृच्छति निजमायुः। कथयति मुनिस्तृतीयदिने मृत्वात्र सचिवगृहे ॥२८॥
उत्पत्स्यसे तनया त्वं नरभवबद्धायुष्कत्वयोगेन। तत इह नृपभार्येति श्रुत्वा याति जिनभवने ॥२९॥
वन्दित्वा जिनं कस्यापि पार्श्वाद् भवनोत्तराङ्गे। पूर्वोक्ताक्षराणि लेखयतीति मनसि धृत्वा ॥३०॥
यदि हि विधिवशेन कथमपि भ्रमन्त्या अक्षराणि दृष्ट्वा। उत्पद्येत मम जातिस्मरणमथ याति मुनिपार्श्वे ॥३१॥
गृह्णाति विधिनाऽनशनं समाधियोगेन प्राप्तपर्यन्ता। प्राणविमुक्ता ततो विशालबुद्धेर्भार्यायाः ॥३२॥
रतिसुन्दर्यास्तनयोत्तप्तसुवर्णनिकषसमवर्णा। उत्पन्ना कृतपुण्या भुवनानन्देति नाम्ना ॥३३॥
उचितः कलाकलापो विज्ञातस्तया स्तोकदिवसैः। अथान्यदिने प्राप्तोद्याने जिनगृहस्यान्तः ॥३४॥
अक्षरपङ्क्तिं दृष्ट्वा पूर्वोक्तां जातजातिस्मरणा सा। जानाति कीरभवं तं सव्यतिकरं तत इदं जानाति ॥
एतस्य प्रभावेण जिनस्य जाताहं सचिवगेहे। ततः प्रतिदिनमपि पूजयति वन्दते भक्त्या तं देवम् ॥३६॥
सचिवस्य गृहे तिष्ठति प्रधानतुरगो, नृपस्य तुरगीणाम्। तेन च जाता बहवस्तुरंगमा मन्त्रिगेहात् ॥३७॥
आनाययति तान् राजा, भुवनानन्दा न ददात्यर्पयितुम्। मत्तातकिशोरेण जाताः सर्वे यत एते ॥३८॥
तस्मात्तातस्येमे खलु भवन्ति नो नरपतेर्येन पुरा। कीरमिथुनस्य जाते पुत्रविवादे इदं लिखितम् ॥३९॥

ता तं तहेव दट्ठुं नाया सा बालपंडिया रन्ना । सचिवाउ मग्गिऊणं परिणीया तो इमं भणिया ॥४१॥
अइपंडिया सि बाले ! आगंतव्वं न ताव मह गेहे । जाव न जाओ पुत्तो सव्वुत्तमगुणगणोवेओ ॥४२॥
तीइवि भणियं पियम ! पुत्ते जाए अवस्स तुह गेहे । आगंतव्वं खु मए तहा पइन्नं इमं सुणसु ॥४३॥
जइ सच्चकोविआ हं तो तुह हत्थाउ सोयइस्सामि । निअचरणे, तह तं निउपाणहियाउवि वाहिस्सं ॥
इय एगंते भणिउं गया य नियपिउगिहम्मि सा बाला । पिउणो तं वुत्तंतं साहइ सव्वंपि एगंते ॥४५॥
तो सचिवो भणइ कहं वच्छे ! अइदुग्घडं इमं घडियं ?। सा भणइ ताय ! पिच्छसु न दुग्घडं किंपि बुद्धीए ॥
सचिवेनोक्तम्;—
विसमा खलु कज्जगई 'नय सा दाणेण नेय बुद्धीए । नय पोरिसेण सिज्झइ एक्कं दिव्वं पमोत्तूण ॥४७॥
तो भणियं बालाए एवं चिय इत्थ नत्थि संदेहो । बुद्धीवि कम्मवसाओ जायइ जीवाण किल कज्जे ॥
किं बहुणा ताय ! तुमं निवस्स गेहाउ पच्छिमे भागे । सिरिरिसहसामिभवणं हिमगिरिसिहरंव निम्मवसु ॥
तम्मिवि तिकालपिच्छणयउच्छवो जह हवेइ तह कुणसु । मज्झवि गिहं विहिज्जउ विलासिणीभवणमज्झम्मि ॥
काओवि फारसिंगारसारअइसरसगीयकुसलाओ । काओवि भरहवरहावभावनिउणाउ नट्टम्मि ॥५१॥
अन्नाउ वेणुवीणामुइंगपडुपडहवायणपवीणा । कायव्वाओ ताओ वेसाउच्चिय न उण पुरिसा ॥५२॥
तीए जं जह भणियं तं तह सचिवेण कारियं सव्वं । थोवदिणाणं मज्झे सयमवि सा तत्थ नच्चेइ ॥५३॥
अह अन्नया नरिंदो परिगलियनिसाए निसुणए गीयं । पुरिसुत्तमाण ताणं जिणाण सिरिरिसहमाईण ॥

---

श्रीकरणीयवहिकायां 'बीजं वप्तुर्भवति' इति । ततो विस्मितेन राज्ञा सा वहिका वाचिता यावत् ॥४०॥
तावत् तत्रैव दृष्ट्वा ज्ञाता सा बालपण्डिता राज्ञा । सचिवाद् मार्गयित्वा परिणीता तत इदं भणिता ॥४१॥
अतिपण्डिताऽसि बाले ! आगन्तव्यं न तावद् मम गेहे । यावन्न जातः पुत्रः सर्वोत्तमगुणगणोपेतः ॥४२॥
तयापि भणितं प्रियतम ! पुत्रे जातेऽवश्यं तव गेहे । आगन्तव्यं खलु मया तथा प्रतिज्ञामिमां शृणु ॥४३॥
यदि सत्यकोविदाहं ततस्तव हस्ताच्छोचयिष्यामि । निजचरणौ, तथा त्वां निजोपानहावपि वाहयिष्यामि॥
इत्येकान्ते भणित्वा गता च निजपितृगृहे सा बाला । पितुस्तं वृत्तान्तं कथयति सर्वमप्येकान्ते ॥४५॥
ततः सचिवो भणति कथं वत्से ! अतिदुर्घटमिदं घटितम् ? । सा भणति तात ! पश्य न दुर्घटं किमपि बुद्धेः॥
विषमा खलु कार्यगतिर्नच सा दानेन नैव बुद्ध्या । नच पौरुषेण सिध्यत्येकं दैवं प्रमुच्य ॥४७॥
ततो भणितं बालयैवमेवात्र नास्ति संदेहः । बुद्धिरपि कर्मवशाज्जायते जीवानां किल कार्ये ॥४८॥
किं बहुना तात ! त्वं नृपस्य गेहात् पश्चिमे भागे । श्रीऋषभस्वामिभवनं हिमगिरिशिखरमिव निर्मापय ॥४९॥
तस्मिन्नपि त्रिकालप्रेक्षणकोत्सवो यथा भवति तथा कुरु । ममापि गृहं विधीयतां विलासिनीभवनमध्ये॥५०॥
का अपि स्फारशृङ्गारसारातिसरसगीतकुशलाः । का अपि भरतवरहावभावनिपुणा नाट्ये ॥५१॥
अन्या वेणुवीणामृदङ्गपटुपटहवादनप्रवीणाः । कर्तव्यास्ता वेश्या एव न पुनः पुरुषाः ॥५२॥
तया यद्यथा भणितं तत्तथा सचिवेन कारितं सर्वम् । स्तोकदिनानां मध्ये, स्वयमपि सा तत्र नृत्यति ॥५३॥

तो पच्छिमदारेणं विणिग्गओ आगओ य जिणभवणे। पिच्छइ अच्छीणछणं अच्छरमइयंव पिच्छणयं ॥
भुवणाणंदा सयमेव नच्चए नवनवेहिं पाढेहिं। अक्खित्तो तो राया कयगंडविसिट्ठनेवत्थो ॥५६॥
तो वित्ते पिच्छणए सुहासणेणं गया सभवणम्मि। रायावि तीए सरिसो सुत्तो रयणीए तत्थेव॥५७॥
एवं पइदियहं चिय पिच्छणयं पिच्छए तह गिहम्मि। तीइ समं संवसई जं जंपइ सो तहिं तं सा॥५८॥
नियजणयस्स कहावइ सोवि हु वहियाए लिहइ तं सव्वं। अन्नदिणे जंपाणे पाणहिए मुत्तुमारूढा॥५९॥
भणिओ राया तीए मह वाहणवाहिणी इहं नत्थि। ता तं चिय वहसु इमे तहत्ति तेणावि नियसिरसा॥
आणीयाओ ताओ सुत्तो तत्थेव अद्धरत्तम्मि। सा तयभिमुहं जंपइ मह पाया अज्जं डज्झंति॥६१॥
ता उट्ठवेहि दासिं चरणे तलहट्टए खणं एक्कं। मह एइ जेण निद्दा तो सो तलहट्टइ सयंपि॥६२॥
तीए निवारिओवि हु, अह सुहसुत्ता पलोयए सावि। सुमिणम्मि पुन्नचंदं पविसंतं निययवयणम्मि॥
तं पासिउं विउद्धा तलहट्टंतं निएवि तं चरणे। तो सहसा उट्ठेउं मिल्लाविय कहइ से सुमिणं॥६४॥
रन्ना भणियं पसयच्छि! निच्छियं तुह वरो सुओ होही। जा ता विहावरीविरमसूयगो वज्जिओ संखो॥
इत्तो उट्ठिवि राया वच्चइ गेहम्मि सावि सज्झायं। कुणमाणी तात्र ठिया जा उइओ दिणमणी तत्तो॥
पिउगेहे संपत्ता दारं पिहिऊण तस्स गेहस्स। पच्छन्नठिया चिट्ठइ कहिउं पिउणो रयणिचरियं॥६७॥
तद्दिवसभवं गब्भं परिपालइ सा सुहेण पिउगेहे। तो राया तीए गिहे तहेव बीए दिणम्मि गओ॥६८॥

---

अथान्यदा नरेन्द्रः परिगलितनिशायां शृणोति गीतम्। पुरुषोत्तमानां तेषां जिनानां श्रीऋषभादीनाम्॥५४॥
ततः पश्चिमद्वारेण विनिर्गत आगतश्च जिनभवने। पश्यत्यक्षीणक्षणमप्सरोमयमिव प्रेक्षणकम्॥५५॥
भुवनानन्दा स्वयमेव नृत्यति नवनवैः पाठैः। आक्षिप्तस्ततो राजा कृतगण्डविशिष्टनेपथ्यः॥५६॥
ततो वृत्ते प्रेक्षणके सुखासनेन गता स्वभवने। राजापि तया सह सुप्तो रजन्यां तत्रैव॥५७॥
एवं प्रतिदिवसमेव प्रेक्षणकं पश्यति तथा गृहे। तया समं संवसति यज्जल्पति स तत्र तत्सा॥५८॥
निजजनकस्य कथयति सोऽपि खलु वहिकायां लिखति तत्सर्वम्। अन्यदिने सोपाने उपानहौ मुक्त्वाऽऽरूढा॥
भणितो राजा तया मम वाहनवाहिनीह नास्ति। तस्मात्त्वमेव वहेमे तथेति तेनापि निजशिरसा॥६०॥
आनीते ते, सुप्तस्तत्रैवार्धरात्रे। सा तदभिमुखं जल्पति मम पादावद्य दह्येते॥६१॥
तस्मादुत्थापय दासीं चरणौ सिञ्चेत् क्षणमेकम्। ममैयाद् यथा निद्रा ततः स सिञ्चति स्वयमपि॥६२॥
तया निवारितोऽपि खलु, अथ सुखसुप्ता प्रलोकते सापि। स्वप्ने पूर्णचन्द्रं प्रविशन्तं निजवदने॥६३॥
तं दृष्ट्वा विबुद्धा सिञ्चन्तं दृष्ट्वा तं चरणौ। ततः सहसोत्थाय मोचयित्वा कथयति तस्मै स्वप्नम्॥६४॥
राज्ञा भणितं मृगाक्षि! निश्चितं तव वरः सुतो भविष्यति। यावत्तावद्विभावरीविरामसूचको वादितः शङ्खः॥
इत उत्थाय राजा व्रजति गेहे सापि स्वाध्यायम्। कुर्वाणा तावत्स्थिता यावदुदितो दिनमणिस्ततः॥६६॥
पितृगेहे संप्राप्ता द्वारं पिधाय तस्य गेहस्य। प्रच्छन्नस्थिता तिष्ठति कथयित्वा पितू रजनिचरितम्॥६७॥
तद्दिवसभवं गर्भं परिपालयति सा सुखेन पितृगेहे। ततो राजा तस्या गृहे तथैव द्वितीये दिने गतः॥६८॥

ता तत्थ न तं पासइ तो पुच्छइ पाडियेसियं तीसे । कत्थ गया हे ! एसा लीलावइनामिया, साह ॥६९॥
जाणामि नाह ! नाहं, तो राया विमणदुम्मणो संतो । तीए विरहे दुहिओ तं रयणि गमइ, बीयदिणे ॥
पुच्छइ मंति जह तुह भवणे जा मूलमेहरी आसि । लीलावइत्तिनामा सा कत्थ गयत्ति साहेसु? ॥७१॥
सो भणइ देव ! कल्ले पच्चूसे सा बलावि गेहाओ । नीसारिया मएच्चिय जेण इयं संपयं रुट्ठा ॥७२॥
कस्सवि ठक्कुरपुत्तस्स वन्नएणं न एइ जिणभवणे । नय पंजलमोलगइ लगइ राडीवि सिक्खविया ॥७३॥
तो तट्ठाणे अन्ना निवेसियव्वा मए य मेहरिया । तो मोणं काऊणं ठिओ नरिंदो, इओ सावि ॥७४॥
पसवइ समयम्मि सुयं वरलक्खणसंजुयं सुपच्छन्नं । वड्ढइ सचिवस्स गिहे ता जाव कलाण पारगओ ॥
तो अन्नदिणे मंती भुवणाणंदं सपुत्तयं नेउं । दंसइ निवस्स सोवि हु तं पुच्छइ का इमा महिला ? ॥
तो मंती भणइ इमा नरिंद ! तुह पणइणी मह सुया य । एसो य तुम्ह तणओ मह पुण दोहित्तओ नाह ! ॥
तो विम्हइओ राया जा किंपि हु जंपिही तओ वहिया । सचिवेण तस्स सहसा समप्पिया सो उ वाएइ ॥
जं किंचि तीए सद्धिं रहम्मि परिजंपियं तह कयंपि । तं सव्वं चिय पासइ लिहियं वहियाए सविवरं ॥
तो हरिसविसाएणं समं नरिंदो करे करेऊण । कुमरमवगूहिऊण य नियअंके ठाविओ ताव ॥८०॥
भणइ य भुवणाणंदं अरं जिओ रंजिओ अहं तुमए । नियपइन्नानिव्वाहणेण तह तणयलंभेण ॥८१॥
ता तुह रज्जं एयं एसो पुत्तो य तुज्झ इह राया । ससमीहियं मए पुण कायव्वं संपयं चेव ॥८२॥

---

तदा तत्र न तां पश्यति ततः पृच्छति प्रातिवेशिमकीं तस्याः । कुत्र गता हे ! एषा लीलावतीनामिका, साह ॥
जानामि नाथ ! नाहं, ततो राजा विमनोदुर्मनाः सन् । तस्या विरहे दुःखितस्तां रजनिं गमयति, द्वितीयदिने ॥
पृच्छति मन्त्रिणं यथा तव भवने या मूलगायनी आसीत् । लीलावतीतिनामा सा कुत्र गतेति कथय ? ॥७१॥
स भणति देव ! कल्ये प्रत्यूषे सा बलादपि गेहात् । निःसारिता मयैव येनेयं सांप्रतं रुष्टा ॥७२॥
कस्यापि ठक्कुरपुत्रस्य वर्णकेन नैति जिनभवने । न च प्राञ्जलमवलगति लगति रटितुं शिक्षिता ॥७३॥
ततस्तत्स्थानेऽन्या निवेशयितव्या मया च गायनी । ततो मौनं कृत्वा स्थितो नरेन्द्रः, इतः सापि ॥७४॥
प्रसूते समये पुत्रं वरलक्षणसंयुतं सुप्रच्छन्नम् । वर्धते सचिवस्य गृहे तावद्यावत्कलानां पारगतः ॥७५॥
ततोऽन्यदिने मन्त्री भुवनानन्दां सपुत्रकां नीत्वा । दर्शयति नृपस्य, सोऽपि हि तं पृच्छति केयं महिला ? ॥
ततो मन्त्री भणतीयं नरेन्द्र ! तव प्रणयिनी मम सुता च । एष च तव तनयो मम पुनर्दौहित्रो नाथ ! ॥
ततो विस्मितो राजा यावत्किंमपि हि जल्पिष्यति ततो वहिका । सचिवेन तस्य सहसा समर्पिता स तु वाचयति ॥
यत्किञ्चित्तया सार्धं रहसि परिजल्पितं तथा कृतमपि । तत्सर्वमेव पश्यति लिखितं वहिकायां सविवरणम् ॥
ततो हर्षविषादाभ्यां समं नरेन्द्रः करे कृत्वा । कुमारमवगूह्य च निजाङ्के स्थापितस्तावत् ॥८०॥
भणति च भुवनानन्दामरं जितो रञ्जितश्चाहं त्वया । निजप्रतिज्ञानिर्वाहणेन तथा तनयलाभेन ॥८१॥
तस्मात्तव राज्यमेतदेष पुत्रश्च तवेह राजा । स्वसमीहितं मया पुनः कर्तव्यं सांप्रतमेव ॥८२॥

---

१ क "या मेहरिया लो°। २ ख. ग. अन्नं। ३ ख. ग. तन्नि°।

धिसिधिसि मह भोगेणं धिसिधिसि मह पुरिससारमेयस्स। धिसिधिसि मे रज्जेणवि जो जित्तोइत्थियाएवि ॥
तो सचियेणं भणियं मा मा मा देव ! खेयमुव्वहसु । अप्पडिहयप्पयावो देवो सव्वत्थ लद्धजसो ॥८४॥
तो राया बाहाए धरिउं मंतिं पर्यपए एवं । इत्थत्थे मह विग्घं कायव्वं नेय केणावि ॥८५॥
इय भणिउं सो कुमरो अहिसित्तो नियपयम्मि अरिसीहो । नामंपि से विइन्नं वयं पवन्नं तओ, सो हं ॥
इय भो ! नियनिव्वेयस्स कारणं साहियं मए तुम्ह । अहव भवे भव्वाणं सव्वंपि विरागहेउत्ति ॥८७॥
तो तुम्हाणवि जुत्तो धम्मम्मि समुज्जमो जिणक्खाए । जइ जइधम्मसत्ता काउं तो कुणह गिहिधम्मं॥
सम्मं सम्मत्ताइं, तेवि हु तं गिण्हिउं गया गेहे । पालंति समाहीए दोवि हु पूयंति जिणबिंबं ॥८९॥
धणदेवो दिढचित्तो धणओ उण विसयलालसो धणियं । भमइ पमयाण मज्झे पमायमयभिभलो निच्चं॥
कीइवि सरिसं हासं फासंपि करेइ कीइवि छलेण । आलिंगइ काओ उण अवलाओ बलावि घित्तूण ॥
इय विलसंतो दिट्ठो धणदेवेणं कयाइ एगंते । वाहरिउं तो भणिओ भद्द ! इमं तुज्झ न हु जुत्तं ॥९२॥
परिवन्नवयविसेसो इयरोवि न एवमायरइ पावं । किंपुण कुलुग्गओ तं जिणधम्मविऊ विसेसेण ॥९३॥
एसा अणंगकीला पीला तुरियव्वयस्स सड्ढाणं । इहपरलोयविरुद्धं ता चयसु इमं तुमं भाय ! ॥९४॥
तो तेणं सो भणिओ भाउय ! मा भणसु किंपि मह समुहं । न चएमिणंगकीडं परिहरिउं रमणिलोलोहं ॥
जच्चंधाणवि अहियं मोहंधो होइ इय विभावेउं । सो हु धणो धणदेवेणुविक्खिओ भमइ सच्छंदं ॥९६॥

---

धिग्धिग् मम भोगान् धिग् धिग् मां पुरुषसारमेयम् । धिग्धिग् मे राज्यमपि यो जितः स्त्रियाऽपि ॥८३॥
ततः सचिवेन भणितं मा मा मा देव ! खेदमुद्वह । अप्रतिहतप्रतापो देवः सर्वत्र लब्धयशाः ॥८४॥
ततो राजा बाहुना धृत्वा मन्त्रिणं प्रजलपत्येवम् । अत्रार्थे मम विघ्नः कर्तव्यो नैव केनापि ॥८५॥
इति भणित्वा ततः कुमारोऽभिषिक्तो निजपदेऽरिसिंहः । नामापि तस्य वितीर्णं व्रतं प्रपन्नं ततः, सोऽहम्॥८६॥
इति भोः ! निजनिर्वेदस्य कारणं कथितं मया युवयोः । अथवा भवे भव्यानां सर्वमपि वैराग्यहेतुरिति॥८७॥
ततो युवयोरपि युक्तो धर्मे समुद्यमो जिनाख्याते । यदि यतिधर्मशक्तौ कर्तुं ततः कुरुतं गृहिधर्मम् ॥८८॥
सम्यक् सम्यक्त्वादि, तावपि हि तं गृहीत्वा गतौ गेहे । पालयतः समाधिना द्वावपि पूजयतो जिनबिम्बम्॥८९॥
धनदेवो दृढचित्तो धनः पुनर्विषयलालसो गाढम् । भ्रमति प्रमदानां मध्ये प्रमादमदविह्वलो नित्यम् ॥९०॥
कयापि सह हास्यं स्पर्शमपि करोति कस्या अपि च्छलेन । आलिङ्गति काः पुनरबला बलादपि गृहीत्वा॥९१॥
इति विलसन् दृष्टो धनदेवेन कदाचिदेकान्ते । आहूय ततो भणितो भद्र ! इदं तव न खलु युक्तम् ॥९२॥
प्रतिपन्नव्रतविशेष इतरोऽपि नैवमाचरति पापम् । किं पुनः कुलोद्गतस्त्वं जिनधर्मविद् विशेषेण ? ॥९३॥
एषाऽनङ्गक्रीडा पीडा तुर्यव्रतस्य श्राद्धानाम् । इहपरलोकविरुद्धं तस्मात्त्यजेदं त्वं भ्रातः ! ॥९४॥
ततस्तेन स भणितो भ्रातः ! मा भण किमपि मम संमुखम् । न शक्नोम्यनङ्गक्रीडां परिहर्तुं रमणीलोलोऽहम्॥
जात्यन्धेभ्योऽप्यधिकं मोहान्धो भवतीति विभाव्य । स खलु धनो धनदेवेनोपेक्षितो भ्रमति स्वच्छन्दम् ॥९६॥

---

१ खं. ग. मए । २ क. कुलग्ग०।

जत्थेव इत्थियाणं समवाओ तत्थ निच्छियं जाइ । अह कुमरपालखत्तियदुहियाए अहियरूवाए ॥९७॥
लुद्धो सरीरफासे तीए परिरंभणं करेमाणो । दिट्ठो तज्जणएणं निसूडिउं कंबघाएहिं ॥९८॥
बद्धो चोरुव्व तओ पक्खित्तो चारयम्मि चिंतेइ । हंद्धी मह वयभंगा फलिओ इहयंपि पावतरू ॥९९॥
जइ कहवि एक्कवारं इमाउ दुक्खाउ नणु विच्छुट्टिस्सं । तो न पुणोवि करिस्सं एवमहं कामकीलंति ॥
तो पिउणा बहुदविणेण मोइओ नियगिहम्मि सो नीओ । बीयद्दिणे मरिऊणं नागकुमारो समुप्पन्नो ॥
तत्तो भमिऊण भवे भवक्खयं पाविही य सोऽवस्सं । धणदेवो उण तइए भवम्मि सिवसंपयं लहिही ॥
कीलाए कामं पइ पावइ धणउव्व इहभवेवि दुहं । तम्हा विवेइणा सा परिहरियव्वा पयत्तेण ॥१०३॥
परिहरिअणंगकीलं धरेइ जो बंभचेरवयमसमं । सो पावइ निव्वाणं अइरा कम्मक्खयं काउं ॥१०४॥

॥ इति चतुर्थव्रते तृतीयातिचारविपाके धनदत्तकथानकं समाप्तम् ॥

---

कन्नाहललाभत्थं परवीवाहं करेइ पुन्नट्ठा । सो दुहसायरमग्गो दुग्गो इव पावइ अणत्थं ॥१॥
तथाहि;—
अत्थि अवंतीविसए उज्जेणी पुरवरी जयपसिद्धा । कुलभूसणो य सिट्ठी तब्भज्जा भूसणानामा ॥२॥
ताण सुओ संजाओ दुग्गो नामेण जोव्वणत्थोवि । बालोच्चिय चिट्ठाए उम्मत्तो भमइ पुरमज्झे ॥३॥
दोहग्गकम्मवसओ रमणी मणसावि तं न पत्थेइ । नेहेणवि आलविया अक्कोसे से पयच्छेइ ॥४॥

---

यत्रैव स्त्रीणां समवायस्तत्र निश्चितं याति । अथ कुमारपालक्षत्रियदुहितुरधिकरूपायाः ॥९७॥
लुब्धः शरीरस्पर्शे तस्याः परिरम्भं कुर्वाणः । दृष्टस्तज्जनकेन निहत्य कम्बाघातैः ॥९८॥
बद्धश्चौर इव ततः प्रक्षिप्तश्चारके चिन्तयति । हा धिग् मम व्रतभङ्गात्फलित इहापि पापतरुः ॥९९॥
यदि कथमप्येकवारमस्माद् दुःखान्ननु विच्छोटिष्यामि । ततो न पुनरपि करिष्य एवमहं कामक्रीडामिति ॥
ततः पित्रा बहुद्रविणेन मोचितो निजगृहे स नीतः । द्वितीयदिने मृत्वा नागकुमारः समुत्पन्नः ॥१०१॥
ततो भ्रान्त्वा भवे भवक्षयं प्राप्स्यति च सोऽवश्यम् । धनदेवः पुनस्तृतीये भवे शिवसंपदं लप्स्यते ॥१०२॥
क्रीडया कामं प्रति प्राप्नोति धन इवेहभवेऽपि दुःखम् । तस्माद्विवेकिना सा परिहर्तव्या प्रयत्नेन ॥१०३॥
परिहृत्यानङ्गक्रीडां धरति यो ब्रह्मचर्यव्रतमसमम् । स प्राप्नोति निर्वाणमचिरात्कर्मक्षयं कृत्वा ॥१०४॥

---

कन्याफललाभार्थं परवीवाहं करोति पुण्यार्थम् । स दुःखसागरमग्नो दुर्ग इव प्राप्नोत्यनर्थम् ॥१॥
अस्त्यवन्तीविषय उज्जयिनी पुरीवरा जगत्प्रसिद्धा । कुलभूषणश्च श्रेष्ठी तद्भार्या भूषणानामा ॥२॥
तयोः सुतः संजातो दुर्गो नाम्ना यौवनस्थोऽपि । बाल एव चेष्टयोन्मत्तो भ्रमति पुरमध्ये ॥३॥
दौर्भाग्यकर्मवशतो रमणी मनसापि तं न प्रार्थयते । स्नेहेनाप्यालपितोऽऽक्रोशांस्तस्य प्रयच्छति ॥४॥

---

१ ख. ग. °मारेसु उववन्नो ।

दोहग्गतज्जिएणं पुट्ठो कावालिओ तओ तेण । तुह कावि अत्थि विज्जा सोहग्गकरी विसेसेण ?॥५॥
सो भणइ अत्थि तिपुराविज्जा सज्जोवि देइ सोहग्गं । जा सुमरणमित्तेणवि विहिणा संसाहिया संती॥
तो भणियं दुग्गेणं जइ एवं ता पयच्छ मे विज्जं । काऊण गुरुपसायं तेणवि विहिणा विइन्ना सा॥७॥
कणवीरकुसुमलक्खं सगुग्गुलं गहिवि अन्नया दुग्गो । तिपुराविज्जादेवीपसाहणत्थं गओ मलए ॥८॥
ता जाव तत्थ निवमंदिरस्स दारम्मि केवली दिट्ठो । देसंतो सुगइपहं किंनरनरसुरसमूहस्स ॥९॥
तत्तो सो परिचिंतइ नूणं सोहग्गगुणनिही एसो । सिद्धतिपुराइविज्जो कोवि महप्पा महासिद्धो ॥१०॥
साइसयचिय विज्जा एयस्स कावालियाउ, ता एयं । पत्थेमि किंपि विज्जं इय हेऊ वंदिओ साहू ॥११॥
तेणावि धम्मलाभो दिन्नो संभासिओ य उवविट्ठो । मुणिणावि समारद्धा धम्मकहा तंपि उद्दिसिउं॥१२॥
तद्यथा;—
कामं कामासत्तो विज्जामंतेहिं चुन्नजोगेहिं । रमणीउ मोहिऊणं जो भुंजइ सो य कालेण ॥१३॥
न य मुंचइ परदारं गम्मागम्मं च न चयइ कयावि । इह जम्मम्मिवि पावइ पावो तो तिक्खदुक्खाइं॥
अहियं तह दोहग्गं होइ अणिट्ठो य सव्वलोयस्स । दोहग्गदुक्खनडिओ सो भमइ भीमभवगहणे ॥१५॥
नायागयावि भोगा भयावहा कम्मबंधहेऊ य । किं पुण उम्मग्गगया समग्गलं गलियगुणगरिमा ?॥१६॥
इयरो तणुओवि गुणो मा होउ, हवेउ केवलं सीलं । जो जीवाणं मणवंछियाइं कज्जाइं पूरेइ ॥१७॥
जमविहवहाणिपरिभवकलंकदुहपमुहदोससंदोली । सीलवियलाण पुरिसाइमाण नूणं समावडइ ॥१८॥

---

दौर्भाग्यतर्जितेन पृष्टः कापालिकस्ततस्तेन । तव काप्यस्ति विद्या सौभाग्यकरी विशेषेण ? ॥५॥
स भणत्यस्ति त्रिपुराविद्या सद्योऽपि ददाति सौभाग्यम् । या स्मरणमात्रेणापि विधिना संसाधिता सती ॥६॥
ततो भणितं दुर्गेण यद्येवं तदा प्रयच्छ मे विद्याम् । कृत्वा गुरुप्रसादं तेनापि विधिना वितीर्णा सा ॥७॥
कणवीरकुसुमलक्षं सगुग्गुलु गृहीत्वाऽन्यदा दुर्गः । त्रिपुराविद्यादेवीप्रसाधनार्थं गतो मलये ॥८॥
तावद्यावत्तत्र नृपमन्दिरस्य द्वारे केवली दृष्टः । देशयन् सुगतिपथं किन्नरनरसुरसमूहस्य ॥९॥
ततः स परिचिन्तयति नूनं सौभाग्यगुणनिधिरेषः । सिद्धत्रिपुरादिविद्यः कोऽपि महात्मा महासिद्धः ॥१०॥
सातिशयैव विद्येतस्य कापालिकात्, तस्मादेनम् । प्रार्थये कामपि विद्यामिति हेतोर्वन्दित साधुः ॥११॥
तेनापि धर्मलाभो दत्तः संभाषितश्चोपविष्टः । मुनिनापि समारब्धा धर्मकथा तमप्युद्दिश्य ॥१२॥
कामं कामासक्तो विद्यामन्त्रैश्चूर्णयोगैः । रमणीर्मोहयित्वा यो भुङ्क्ते स च कालेन ॥१३॥
न च मुञ्चति परदारान् गम्यागम्यां च न त्यजति कदापि । इह जन्मन्यपि प्राप्नोति पापस्ततस्तीक्ष्णदुःखानि॥
अधिकं तथा दौर्भाग्यं भवत्यनिष्टश्च सर्वलोकस्य । दौर्भाग्यदुःखनटितः स भ्रमति भीमभवगहने ॥१५॥
न्यायागता अपि भोगा भयावहाः कर्मबन्धहेतवश्च । किं पुनरुन्मार्गगताः समर्गलं गलितगुणगरिमाणः ?॥
इतरस्तनुरपि गुणो मा भवतु, भवतु केवलं शीलम् । यो जीवानां मनोवाञ्छितानि कार्याणि पूरयति ॥१७॥

---

१ ख. ग. नियमं० । २ ख. ग. वंदेऊणं विज्ज पत्थिस्सं इइ मुणि नमइ।

किञ्च ।

पंच एए महापावा भणिया सव्वन्नुणा इह । जेसिं पावंति दुक्खाइं पावबुद्धी नराहमा ॥१९॥
भूयहिंसा मुसावाओ चोरिया मेहुणं तहा । परिग्गहो महारंभो महासद्दारिहा इमे ॥२०॥
इच्चाइदेसणं निसुणिऊण संवेगमागया परिसा । दुग्गोवि भणइ भयवं! पंचमहापावपरिहारो ॥२१॥
कायव्वो ता संपइ नियमं मे देहि, नाणिणा दिन्नो । सम्मत्तपुव्वगं सो नमिऊण मुणिं गओ गेहे ॥२२॥
पालइ सावगधम्मं धम्मपभावेण वड्ढए रिद्धी । दिन्ना से नियधूया केणावि महिड्ढिएण तओ ॥२३॥
तीए समं सो भुंजइ विसए, जाया य तस्स दो पुत्ता । अह अन्नया य दुग्गो जा वच्चइ हट्टमग्गम्मि ॥२४॥
ता तत्थ आगएण दिट्ठो कावालिएण तेणेव । करकलियकवालेणं दिन्ना तिपुरा पुरा जेण ॥२५॥
भणिओ य इमं दुग्गो मज्झ पसाएण एरिसा रिद्धी । पत्ता सव्वावि तए तो वयणं सुणसु मह इन्हिं ॥
जेणं भवंतरेवि हु दोहग्गं दुग्ग! तुह न हु भवेइ । बहुयाउ कन्नयाउ परिणावह बंभणाईणं ॥२७॥
तो दुग्गेणं भणियं तिपुरा नहु साहिया मए तइया । न हु सा हिया जओ इह लच्छी उण धम्मपभवा मे ॥
धम्मो मुणिप्पसाया तुमंपि हेऊ य तत्थ संजाओ । जं भणसि कन्नयाणं परिणावणमिह न तं जुत्तं ॥२९॥
बंभव्वयअइयारो तेण कएणं हवइ महावस्सं । लोयव्ववहारेणं नियतणयाणंपि तं होइ ॥३०॥
कावालिएण भणियं जइ एवं तहावि मन्नणिज्जो हं । जं होही इह पावं तं मज्झ हविस्सइ न तुज्झ ॥३१॥
इय पइदिणंपि पभणइ सो तं तो तेण तदुवरोहेण । भणिओ दस कन्नाओ विवाहइस्सं अहं तत्तो ॥३२॥

---

यशोविभवहानिपरिभवकलङ्कदुःखप्रमुखदोषद्वन्द्वाली ।-शीलविकलानां पुरुषाधमानां नूनं समापतति ॥१८॥
पञ्चैते महापापा भणिताः सर्वज्ञेनेह । येभ्यः प्राप्नुवन्ति दुःखानि पापबुद्धयो नराधमाः ॥१९॥
भूतहिंसा मृषावादश्चौरिका मैथुनं तथा । परिग्रहो महारम्भो महाशब्दार्हा इमे ॥२०॥
इत्यादिदेशनां श्रुत्वा संवेगमागता परिषत् । दुर्गोऽपि भणति भगवन्! पञ्चमहापापपरिहारः ॥२१॥
कर्तव्यस्तस्मात्संप्रति नियमं मे देहि, ज्ञानिना दत्तः । सम्यक्त्वपूर्वकं स नत्वा मुनिं गतो गेहे ॥२२॥
पालयति श्रावकधर्मं धर्मप्रभावेण वर्धते ऋद्धिः । दत्ता तस्मै निजदुहिता केनापि महर्द्धिकेन ततः ॥२३॥
तया समं स भुङ्क्ते विषयान्, जातौ च तस्य द्वौ पुत्रौ । अथान्यदा च दुर्गो यावद् व्रजति हट्टमार्गे ॥२४॥
तावत्तत्रागतेन दृष्टः कापालिकेन तेनैव । करकलितकपालेन दत्ता त्रिपुरा पुरा येन ॥२५॥
भणितश्चेदं दुर्गो मम प्रसादेनेदृशी ऋद्धिः । प्राप्ता सर्वापि त्वया ततो वचनं शृणु ममेदानीम् ॥२६॥
येन भवान्तरेऽपि खलु दौर्भाग्यं दुर्ग! तव न हि भवेत् । बह्वीः कन्याः परिणायय ब्राह्मणादीनाम् ॥२७॥
ततो दुर्गेण भणितं त्रिपुरा नहि साधिता मया तदा । न खलु सा हिता यत इह लक्ष्मीः पुनर्धर्मप्रभवा मे ॥
धर्मो मुनिप्रसादात् त्वमपि हेतुश्च तत्र संजातः । यद् भणसि कन्यानां परिणायणमिह न तद्युक्तम् ॥२९॥
ब्रह्मव्रतातिचारस्तेन कृतेन भवेद् महावश्यम् । लोकव्यवहारेण निजतनयानामपि तद् भवति ॥३०॥
कापालिकेन भणितं यद्येवं तथापि माननीयोऽहम् । यद् भविष्यतीह पापं तन्मम भविष्यति न तव ॥३१॥

सो सव्वत्थ गवेसित्ति आणावेउं घरम्मि कन्नाओ। ताणुचिया कुमरावि हु आहूया लग्गदिवसम्मि॥३३॥
नियनियजन्नत्ताए जुत्ता पविसंति अहमहमिगाए। मंडवदारे जाया तत्थवि पढमप्पवेसत्थं ॥३४॥
जुज्झंति परुप्परओ वायाए तह य खग्गघाएहिं। ता जाव महाजुज्झं जन्नत्ताणं तया जायं ॥३५॥
तं निसुणिऊण दुग्गो वेगेण गओ निवारणट्ठाए। ते वारंतो विद्धो सरेण केणावि तो नट्ठो ॥३६॥
पत्तो गिहम्मि घाएण पीडिओ पुक्करेइ चिंतइ य। तुरियवयतुरियअइयाररुक्खकुसुमोग्गमो एस ॥३७॥
इण्हिंपि हु संजाओ पाविस्सं पुण फलं खु पिच्चभवे। ता सव्वहा हओ हं जं अइयरियं चउत्थवयं ॥३८॥
इय चिंतंतो पत्तो पंचत्तं भवणवासिमज्झम्मि। उववन्नो तत्तोवि हु तइयभवे सिवसुहं लहिही ॥३९॥

॥ इति चतुर्थव्रततुर्यातिचारविपाके दुर्गकथानिका समाप्ता ॥

---

जो सद्दाइसु गिद्धो विद्धो मयणस्स तिक्खभल्लीहिं। कामे तिव्वहिलासी सुजसो इव सो दुही होइ ॥१॥
तथाहि;—
चंदणवणंव बहुभोगिसंगयं गयपुरं पुरं अत्थि। अत्थियणकप्पसाही विसाहनंदी तहिं राया ॥२॥
तत्थ य निवसइ सिट्ठी पियवयणो तस्स भारिया सुलसा। सुजसो ताणं तणओ सुयवियलो जूयवसणी य ॥
सणियं सणियं बालत्तणाओ तणुयाइं तट्टबट्टाइं। अवहरिवि नियघराओ हारेइ रहम्मि खिल्लंतो ॥४॥
तो कमसो वड्ढंतेण तेण बहु हारियं रमंतेण। तायधणं तो तेणं भणिया भज्जा पिए! पुत्तो ॥५॥

---

इति प्रतिदिनमपि प्रभणति स तं ततस्तेन तद्धुपरोधेन। भणितो दश कन्या विवाहयिष्याम्यहं ततः ॥३२॥
स सर्वत्र गवेषयित्वाऽऽनीय गृहे कन्याः। तासामुचिताः कुमारा अपि खल्वाहूता लग्नदिवसे ॥३३॥
निजनिजजनतया युक्ताः प्रविशन्त्यहमहमिकया। मण्डपद्वारे यातास्तत्रापि प्रथमप्रवेशार्थम् ॥३४॥
युध्यन्ते परस्परतो वाचा तथा च खड्गघातैः। तावद्यावन्महायुद्धं जनतानां तदा जातम् ॥३५॥
तत् श्रुत्वा दुर्गो वेगेन गतो निवारणार्थम्। तान् वारयन् विद्धः शरेण केनापि ततो नष्टः ॥३६॥
प्राप्तो गृहे घातेन पीडितः पूत्करोति चिन्तयति च। तुर्यव्रततुर्यातिचारवृक्षकुसुमोद्गम एषः ॥३७॥
इदानीमपि खलु संजातः प्राप्स्यामि पुनः फलं तु प्रेत्यभवे। तस्मात्सर्वथा हतोऽहं यदतिचरितं चतुर्थव्रतम्॥३८॥
इति चिन्तयन् प्राप्तः पञ्चत्वं भवनवासिमध्ये। उपपन्नस्ततोऽपि हि तृतीयभवे शिवसुखं लप्स्यते ॥३९॥

---

यः शब्दादिषु गृद्धो विद्धो मदनस्य तीक्ष्णभल्लैः। कामे तीव्राभिलाषी सुयशा इव स दुःखी भवति ॥१॥
चन्दनवनमिव बहुभोगिसंगतं गजपुरं पुरमस्ति। अर्थिजनकल्पशाखी विशाखनन्दी तत्र राजा ॥२॥
तत्र च निवसति श्रेष्ठी प्रियवचनस्तस्य भार्या सुलसा। सुयशास्तयोस्तनयः श्रुतविकलो द्यूतव्यसनी च ॥३॥
शनैः शनैर्बालत्वात् तनून्याभरणानि। अपहृत्य निजगृहाद् नाशयति रहसि खेलन् ॥४॥
ततः क्रमशो वर्धमानेन तेन बहु नाशितं रममाणेन। तातधनं ततस्तेन भणिता भार्या प्रिये! पुत्रः ॥५॥

कालक्खरियइ एसो तो सा रोसेण भणइ तयभिमुहं । मइ जीवंतीए इमं न होइ ता जाउ दव्वंपि ॥६॥
किं किज्जइ लच्छीए पुत्तविउत्ताण पिययम! जयम्मि । चिरपवसियावि लच्छी आणिज्जइ पुणवि पुत्तेहिं ॥७॥
तो अन्नया य तेणं नियसीसं हारियं रमंतेणं । जूयारिएहिं नीओ पिउणो पासम्मि तेणावि ॥८॥
तज्जणणीए पासे पेसविओ तीइ नियय आहरणं । दाऊण मोइओ सो जूयारीणं सयासाओ ॥९॥
पुणरवि रमेइ पुणरवि य हारए सीसहत्थचरणाइं । तो अन्नया स नीओ जणयगिहे बंधिउं तेहिं॥१०॥
सिरच्छेयं कुणमाणा भणिया सुजसेण उववणस्संतो । अत्थि महतायदव्वं आगच्छह जेण दंसेमि ॥११॥
तो तत्थ गयाणं सो दंसइ ठाणंपि किंपि कवडेण । तक्खणणणखावडे ते नाउं दूरेण सो नट्ठो ॥१२॥
पत्तो आरामजिणिंदमंदिरे अजियनाहसरणं सो । पुट्ठीए तेवि पत्ता खलिया केणावि सड्ढेणं ॥१३॥
एत्थंतरम्मि पत्तो सुदाढविज्जाहरो तहिं भवणे । उक्खयखग्गा दिट्ठा जूयारा तेणवि दुवारे ॥१४॥
तो पुट्ठो सो सड्ढो तेणवि कहियं जहेस जिणसरणं । पडिवन्नो, ता एयं नाहं एयाण अप्पेमि ॥१५॥
विज्जाहरेण तत्तो आरोवेऊण सो विमाणम्मि । नंदीसरम्मि नीओ बावन्नजिणालयं दट्ठुं ॥१६॥
सो कोवि समुल्लसिओ आणंदो तम्मणम्मि बहुपावं । जेण खणेण विलीणं तमंव रविदंसणेण तहिं ॥१७॥
तत्थवि चारणसमणं सुजसो वंदेइ सुणेइ तस्संते । विज्जाहरेण सहिओ सावयधम्मंपि बारसहा ॥१८॥
पडिवज्जइ य पमोएण गिण्हए तह य जूयरमणम्मि । नियमं जावज्जीवं तो सो विज्जाहरो तुट्ठो ॥१९॥

---

कालक्षरीयत्येष ततः सा रोषेण भणति तदभिमुखम् । मयि जीवन्त्यामिदं न भवति तस्माद्यातु द्रव्यमपि ॥६॥
किं क्रियते लक्ष्म्या पुत्रवियुक्तयोः प्रियतम ! जगति । चिरप्रोषितापि लक्ष्मीरानीयते पुनरपि पुत्रैः ॥७॥
ततोऽन्यदा च तेन निजशीर्षं नाशितं रममाणेन । द्यूतकारैर्नीतः पितुः पार्श्वे तेनापि ॥८॥
तज्जनन्याः पार्श्वे प्रेषितस्तया निजाभरणम् । दत्त्वा मोचितः स द्यूतकारिणां सकाशात् ॥९॥
पुनरपि रमते पुनरपि च नाशयति शीर्षहस्तचरणादि । ततोऽन्यदा स नीतो जनकगृहे बद्ध्वा तैः ॥१०॥
शिरश्छेदं कुर्वाणा भणिता सुयशसोपवनस्यान्तः । अस्ति मत्तातद्रव्यमागच्छत येन दर्शयामि ॥११॥
ततस्तत्र गतेभ्यः स दर्शयति स्थानमपि किमपि कपटेन । नखखननव्याापृतांस्तान् ज्ञात्वा दूरेण स नष्टः ॥१२॥
प्राप्त आरामजिनेन्द्रमन्दिरेऽजितनाथशरणं सः । पृष्ठे तेऽपि प्राप्ताः स्खलिताः केनापि श्राद्धेन ॥१३॥
अत्रान्तरे प्राप्तः सुदंष्ट्रविद्याधरस्तत्र भवने । उत्खातखड्गा दृष्टा द्यूतकारास्तेनापि द्वारे ॥१४॥
ततः पृष्टः स श्राद्धस्तेनापि कथितं यथैष जिनशरणम् । प्रतिपन्नः, तस्मादेतं नाहमेतेषामर्पयामि ॥१५॥
विद्याधरेण तत आरोप्य स विमाने । नन्दीश्वरे नीतो द्विपञ्चाशज्जिनालयं द्रष्टुं ॥१६॥
स कोऽपि समुल्लसित आनन्दस्तन्मनसि बहुपापम् । येन क्षणेन विलीनं तम इव रविदर्शनेन तत्र ॥१७॥
तत्रापि चारणश्रमणं सुयशा वन्दते शृणोति तस्यान्ते । विद्याधरेण सहितः श्रावकधर्ममपि द्वादशधा॥१८॥
प्रतिपद्यते च प्रमोदेन गृह्णाति तथा च द्यूतरमणे । नियमं यावज्जीवं ततः स विद्याधरस्तुष्टः ॥१९॥

---

१ ख. ग. य नीओ सो तेहिं घरम्मि बंधेउं ।

सुजसस्स देइ विज्जं मोरीनामं विहीए सो लेइ। सिद्धाए विज्जाए तेण समं जाइ वेयड्ढे ॥२०॥
कइवयदिणाइं तत्थवि विविहा विज्जाओ पढियसिद्धाओ। विज्जाहरपासाओ गहिउं सो गयपुरं पत्तो ॥२१॥
गयपुरपइपत्तीए सोहग्गसिरीए पसवसमयम्मि। संपत्तो तप्पासे पच्छन्नो तीए मयपुत्तं ॥२२॥
अवहरिउं काऊण य मऊररूवं सयं ठिओ तत्थ। तो सूइकम्मकुसला महिला जंपेइ सिही जाओ ॥२३॥
एयं सिट्ठं रन्नो, तेणवि नेमित्तियाण तं कहियं। तेहिं भणियं नराहिव ! महाअणिट्ठं इमं होही ॥२४॥
जइ परिहरासि न देविं मोरजुयं, तक्खणेण तो रन्ना। भणिओ नियसेणाणी देविं मोरेण सह सहसा ॥
फलजलभोयणरहिए महाअरन्नम्मि नेवि परिहरसु। तेणावि तहेव विहियं तो देविं करुणसद्देण ॥२६॥
रोयंतिं संठविउं वलिओ सेणावईवि, इत्तो य। मोरोवि पयडरूवो जाओ पुरिसो सुरवरुव्व ॥२७॥
पणमेउं तं देविं संठवइ इमेहिं महुरसद्देहिं। मा माइ ! रुयसु इन्हिं पिच्छसु नियपुत्तमाहप्पं ॥२८॥
तो तक्खणेण विज्जा तव्वयणेणं पुरं पयट्टेइ। सप्पायारं रन्नो रन्नंव विचित्तबहुभवणं ॥२९॥
धणधन्नहिरन्नसुवन्नवन्नवरन्नजिणहरसमिद्धं। बहुदविणं दाऊणं लोओ अवयारिओ तत्थ ॥३०॥
मोरुवरिरइयमणिमयविमाणमारुहिवि भुवणमज्झम्मि। बहुविज्जाहरसहिओ गउरीपुत्तोव्व[1] परिभमइ ॥३१॥
जं जत्थ वत्थुसत्थं सुपसत्थं पिच्छए पुरे गामे। अत्थेण पत्थणाइवि तं गिण्हिवि नेइ मोरउरे ॥३२॥
तप्पुरसीमाए निवो संखपुरे संखवद्धणो नाम। तद्दुहिया कमलसिरी सयंवरामंडवे तीसे ॥३३॥

---

सुयशसे ददाति विद्यां मोरीनामां विधिना स लाति। सिद्धायां विद्यायां तेन समं याति वैताढ्ये ॥२०॥
कतिपयदिनानि तत्रापि विविधा विद्याः पठितसिद्धाः। विद्याधरपार्श्वाद् गृहीत्वा स गजपुरं प्राप्तः ॥२१॥
गजपुरपतिपत्न्याः सौभाग्यश्रियः प्रसवसमये। संप्राप्तस्तत्पार्श्वे प्रच्छन्नस्तस्या मृतपुत्रम् ॥२२॥
अपहृत्य कृत्वा च मयूररूपं स्वयं स्थितस्तत्र। ततः सूतिकर्मकुशला महिला जल्पति शिखी जातः ॥२३॥
एतत् शिष्टं राज्ञे, तेनापि नैमित्तिकेभ्यस्तत्कथितम्। तैर्भणितं नराधिप ! महाऽनिष्टमिदं भविष्यति ॥२४॥
यदि परिहरसि न देवीं मोरयुतां, तत्क्षणेन ततो राज्ञा। भणितो निजसेनानीर्देवीं मोरेण सह सहसा ॥२५॥
फलजलभोजनरहिते महारण्ये नीत्वा परिहर। तेनापि तथैव विहितं ततो देवीं करुणशब्देन ॥२६॥
रुदतीं संस्थाप्य वलितः सेनापतिरपि, इतश्च। मोरोऽपि प्रकटरूपो जातः पुरुषः सुरवरवत् ॥२७॥
प्रणम्य तां देवीं संस्थापयत्येभिर्मधुरशब्दैः। मा मातः ! रोदीरिदानीं पश्य निजपुत्रमाहात्म्यम् ॥२८॥
ततस्तत्क्षणेन विद्या तद्वचनेन पुरं प्रवर्तयति। सप्राकारं राज्ञ आरण्यमिव विचित्रबहुभवनम् ॥२९॥
धनधान्यहिरण्यसुवर्णवर्णद्विपक्षौशजिनगृहसमृद्धम्। बहुद्रविणं दत्त्वा लोकोऽवतारितस्तत्र ॥३०॥
मोरोपरिरचितमणिमयविमानमारुह्य भुवनमध्ये। बहुविद्याधरसहितो गौरीपुत्र इव परिभ्रमति ॥३१॥
यं यत्र वस्तुसार्थं सुप्रशस्तं पश्यति पुरे ग्रामे। अर्थेन प्रार्थनयापि तद् गृहीत्वा नयति मोरपुरे ॥३२॥
तत्पुरसीम्नि नृपः शङ्खपुरे शङ्खवर्धनो नाम। तद्दुहिता कमलश्रीः स्वयंवरामण्डपे तस्याः ॥३३॥

---

१ ग. कप्पियकुमरोव्व।

सव्वेवि निवकुमारा पाणिग्गहणम्मि तीइ संपत्ता । बत्तीसकुमरमहिओ विसाहनंदीवि लहु एइ ॥३४॥
तं सव्वं भट्टाओ सुणिउं वारिज्जदिवससमयम्मि । संखउरे संपत्तो मऊरवेसेण सो सुजसो ॥३५॥
तत्तो सयंवरामंडवम्मि बहुनिवकुमररुइरम्मि । गंतूणं उवविट्ठो कंठयलल्लुलंतमणिमालो ॥३६॥
इत्तो सा कमलसिरी करकलियवियासिकुसुमवरमाला । संपत्ता तत्थ तओ पडिहारी दंसए कुमरे ॥३७॥
अमुगनिवंगरुहोऽयं अमुगाभिहाणो निएहि पसयच्छि ! । इच्चाइ ताव जाव य गयपुरनाहंपि दंसेइ॥३८॥
नो रमइ तीए दिट्ठी कत्थवि य कुमाररायदेहेसु । वियसियविमलदलेसु य जहक्ककुसुमेसु भमरीए ॥३९॥
तोऽणक्खेहिं दंसइ तइवियसिहंडमंडियं मोरं । पणवन्नियमणिकिरणोलिभासुरं सुरवइधणुव्व ॥४०॥
अमयनिसेएणव तस्स दंसणे तीइ निव्वुया दिट्ठी । तो सहसा पक्खित्ता वरमाला तस्स कंठम्मि ॥४१॥
अह रोसफुरियअहरा कुमरा जंपंति रे ! इमं मोरं । मारह सिग्घं खग्गेण, कोवि रोसेण तो कुमरो ॥४२॥
उट्ठेउं जा हणिही तदुत्तमंगं महीए ता पडियं । तो संभंता कुमरा समं मऊरं खमावेउं ॥४३॥
जंपंति गुरुपसायं काउं पयडेसु अत्तणो रूवं । तेणवि तव्वयणेणं विज्जासामत्थओ सहसा ॥४४॥
सिहिउवरिविहियपवरं विमाणमारुहिवि दंसिओ अप्पा । विज्जाहररूवेणं तो विम्हइया निवा सव्वे ॥४५॥
जंपंति परोप्परओ इमस्सहो ! रूवसंपया परमा । इच्चाइ जंपिरेसुं पयट्टिओ ऊसवो रन्ना ॥४६॥
वित्तं पाणिग्गहणं कमलसिरीए समं विभूईए । अह सो विसाहनंदिपमुक्खनिवकुमरपरिकलिओ ॥४७॥
पत्तो अडवीनिम्मवियनियनयरम्मि तत्थ नियजणणिं । पणमइ कमलसिरीए समगं तः निवकुमारेहिं॥४८॥

---

सर्वेऽपि नृपकुमाराः पाणिग्रहणे तस्याः संप्राप्ताः । द्वात्रिंशत्कुमारसहितो विशाखनन्द्यपि लध्वेति ॥३४॥
तत्सर्वं भट्टात् श्रुत्वा विवाहदिवससमये । शङ्खपुरे संप्राप्तो मयूरवेषेण स सुयशाः ॥३५॥
ततः स्वयंवरामण्डपे बहुनृपकुमाररुचिरे । गत्वोपविष्टः कण्ठतलल्लुठन्मणिमालः ॥३६॥
इतः सा कमलश्रीः करकलितविकासिकुसुमवरमाला । संप्राप्ता तत्र ततः प्रतिहारी दर्शयति कुमारान् ॥३७॥
अमुकनृपाङ्गरुहोऽयममुकाभिधानः पश्य मृगाक्षि ! । इत्यादि तावद् यावच्च गजपुरनाथमपि दर्शयति ॥३८॥
नो रमते तस्या दृष्टिः कुत्रापि च कुमारराजदेहेषु । विकासितविमलदलेषु च यथार्ककुसुमेषु भ्रमर्याः ॥३९॥
ततो रोषैर्दर्शयति ततशिखण्डमण्डितं मोरम् । पञ्चवर्णिकमणिकिरणालीभासुरं सुरपतिधनुरिव ॥४०॥
अमृतनिषेकेणेव तस्य दर्शने तस्या निर्वृता दृष्टिः । ततः सहसा प्रक्षिप्ता वरमाला तस्य कण्ठे ॥४१॥
अथ रोषस्फुरताधराः कुमारा जल्पन्ति रे इमं मोरम् । मारय शीघ्रं खड्गेन, कोपि रोषेण ततः कुमारः॥४२॥
उत्थाय यावद्धनिष्यति तदुत्तमाङ्गं मह्यां तावत्पतितम् । ततः संभ्रान्ताः कुमाराः समं मयूरं क्षमयित्वा॥४३॥
जल्पन्ति गुरुप्रसादं कृत्वा प्रकटयात्मनो रूपम् । तेनापि तद्वचनेन विद्यासामर्थ्यतः सहसा ॥४४॥
शिख्युपरिविहितप्रवरं विमानमारुह्य दर्शित आत्मा । विद्याधररूपेण ततो विस्मिता नृपाः सर्वे ॥४५॥
जल्पन्ति परस्परतोऽस्य हो ! रूपसंपत् परमा । इत्यादि जल्पितृषु प्रवर्तित उत्सवो राज्ञा ॥४६॥
वृत्तं पाणिग्रहणं कमलश्रियाः समं विभूत्या । अथ स विशाखनन्दिप्रमुखनृपकुमारपरिकलि

तुम्हारिसाण निवपुंगवाण सुविइयवत्थुतत्ताण । सत्थपसत्थमईणं विसयपसंगो हु नहु जुत्तो ॥६२॥
यतः,

*"कामः क्रोधस्तथा हर्षो माया लोभो मदस्तथा । षड्वर्गमुत्सृजेदेनं तस्मिंस्त्यक्ते सुखी नृपः ॥"*

वंछाविच्छेयत्थं भोगे भुंजंति भोइणो जे ते । सिंचंति पसमणट्ठा घयाहुईए हुयासणयं ॥६३॥
वंछावाही असज्झो न नियत्तइ ओसहेहिंवि कएहिं । तम्हा तीउत्थाणं निरुंभियव्वं हिएसीहिं ॥६४॥
सुविणयपावियपाणियपाणेणं जह पणस्सइ न तण्हा । विसयपिवासावि तहा न नियत्तइ भोयसेवाए ॥६५॥
ता काऊण पसायं अच्चासत्तिंपि चयसु रमणीसु । परदारविरमणवयं मइलिज्जइ जेण नरनाह! ॥६६॥
इय पणइणीइ भणिए भणेइ जुत्तं तए इमं भणियं । अज्जवि गुरुकम्मो हं न समत्थो एरिसं काउं ॥६७॥
तो तीए अप्पाणं मोयावेऊण सुगुरुपासम्मि । पडिवन्ना जिणदिक्खा मोक्खसुहं वंछमाणीए ॥६८॥
सुजसोवि विसयगिद्धो गिद्धो इव आमिसम्मि अणवरयं । न मुयइ तिव्वहिलासं रमणीरमणीयदेहेसु ॥६९॥
थीसेवअइप्पसंगा जाओ धाउक्खओ तओ तस्स । तह संजाओ खासो किसो विवन्नो य देहेण ॥७०॥
सव्वाउ विरत्ताओ चित्तेण तहावि बज्झचिट्ठाए । दंसंति य अणुरायं तप्पुरओ पणइणीउ तहा ॥७१॥
जह जह ताओ पिच्छइ छणिंदुवयणाउ लडहनयणाउ । तह तह अहिययरं चिय विसएसु मणं पयट्टेइ॥७२॥
एगाण उवरि चरणे खिवेइ अन्नाण बाहुलइयाओ । संठवइ कावि चिहुरे संवाहइ कावि जंघाओ ॥७३॥
वावारइ सव्वाओ कमेण कामग्गहाभिभूओ सो । भज्जाओ विरत्ताओ भवाउ तस्सवि य चिंतंति ॥७४॥

---

रमते रमणीभिः सार्धमनवरतं रतरस आसक्तः । कमलश्रिया भणितोऽथान्यदा विनयप्रणतया ॥६१॥
युष्मादृशानां नृपपुङ्गवानां सुविदितवस्तुतत्त्वानाम् । शास्त्रप्रशस्तमतीनां विषयप्रसङ्गः खलु न युक्तः ॥६२॥
वाञ्छाविच्छेदार्थं भोगान् भुञ्जते भोगिनो ये ते । सिञ्चन्ति प्रशमनार्थं घृताहुत्या हुताशनम् ॥६३॥
वाञ्छाव्याधिरसाध्यो न निवर्तते औषधैरपि कृतैः । तस्मात्तस्या उत्थानं निरोद्धव्यं हितैषिभिः ॥६४॥
स्वप्नप्राप्तपानीयपानेन यथा प्रणश्यति न तृष्णा । विषयपिपासापि तथा न निवर्तते भोगसेवया ॥६५॥
*तस्मात्कृत्वा प्रसादमत्यासक्तिमपि त्यज रमणीषु । परदारविरमणव्रतं मलिनीक्रियते येन नरनाथ ! ॥६६॥*
*इति प्रणयिन्या भणिते भणति युक्तं त्वयेदं भणितम् । अद्यापि गुरुकर्माहं न समर्थ ईदृशं कर्तुम् ॥६७॥*
ततस्तयाऽऽत्मानं मोचयित्वा सुगुरुपार्श्वे । प्रतिपन्ना जिनदीक्षा मोक्षसुखं वाञ्छन्त्या ॥६८॥
सुयशा अपि विषयगृद्धो गृद्ध इवामिषेऽनवरतम् । न मुञ्चति तीव्राभिलाषं रमणीरमणीयदेहेषु ॥६९॥
स्त्रीसेवातिप्रसङ्गाज्जातो धातुक्षयस्ततस्तस्य । तथा संजातः कासः कृशो विवर्णश्च देहेन ॥७०॥
सर्वा विरक्ताश्चित्तेन तथापि बाह्यचेष्टया । दर्शयन्ति चानुरागं तत्पुरतः प्रणयिन्यस्तथा ॥७१॥
यथा यथा ताः पृच्छति क्षणेन्दुवदना रम्यनयनाः । तथा तथाऽधिकतरमेव विषयेषु मनः प्रवर्तते ॥७२॥
एकासामुपरि चरणौ क्षिपत्यन्यासां बाहुलते । संस्थापयति का अपि चिकुरे संवाहयति का अपि जङ्घे ॥
व्यापारयति सर्वाः क्रमेण कामग्रहाभिभूतः सः । भार्या विरक्ता भवात् तस्यापि च चिन्तयन्ति ॥७४॥

अहह अहो ! माहप्पं मोहस्स सुदारुणं मणे फुरइ। एयस्स पुहइवइणो जामदिसं पत्थियस्सावि ॥७५॥
अह पणइणीहिं भणिओ सामिय ! धम्मम्मि आयरं कुणसु। जो सह जाइ होही भवंतरे दुहपरित्ताई॥७६॥
एयाओ पणइणीओ तह चउरंगं बलं च रिद्धीओ। न भवंतरमणुजाईणि नाह ! धम्मं पमोत्तूण ॥७७॥
ता मुंच महामोहं अम्हाणुवरिंपि, चिंतसु सकज्जं। तं सोऊणं कुविओ भणेइ हुं जाणियं तुम्ह ॥७८॥
सव्वंपि सरूवं जं इच्छेह मरंतयं ममम्मियाणिं। तो आहिवाहिवियणा विसेसओ तस्स संजाया ॥७९॥
अपरिचइउं विसए गिद्धो इत्थीसु सो मरेऊण। अट्टज्झाणोवगओ उववन्नो तिरियजाईए ॥८०॥
लहिऊण पुणो बोहिं भवम्मि सहिऊण दुक्खसंघायं। लहिही सिद्धिसुहंपि हु सुजसो कम्मक्खयं काउं॥
सव्वावि हु सामग्गी पत्ता सुजसेण हारिया पच्छा। कामं तिव्वहिलासो ता चइअव्वो सुहेसीहिं ॥८२॥
निरु निक्कलंकसीलं लीलाए धरंति जे महासत्ता। ते भुवणवंदणिज्जा होउं सिज्झंति विहुयरया॥८३॥
चंगंगसंगएणवि जेण अणंगो विणिज्जिओ नेयं। परिचत्तपुरिसयारो छायापुरिसोव्व सो पुरिसो ॥८४॥

॥ इति चतुर्थव्रतपञ्चमातिचारविपाके सुयशोनृपकथानकं समाप्तम् ॥

॥ तत्समाप्तौ समाप्तं चतुर्थाणुव्रतम् ॥

---

अहह अहो ! माहात्म्यं मोहस्य सुदारुणं मनसि स्फुरति। एतस्य पृथिवीपतेर्यामदिशं प्रस्थितस्यापि ॥७५॥
अथ प्रणयिनीभिर्भणितः स्वामिन् ! धर्मे आदरं कुरुष्व। यः सह याति भविष्यति भवान्तरे दुःखपरित्रायी ॥
एताः प्रणयिन्यस्तथा चतुरङ्गं बलं च ऋद्धयः। न भवान्तरानुयायिन्यो नाथ ! धर्मं प्रमुच्य ॥७७॥
तस्मान्मुञ्च महामोहमस्माकमुपर्यपि, चिन्तय स्वकार्यम्। तत् श्रुत्वा कुपितो भणति हुं ज्ञातं युष्माकम् ॥
सर्वमपि स्वरूपं यदिच्छत म्रियमाणं मामिदानीम्। तत आधिव्याधिवेदना विशेषतस्तस्य संजाताः ॥७९॥
अपरित्यज्य विषयान् गृद्धः स्त्रीषु स मृत्वा। आर्तध्यानोपगत उपपन्नस्तिर्यग्जातौ ॥८०॥
लब्ध्वा पुनर्बोधिं भवे सहित्वा दुःखसंघातम्। लप्स्यते सिद्धिसुखमपि हि सुयशाः कर्मक्षयं कृत्वा ॥८१॥
सर्वापि खलु सामग्री प्राप्ता सुयशसा नाशिता पश्चात्। कामे तीव्राभिलापस्तस्मात्त्यक्तव्यः सुखैषिभिः ॥८२॥
निश्चितं निष्कलङ्कशीलं लीलया धरन्ति ये महासत्त्वाः। ते भुवनवन्दनीया भूत्वा सिध्यन्ति विधूतरजसः॥८३॥
चङ्गाङ्गसंगतेनापि येनानङ्गो विनिर्जितो नैव। परित्यक्तपुरुषकारश्छायापुरुष इव स पुरुषः ॥८४॥



खित्ते वत्थुहिरन्ने सुवन्नधणधन्नदुपयचउचरणे । कुवियम्मिवि परिमाणं कायव्वं बुद्धिमंतेहिं ॥१॥
परिमियमासेवंतो अपरिमियमणंतयं परिहरंतो । पावइ परम्मि लोए सेणुव्व अपरिमियं सोक्खं ॥२॥
तथाहि;—
चामीयरधयचिंचइयचेइया कंची पुरवरी अत्थि । तत्थ निवो नरपालो तस्स सिवानामिया भज्जा ॥३॥
तत्थत्थि मिच्छदिट्ठी सिट्ठी सेणुत्ति धणकणसमिद्धो । भज्जा कुवलयमाला कुवलयमालव्व गुणकलिया ॥
ताणं च तिन्नि तणया गुरुविणया देहकंतिजियकणया । हरिहरबंभभिहाणा कलासु कुसला नयनिहाणं॥
अह अन्नया कयाई सिट्ठिगिहे मासदिवसपारणए । पत्तो चउनाणमुणी भिक्खट्ठमहाणुपुव्वीए ॥६॥
तं दट्ठूण पहिट्ठो सिट्ठी गहिऊण सत्तुयत्थालं । अब्भुट्ठइ से दाउं तो सो मुणिणा[1]इमं भणिओ ॥७॥
न हु मे एए कप्पंति सुहुमजीवेहिं जेण संसत्ता । को पच्चउत्ति भणिए, भणेइ एवं मुणी तत्तो ॥८॥
देहु अलत्तयपम्हं एयाणं उवरिं जेण दंसेमि । तेणवि तहत्ति विहिए तव्वन्ना जंतुणो दिट्ठा ॥९॥
तो ते मोत्तूण दहिं दाउं समुवट्ठिओ मुणिवरस्स । तत्थवि तहेव भणिए पुव्वुत्ते पच्चए जाए ॥१०॥
सो मोयगाण थालं भरिऊण मुणिस्स दंसए जाव । ताव मुणिणावि भणिओ एए विसमोयया, साह ॥
को पच्चओ कहिज्जउ, मुणीवि साहेइ मक्खिया इत्थ । जा जा लग्गइ सा सा पिच्छह निब्भंतयं मरइ॥
तो सो विम्हियहियओ भणेइ विसदायगं मह कहेसु । तो मुणिणा से कहियं कम्मयरी जा मया कल्ले॥
को हेऊ इय करणे तीइवि, तो मुणिवरो कहइ एवं । जह कम्मिवि अवराहे तुमए तह तुह कुडुंबेण ॥१४॥

---

क्षेत्रे वस्तुहिरण्ये सुवर्णधनधान्यद्विपदचतुश्चरणे । कुप्येऽपि परिमाणं कर्तव्यं बुद्धिमद्भिः ॥१॥
परिमितमासेवमानोऽपरिमितमनन्तं परिहरन् । प्राप्नोति परस्मिँल्लोके सेनवदपरिमितं सौख्यम् ॥२॥
चामीकरध्वजमण्डितचैत्या काञ्ची पुरीवराऽस्ति । तत्र नृपो नरपालस्तस्य शिवानामिका भार्या ॥३॥
तत्रास्ति मिथ्यादृष्टिः श्रेष्ठी सेन इति धनकणसमृद्धः । भार्या कुवलयमाला कुवलयमालेव गुणकलिता ॥४॥
तयोश्च त्रयस्तनया गुरुविनया देहकान्तिजितकनकाः । हरिहरब्रह्माभिधानाः कलासु कुशला नयनिधानम् ॥
अथान्यदा कदाचित् श्रेष्ठिगृहे मासदिवसपारणके । प्राप्तश्चतुर्ज्ञानमुनिर्भिक्षार्थमथानुपूर्व्या ॥ ६ ॥
तं दृष्ट्वा प्रहृष्टः श्रेष्ठी गृहीत्वा सक्तुस्थालम् । अभ्युत्तिष्ठति तस्मै दातुं ततः स मुनिनेदं भणितः ॥७॥
न खलु म एते कल्प्यन्ते सूक्ष्मजीवैर्येन संसक्ताः । कः प्रत्यय इति भणिते भणत्येवं मुनिस्ततः ॥८॥
दत्ताऽलक्तपक्ष्माणमेतेषामुपरि येन दर्शयामि । तेनापि तथेति विहिते तद्वर्णा जन्तवो दृष्टाः ॥९॥
ततस्तान् मुक्त्वा दधि दातुं समुपस्थितो मुनिवराय । तत्रापि तथैव भणिते पूर्वोक्ते प्रत्यये जाते ॥१०॥
ततो मोदकानां स्थालं भृत्वा मुनये दर्शयति यावत् । तावन्मुनिनापि भणित एते विषमोदकाः, स आह ॥
कः प्रत्ययः कथ्यतां, मुनिरपि कथयति मक्षिकाऽत्र । या या लगति सा सा पश्यत निर्भ्रान्तं म्रियते॥१२॥
ततः स विस्मितहृदयो भणति विषदायकं मह्यं कथय । ततो मुनिना तस्मै कथितं कर्मकरी या मृता कल्ये ॥

---

१ ग. किंचि ।

निब्भच्छियाए तीए विसजुत्ता मोयगा कया एए। तुम्हकए, तह अविसं मोयगदुगमत्तणो जुग्गं॥१५॥
तत्तो छुहाभिभूयाए तीए भंतीए मोयगा भुत्ता। विससंजुत्ता तो तक्खणेण सा मरणमणुपत्ता॥१६॥
एयम्मि य पुण थाले मोयगदुगमेव निव्विसं, सेसा। विससंजुत्ता सव्वे, ता मह एए न कप्पंति॥१७॥
तुमए सकुडुंबेणवि जइ कहवि हु भक्खिया इमे हुंता। ता असरणस्स मरणं तुह होतं को निवारिज्जा?॥
ता सकुडुंबो छुट्टो तमिमीए आवईए कुण धम्मं। सो भणइ कहसु तं मह, तो साहू कहइ दुविहंपि॥१९॥
पढमऽसमत्थेण तओ सावयधम्मो पवज्जिओ तेण। भिक्खागएहिं जइवि हु धम्मकहा नेय कहियव्वा॥
तहवि गुणं कलिऊणं मुणिणा सेणस्स साहिओ धम्मो। परमन्नेणं पच्छा पडिलाभिवि वंदए सेणो॥
तं साहुं, सोवि गओ ठाणं, सेणोवि कुणइ जिणधम्मं। पुत्तपपुत्तेहिं तहा धणेण परिवड्ढए सिट्ठी॥२२॥
जायं जिणधम्मरयं सेणकुडुंबं कमेण सविसेसं। कयपरिग्गहपरिमाणो करेइ धम्मं जिणुद्दिट्ठं॥२३॥
अह अन्नोन्नं सुयभारिआओ कलहंति, तो सुया सेणं। पभणंति देह भायं जेण तुह होहिमो भिन्ना॥
तो तेण तहा विहिए लहुओ पभणेइ बंधवं जिट्ठं। जं अवलवियं दव्वं तंपि विभज्जेहि भागेहिं॥२५॥
तो हरिणा सो भणिओ नत्थि महं किंपि किं मुहा भणसि। लोयभणिएहिं एवं सोउं सेणो विचिंतेइ॥

"आक्षीरधारैकभुजामार्गैकनिवासिनाम्। नमोऽर्थेभ्यो ये पृथक्त्वं भ्रातृणामपि कुर्वते॥"

तो तस्स नियभागो दिन्नो सेणेण तो घरकएवि। जुज्झंतो मूलहरे संठविओ सो सह हरेणं॥२७॥
भणति च तान् प्रति;—

---

को हेतुरिति करणे तस्या अपि, ततो मुनिवरः कथयत्येवम्। यथा कस्मिन्नप्यपराधे त्वया तथा तव कुटुम्बेन॥
निर्भर्त्सितया तया विषयुक्ता मोदकाः कृता एते। युष्मत्कृते, तथाऽविषं मोदकद्विकमात्मनो योग्यम्॥१५॥
ततः क्षुदभिभूतया तया भ्रान्त्या मोदकौ भुक्तौ। विषसंयुक्तौ ततस्तत्क्षणेन सा मरणमनुप्राप्ता॥१६॥
एतस्मिंश्च पुनः स्थाले मोदकद्विकमेव, निर्विषं शेषाः। विषसंयुक्ताः सर्वे, तस्मान्ममैते न कल्प्यन्ते॥१७॥
त्वया सकुटुम्बेनापि यदि कथमपि हि भक्षिता इमेऽभविष्यन्। तदाऽशरणस्य मरणं तवाभविष्यत्को निवारयेत्॥
तस्मात्सकुटुम्बस्त्रुटितस्त्वमस्या आपदः, कुरु धर्मम्। स भणति कथय तं मम, ततः साधुः कथयति द्विविधमपि॥
प्रथमासमर्थेन ततः श्रावकधर्मः प्रपन्नस्तेन। भिक्षागतैर्यद्यपि हि धर्मकथा नैव कथयितव्या॥२०॥
तथापि गुणं कलयित्वा मुनिना सेनाय कथितो धर्मः। परमान्नेन पश्चात्प्रतिलाभ्य वन्दते सेनः॥२१॥
तं साधुं, सोऽपि गतः स्थानं, सेनोऽपि करोति जिनधर्मम्। पुत्रप्रपुत्रैस्तथा धनेन परिवर्धते श्रेष्ठी॥२२॥
जातं जिनधर्मरतं सेनकुटुम्बं क्रमेण सविशेषम्। कृतपरिग्रहपरिमाणः करोति धर्मं जिनोद्दिष्टम्॥२३॥
अथान्योन्यं सुतभार्याः कलहायन्ते, ततः सुताः सेनम्। प्रभणन्ति दत्त भागं येन त्वद् भविष्यामो भिन्नाः॥
ततस्तेन तथा विहिते लघुः प्रभणति बान्धवं ज्येष्ठम्। यदपलपितं द्रव्यं तदपि विभजस्व भागैः॥२५॥
ततो हरिणा स भणितो नास्ति मम किमपि किं मुधा भणसि। लोकभणितैरेवं श्रुत्वा सेनो विचिन्तयति॥
ततस्तस्य निजभागो दत्तः सेनेन ततो गृहकृतेऽपि। युध्यमानो मूलगृहे संस्थापितः स सह हरेण॥२७॥

जललवचलम्मि विहवे विज्जुलयाचवलजीविए को णु । घरधणकज्जे विउसो कुणइ विवायं सबंधूहिं ? ॥
जाणियजिणवयणाणं भावियभवभूरिदुहसरूवाणं । जं जायइ इह कलहो अहह अहो ! मोहमाहप्पं ॥२९॥
तो ते संवेगपरा परोप्परं खामयंति अवराहं । मा हु कसायवसाणं सम्मत्तं गलउ अम्हाणं ॥३०॥
अह भारियाए भणिओ सेणो जह नियघरं सदव्वंपि । पुत्ताण तए दिन्नं ता तं कह होहिसि इयाणिं ?॥
तो सेणेणं भणियं जस्स मणे जिणमयं सया वसइ । तस्सत्थेण घरेणव चिंतामणिणावि का गणणा ? ॥
तो तीए सो भणिओ भम भिक्खं संपयं वयं गहिउं । समसाणे सुन्नघरे देवउले वावि तं वससु ॥३३॥
सो भणइ हवसु धीरा कमेण एयंपि आयरिस्सामि । इहलोइअंपि दंसेमि ताव तुह धम्ममाहप्पं ॥३४॥
इय भणिउं गेहाओ पत्तो नियमित्तमंतिगेहम्मि । साहइ कुडुंबवत्तं तप्पुरओ मग्गइ गिहंपि ॥३५॥
भणइ सचिवोवि बंधव ! निवगिहमत्थित्ति मोग्गडपविट्ठं । किंतु सदोसं न हु वसइ कोवि कइयावि तम्मि गिहे॥
जइ पुण धम्मपभावा पभविस्सइ वंतरो न तुह किंपि । तो तेण सउणगंठी बद्धो पत्तो य तम्मि गिहे ॥३७॥
निस्सीहियं करेउं अणुजाणाविय गओ स गिहमज्झे । ईरियं पडिक्कमित्ता सज्झायं कुणइ सो एवं ॥३८॥
तथाहि;—
गयमेयज्जमहामुणिखंदगसीसाइसाहुचरियाइं । सुमरंतो कह कुप्पसि एत्तियमित्तेवि रे जीव ! ॥३९॥
पिच्छसु पाणविणासेवि न परिउस्संति जे महासत्ता । तुज्झ पुण हीणसत्तस्स वयणमित्तेवि एस खमा ॥
रे जीव ! सुहदुहेसुं निमित्तमित्तं परो जियाणंति । सकयफलं भुंजंतो कीस मुहा कुप्पसि परस्स ?॥४१॥

---

जललवचले विभवे विद्युल्लताचपलजीविते को नु । गृहधनकार्ये विद्वान् करोति विवादं स्वबन्धुभिः ? ॥२८॥
ज्ञातजिनवचनानां भावितभवभूरिदुःखस्वरूपाणाम् । यज्जायत इह कलहोऽहह अहो ! मोहमाहात्म्यम्॥२९॥
ततस्ते संवेगपराः परस्परं क्षमयन्त्यपराधम् । मा खलु कषायवशानां सम्यक्त्वं गलत्वस्माकम् ॥३०॥
अथ भार्यया भणितः सेनो यथा निजगृहं सद्रव्यमपि । पुत्रेभ्यस्त्वया दत्तं ततस्त्वं कथं भविष्यसीदानीम् ? ॥
ततः सेनेन भणितं यस्य मनसि जिनमतं सदा वसति । तस्यार्थेन गृहेण वा चिन्तामणिनापि का गणना?॥
ततस्तया स भणितो भ्रम भिक्षां सांप्रतं व्रतं गृहीत्वा । श्मशाने शून्यगृहे देवकुले वापि त्वं वस ॥३३॥
*स भणति भव धीरा क्रमेणैतदप्याचरिष्यामि । ऐहलौकिकमपि दर्शयामि तावत्तव धर्ममाहात्म्यम् ॥३४॥*
इति भणित्वा गेहात् प्राप्तो निजमित्रमन्त्रिगेहे । कथयति कुटुम्बवृत्तं तत्पुरतो मार्गयति गृहमपि ॥३५॥
भणति सचिवोऽपि बान्धव ! नृपगृहमस्तीति मुद्गरप्रविष्टम् । किन्तु सदोषं न हि वसति कोऽपि कदापि तस्मिन् गृहे ॥
यदि पुनर्धर्मप्रभावात्प्रभविष्यति व्यन्तरो न तव किमपि । ततस्तेन शाकुनग्रन्थिर्बद्धः प्राप्तश्च तस्मिन् गृहे ॥३७॥
नैषेधिकीं कृत्वाऽनुज्ञाप्य गतः स गृहमध्ये । ईर्यां प्रतिक्रम्य स्वाध्यायं करोति स एवम् ॥३८॥
गजमेतार्यमहामुनिस्कन्दकशिष्यादिसाधुचरितानि । स्मरन् कथं कुप्यसि एतावन्मात्रेऽपि रे जीव ! ॥३९॥
पश्य प्राणविनाशेऽपि न परिद्विषन्ति ये महासत्त्वाः । तव पुनर्हीनसत्त्वस्य वचनमात्रेऽप्येषा क्षमा ॥४०॥
रे जीव ! सुखदुःखेषु निमित्तमात्रं परो जीवानामिति । स्वकृतफलं भुञ्जानः कस्मान्मुधा कुप्यसि परस्मै ? ॥

मोहविमूढा जीवा अत्थे य घरे य मुच्छिया धणियं। जिणवयणमयाणंता भमंति संसारकंतारे ॥४२॥
धिद्धी अहो अणज्जो मोहो जमिमेण मोहिया जीवा। न गणंति पुत्तमित्ते पहरंता निक्किवनिसंसा॥४३॥
इय सो जा पहरदुगं रयणीए कुणइ पवरसज्झायं। तो वाणमंतरेणं भणियं सुणिऊण हिट्ठेणं ॥४४॥
सुट्ठु तए हं धरिओ निवडंतो वियडभवमहाअयडे। सो हं सुरो सरोसो एयं उच्चासियं जेण ॥४५॥
तप्पुट्ठेणं कहियं एयस्सामी पुरा अहं आसि। मह दो पुत्ता लहुओ अइइट्ठो तस्स घरसारं ॥४६॥
दाउं जिट्ठो ठविओ भिन्नहरे तस्स किंपि दाऊण। तो कुद्धेणं तेणं अहयं माराविओ, पच्छा ॥४७॥
लहुओ धराविऊण रायउले अप्पणा गिहं गहियं। सोवि मओ गुत्तीए अहं तु इह वंतरो जाओ॥४८॥
नाऊण विभंगेणं नियजिट्ठसुयस्स विलसियं तो सो। सकुडुंबो उद्दविओ अन्नोवि हु वसइ जो कोइ॥४९॥
सोवि मरइ निब्भंतं इइ जायं उव्वसं इमं गेहं। संपइ तं धम्मगुरू तो तुज्झ इमं मए दिन्नं ॥५०॥
सनिहाणंपि लहुंपि हु उक्खणिऊणं समप्पए तस्स। दस लक्खा संजाया तम्मि तओ पभणए सेणो॥
इगलक्खो मोक्कलओ सेसा नव लक्खगाउ धम्मम्मि। दाहिस्सं, तुह पुन्नं, सो पभणइ तुज्झवि तयद्धं॥
अन्नंपि किंपि पभणसु जं कायव्वं मए महाभाग!। पच्चुवयारसमत्थो न होमि तुह जीविएणावि॥५३॥
तुह सज्झायं सुणिउं किच्चाकिच्चं वियाणिउं तत्तो। चत्तो वइरप्पबंधो, सेणो तो भणइ तं एवं ॥५४॥
सव्वेहिवि जीवेहिं लद्धे पंचिदियत्तणे पवरे। अप्पहियं कायव्वं परहियकरणेण तं होइ ॥५५॥
जं परहियं विहिज्जइ जिणिंदवयणाणुसारओ सम्मं। परिणमइ अप्पणो तं हियभावेणं न संदेहो॥५६॥

---

मोहविमूढा जीवा अर्थे च गृहे च मूर्च्छिता गाढम्। जिनवचनमजानन्तो भ्रमन्ति संसारकान्तारे ॥४२॥
धिग् धिगहोऽनार्यो मोहो यदनेन मोहिता जीवाः। न गणयन्ति पुत्रमित्राणि प्रहरन्तो निष्कृपनृशंसाः ॥
इति स यावत्प्रहरद्विकं रजन्यां करोति प्रवरस्वाध्यायम्। ततो वानव्यन्तरेण भणितं श्रुत्वा हृष्टेन ॥४४॥
सुष्ठु त्वयाऽहं धृतो निपतन् विकटभवमहावटे। सोऽहं सुरः सरोष एतदुद्वासितं येन ॥४५॥
तत्पृष्टेन कथितमेतत्स्वामी पुराऽहमासम्। मम द्वौ पुत्रौ लघुरतीष्टस्तस्मै गृहसारम् ॥४६॥
दत्त्वा ज्येष्ठः स्थापितो भिन्नगृहे तस्मै किमपि दत्त्वा। ततः क्रुद्धेन तेनाहं मारितः, पश्चात् ॥४७॥
लघुं धारयित्वा राजकुल आत्मना गृहं गृहीतम्। सोऽपि मृतो गुप्तावहं त्विह व्यन्तरो जातः ॥४८॥
ज्ञात्वा विभङ्गेन निजज्येष्ठसुतस्य विलसितं ततः सः। सकुटुम्ब उद्द्रावितोऽन्योपि हि वसति यः कोऽपि ॥४९॥
सोऽपि म्रियते निर्भ्रान्तमिति जातमुद्वसमिदं गेहम्। संप्रति त्वं धर्मगुरुस्ततस्तुभ्यमिदं मया दत्तम् ॥५०॥
स्वनिधानमपि लघ्वपि खलूत्खाय समर्पयति तस्मै। दश लक्षाः संजातास्तस्मिंस्ततः प्रभणति सेनः ॥५१॥
एक लक्ष उचितः शेषान् नव लक्षांस्तु धर्मे। दास्ये, तव पुण्यं, स प्रभणति तवापि तदर्धम् ॥५२॥
अन्यदपि किमपि प्रभण यत्कर्तव्यं मया महाभाग!। प्रत्युपकारसमर्थो न भवामि तव जीवितेनापि ॥५३॥
तव स्वाध्यायं श्रुत्वा कृत्याकृत्यं विज्ञाय ततः। त्यक्तो वैरप्रबन्धः, सेनस्ततो भणति तमेवम् ॥५४॥
सर्वैरपि जीवैर्लब्धे पञ्चेन्द्रियत्वे प्रवरे। आत्महितं कर्तव्यं परहितकरणेन तद् भवति ॥५५॥

जे परमंगुलकरणेण अप्पणो मंगलं पकप्पंति । जिणवयणबाहिरा ते न मुणंति हि तत्तओ सहियं ॥
ता अप्पहियं धम्मं मोत्तुं अन्नं न विज्जए लोए । ता तेत्थ तए सुरवर ! कायव्वो उज्जमो निच्चं ॥५८॥
तो सो तहत्ति भणिउं गओ तओ दिणयरम्मि उइयम्मि । तब्भज्जा पुरमज्झे गवेसयंती गिहे तम्मि॥५९॥
पत्ता पिच्छइ सिट्ठिं विसिट्ठआहरणरेहिरसरीरं । पभणइ अहं निव्विन्ना गवेसयंती तुमं सुहय ! ॥६०॥
केण इमं आहरणं केण य दव्वं विइन्नयं एयं ? । सो भणइ पिए ! धम्मेण चेव मा पुच्छसु तमन्नं ॥६१॥
तो तक्खणेण सिट्ठी पत्तो जिणमंदिरम्मि जिणपूयं । काउं सवित्थरं चिय कारावइ पवरपिच्छणयं॥६२॥
सम्माणेउं जायगजणंपि नमिऊण गुरुजणं पयओ । पत्तो सो तम्मि गिहे भुंजइ साहम्मियसमेओ ॥६३॥
रयणीय वंतरो सो रायनिहीओ अपत्थिओवि लहुं । उक्खणिउं कलससयं सिट्ठिगिहे खिवइ नेहेण ॥
भणइ य मा निवइभयं काहिसि सिच्छाए देसु दाणाइं । वइयम्मि इमे दव्वे पुणरवि य समप्पइस्सामि॥
जा किल किंचिवि भणिही ताव गओ वंतरो नियं ठाणं। सिट्ठी पिच्छिवि कलसे निवनामंकिए सहसा ॥
घित्तूणं पच्चूसे उवायणं सुयणलोयपरियरिओ । निवदंसणं करेई कहइ य सुरविहियवुत्तंतं ॥६७॥
रायावि कलसमेगं आणावइ पिच्छए नियनामं । तो तुट्ठो भणइ इमं मएवि तुह चेव दिन्नंति ॥६८॥
तो संतोसपरेणं भणियं सेणेण देव ! दस लक्खा । जे वंतरेण दिन्ना ताणवि मज्झाउ इगलक्खो ॥६९॥
मह सत्ताए सेसं नवलक्खपमाणयं तु जं दव्वं । तं धम्मे दाहिस्सं वंतरवयणेण पुन्नट्ठा ॥७०॥

---

यत् परहितं विधीयते जिनेन्द्रवचनानुसारतः सम्यक् । परिणमत आत्मनस्तद् हितभावेन न संदेहः ॥५६॥
ये परानिष्टकरणेनात्मनो मङ्गलं प्रकल्पयन्ति । जिनवचनबाह्यास्ते न जानन्ति हि तत्त्वतः स्वहितम् ॥५७॥
तस्मादात्महितं धर्मं मुक्त्वाऽन्यद् न विद्यते लोके । तस्मादत्र त्वया सुरवर ! कर्तव्य उद्यमो नित्यम् ॥५८॥
ततः स तथेति भणित्वा गतस्ततो दिनकर उदिते । तद्भार्या पुरमध्ये गवेषयन्ती गृहे तस्मिन् ॥५९॥
प्राप्ता पश्यति श्रेष्ठिनं विशिष्टाभरणराजितृशरीरम् । प्रभणत्यहं निर्विण्णा गवेषयन्ती त्वां सुभग ! ॥६०॥
केनेदमाभरणं केन च द्रव्यं वितीर्णमेतत् ? । स भणति प्रिय ! धर्मेणैव मा पृच्छ त्वमन्यत् ॥६१॥
ततस्तत्क्षणेन श्रेष्ठी प्राप्तो जिनमन्दिरे जिनपूजाम् । कृत्वा सविस्तरमेव कारयति प्रवरप्रेक्षणकम् ॥६२॥
सम्मान्य याचकजनमपि नत्वा गुरुजनं प्रयतः । प्राप्तः स तस्मिन् गृहे भुङ्क्ते साधर्मिकसमेतः ॥६३॥
रजन्यां व्यन्तरः स राजनिधितोऽप्रार्थितोऽपि लघु । उत्खाय कलशशतं श्रेष्ठिगृहे क्षिपति स्नेहेन ॥६४॥
भणति च मा नृपतिभयं कार्षीः स्वेच्छया देहि दानानि । व्ययितेऽस्मिन्द्रव्ये पुनरपि च समर्पयिष्यामि ॥
यावत्किल किञ्चिदपि भणिष्यति तावद्गतो व्यन्तरो निजं स्थानम् । श्रेष्ठी दृष्ट्वा कलशान्नृपनामाङ्कितान् सहसा ॥
गृहीत्वा प्रत्यूष उपायनं सुजनलोकपरिकरितः । नृपदर्शनं करोति कथयति च सुरविहितवृत्तान्तम् ॥६७॥
राजापि कलशमेकमानाययति पश्यति निजनाम । ततस्तुष्टो भणतीमं मयापि तुभ्यमेव दत्तमिति ॥६८॥
ततः संतोषपरेण भणितं सेनेन देव ! दश लक्षाः । ये व्यन्तरेण दत्तास्तेषामपि मध्यादेकलक्षः ॥६९॥

---

१ ग. इत्थ ।

तो रंजिओ नरिंदो तं दव्वं तस्स अप्पिउं भणइ । विव्वसु सिच्छाए तुमं धम्मम्मि तओ य सेणोवि ॥
सव्वेसुवि खित्तेसु विव्वित्ता तं समग्गमवि दव्वं । पव्वज्जं पडिवन्नो सिद्धो य खविउ कम्माइं ॥७२॥
तो सेणुव्व सयावि हु संतोसरसायणं पियह भव्वा ! । जेण जरमरणहरणं पावह अचिरेण सिवसोक्खं ॥

॥ इति पञ्चमाणुव्रतपरिपालनदृष्टान्ते श्रेष्ठिसेनकथानकं समाप्तम् ॥

---

मम सत्तायां शेषं नवलक्षप्रमाणकं तु यद् द्रव्यम् । तद् धर्मे दास्ये व्यन्तरवचनेन पुण्यार्थम् ॥७०॥
ततो रञ्जितो नरेन्द्रस्तद् द्रव्यं तस्मा अर्पयित्वा भणति । वीहि स्वेच्छया त्वं धर्मे ततश्च सेनोऽपि ॥७१॥
सर्वेष्वपि क्षेत्रेषु वीत्य तत् समग्रमपि द्रव्यम् । प्रव्रज्यां प्रतिपन्नः सिद्धश्च क्षपयित्वा कर्माणि ॥७२॥
ततः सेन इव सदापि खलु संतोषरसायनं पिबत भव्याः ! । येन जरामरणहरणं प्राप्नुताचिरेण शिवसौख्यम् ॥



गेहाईपरिमाणं काउं जोएइ पैलहियाईयं । अइलोहग्गहघत्थो सो पावइ नवघणोव्व दुहं ॥१॥
तथाहि ;—
अत्थि पुरमुदयसेलव्व सूरदियरायसंगमसइण्हं । उदयपुरं नामेणं उदयाइच्चो य तत्थ निवो ॥२॥
तह निवसइ तत्थ वणी नवघणो नवघणोव्व अणवरयं । दाणसलिलेण वरिसइ समत्थअत्थियणखित्तेसु ॥
तस्सवि य पिया सुहसीलसालिणी संपयत्ति नामेण । अइनेहनिब्भराइं परोप्परं विसयसत्ताइं ॥४॥
चिट्ठंति ताइं, एत्तो जिणभवणे उच्छवम्मि पारद्धे । कोऊहलकलियाइं पत्ताइं तत्थ पिच्छंति ॥५॥
सूरिं गुणरयणनिहिं सावयधम्मं कहंतयं संतं । भव्वाण तओ ताइंवि सुणंति नमिऊण तं चेव ॥६॥
तम्मि समयम्मि सूरी साहइ पंचममणुव्वयं तत्तो । सम्मत्तं गहिऊणं तेहिंवि तं चेव पडिवन्नं ॥७॥
अणुसासियाइं गुरुणा पत्ताइं गिहम्मि हट्ठतुट्ठाइं । अप्पुत्ताइं तत्तो पालंति विहीए जिणधम्मं ॥८॥
तह सुविसुद्धनएणं नवघणवणिओ करेइ वाणिज्जं । नियहट्टे उवविट्ठो विसिट्ठपणिएहिं नियएहिं ॥९॥
अह कोवि ठक्कुरो किणइ तस्स हट्टम्मि दससहस्साणं । भंडं दाउं दम्मे लेइ पुणो तह पुणो देइ ॥१०॥
अह अन्नया य तेणं उद्धारे वीससहस्सदम्माणं । गहिया कप्पडमाई मग्गइ तो नवघणो मुल्लं ॥११॥
थक्को कुहणिं दाउं रूवगमित्तंपि देइ नो तस्स । तो सो साहइ मंतिस्स सोवि मग्गेइ दव्वद्धं ॥१२॥
तत्तो अंगरक्खस्स साहए सोवि मग्गए अद्धं । तो पुरसिट्ठिस्स तलारयस्स तह तेवि मग्गंति ॥१३॥
तो पत्तो स विलक्खो नियगेहं भारियाए तो पुट्ठो । उव्विग्गो विय दीससि किमकंडे सुहय! साहेसु ॥

---

गेहादिपरिमाणं कृत्वा योजयति परिमितातीतम् । अतिलोभग्रहग्रस्तः स प्राप्नोति नवघन इव दुःखम् ॥१॥
अस्ति पुरमुदयशैल इव शू(सू)रद्विजराजसंगमसतृष्णम् । उदयपुरं नाम्ना उदयादित्यश्च तत्र नृपः ॥२॥
तथा निवसति तत्र वणिग् नवघनो नवघनवदनवरतम् । दानसलिलेन वर्षति समस्तार्थिजनक्षेत्रेषु ॥३॥
तस्यापि च प्रिया शुभशीलशालिनी संपदिति नाम्ना । अतिस्नेहनिर्भरौ परस्परं विषयसक्तौ ॥४॥
तिष्ठतस्तौ, इतो जिनभवन उत्सवे प्रारब्धे । कुतूहलकलितौ प्राप्तौ तत्र पश्यतः ॥५॥
सूरिं गुणरत्ननिधिं श्रावकधर्मं कथयन्तं सन्तम् । भव्येभ्यस्ततस्तावपि शृणुतो नत्वा तमेव ॥६॥
तस्मिन्समये सूरिः कथयति पञ्चममणुव्रतं ततः । सम्यक्त्वं गृहीत्वा ताभ्यामपि तदेव प्रतिपन्नम् ॥७॥
अनुशासितौ गुरुणा प्राप्तौ गृहे हृष्टतुष्टौ । अपुत्रौ ततः पालयतो विधिना जिनधर्मम् ॥८॥
तथा सुविशुद्धनयेन नवधनवणिक् करोति वाणिज्यम् । निजहट्ट उपविष्टो विशिष्टपण्यैर्निजैः ॥९॥
अथ कोऽपि ठक्कुरः क्रीणाति तस्य हट्टे दशसहस्याः । भाण्डं दत्त्वा द्रम्माँल्लाति पुनस्तथा पुनर्ददाति ॥१०॥
अथान्यदा च तेनोद्धारे विंशतिसहस्रद्रम्माणाम् । गृहीताः कर्पटादयो मार्गयति ततो नवघनो मूल्यम् ॥११॥
स्थितः कूर्परं दत्त्वा रूप्यकमात्रमपि ददाति नो तस्य । ततः स कथयति मन्त्रिणे सोऽपि मार्गयति द्रव्यार्धम्॥
ततोऽङ्गरक्षाय कथयति सोऽपि मार्गयत्यर्धम् । ततः पुरश्रेष्ठिने पुररक्षकाय-तथा तावपि मार्गयतः ॥१३॥

---

१ ख फल° । २ ख. ग. नवघणोव्व सो पावए दुक्खं । ३ ग. वाएहिं ।

तेणवि कहियं सव्वं सवित्थरं ठक्कुराइववहारं । तो सो तीए भणिओ अहं भलिस्सामि सव्वंपि ॥१५॥
तं ता कम्मिवि गामे गच्छह चिंतेमि जाव हमुवायं । मइ सद्दिएण तुमए आगंतव्वं पुणो एत्थ ॥१६॥
एवंति मन्निऊणं नवघणवणिओ गओ य गामम्मि । पत्तो सचिवस्स गिहे सावि पिया संपया तस्स॥१७॥
उब्भडकयसिंगारा लायन्नविलाससहासकमणीया । मंतिपुरओ उवविट्ठा उवायणं किंपि काऊण ॥१८॥
रयणीय पढमजामे विसज्जियासेसपरियणो मंती । तद्दंसणेण खुहिओ पढइ सकामं तओ एवं ॥१९॥

परं जुण्हा उण्हा गरलसरिसो चंदनरसो, खरं खारो हारो सिसिरपवणा देहतवणा ।
मुणाली बाणाली जलइ व जलद्दा तणुगया, निविट्ठा जं दिट्ठा कमलवयणा दीहनयणा ॥२०॥

तं खुहियं नाऊणं भणेइ सा सुणसु मज्झ विन्नत्ति । ता ऊससियमणो सो भणेइ आइससु जं कज्जं ॥२१॥
तो विन्नत्तो तीए ठक्कुरसंबंधिवइयरो सव्वो । तेणवि सो पडिवन्नो भणिया य तहा जहा सुयणु ! ॥२२॥
तुमएवि मज्झ कज्जं करणीयं किंपि मयणविहुरस्स । तो तीए पडिभणियं किमजुत्तं किंतु कल्लम्मि॥२३॥
अज्जाहं बंभरया पच्चूसे पडिवयाए रयणीए । आगंतव्वं तुमए निब्भंतं पढमजामम्मि ॥२४॥
इय वोत्तुं सा पत्ता निवंगरक्खस्स गेहमह सोवि । दट्ठुं चिंतेइ मणे का एसा बालिया एइ ॥२५॥
पायालाओ नागंगणा णु विज्जाहरी णु देवी णु । असुररमणी णु सिद्धंगणा णु नरलोयमोइन्ना ॥२६॥
कोसल्लिउं विहेउं उवविट्ठा आसणम्मि तो पुट्ठा । ठक्कुरवइयरमक्खइ तो सो पभणेइ तोसेणं ॥२७॥

---

ततः प्रातः स विलक्षो निजगेहं भार्यया ततः पृष्टः । उद्विग्न इव दृश्यसे किमकाण्डे सुभग ! कथय ॥१४॥
तेनापि कथितः सर्वः सविस्तरं ठक्कुरादिव्यवहारः । ततः स तया भणितोऽहं भलिप्ये सर्वमपि ॥१५॥
त्वं तस्मात्कस्मिन्नपि ग्रामे गच्छ चिन्तयामि यावदहमुपायम् । मया शब्दितेन त्वयाऽऽगन्तव्यं पुनरत्र ॥१६॥
एवमिति मत्वा नवघनवणिग् गतश्च ग्रामे । प्राप्ता सचिवस्य गृहे सापि प्रिया संपत् तस्य ॥१७॥
उद्भटकृतशृङ्गारा लावण्यविलासहासकमनीया । मन्त्रिपुरत उपविष्टोपायनं किमपि कृत्वा ॥१८॥
रजन्याः प्रथमयामे विसर्जिताशेषपरिजनो मन्त्री । तद्दर्शनेन क्षुभितः पठति सकामं तत एवम् ॥१९॥

परं ज्योत्स्नोष्णा गरलसदृशश्चन्दनरसः, खरं खारो हारः शिशिरपवना देहतपनाः ।
मृणाली बाणाली ज्वलति च जलार्द्रा तनुगता, निविष्टा यद् दृष्टा कमलवदना दीर्घनयना ॥२०॥

तं क्षुभितं ज्ञात्वा भणति सा शृणु मम विज्ञप्तिम् । तत उच्छ्वसितमनाः स भणत्यादिश यत्कार्यम् ॥२१॥
ततो विज्ञप्तस्तया ठक्कुरसंबन्धिव्यतिकरः सर्वः । तेनापि स प्रतिपन्नो भणिता च तथा यथा सुतनु ! ॥२२॥
त्वयापि मम कार्यं करणीयं किमपि मदनविधुरस्य । ततस्तया प्रतिभणितं किमयुक्तं किन्तु कल्ये ॥२३॥
अद्याहं ब्रह्मरता प्रत्यूषे प्रतिपदो रजन्याः । आगन्तव्यं त्वया निर्भ्रान्तं प्रथमयामे ॥२४॥
इत्युक्त्वा सा प्राप्ता नृपाङ्गरक्षस्य गेहमथ सोऽपि । दृष्ट्वा चिन्तयति मनसि कैषा बालिकेति ॥२५॥
पातालाद् नागाङ्गना नु विद्याधरी नु देवी नु । असुररमणी नु सिद्धाङ्गना नु नरलोकमवतीर्णा ॥२६॥
कौशलिकां विधायोपविष्टाऽऽसने ततः पृष्टा । ठक्कुरव्यतिकरमाख्याति ततः स प्रभणति तोषेण ॥२७॥

एयं तुह कज्जमहं साहिस्सं निच्छएण पसयच्छि ! । अम्हाणवि जं कज्जं मणुब्भवं तं तए कज्जं ॥२८॥
तो तीए पडिभणियं जं सक्कं तं अहंपि काहिस्सं । जललवचलदेहस्सवि सारं तं सुयणकज्जम्मि ॥२९॥
जं जाइ उवओगं, इय सुणिउं सो भणेइ संतुट्ठो । संपयमवि पउणो हं सावि हु पच्चुत्तरं काउं ॥३०॥
तं भणइ बीयपहरे पडिवयरयणीए हं सरेयव्वा । इय भणिवि सिट्ठितलवरगिहे गया तेहिं दिट्ठा य ॥३१॥
कहं ।
पाउससिरिव्व उन्नयपओहरा धणुलयव्व गुणकलिया । खग्गलयव्व सुहारा सुतुच्छमज्झा भवसुहंव॥३२॥
ताणवि पुव्वुत्तविही कहिओ, तेहिवि तहेव पडिभणियं । तइयपहरम्मि सिट्ठी आहूओ कोट्टवालो उ ॥
चरिमे जामे, इत्तो समागया सावि नियगेहम्मि । पभणइ य दुइयदिवसे पओससमए नियं दासिं॥३४॥
पउणं करेहि मह मज्जणत्थमुवगरणमुण्हसलिलाई । अइपउरं, तीइ तहा विहिए तो पढमपहरम्मि॥३५॥
संपत्तो सो सचिवो अब्भुट्ठेऊण गंधतिल्लेण । अब्भंगियमुव्वट्टइ सयं तओ वहलखलियाए ॥३६॥
उस्सिंचइ सिरकमलं जा सा सचिवस्स ता दुवारम्मि। वियडकवाडकडाणं खडक्कओ निसुणिओ तत्तो॥
पेसेऊणं दासिं जोयावइ जाव द्वारदेसं सा । तो भणइ अंगरक्खो उग्घाडउ कवाडयं झत्ति ॥३८॥
तस्सद्दं सुणिऊणं भीओ मंती भणेइ कत्थवि य । खिवसु पिए ! मं खिप्पं जावेसो वोलई कहवि ॥३९॥
तो ओयरियामज्झे खित्तो मंती निरुंभियं दारं । दिन्नं च तालयं ता भयभीओ चिट्ठए तत्थ ॥४०॥

---

एतत्तव कार्यमहं साधयिष्यामि निश्चयेन मृगाक्षि ! । अस्माकमपि यत्कार्यं मनउद्भवं तत्तया कार्यम् ॥२८॥
ततस्तया प्रतिभणितं यच्छक्यं तदहमपि करिष्ये । जललवचलदेहस्यापि सारं तत् सुजनकार्ये ॥२९॥
यद् यात्युपयोगम्, इति श्रुत्वा स भणति संतुष्टः । सांप्रतमपि प्रगुणोऽहं सापि हि प्रत्युत्तरं कृत्वा ॥३०॥
तं भणति द्वितीयप्रहरे प्रतिपद्रजन्यामहं स्मर्तव्या । इति भणित्वा श्रेष्ठिपुररक्षकगृहे गता ताभ्यां दृष्टा च ॥
कथम् ।
प्रावृट्श्रीरिवोन्नतपयोधरा धनुर्लतेव गुणकलिता । खड्गलतेव सुहा(धा)रा सुतुच्छमध्या भवसुखमिव ॥३२॥
तयोरपि पूर्वोक्तविधिः कथितः, ताभ्यामपि तथैव प्रतिभणितम् । तृतीयप्रहरे श्रेष्ठ्याहूतो दुर्गपालस्तु ॥३३॥
चरमे यामे, इतः समागता सापि निजगेहे । प्रभणति च द्वितीयदिवसे प्रदोषसमये निजां दासीम् ॥३४॥
प्रगुणं कुरु मम मज्जनार्थमुपकरणमुष्णसलिलादि । अतिप्रचुरं, तया तथा विहिते ततः प्रथमप्रहरे ॥३५॥
संप्राप्तः स सचिवोऽभ्युत्थाय गन्धतैलेन । अभ्यङ्गमुद्वर्तयति स्वयं ततो बहलखलिकया ॥३६॥
उत्सिञ्चति शिरःकमलं यावत्सा सचिवस्य तावद् द्वारे । विकटकपाटशृङ्खलानां खटत्कारः श्रुतस्ततः ॥३७॥
प्रेष्य दासीं दर्शयति यावद् द्वारदेशं सा । ततो भणत्यङ्गरक्ष उद्घाटय कपाटं झटिति ॥३८॥
तच्छब्दं श्रुत्वा भीतो मन्त्री भणति कुत्रापि च । क्षिप प्रिये ! मां क्षिप्रं यावदेष गच्छति कथमपि ॥३९॥
ततोऽपवरिकामध्ये क्षिप्तो मन्त्री निरुद्धं द्वारम् । दत्तं च तालकं ततो भयभीतस्तिष्ठति तत्र ॥४०॥

१ क. शर्क ।

उग्घाडावइ दाराइं ताण कमसो, तओ य एक्काए । खलिलिसंगो चिट्ठइ मंती, सेसावि सेसासु ॥५६॥
तो अच्चब्भुयभूयं ताण सरूवं निरिक्खिउं राया । पुच्छइ सचिवाईए तेवि न पच्चुत्तरं दिंति ॥५७॥
तो संपयाए भणियं देवाहमिमाण सयलवुत्तंतं । साहिस्सं किंतु परं अभए एयाण दिन्नम्मि ॥५८॥
तो भूवइणा अभए दिन्ने तेसिं च संपयाए तओ । ठक्कुरवुत्तंताओ कहियं सव्वं सवित्थरओ ॥५९॥
तो नरवइणा भणियं अमच्च ! सच्चं इमीए जं भणियं ? । एवंति तो पभणिए तयभिमुहं जंपए राया ॥
भोऽमच्च ! सुहुमबायरदूरेयरवत्थुजाणणे निउणं । नरवइणो परमत्थेण मंतिणो हुंति नयणाइं ॥६१॥
न मुणंति विवेयविलोयणाइं नयणाइं वत्थुपरमत्थं । नरवइणो मयणमहंधयारविहुरिज्जमाणाइं ॥६२॥
ता एयं विवरीयं जायं तुह सचिव ! संपयं चेव । ता संपयाए भणिओ खमियव्वं देव ! मह एयं ॥६३॥
को दोसो एयाणं मयणमहाचरडपीडिया पुरिसा । काउमकिच्चं लहुया हुंति तणाओवि जं भणियं ॥
अकयपहारेणमणंगएण कुसुमाउहेणवि खणेण । जे घिप्पंति हयासा ते हुंति लहू तणाओवि ॥६५॥
न रवी न हव्ववाहो न निसानाहो न मणिसमूहोवि । वम्महतममाहप्पं जयम्मि मुसुमूरिउं तरइ ॥६६॥
जं नत्थि तं पलोयइ जं विज्जइ तं न पिच्छइ पयत्थं । अहह अहो ! अप्पुव्वं तिमिरं मिहिरुग्गमे मयणो ॥६७॥
एयस्स मयणतिमिरस्स नासणं किंपि विज्जए न परं । मोत्तूण मणविवेयं सुहवत्थुपयासणपवीणं ॥६८॥
किञ्च ।
आसंसारं विसयाण सेवणा होइ सव्वजीवाण । परमजणसेवणिज्जं न उणो मणयंपि संचरणं ॥६९॥

---

इति भणित्वा सा दर्शयत्यपवरकान्कथयति चैतेषाम् । मध्ये नवघनसंबन्धि तिष्ठति द्रव्यमिति ततो राजा ॥
उद्घाटयति द्वाराणि तेषां क्रमशः, ततश्चैकस्याम् । खलीलिप्ताङ्गस्तिष्ठति मन्त्री, शेषा अपि शेषेषु ॥५६॥
ततोऽत्यद्भुतभूतं तेषां स्वरूपं निरीक्ष्य राजा । पृच्छति सचिवादींस्तेऽपि न प्रत्युत्तरं ददति ॥५७॥
ततः संपदा भणितं देवाहमेषां सकलवृत्तान्तम् । कथयिष्यामि किन्तु परमभये एतेषां दत्ते ॥५८॥
ततो भूपतिनाऽभये दत्ते तेषां च संपदा ततः । ठक्कुरवृत्तान्तात्कथितं सर्वं सविस्तरम् ॥५९॥
ततो नरपतिना भणितममात्य ! सत्यमनया यद्भणितम् ? । एवमिति ततः प्रभणिते तदाभिमुखं जल्पति राजा ॥
भो अमात्य ! सूक्ष्मबादरदूरेतरवस्तुज्ञाने निपुणम् । नरपतेः परमार्थेन मन्त्रिणो भवन्ति नयनानि ॥६१॥
न जानीतो विवेकविलोचने नयने वस्तुपरमार्थम् । नरपतेर्मदनमहान्धकारविधुरायमाने ॥६२॥
तस्मादेतद् विपरीतं जातं तव सचिव ! सांप्रतमेव । तदा संपदा भणितः क्षन्तव्यं देव ! ममैतत् ॥६३॥
को दोष एतेषां मदनमहाचरटपीडिताः पुरुषाः । कृत्वाऽकृत्यं लघवो भवन्ति तृणादपि यद् भणितम् ॥६४॥
अकृतप्रहारेणानङ्गेन कुसुमायुधेनापि क्षणेन । ये गृह्यन्ते हताशास्ते भवन्ति लघवस्तृणादपि ॥६५॥
न रविर्न हव्यवाहो न निशानाथो न मणिसमूहोऽपि । मन्मथतमोमाहात्म्यं जगति भङ्क्तुं शक्नोति ॥६६॥
यो नास्ति तं प्रलोकते यो विद्यते तं न पश्यति पदार्थम् । अहह अहो ! अपूर्वं तिमिरं मिहिरोद्गमे मदनः ॥
एतस्य मदनतिमिरस्य नाशनं किमपि विद्यते न परम् । मुक्त्वा मनोविवेकं शुभवस्तुप्रकाशनप्रवीणम् ॥६८॥

सच्चरणं चिय संसारसायरे होइ तारणं जेण। तो पुट्ठा नरवइणा चरणं किं भन्नइ मयच्छि ! ॥७०॥
अट्ठप्पवयणमायासरूवयं सा कहेइ वित्थरओ। तं सुणिउं पडिबुद्धा भणंति सचिवाइया एवं ॥७१॥
खमसुवराहं अम्हं मोहमहण्णवनिमग्गसव्वंगा। नित्थारिया तइच्चिय परमेसरि परमकारुणिणि! ॥७२॥
ता दंसेहि कहंपि हु गुरूण पयपंकयंति, अह तत्थ। आगंतूणं उज्जाणपालगो भणइ नरनाहं ॥७३॥
वद्धाविज्जइ देवो देवासुरवंदणिज्जपयकमलो। सिरिसिरिचंदमुणिंदो समोसढो मलयदेसम्मि ॥७४॥
दावइ नियंगलग्गं आहरणं तस्स तोसवसओ सो। तो सचिवाईहिं निवो भणिओ जह सूरिपासम्मि॥७५॥
गिण्हामो पव्वज्जं विसज्जसे जइ तुमंति सो भणइ। जुत्तमिणं सव्वेसिं तुम्हाणं सुकुलजायाणं ॥७६॥
तो संपयाए सव्वे कारविया मज्जणं लहुं तत्तो। चंदणचच्चियअंगा पवरालंकारकयसोहा ॥७७॥
मंगलपयाणपुव्वं चउरोवि हु करिवरेसु आरूढा। संपत्ता सनरिंदा मुणिंदपासम्मि वित्थरओ ॥७८॥
तेहिंवि दिन्ना दिक्खा सचिवाईणं कमेण धुयकम्मा। ते सिद्धिसुहं पत्ता रन्नावि गहित्तु गिहिधम्मं॥७९॥
सा संपया पवन्ना भइणी तह तप्पईवि गामाओ। आहूओ सिट्ठिपए ठविओ पुरलोयपच्चक्खं ॥८०॥
सो ठक्कुरोवि भणिउं दव्वं दाविओ विसेसेण। जिणधम्मपरा चिट्ठइ संपया नवघणसमेया ॥८१॥
कालेण तओ नरवइपसायओ नवघणो अइपमत्तो। पच्चासन्नगिहाइं किणिउं मेलेइ सगिहस्स ॥८२॥
तो भज्जाए भणिओ तुह अइयारो हविस्सई एवं। एक्कगिहं मुक्कलियं तए कयं पंचमवयम्मि ॥८३॥

---

आसंसारं विषयाणां सेवना भवति सर्वजीवानाम्। परमजनसेवनीयं न पुनर्मनागपि सच्चरणम् ॥६९॥
सच्चरणमेव संसारसागरे भवति तारणं येन। ततः पृष्टा नरपतिना चरणं किं भण्यते मृगाक्षि ! ॥७०॥
*अष्टप्रवचनमातृस्वरूपं सा कथयति विस्तरतः। तत् श्रुत्वा प्रतिबुद्धा भणन्ति सचिवादय एवम् ॥७१॥*
क्षमस्वापराधमस्माकं मोहमहार्णवनिमग्नसर्वाङ्गाः। निस्तारितास्त्वयैव परमेश्वरि परमकारुणिके ! ॥७२॥
तस्माद् दर्शय कथमपि गुरूणां पदपङ्कजमिति, अथ तत्र। आगत्योद्यानपालको भणति नरनाथम् ॥७३॥
वर्ध्यते देवो देवासुरवन्दनीयपदकमलः। श्रीश्रीचन्द्रमुनीन्द्रः समवसृतो मलयदेशे ॥७४॥
दापयति निजाङ्गलग्नमाभरणं तस्य तोषवशतः सः। ततः सचिवादिभिर्नृपो भणितो यथा सूरिपार्श्वे ॥७५॥
गृह्णामः प्रव्रज्यां विसृजसि यदि त्वमिति स भणति। युक्तमिदं सर्वेषां युष्माकं सुकुलजातानाम् ॥७६॥
ततः संपदा सर्वे कारिता मज्जनं लघु ततः। चन्दनचर्चिताङ्गाः प्रवरालंकारकृतशोभाः ॥७७॥
मङ्गलप्रदानपूर्वं चत्वारोऽपि हि करिवरेष्वारूढाः। संप्राप्ताः सनरेन्द्रा मुनीन्द्रपार्श्वे विस्तरतः ॥७८॥
तैरपि दत्ता दीक्षा सचिवादिभ्यः क्रमेण धूतकर्माणः। ते सिद्धिसुखं प्राप्ता राज्ञापि गृहीत्वा गृहिधर्मम् ॥
सा संपत् प्रपन्ना भगिनी तथा तत्पतिरपि ग्रामात्। आहूतः श्रेष्ठिपदे स्थापितः पुरलोकप्रत्यक्षम् ॥८०॥
स ठक्कुरोऽपि भणित्वा द्रव्यं दापितो विशेषेण। जिनधर्मपरा तिष्ठति संपद् नवघनसमेता ॥८१॥
*कालेन ततो नरपतिप्रसादतो नवघनोऽतिप्रमत्तः। प्रत्यासन्नगृहाणि क्रीत्वा मेलयति स्वगृहे ॥८२॥*
ततो भार्यया भणितस्तवातिचारो भविष्यत्येवम्। एकगृहमुचितं त्वया कृतं पञ्चमव्रते ॥८३॥

सो भणई किं नट्ठं एक्कगिहं चिय इमं खु नो दुइयं । सा भणइ बहुं नट्ठं तुहवयमालिन्नभावेण ॥८४॥
अपरं च,—
जइ एवं निरविक्खो जंपसि कूडुत्तराइं मह पुरओ । तो घरसहिओवि तुमं चत्तो वयमायरिस्समहं ॥८५॥
इय भणिउं तीए वयं गहिऊणं साहियं सयं कज्जं । नवघणसिट्ठीवि दुहावि संपयाए परिच्चत्तो ॥८६॥
तो सिढिलियधम्मो सो गहिओ घरवंतरेण केणावि । उम्मत्तो पुरमज्झे भमेइ डिंभेहिं परियरिओ ॥८७॥
कोवि हु खिवेइ धूलिं पहणइ लिट्ठेहिं कोवि हु हसेइ । एवं सोवि भमंतो मरिउं असुरेसु उववन्नो ॥८८॥
ता थेवंपि वयाणं अइयारं परिहरेह भो भव्वा ! । जइ वंछह सिवसोक्खं दुहदंदोलीए निव्विन्ना ॥८९॥

॥ इति पञ्चमाणुव्रतप्रथमातिचारविपाके नवघनदृष्टान्तः समाप्तः ॥

---

स भणति किं नष्टमेकगृहमेवेदं खलु नो द्वितीयम् । सा भणति बहु नष्टं त्वद्व्रतमालिन्यभावेन ॥८४॥
यद्येवं निरपेक्षो जल्पसि कूटोत्तराणि मम पुरतः । ततो गृहसहितोऽपि त्वं त्यक्तो व्रतमाचरिष्याम्यहम् ॥
इति भणित्वा तया व्रतं गृहीत्वा साधितं स्वयं कार्यम् । नवघनश्रेष्ठ्यपि द्विधापि संपदा परित्यक्तः ॥८६॥
ततः शिथिलितधर्मः स गृहीतो गृहव्यन्तरेण केनापि । उन्मत्तः पुरमध्ये भ्रमति डिम्भैः परिकरितः ॥८७॥
कोऽपि खलु क्षिपति धूलिं प्रहन्ति लेष्टुभिः कोऽपि हि हसति । एवं सोऽपि भ्रमन्मृत्वाऽसुरेषूपपन्नः ॥८८॥
तस्मात्स्तोकमपि व्रतानामतिचारं परिहरत भो भव्याः ! । यदि वाञ्छत शिवसौख्यं दुःखद्वन्द्वाल्या निर्विण्णाः ॥

रायाईण पसायं लद्धुं दव्वं सुहीण अप्पेइ । जो जाव नियमअवहिं भरहोव्व स खंडए विरइं॥१॥

तथाहि;—

पुरमत्थि माणखेडं माणवराओ तहिं महाराया । तस्स पिया परमसिरी सिरिव्व हरिणो मणाणंदा ॥
तत्थत्थि संखसिट्ठी विक्खाओ खेमिया य से भज्जा । ताणं च दुवे पुत्ता भरहो रहसो य सुविणीया ॥
कमलसिरी पउमसिरी भज्जा ताणं कमेण कमणीया । भद्दगभावोवगयं सव्वंपि कुडुंवगं तेसिं ॥४॥
अह ताणं पुरबाहिं उज्जाणे गणिवरो विजयसूरी । संपत्तो संपत्तो संपत्तो पवरचउनाणी ॥५॥
दिट्ठो तत्थवि कीलागएहिं सो भरह-रहसबंधूहिं । उवसप्पिऊण तत्तोऽभिवंदिओ भत्तिजुत्तेहिं ॥६॥
अह धम्मलाभपुव्वं तेणवि संभासिया समुवइट्ठा । जिणपन्नत्तो धम्मो कहिओ य कमेण दुविहोवि॥७॥
पढमसमत्थेहिं तओ गिहिधम्मो दंसणाइओ गहिओ । पंचमवयं विसेसेण संकडं तेहिं परिगहियं ॥८॥
भणिओ य मुणिंदेणं भरहो जह पंचमे वए तुज्झ । होही दुइयअइयारो ता मा तं संकडं गिण्ह ॥९॥
तेणवि भणियं न य संकडं इमं गेहियमप्पदेवसियं । इय भणिउं नमिऊण य पत्ता ते नियगिहे दोवि ॥
अह अन्नदिणे रयणीए पिच्छए लच्छिदेवयं सहसा । वासभवणम्मि भरहो रहम्मि तीए इमं भणिओ॥
वच्छा हं तुह तुट्ठा संतुट्ठो जइवि लच्छिविच्छड्डे । तहवि पयच्छामि अहं मग्गसु जं रुच्चए दव्वं ॥१२॥
जम्हा पुव्वभवम्मिवि तुमए आराहिया अहं पयओ । नाओ य तुमं संपइ निच्चलचित्तो जिणमयम्मि॥
तो भणियं भरहेणं न हु कज्जं किंपि मज्झ दव्वेण । इगलक्खो मह गेहे चिट्ठइ सेसस्स नियमो मे ॥१४॥

---

राजादीनां प्रसादं लब्ध्वा द्रव्यं सुहृद्भ्योऽर्पयति । यो यावन्नियमावधि भरत इव स खण्डयति विरतिम्॥१॥
पुरमस्ति मानखेटं मानवराजस्तत्र महाराजः । तस्य प्रिया परमश्रीः श्रीरिव हरेर्मनआनन्दा ॥२॥
तत्रास्ति शङ्खश्रेष्ठी विख्यातः क्षेमिका च तस्य भार्या । तयोश्च द्वौ पुत्रौ भरतो रमसश्च सुविनीतौ ॥३॥
कमलश्रीः पद्मश्रीर्भार्या तयोः क्रमेण कमनीया । भद्रकभावोपगतं सर्वमपि कुटुम्बं तेषाम् ॥४॥
अथ तेषां पुराद् बहिरुद्याने गणिवरो विजयसूरिः । संपात्रं संप्राप्तः संप्राप्तः प्रवरचतुर्ज्ञानः ॥५॥
दृष्टस्तत्रापि क्रीडागताभ्यां स भरतरमसबन्धुभ्याम् । उपसृप्य ततोऽभिवन्दितो भक्तियुक्ताभ्याम् ॥६॥
अथ धर्मलाभपूर्वं तेनापि संभाषितौ समुपविष्टौ । जिनप्रज्ञप्तो धर्मः कथितश्च क्रमेण द्विविधोऽपि ॥७॥
प्रथमासमर्थाभ्यां ततो गृहिधर्मो दर्शनादिको गृहीतः । पञ्चमव्रतं विशेषेण संकटं ताभ्यां परिगृहीतम् ॥८॥
भणितश्च मुनीन्द्रेण भरतो यथा पञ्चमे व्रते तव । भविष्यति द्वितीयातिचारस्तस्मान्मा तत्संकटं गृहाण ॥९॥
तेनापि भणितं न च संकटमिदं गृहीतमल्पदैवसिकम् । इति भणित्वा नत्वा च प्राप्तौ तौ निजगृहे द्वावपि ॥
अथान्यदिने रजन्यां पश्यति लक्ष्मीदेवतां सहसा । वासभवने भरतो रहसि तयेदं भणितः ॥११॥
वत्साहं तव तुष्टा संतुष्टो यद्यपि लक्ष्मीविस्तारे । तथापि प्रयच्छाम्यहं मार्गय यद् रोचते द्रव्यम् ॥१२॥
यस्मात्पूर्वभवेऽपि त्वयाऽऽराधिताऽहं पदतः । ज्ञातश्च त्वं संप्रति निश्चलचित्तो जिनमते ॥१३॥

---

१ ग, मह सुहेण निम्वहिही ।

१९

तो जंपइ सिरिदेवी देवाणं वच्छ ! दंसणममोहं । आसि तुमं कोडीसो पुव्विं ता होसु इण्हिंपि ॥१५॥
तो सो भणेइ भयवइ ! एवं च कए हवेइ वयभंगो । तो देवीए भणियं देसु जहिच्छाए सयणाण ॥१६॥
तत्तो य तक्खणेणं कंचणकोडिं खिवित्तु भरहस्स । वारंतस्सवि गेहे सट्ठाणं पडिगया लच्छी ॥१७॥
नियनियमभंगभीओ तत्तो सो विभजिऊण कोडिंपि । देइ सयणाण सव्वा उद्धारे गयकलंतरया ॥१८॥
तं दट्ठूण कणिट्ठो बंधू वज्जरइ भाय ! न हु जुत्तं । जं कुणसि साइयारं पंचमवयमायरपवन्नं ॥१९॥
जम्हा उ लक्खमेगं परिग्गहे तुह ममावि साहीणं । विलससि कोडीइ पुणो निस्संको नियमविसयम्मि॥
किं कज्जं विहवेणं समग्गलेणंपि पावकज्जेण । अह भणसि देसु धम्मे धम्मेणवि तेण किं कज्जं ? ॥२१॥
वयमालिन्नं जायइ जेण कएणं न होइ सो धम्मो । महुरं भणिऊण विसं जइ खज्जइ किं न मारेइ ? ॥
तो तं नियसत्ताओ दविणं परिहरसु आसि जं अहियं । सयणाइयाण दिन्नं अन्नह भिन्नो भविस्सामि॥
तेणवि लुद्धेण तओ भणियं वणिजेणुवज्जियं न मए । गहियं न चोरियाए न खत्तवाओ मए विहिओ॥
किंपुण वारंतस्सवि खित्तं लच्छीए मह गिहे वच्छ ! । तंपि मए सयणाणं समप्पियं जाव नियमो मे ॥
जं पुण लक्खाओ हं अहियं विढवेमि देमि तं धम्मे । तो रहसेणं भणियं बंधव ! सुण इत्थ दिट्ठंतं ॥
इह नयरे धणसिट्ठी आसि पुरा पउरधणसमिद्धो सो । मिच्छद्दिट्ठी वहुपुत्तनत्तुएहिं गओ वुड्ढिं ॥२७॥
अह अन्नया पसुत्तो पिच्छइ पसयच्छिं लच्छिसारिच्छं । सियवसणधारिणिं हारहारिणिं पवररमणिं सो॥

---

ततो भणितं भरतेन न खलु कार्यं किमपि मम द्रव्येण । एकलक्षो मम गेहे तिष्ठति शेषस्य नियमो मे ॥१४॥
ततो जल्पति श्रीदेवी देवानां वत्स ! दर्शनममोघम् । आसीस्त्वं कोटीशः पूर्वं तस्माद्भवेदानीमपि ॥१५॥
ततः स भणति भगवति ! एवं च कृते भवति व्रतभङ्गः । ततो देव्या भणितं देहि यथेच्छया स्वजनेभ्यः ॥
ततश्च तत्क्षणेन काञ्चनकोटिं क्षिप्त्वा भरतस्य । वारयतोऽपि गेहे स्वस्थानं प्रतिगता लक्ष्मीः ॥१७॥
निजनियमभङ्गभीतस्ततः स विभज्य कोटिमपि । ददाति स्वजनानां सर्वामुद्धारे गतकलान्तराम् ॥१८॥
तद् दृष्ट्वा कनिष्ठो बन्धुः कथयति भ्रातः ! न खलु युक्तम् । यत्करोषि सातिचारं पञ्चमव्रतमादरप्रपन्नम् ॥१९॥
यस्मात्तु लक्षमेकं परिग्रहे तव ममापि स्वाधीनम् । विलससि कोट्यां पुनर्निःशङ्को नियमविषये ॥२०॥
किं कार्यं विभवेन समर्गलेनापि पापकार्येण । अथ भणसि देहि धर्मे धर्मेणापि तेन किं कार्यम् ?॥२१॥
व्रतमालिन्यं जायते येन कृतेन न भवति स धर्मः । मधुरं भणित्वा विषं यदि खाद्यते किं न मारयति ? ॥
ततस्त्वं निजसत्तातो द्रविणं परिहरासीद् यदधिकम् । स्वजनादिभ्यो दत्तमन्यथा भिन्नो भविष्यामि ॥२३॥
तेनापि लुब्धेन ततो भणितं वाणिज्येनोपार्जितं न मया । गृहीतं न चोरिकया न क्षत्रवादो मया विहितः ॥२४॥
किन्तु वारयतोऽपि क्षिप्तं लक्ष्म्या मम गृहे वत्स ! । तदपि मया स्वजनेभ्यः समर्पितं यावन्नियमो मे ॥२५॥
यत्पुनर्लक्षादहमधिकमर्जयामि ददामि तद् धर्मे । ततो रभसेन भणितं बान्धव ! शृणवत्र दृष्टान्तम् ॥२६॥
इह नगरे धनश्रेष्ठी आसीत्पुरा प्रचुरधनसमृद्धः सः । मिथ्यादृष्टिर्बहुपुत्रनप्तृभिर्गतो वृद्धिम् ॥२७॥
अथान्यदा प्रसुप्तः पश्यति मृगाक्षीं लक्ष्मीसदृशीम् । सितवसनधारिणीं हारहारिणीं प्रवररमणीं सः ॥२८॥

भणियं तीए धणसिट्ठि ! किं तुमं मं वियाणसे नो वा ? । सो भणइ मए नाया सामन्नेणं तुमं रमणी ॥
तो तीए तस्स कहियं लच्छी हं तुह कुले वसियपुव्वा । आ सत्तमवंससाओ, संपइ अन्नत्थ वच्चिस्सं ॥३०॥
निव्विन्ना हं जेणं एगत्थ निवासओ तओ तेण । भणियं सिग्घं वयसुत्ति जंपए तो इमं लच्छी ॥३१॥
अइनिट्ठुरो सि तं सिट्ठि ! जेण नहु एत्तियंपि ते भणियं । को हेऊ तुह गमणे तुह अवयरियं मए किंव ?॥
किञ्च ।
जइवि अहं लच्छीवि हु तुमए अवगन्निया अलच्छीव । तुज्झ निरीहत्तणओऽणुरंजिया तहवि तुट्ठा हं ॥
मग्गसु जं ते रुच्चइ, भणियं तेणावि जइ तुमं तुट्ठा । तहवि तए न हु कज्जं, कज्जं पुण एत्तिएणेव ॥३४॥
जह मह कुडुंबविहडा न घडइ कइयावि दंतकलहेण । तं तह करेसु जइ तं सुपसन्ना सच्चओ मज्झ ॥३५॥
अन्नह तए न कज्जं, तो हसिउं भणइ सिट्ठि ! दक्खो सि । इय पभणंतेण तए निगडियचरणा अहं विहिया ॥
जम्हा वच्चंतीए पढमयरच्चिय इमो मह उवाओ । अन्नुन्नमहं पढमं विहडं पाडेमि बंधूणं ॥३७॥
तत्तो कुणंति कलहं-पच्छा गच्छंति रायपासम्मि । जंपंति य पेसुन्नं दंडिज्जंति य तो रन्ना ॥३८॥
अहवावि परोप्परओ जुज्झेवि मरंति हुंति गयपुन्ना । तत्तो सव्वं दव्वं नरिंदभवणं समल्लियइ ॥३९॥
मिच्छद्दिट्ठीवि विवेयवज्जिओ जिणमयम्मि अणभिन्नो । तस्सवि य इय अणिच्छा लच्छीविसए विसेसेण ॥
तं पुण लद्धविवेओ गहियवओ जिणमयं पवन्नोवि । भंजसि नियनियमधुरं लुद्धो निद्धंधसो भणियं ॥४१॥
किञ्च ।
गुरुणा निवारिएणवि तुमए गहियं वयं इमं मूढ ! । ता विरम विरम अज्जवि अइयाराओ इमाओ तुमं ॥४२॥

---

भणितं तया धनश्रेष्ठिन् ! किं त्वं मां विजानासि नो वा ? । स भणति मया ज्ञाता सामान्येन त्वं रमणी ॥
ततस्तया तस्य कथितं लक्ष्मीरहं तव कुल उषितपूर्वा । आ सप्तमवंशात्, संप्रत्यन्यत्र व्रजिष्यामि ॥३०॥
निर्विण्णाऽहं येनैकत्र निवासतस्ततस्तेन । भणितं शीघ्रं व्रजेति जल्पति तत इदं लक्ष्मीः ॥३१॥
अतिनिष्ठुरोऽसि त्वं श्रेष्ठिन् ! येन न खल्वेतावदपि त्वया भणितम् । को हेतुस्तव गमने तवापकृतं मया किंवा ? ॥
यद्यप्यहं लक्ष्मीरपि हि त्वयावगणिताऽलक्ष्मीरिव । तव निरीहत्वतोऽनुरञ्जिता तथापि तुष्टाऽहम् ॥३३॥
मार्गय यत्ते रोचते, भणितं तेनापि यदि त्वं तुष्टा । तथापि त्वया न हि कार्यं, कार्यं पुनरेतावतैव ॥३४॥
यथा मम कुटुम्बविघटा न घटते कदापि दन्तकलहेन । तत्तथा कुरु यदि त्वं सुप्रसन्ना सत्यतो मम ॥३५॥
अन्यथा त्वया न कार्यं, ततो हसित्वा भणति श्रेष्ठिन् ! दक्षोऽसि । इति प्रभणता त्वया निगडितचरणाहं विहिता ॥
यस्माद् व्रजन्त्याः प्रथमतर एवायं ममोपायः । अन्योन्यमहं प्रथमं विघटां पातयामि बन्धूनाम् ॥३७॥
ततः कुर्वन्ति कलहं पश्चाद् गच्छन्ति राजपार्श्वे । जल्पन्ति च पैशुन्यं दण्ड्यन्ते च ततो राज्ञा ॥३८॥
अथवापि परस्परतो युद्ध्वा म्रियन्ते भवन्ति गतपुण्याः । ततः सर्वं द्रव्यं नरेन्द्रभवनं समुपसर्पति ॥३९॥
मिथ्यादृष्टिरपि विवेकवर्जितो जिनमतेऽनभिज्ञः । तस्यापि चेत्यनिच्छा लक्ष्मीविषये विशेषेण ॥४०॥
त्वं पुनर्लब्धविवेको गृहीतव्रतो जिनमतं प्रपन्नोऽपि । भनक्षि निजनियमधुरां लुब्धो निष्ठुरो गाढम् ॥४१॥

तो भरहेणं भणियं किं किंपि मए अकज्जमायरियं । जं तं सिक्खवसि ममंपि धम्मिओ तं चिय न अन्नो॥
रहसो भणेइ बंधव ! खमियव्वं जं मए तुमं भणिओ । नियभागं गहिऊणं जाओ भिन्नो तओ सोवि॥४४॥
ववहरइ निययहट्टे विहीए धम्मं करेइ निच्चंपि । भरहो उंण नरनाहेण दंडिओ कम्मिवि(?)राहे ॥४५॥
जह भोयणमित्तंपि हु महया कट्ठेण होइ तस्सेह । रहसो उण पइदियहं पवड्ढए विहवकित्तीहिं ॥४६॥
जह जह वड्ढइ विहवो तह तह अहियंपि विच्चए धम्मे । तो कुंढेणं केणवि कहियं रन्नो जहा एसो॥४७॥
अइविहवी ता घिप्पउ अत्थो एयस्स, तो नरिंदेण । हक्कारिऊण भणिओ रहम्मि रहसो जहा अम्ह ॥४८॥
तुट्टोच्चिय भंडारो ता दव्वं देहि लक्खमाणं मे । तेणवि भणियं गिण्हउ देवो जं मे गिहे अत्थि ॥४९॥
पाणावि देवतणया किं अत्थेणं अणत्थभूएण ? । तो तग्गिहम्मि रन्ना अत्थत्थं पेसिओ सचिवो ॥५०॥
तो सासणदेवीए तस्सणुराएण तग्गिहे दव्वं । पच्छाइयं समग्गं तत्तो लोहाउलो सहसा ॥५१॥
सचिवोवि तत्थ पत्तो पिच्छइ मंजूसपेडियाईयं । रिक्कं चिय नो रित्थं ता पुच्छइ तस्स माणुस्से ॥५२॥
तेवि य भणंति भरियाइं चेव पेडाइयाइं दिट्ठाइं । एत्तियकालं संपइ न याणिमो कह विरिकाइं ॥५३॥
तो विम्हइओ मंती पेसइ नियमाणुसं नरिंदस्स । तेणवि कहियं सव्वं तो राया आगओ तत्थ ॥५४॥
सोवि हु तहेव पिच्छइ पुच्छइ रहसं सहागयं किं भो ! । न य पेडाइसु दव्वं दीसइ अन्नत्थ किं खित्तं?॥
सो भणइ नाह ! नाहं निउणं जाणेमि किंतु अज्जेव । हट्टाओ दस सहस्सा खिविउं इह तुह गिहे पत्तो॥

---

गुरुणा निवारितेनापि त्वया गृहीतं मतमिदं मूढ ! । तस्माद्विरम विरमाद्याप्यतिचारादस्मात्त्वम् ॥४२॥
ततो भरतेन भणितं किं किमपि मयाऽकार्यमाचरितम् । यत्त्वं शिक्षयसि मामपि धार्मिकस्त्वमेव नान्यः ॥४३॥
रभसो भणति बान्धव ! क्षन्तव्यं यद् मया त्वं भणितः । निजभागं गृहीत्वा जातो भिन्नस्ततः सोऽपि ॥४४॥
व्यवहरति निजहट्टे विधिना धर्मं करोति नित्यमपि । भरतः पुनर्नरनाथेन दण्डितः कस्मिंश्चिदप्यपराधे ॥४५॥
यथा भोजनमात्रमपि हि महता कष्टेन भवति तस्येह । रभसः पुनः प्रतिदिवसं प्रवर्धते विभवकीर्तिभ्याम् ॥४६॥
यथा यथा वर्धते विभवस्तथा तथाऽधिकमपि व्ययति धर्मे । ततः कुण्ठेन केनापि कथितं राज्ञे यथैषः ॥४७॥
अतिविभवी तस्माद् गृह्यतामर्थ एतस्य, ततो नरेन्द्रेण । हक्कारयित्वा भणितो रहसि रभसो यथा मम॥४८॥
त्रुटित एव भाण्डागारस्तस्माद् द्रव्यं देहि लक्षमानं मे । तेनापि भणितं गृह्णातु देवो यन्मे गृहेऽस्ति ॥४९॥
प्राणा अपि देवसंबन्धिनः किमर्थेनानर्थभूतेन ? । ततस्तद्गृहे राज्ञाऽर्थार्थं प्रेषितः सचिवः ॥५०॥
ततः शासनदेव्या तस्यानुरागेण तद्गृहे द्रव्यम् । प्रच्छादितं समग्रं ततो लोभाकुलः सहसा ॥५१॥
सचिवोऽपि तत्र प्राप्तः पश्यति मञ्जूषपेटादिकम् । रिक्तमेव नो रिक्थं ततः पृच्छति तस्य मानुषान् ॥५२॥
तेऽपि च भणन्ति भृतान्येव पेटादिकानि दृष्टानि । एतावत्कालं संप्रति न जानीमः कथं विरिक्तानि ॥५३॥
ततो विस्मितो मन्त्री प्रेषयति निजमानुषं नरेन्द्राय । तेनापि कथितं सर्वं ततो राजाऽऽगतस्तत्र ॥५४॥
सोऽपि खलु तथैव पश्यति पृच्छति रभसं सहागतं किं भोः ! । न च पेटादिषु द्रव्यं दृश्यतेऽन्यत्र किं क्षिप्तम् ? ॥
स भणति नाथ ! नाहं निपुणं जानामि किन्त्वद्यैव । हट्टाद् दश सहस्रान् क्षिप्त्वेह तव गृहे प्राप्तः ॥५६॥

इय एवं वट्टंते गयणे जंपेइ देवया कावि। भो भो भूवइ! निसुणसु मह वयणं अवहिओ होउं ॥५७॥
एयस्स तए वणिणो निरावराहस्स धम्मनिरयस्स। इट्ठो अत्थो गहिउं ताणत्थो तुज्झ इह होही ॥५८॥
मा भणसु जं न कहियं, चूरिस्समहं सपरियणं सपुरं। जइ एयस्स तिणस्सवि सम्मुहमवि तं पलोएसि॥
तत्तो भीएण नराहिवेण रहसो खमाविउं भणिओ। विलससु दव्वं निययं,ता सहसा पयडियं दव्वं ॥६०॥
देवीए वंकमुहो काउं मुक्को तओ य सो कुंटो। रायावि गओ गेहे रहसोवि विसेसओ दाणं ॥६१॥
दीणाइयाण दावइ भरहो उ कलंकिऊण वयमेयं। उववन्नो नागेसुं सत्तमजम्मम्मि सिज्झिहिही ॥६२॥
रहसो उण पज्जंते समाहिमरणेण बंभलोयम्मि। उववन्नो कयपुन्नो तइयभवे सिज्झिही इत्थ ॥६३॥
इय नाऊणं भद्दा! दढव्वएहिं सयावि होयव्वं। जम्मो मरणवसाणो विहवो य चलो जललवुव्वं ॥६४॥

॥ इति परिग्रहपरिमाणव्रते द्वितीयातिचारविपाके भरतकथानकं समाप्तम् ॥

---

इत्येवं वर्तमाने गगने जल्पति देवता कापि। भो भो भूपते! श्रृणु मम वचनमवहितो भूत्वा ॥५७॥
एतस्य त्वया वणिजो निरपराधस्य धर्मनिरतस्य। इष्टोऽर्थो ग्रहीतुं तस्मादनर्थस्तवेह भविष्यति ॥५८॥
मा भण यन्न कथितम्, चूर्णयिष्याम्यहं सपरिजनं सपुरम्। यद्येतस्य तृणस्यापि संमुखमपि त्वं प्रलोकसे ॥५९॥
ततो भीतेन नराधिपेन रभसः क्षमयित्वा भणितः। विलासय द्रव्यं निजं, तदा सहसा प्रकटितं द्रव्यम् ॥६०॥
देव्या वक्रमुखः कृत्वा मुक्तस्ततश्च स कुण्ठः। राजापि गतो गेहे रभसोऽपि विशेषतो दानम् ॥६१॥
दीनादिभ्यो दापयति भरतस्तु कलङ्कयित्वा व्रतमेतत्। उपपन्नो नागेषु सप्तमजन्मनि सेत्स्यति ॥६२॥
रभसः पुनः पर्यन्ते समाधिमरणेन ब्रह्मलोके। उपपन्नः कृतपुण्यस्तृतीयभवे सेत्स्यत्यत्र ॥६३॥
इति ज्ञात्वा भद्राः! दृढव्रतैः सदापि भवितव्यम्। जन्म मरणावसानं विभवश्च चलो जललव इव ॥६४॥

विरइविराहणभीओ देसलसड्ढोव्व जोहियं धन्नं । सयणाइयाण अप्पइ सो विरइविराहणं कुणई ॥१॥
तथाहि;—
अत्थि जए सुपसिद्धं सिद्धपुरं धरणिरमणितिलयंव । सुपवित्तं अविउत्तं कल्लाणवियाससोहाए ॥२॥
तत्थत्थि देवराओ सुपसिद्धो सुद्धबुद्धिलद्धजसो । विणयवसविहियचोज्जा भज्जा पियदंसणा तस्स ॥३॥
एगूणपण्णसयाइं मंतीणं तस्स संति पवराइं । तप्पूरणत्थमेगं गवेसए सो महामंति ॥४॥
तह तत्थ वसइ सिट्ठी वेसमणो अमियधणकणसमिद्धो । चउरो य तस्स पुत्ता धणधणवइधवलजसनामा ॥
लेक्खाइं कुणइ एगो वीओ धन्नाण कुणइ पुण वुड्ढिं । तइओ चउप्पयतत्तिं तुरिओ भंडारिओ तेसिं ॥६॥
अह अन्नया य सिट्ठी नाऊणं अत्तणो चरिमसमयं । घरकोणेसुं चउसुवि कलसे चत्तारि निक्खणइ ॥७॥
तत्तो दुइयदिणम्मि हक्कारावइ समग्गसयणजणं । भोयणविहिणा सम्माणिऊण तं भणइ इय सिट्ठी ॥८॥
नियभुयदंडेहिं मए अत्थो उप्पाइओ अणप्पोवि । न निओइओ सुठाणे कुकुडंबसिणेहमूढेणं ॥९॥
संपइ परलोयपहे पाहेयं पइ भणेमि नियसयणे । मह पत्थणाए लक्खो विव्वेयव्वो य तुम्हेहिं ॥१०॥
सत्तसु खित्तेसुं संपयंपि ता कुणह अत्तणो पासे । इय भणिऊण समप्पइ सयणाणं ताण इगलक्खं ॥११॥
तह मह तणया एए अत्थनिमित्तंपि कलहइस्संति । मह पच्छा इय मुणिउं सुयणसमक्खं भणइ तणए ॥
जं लोयणेहिं वयणं वयणेण य लोयणाइं सोहंति । चिहुरेहिं सिरं रेहइ चिहुरावि सिरट्ठिया चेव॥१२॥
समचित्ता दुवि वसहा सगडं कड्ढंति उवलभरियंपि । अट्ठवि विभिन्नचित्ता फिरकजुत्तावि तम्मंति ॥

---

विरतिविराधनाभीतो देशलश्राद्ध इव योऽधिकं धान्यम् । स्वजनादिकेभ्योऽर्पयति स विरतिविराधनां करोति ॥
अस्ति जगति सुप्रसिद्धं सिद्धपुरं धरणीरमणीतिलकमिव । सुपवित्रमवियुक्तं कल्याणविकासशोभया ॥२॥
तत्रास्ति देवराजः सुप्रसिद्धः शुद्धबुद्धिलब्धयशाः । विनयवशविहिताश्चर्या भार्या प्रियदर्शना तस्य ॥३॥
एकोनपञ्चशती मन्त्रिणां तस्यास्ति प्रवरा । तत्पूरणार्थमेकं गवेषयति स महामन्त्रिणम् ॥४॥
तथा तत्र वसति श्रेष्ठी वैश्रमणोऽमितधनकणसमृद्धः । चत्वारश्च तस्य पुत्रा धनधनपतिधवलयशोनामानः ॥५॥
लेख्यादि करोत्येको द्वितीयो धान्यानां करोति पुनर्वृद्धिम् । तृतीयश्चतुष्पदचिन्तां तुर्यो भाण्डारिकस्तेषाम् ॥६॥
अथान्यदा च श्रेष्ठी ज्ञात्वाऽऽत्मनश्चरमसमयम् । गृहकोणेषु चतुर्ष्वपि कलशांश्चतुरो निदधाति ॥७॥
ततो द्वितीयदिने हकारयति समग्रस्वजनजनम् । भोजनविधिना सम्मान्य तं भणतीति श्रेष्ठी ॥८॥
निजभुजदण्डाभ्यां मयाऽर्थ उत्पादितोऽनल्पोऽपि । न नियोजितः सुस्थाने कुकुटुम्बस्नेहमूढेन ॥९॥
संप्रति परलोकपथे पाथेयं प्रति भणामि निजस्वजनान् । मम प्रार्थनया लक्षो व्येतव्यश्च युष्माभिः ॥१०॥
सप्तसु क्षेत्रेषु सांप्रतमपि तस्मात्कुरुतात्मनः पार्श्वे । इति भणित्वा समर्पयति स्वजनानां तेषामेकलक्षम् ॥११॥
तथा मम तनया एतेऽर्थनिमित्तमपि कलहयिष्यन्ति । मम पश्चादिति ज्ञात्वा सुजनसमक्षं भणति तनयान् ॥१२॥
यल्लोचनाभ्यां वदनं वदनेन च लोचने शोभेते । चिकुरैः शिरो राजते चिकुरा अपि शिरःस्थिता एव ॥१३॥
समचित्तौ द्वावपि वृषभौ शकटं कर्षत उपलभृतमपि । अष्टापि विभिन्नचित्ता बेष्टकयुक्ता अपि ताम्यन्ति ॥१४॥

ता पीईए वच्छा! वट्टिज्जह निचमेव अन्नोन्नं। जइ न कुणंइ पुण एवं तो वयणं सुणइ मह्नगयं ॥१५॥
जह मई गिहस्स मज्झे कलसा चत्तारि चउसु कोणेसु। संति मए विणिहिचा ते तुम्मेहिं गहेयव्वा ॥१६॥
वामे कोणे कलसो जिट्ठेणं दाहिणम्मि बीएण। नेरइए तइएणं वायव्वे लहुयपुत्तेणं ॥१७॥
जहजोग्गयाए अत्थो कलसेसु आसि सो मए निहिओ। लिहिऊण य नामाइं तुम्हाणं तेसु खित्ताइं ॥
सयणेवि भणइ सिट्ठी जुज्झंतिं न दव्वकारणा कहवि। मइ परलोयगयस्सवि तह जइअव्वं तु तुम्हेहिं ॥
जं जस्स मए दिन्नं तं तस्स, न अन्नहा विहेयव्वं। इय भणिउं ते सयणा विसज्जिया खामिउं नमिउं ॥
अह परलोए पत्ते पिउम्मि पुत्तावि नियनिए कलसे। गिण्हंति जिट्ठपुत्ता तिन्निवि तेसु इयं नियंति ॥२१॥
पढमे पुढवि बीयम्मि लिक्खयं तइयम्मि अट्ठीणि। वररयणभरियकलसो दिट्ठो सव्वेहिं लहुयस्स ॥२२॥
तो ते भणंति हा ताय! वंचिया धम्मिएणवि सुयावि। ता तुम्ह सुगइमग्गो कह होही वंचगपरस्स? ॥२३॥
तो तेहिं लहुयभाया भणिओ जइ विभइऊण रयणाइं। गिण्हिस्सामो अम्हे, सो जंपइ मज्झ ताएण ॥२४॥
सयणसमक्खं दिन्नाइं तुम्हकलसेसु मट्टियाईयं। जायं अपुन्नवसओ को दोसो तत्थ तायस्स? ॥२५॥
तहवि न मुंचंति तओ तेणवि सयणाण साहियं सव्वं। सयणेहिं वारियावि हु ते सिरिगरणम्मि संपत्ता ॥
साहिंति नियविवायं सचिवस्स, तओ य तेण बुज्झविया। जाव न विरमंति तओ नरवइणो साहियं पढमं ॥
सव्वं सवित्थरं चरिमबंधुणा सयणवग्गजुत्तेण। तो भणियं भूवइणा न अन्नहा कुणइ वेसमणो ॥२८॥
जम्हा सो जिणधम्मे सुनिचलो मच्छरो य बुद्धीए। नो कवडकूडकारी अन्नस्स कहवि, ता एयं ॥२९॥

---

ततः प्रीत्या वत्साः! वर्तध्वं नित्यमेवान्योन्यम्। यदि न कुर्यात पुनरेवं तदा वचनं शृणुत मदीयम् ॥१५॥
यथा मम गृहस्य मध्ये कलशाश्चत्वारश्चतुर्षु कोणेषु। सन्ति मया विनिहितास्ते युष्माभिर्ग्रहीतव्याः ॥१६॥
वामे कोणे कलशो ज्येष्ठेन दक्षिणे द्वितीयेन। नैर्ऋते तृतीयेन वायव्ये लघुपुत्रेण ॥१७॥
यथायोग्यतयार्थः कलशेष्वासीत् स मया निहितः। लिखित्वा च नामानि युष्माकं तेषु क्षिप्तानि ॥१८॥
स्वजनानपि भणति श्रेष्ठी युध्यन्ते न द्रव्यकारणात्कथमपि। मयि परलोकगतेऽपि तथा यतितव्यं तु युष्माभिः॥
यद् यस्मै मया दत्तं तत्तस्मै, नान्यथा विधातव्यम्। इति भणित्वा ते स्वजना विसर्जिता क्षमयित्वा नत्वा ॥
अथ परलोके प्राप्ते पितरि पुत्रा अपि निजनिजान्कलशान्। गृह्णन्ति ज्येष्ठपुत्रास्त्रयोऽपि तेष्विति पश्यन्ति ॥
प्रथमे पृथिवीं द्वितीये लेख्यं तृतीयेऽस्थीनि। वररत्नभृतकलशो दृष्टः सर्वैर्लघोः ॥२२॥
ततस्ते भणन्ति हा तात! वञ्चिता धार्मिकेणापि सुता अपि। तस्मात्तव सुगतिमार्गः कथं भविष्यति वञ्चनपरस्य?॥
ततस्तैर्लघुभ्राता भणितो यथा विभज्य रत्नानि। ग्रहीष्यामो वयं, स जल्पति मम तातेन ॥२४॥
स्वजनसमक्षं दत्तानि युष्मत्कलशेषु मृत्तिकादिकम्। जातमपुण्यवशतः को दोषस्तत्र तातस्य? ॥२५॥
तथापि न मुञ्चन्ति ततस्तेनापि स्वजनेभ्यः कथितं सर्वम्। स्वजनैर्वारिता अपि खलु ते श्रीकरणे संप्राप्ताः॥
कथयन्ति निजविवादं सचिवाय, ततश्च तेन बोधिताः। यावन्न विरमन्ति ततो नरपतये कथितं प्रथमम् ॥
सर्वं सविस्तरं चरमबन्धुना स्वजनवर्गयुक्तेन। ततो भणितं भूपतिना नान्यथा करोति वैश्रमणः ॥२८॥

अइनिउणबुद्धिगम्मं जं सो कलसेसु मट्टियाईयं । खिविउं खिवेइ खोणीए अक्खए सुयणमाईणं ॥३०॥
तो पडिहारो भणिओ रन्ना आहवसु मंतिणो सव्वे । तेणवि ते आहूया भणिया रन्ना इमाणेमं ॥३१॥
कलसवियारं कुव्वह कह ताएणं इमाण कुंभेसु । खित्तं मट्टियमाई रयणाणि य लहुयकलसम्मि ? ॥३२॥
तेहिंपि परुप्परओ मंतेऊणं सुनिउणबुद्धीहिं । कहियं रन्नो एयं न बुज्झिमो किंपि परमत्थं ॥३३॥
तो रन्ना नियनयरे पडहो दावाविओ जह इमाण । कलसाणं परमत्थं नाउं जो विहडइ विवायं ॥३४॥
तस्साहं मंतिपयं सव्वाणुवरिं करेमि सचिवाणं । तो बुद्धिपयडणत्थं छित्तो पडहो वणिसुएण ॥३५॥
नीओ रायसयासं कहिओ कलसाण वइयरो तस्स । रन्ना तो परियाणिय कहेइ सो कलसपरमत्थं॥३६॥
जो जम्मि सुओ कुसलो जस्स य जं धारिअं हियं होही । तं तणयाणं तेण दिन्नं उवएसगब्भं तु॥३७॥
तथाहि;—
जस्स कलसम्मि पुढवी खित्तं खलधन्नमाइयं तस्स । जेण किसिकम्मकुसलो निव्वहिही सो इमेणेव ॥
अट्ठीणि जस्स कुंभे दिन्नं से तेण चउपयं सव्वं । एयाण पोसणं चिय उवइट्ठं तस्स हियजणयं ॥३९॥
जस्स कलसम्मि वहियाखंडाइं तस्स धुरधणं लब्भं । पुणरवि देउं धुराणं इय नित्थारोवि से होही ॥४०॥
जो पुण कणिट्ठतणओ किसिकम्माईण सो उ असमत्थो । रयणधणेणं एसो कलंतरेणावि निव्वहिही ॥
इय तुम्ह जहाजोग्गं दिन्नं सुयवच्छलेण जणएण । थेवबहुत्तंपि इमं थेवविसेसंति मन्नेमि ॥४२॥

---

यस्मात्स जिनधर्मे सुनिश्चलः प्रत्यलश्च बुद्ध्या । नो कपटकूटकार्यैन्यस्य कथमपि, तस्मादेतत् ॥२९॥
अतिनिपुणबुद्धिगम्यं यत् स कलशेषु मृत्तिकादिकम् । क्षिप्त्वा क्षिपति क्षोण्यामाख्याति स्वजनादिभ्यः ॥३०॥
ततः प्रतिहारो भणितो राज्ञाऽऽहूय मन्त्रिणः सर्वान् । तेनापि ते आहूता भणिता राज्ञैषामिमम् ॥३१॥
कलशविचारं कुरुत कथं तातेनैषां कुम्भेषु । क्षिप्तं मृत्तिकादिकं रत्नानि च लघुकलशे ? ॥३२॥
तैरपि परस्परतो मन्त्रयित्वा सुनिपुणबुद्धिभिः । कथितं राज्ञ एतन्न बुध्यामहे कमपि परमार्थम् ॥३३॥
ततो राज्ञा निजनगरे पटहो दापितो यथैषाम् । कलशानां परमार्थं ज्ञात्वा यो विघटयति विवादम् ॥३४॥
तस्याहं मन्त्रिपदं सर्वेषामुपरि करोमि सचिवानाम् । ततो बुद्धिप्रकटनार्थं स्पृष्टः पटहो वणिक्सुतेन ॥३५॥
नीतो राजप्रकाशं कथितः कलशानां व्यतिकरस्तस्य । राज्ञा, ततः परिज्ञाय कथयति स कलशपरमार्थम् ॥
यो यस्मिन् सुतः कुशलो यस्य च यद्धारितं हितं भविष्यति । तत्तनयेभ्यस्तेन दत्तमुपदेशगर्भं तु ॥३७॥
यस्य कलशे पृथिवी क्षेत्रं खलधान्यादिकं तस्य । येन कृषिकर्मकुशलो निर्वक्ष्यते सोऽनेनैव ॥३८॥
अस्थीनि यस्य कुम्भे दत्तं तस्मै तेन चतुष्पदं सर्वम् । एतेषां पोषणमेवोपदिष्टं तस्य हितजनकम् ॥३९॥
यस्य कलशे वहिकाखण्डानि तस्य ऋणिधनं लभ्यम् । पुनरपि दत्त्वा ऋणिभ्य इति निस्तारोऽपि तस्य भविष्यति॥
यः पुनः कनिष्ठतनयः कृषिकर्मादिषु स त्वसमर्थः । रत्नधनेनैष कलान्तरेणापि निर्वक्ष्यति ॥४१॥
इति युष्मभ्यं यथायोग्यं दत्तं सुतवत्सलेन जनकेन । स्तोकप्रभूतमपीदं स्तोकविशेषमिति मन्ये ॥४२॥

---

१ ग. वहियाखंडाइं कुम्भे तास धुराणं धणं तु जं लब्भं, क. अण्ण पुणरवि ब०।

ता तुच्छलच्छिकज्जे मा निन्नेहा परोप्परं होइ । जणयभणियाइं सुमरह सहोयरा दुल्लहा जेण ॥४३॥
अइलालियावि अइपालियावि विहडंति सेसया सयणा । हुंति सहिज्जा विहुरे कुवियावि सहोयरा चेव ॥
तो रन्ना कणसंखं पुट्ठो पढमो कहेइ जह देव ! । इगमूडलक्खसमहियमवि धन्नं अत्थि तायगिहे ॥४५॥
करिकरहतुरयमाईचउप्पयाणं तु दस सहस्साइं । इय दुइओवि कहेई, तइओ पुट्ठो इमं कहइ ॥४६॥
मंडलियाणं पासे लहियव्वा संति पन्नरस लक्खा । तो रयणाणं कुंभो रन्ना आणाविओ तत्थ ॥४७॥
रयणपरिक्खएहिं मुल्लं तं चेव ताण तेहिं कयं । एवं करिधन्नाइसु चउण्ह पुत्ताण पत्तेयं ॥४८॥
पनरस पनरस लक्खा जाया तो वणियनिउणबुद्धीए । संतुट्ठा ते सव्वे निवोवि तं पुच्छए एवं ॥४९॥
कस्स सुओ किंनामो को धम्मो तुज्झ अभिमओ कहसु । तेणवि कहियं जह पुन्नभद्दवणिणो सुया दोवि ॥
पढमोत्थ कोसलो हं दुइओ बंधू य देसलो मज्झ । जिणधम्मे पडिवन्ना बारसविहसावयवयाइं ॥५१॥
तो भणिओ भूवइणा गिण्हसु मुद्दं सुबुद्धिमयरहर ! । तेण भणियं न कप्पइ खरकम्मं जेणिमा भणिया ॥
तो सो विणावि मुद्दाए ठाविओ सयलमंतिसामित्ते । मंतिज्जइ सव्वत्थवि सोवि य पढमं नरिंदेण ॥५३॥
तो ईसाए अन्ने छलं गवेसंति मंतिणो तस्स । अह सव्वेहिंवि जुगवं मंतिय भणिओ इमं राया ॥५४॥
देवगिरिनयरवासी राया रिउगंजणो न मन्नेइ । तुह आणं निरविक्खो ता तस्स इमो महामंती ॥५५॥
पेसिज्जइ जं कुसलो किंचिवि कोसल्लियं गहेऊणं । घडणं व विहडणं वा तेण समं कुणइ जेणेसो ॥५६॥
तो रन्ना सो भणिओ गच्छ तुमं तत्थ पाहुडं गहिउं । सचिवाणं पासाओ जहजुत्तं तत्थ तं कुणसु ॥५७॥

---

तस्मात्तुच्छलक्ष्मीकार्ये मा निःस्नेहाः परस्परं भवत । जनकभणितानि स्मरत सहोदरा दुर्लभा येन ॥४३॥
अतिलालिता अप्यतिपालिता अपि विघटन्ते शेषाः स्वजनाः । भवन्ति सहाया विधुरे कुपिता अपि सहोदरा एव॥
ततो राज्ञा कणसंख्यां पृष्टः प्रथमः कथयति यथा देव ! । एकमूढकलक्षसमधिकमपि धान्यमस्ति तातगृहे ॥
करिकरभतुरगादिचतुष्पदानां तु दश सहस्राणि । इति द्वितीयोऽपि कथयति, तृतीयः पृष्ट इदं कथयति॥४६॥
मण्डलिकानां पार्श्वे लब्धव्याः सन्ति पञ्चदश लक्षाः । ततो रत्नानां कुम्भो राज्ञाऽऽनायितस्तत्र ॥४७॥
रत्नपरीक्षकैर्मूल्यं तदेव तेषां तैः कृतम् । एवं करिधान्यादिषु चतुर्णां पुत्राणां प्रत्येकम् ॥४८॥
पञ्चदश पञ्चदश लक्षा जातास्ततो वणिग्निपुणबुद्ध्या । संतुष्टास्ते सर्वे नृपोऽपि तं पृच्छत्येवम् ॥४९॥
कस्य सुतः किंनामा को धर्मस्तवाभिमतः कथय ? । तेनापि कथितं यथा पूर्णभद्रवणिजः सुतौ द्वावपि ॥५०॥
प्रथमोऽत्र कोशलोऽहं द्वितीयो बन्धुश्च देशलो मम । जिनधर्मे प्रतिपन्नौ द्वादशविधश्रावकव्रतानि ॥५१॥
ततो भणितो भूपतिना गृहाण मुद्रां सुबुद्धिमकरगृह ! । तेन भणितं न कल्पते खरकर्म येनेयं भणिता॥५२॥
ततः स विनापि मुद्रया स्थापितः सकलमन्त्रिस्वामित्वे । मन्त्र्यते सर्वत्रापि सोऽपि च प्रथमं नरेन्द्रेण॥५३॥
तत ईर्ष्ययाऽन्ये छलं गवेषयन्ति मन्त्रिणस्तस्य । अथ सर्वैरपि युगपद् मन्त्रयित्वा भणित इदं राजा ॥५४॥
देवगिरिनगरवासी राजा रिपुगञ्जनो न मन्यते । तवाज्ञां निरपेक्षस्तस्मात्तस्यायं महामन्त्री ॥५५॥
प्रेष्यते यत्कुशलः किञ्चिदपि कौशलिकां गृहीत्वा । घटनं वा विघटनं वा तेन समं करोति येनैषः ॥५६॥

तेहिंवि तप्पच्छन्नं करंडियाए खिविउ पाहुडयं। तालेवि दिन्नमुद्दा समप्पिया तस्स सा सिग्घं ॥५८॥
तो चलिओ ससहाओ पत्तो रज्जंतरम्मि तइयम्मि। गिरिनयरे निवपासे तत्तो पडिहारकहिओ सो ॥५९॥
नमिउं समप्पए तं करंडियं पाहुडस्स भरियं सो। विहडिउ जाव मुद्दं तो तं उग्घाडए राया ॥६०॥
ता तत्थ नियइ धूलिं ससहरहरहासकाससंकासं। तो भूवालो भूभंगभीसणो भणइ तं मंतिं ॥६१॥
रे रे तुह नरनाहो जइ गयविहवो नएण परिहीणो। मह पाहुडम्मि धूलिं पेसइ पेसेउ, किंतु तुमं ॥६२॥
किमिहागओ सि मरणस्स कारणा वच्च ताव तं तुरियं। जेण अवज्झो दूओत्ति गंतूण साहेहि ॥६३॥
जह एइ अइतुरंतो राया रिउगंजणो जणियकोवो। धूलीउवायणेणं दंसिस्सइ तप्फलं तुज्झ ॥६४॥
तो कोसलेण भणियं मा निव! कोवं करेसु तं एवं। हियमहियंव वियारसु तो राया पुच्छइ तमेव ॥६५॥
तो कहइ तस्स एवं मह पहुणा चच्चरम्मि रयणीए। अंबलरिल्लीनामा पसाहिया जोगिणी विज्जा ॥६६॥
सिद्धाए तीइ दिन्ना एसा रेणूभिमंतिउं कहियं। एयाए एगवारं जो तिलयं विरइही तस्स ॥६७॥
साइणिडाइणिजोइणिकरालवेयालजक्खरक्खाणं। भूयाईण न भयं दुट्ठाणवि कहवि होहित्ति ॥६८॥
तं सोऊण तदप्पियरेणूए कुणइ नरवई तिलयं। थोवं थोवं अप्पिवि अंतेउरमंतिमाईण ॥६९॥
सेसा तुम्हाण उवायणम्मि संपेसिया इमा रेणू। इय सोउं नरवइणा तीए तिलयं सयं विहियं ॥७०॥
हरिसवसपुलइएणं कोसलमंती तओ इमं पुट्ठो। अन्नावि कावि सत्ती तुह पहुणो अत्थि, सो आह ॥७१॥

---

ततो राज्ञा स भणितो गच्छ त्वं तत्र प्राभृतं गृहीत्वा। सचिवानां पार्श्वाद् यथायुक्तं तत्र त्वं कुरुष्व ॥५७॥
तैरपि तत्प्रच्छन्नं करण्डिकायां क्षिप्त्वा प्राभृतम्। तालयित्वा दत्तमुद्रा समर्पिता तस्य सा शीघ्रम् ॥५८॥
ततश्चलितः ससहायः प्राप्तो राज्यान्तरे तृतीये। गिरिनगरे नृपपार्श्वे ततः प्रतिहारकथितः सः ॥५९॥
नत्वा समर्पयति तां करण्डिकां प्राभृतेन भृतां सः। विघट्य यावन्मुद्रां ततस्तामुद्घाटयति राजा ॥६०॥
तावत्तत्र पश्यति धूलिं शशधरहरहासकाशसंकाशाम्। ततो भूपालो भ्रूभङ्गभीषणो भणति तं मन्त्रिणम् ॥
रे रे तव नरनाथो यदि गतविभवो नयेन परिहीणः। मम प्राभृते धूलिं प्रेषयति प्रेषयतु, किन्तु त्वम्॥६२॥
किमिहागतोऽसि मरणस्य कारणाद् व्रज तावत्त्वं त्वरितम्। येनावध्यो दूत इति गत्वा कथय ॥६३॥
यथैत्यतित्वरमाणो राजा रिपुगञ्जनो जनितकोपः। धूल्युपायनेन दर्शयिष्यति तत्फलं तव ॥६४॥
ततः कोशलेन भणितं मा नृप! कोपं कुरुष्व त्वमेवम्। हितमहितं वा विचारय ततो राजा पृच्छति तमेव ॥
ततः कथयति तस्यैवं मम प्रभुणा चत्वरे रजन्याम्। अन्धयित्रीनामा प्रसाधिता योगिनी विद्या ॥६६॥
सिद्धया तया दत्तैषा रेणुरभिमन्त्र्य कथितम्। एतस्या एकवारं यस्तिलकं विरचयिष्यति तस्य ॥६७॥
शाकिनीडाकिनीयोगिनीकरालवेतालयक्षरक्षसाम्। भूतादीनां न भयं दुष्टानामपि कथमपि भविष्यतीति॥६८॥
तत् श्रुत्वा तदर्पितरेण्वा करोति नरपतिस्तिलकम्। स्तोकं स्तोकमर्पयित्वाऽन्तःपुरमन्त्र्यादिभ्यः ॥६९॥
शेषा युष्माकमुपायने संप्रेषितेयं रेणुः। इति श्रुत्वा नरपतिना तस्यास्तिलकं स्वयं विहितम् ॥७०॥

---

१ ग. ८२६१।

सव्वाउवि सत्तीओ मह पहुणो संतिनन्नसरिसाओ। आणासत्तीए पुणो नन्नो भुवणम्मि तस्सरिसो ॥·
तो बहुदेससमागयमहंतपुरिसेहिं मच्छरगएहिं। नियनियपहुणो आणा पसंसिया जाव ता नयरे ॥७३॥
उच्छलिओ तुमुलरवो तं सोउं तस्स जाणणनिमित्तं। पुच्छेइ नरं कंपि हु सोवि हु तं जाणिउं कहइ ॥
देव! इह हत्थिराओ वियरइ सिच्छाए नयरमज्झम्मि। उम्मिट्ठो चूरंतो गिहहट्टाईणि, तो रन्ना ॥७५॥
भणियं भो भो गिण्हह मत्तकरिं तो न कोइ पडिवयणं। जा देइ ता निवस्साभिमुहं भणियं अणुसएणं ॥७६॥
दोवारिएण एक्केण जह इमो देव! नियनिवाणाए। काही वसमिह हत्थि ता एयं चिय समाइससु ॥७७॥
रन्ना तहेव विहिए कोसलमंती पडिच्छिउं आणं। खणमेत्तेणं पत्तो हत्थिसमीवं सनिवलोओ ॥७८॥
काऊणं पणिहाणं सविहाणं हत्थिखंभविज्जाए। तो तेण करी भणिओ तुह आणा मज्झपहुतणया ॥७९॥
जइ इत्तो एक्कंपि हु पयं पयच्छेसि, तो इमं सोउं। चित्तलिहिओव्व थक्को अवणमियकरो करी तत्तो ॥·
राया सपरियणोवि हु विम्हियचित्तो पसंसए सचिवं। भणइ य भो भो सुपुरिस! आलाणगयं गयं कुणसु ॥
तो तेण सो भणिओ करिवर! गच्छेसु नियएखंभम्मि। तेणवि तहेव विहियं ता रन्ना तं चिय करिंदं ॥
दाऊण पाहुडं तह तप्पहुणो सासणं पडिच्छेउं। सम्माणिय सप्पणयं विसज्जिओ कोसलो मंती ॥८३॥
पत्तो सिद्धपुरम्मी तत्तो पढमंपि मंतिणो सव्वे। तस्समगपहियनियचरमुहेण विन्नायवुत्तंता ॥८४॥
रयपाहुडप्पणेणं संकंता मरणमत्तणो गंतुं। कोसलपासे पाएसु लग्गिउं तं खमाविंति ॥८५॥

---

हर्षवशपुलकितेन कोशलमन्त्री तत इदं पृष्टः। अन्यापि कापि शक्तिस्तव प्रभोरस्ति, स आह ॥७१॥
सर्वा अपि शक्तयो मम प्रभोः सन्त्यनन्यसदृश्यः। आज्ञाशक्त्या पुनर्नान्यो भुवने तत्सदृशः ॥७२॥
ततो बहुदेशसमागतमहापुरुषैर्मत्सरगतैः। निजनिजप्रभोराज्ञा प्रशंसिता यावत्तावद् नगरे ॥७३॥
उच्छलितस्तुमुलरवस्तं श्रुत्वा तज्ज्ञाननिमित्तम्। पृच्छति नरं कमपि खलु सोपि हि तज्ज्ञात्वा कथयति ॥७४॥
देव! इह हस्तिराजो विचरति स्वेच्छया नगरमध्ये। उन्मुक्तश्चूर्णयन् गृहहट्टादीनि, ततो राज्ञा ॥७५॥
भणितं भो भो गृह्णीत मत्तकरिणं ततो न कोऽपि प्रतिवचनम्। यावद् ददाति तावन्नृपस्याभिमुखं भणितमनुशयेन ॥
दौवारिकेणैकेन यथायं देव! निजनृपाज्ञया। करिष्यति वशमिह हस्तिनं तस्मादेनमेव समादिश ॥७७॥
राज्ञा तथैव विहिते कोशलमन्त्री प्रतीष्याज्ञाम्। क्षणमात्रेण प्राप्तो हस्तिसमीपं सनृपलोकः ॥७८॥
कृत्वा प्रणिधानं सविधानं हस्तिस्तम्भविद्यायाः। ततस्तेन करी भणितस्तवाज्ञा मत्प्रभुसंबन्धिनी ॥७९॥
यदीत एकमपि हि पदं प्रयच्छासि, तत इदं श्रुत्वा। चित्रलिखित इव स्थितोऽवनमितकरः करी ततः ॥८०॥
राजा सपरिजनोऽपि हि विस्मितचित्तः प्रशंसति सचिवम्। भणति च भो भोः सुपुरुष! आलानगतं गजं कुरु ॥
ततस्तेन स भणितः करिवर! गच्छ निजस्तम्भे। तेनापि तथैव विहितं तदा राज्ञा तमेव करीन्द्रम् ॥८२॥
दत्त्वा प्राभृतं तथा तत्प्रभोः शासनं प्रतीष्य। सम्मान्य सप्रणयं विसर्जितः कोशलो मन्त्री ॥८३॥
प्राप्तः सिद्धपुरे ततः प्रथममपि मन्त्रिणः सर्वे। तत्समप्रहितनिजचरमुखेन विज्ञातवृत्तान्ताः ॥८४॥
रजःप्राभृतार्पणेन शङ्कमाना मरणमात्मनो गत्वा। कोशलपार्श्वे पादयोर्लगित्वा तं क्षमयन्ति ॥८५॥

तस्स य मइमाहप्पं वन्नंता जंति तेण सममेव नरवइपासे सोवि हु सिद्धनरिंदं पणमिऊण ॥८६॥
साहइ सव्वं जं तत्थ साहियं अहियतोसओ राया । पुणरवि कुणइ पसायं गिण्हसु देसं जमभिरुइयं ॥८७॥
तो सो भणेइ नरवर! तुज्झ पसाएण नत्थि मह खूणं । किं कुणिमो देसेणं विरइविराहणपरो जं सो ॥
जइ पुण तं मज्झुवरिं तुट्ठो ता जिणमयं पभावेसु । रहजत्तापमुहेणं महेण महनिव्वुइकरेण ॥८९॥
तो रन्ना सो भणिओ जइवि निरीहो तुमं तहवि गिण्ह । गेहव्वयस्स जोग्गं किंचिवि कणचोप्पडाईयं ॥
एवंति तम्मि भणिउं गयम्मि रन्ना निओगिणो भणिया । जह कणमूडसहस्सं घयघडसहस्सं च मंतिगिहे ॥
पेसह, तेहिं तहच्चिय अणुट्ठिए कोसलेण लहुभाया । भणिओ देसलनामा, जह अम्ह नियमओ अहियं ॥
जं किंचि तं समप्पसु पुणोवि तं राउलम्मि, तेणावि । पडिवज्जिऊण तइया नियमाउ समहियं सव्वं ॥
अप्पिय सयणाण तओ भणिया एयं निएसु ठाणेसु । धरह नियमावहीए परओ गिण्हिस्समहमेयं ॥९४॥
तेहिंवि तह चेव कए विन्नाओ कोसलेण वुत्तंतो । एसो कहवि हु तो तेण पभणिओ देसलो एवं ॥९५॥
हा भाय! पंचमवए इय-कुणमाणेण तइयअइयारो । विहिओ तुमए अज्जवि ता अहियं देसु धम्मम्मि ॥
इय पुणरुत्तं तेणं भणिओवि हु देसलो अकुव्वंतो । कालेणं मरिऊणं अप्पड्ढियवंतरो जाओ ॥९७॥
पणसयमंतिप्पवरो कोसलमंतीवि मरणसमयम्मि । गहिऊणं पव्वज्जं पत्तो माहिंदकप्पम्मि ॥९८॥
किंचहियसत्तसायरआउं परिपालिऊण तत्तो य । चइऊणं सिज्झिस्सइ महाविदेहम्मि वासम्मि ॥९९॥

---

तस्य च मतिमाहात्म्यं वर्णयन्तो यान्ति तेन सममेव । नरपतिपार्श्वे सोऽपि हि सिद्धनरेन्द्रं प्रणम्य ॥८६॥
कथयति सर्वं यत्तत्र साधितमधिकतोषतो राजा । पुनरपि करोति प्रसादं गृहाण देशं योऽभिरुचितः॥८७॥
ततः स भणति नरवर! तव प्रसादेन नास्ति मम क्षूणम् । किं कुर्मो देशेन विरतिविराधनपरो यत् सः॥८८॥
यदि पुनस्त्वं ममोपरि तुष्टस्तदा जिनमतं प्रभावय । रथयात्राप्रमुखेण महेन महानिर्वृतिकरेण ॥८९॥
ततो राज्ञा स भणितो यद्यपि निरीहस्त्वं तथापि गृहाण । गेहव्ययस्य योग्यं किञ्चिदपि कणम्रक्षणादिकम् ॥९०॥
एवमिति तस्मिन् भणित्वा गते राज्ञा नियोगिनो भणिताः यथा कणमूढकसहस्रं घृतघटसहस्रं च मन्त्रिगृहे ॥
प्रेषयत, तैस्तथैवानुष्ठिते कोशलेन लघुभ्राता । भणितो देशलनामा यथाऽऽवयोर्नियमतोऽधिकम् ॥९२॥
यत्किञ्चिदपि तत्समर्पय पुनरपि त्वं राजकुले, तेनापि । प्रतिपद्य तदा नियमात्समधिकं सर्वम् ॥९३॥
अर्पयित्वा स्वजनानां ततो भणिता एतद् निजेषु स्थानेषु । धरत नियमावधेः परतो ग्रहीष्येऽहमेतत् ॥९४॥
तैरपि तथैव कृते विज्ञातः कोशलेन वृत्तान्तः । एष कथमपि खलु ततस्तेन प्रभणितो देशल एवम् ॥९५॥
हा भ्रातः! पञ्चमव्रत इति कुर्वाणेन तृतीयातिचारः । विहितस्त्वयाऽद्यापि तस्मादधिकं देहि धर्मे ॥९६॥
इति भृशं तेन भणितोऽपि हि देशलोऽकुर्वन् । कालेन मृत्वाऽल्पर्द्धिकव्यन्तरो जातः ॥९७॥
पञ्चशतमन्त्रिप्रवरः कोशलमन्त्र्यपि मरणसमये । गृहीत्वा प्रव्रज्यां प्राप्तो माहेन्द्रकल्पे ॥९८॥
किञ्चिदधिकसप्तसागरायुः परिपाल्य ततश्च । च्युत्वा सेत्स्यति महाविदेहे वर्षे ॥९९॥

इय निक्कलंकवयपालणेण जह कोसलो सुही जाओ । दुईओ उण दुहभागी ता होयव्वं दिढवएहिं ॥१००॥

॥ इति पञ्चमाणुव्रततृतीयातिचारविपाके देशलदृष्टान्तः समाप्तः ॥

---

इति निष्कलङ्कव्रतपालनेन यथा कोशलः सुखी जातः । द्वितीयः पुनर्दुःखभागी तस्माद् भवितव्यं दृढव्रतैः ॥

नियमावहीए परओ जह पसवइ चउपयं तहा कुणइ । अइलोहग्गहघत्थो स लहइ दुलहोव्व उवहासं ॥१॥
तथाहि;—
गुरुमहिहररमणीयं रयणायरसरिसपरिहकयसोहं । सोहग्गपुरं नयरं जंबुद्दीवंव सुहवासं ॥२॥
महिहरसिरफुरियकरो अरितमभरखंडणो तहिं अत्थि । सूरुव्व सूरसेणो राया रंभा पिया तस्स ॥३॥
अह अन्नया निविट्ठो भवणोवरि पासए पुरपयाओ । पुव्वमुहं जंतीओ तो राया पुच्छए पुरिसं ॥४॥
इंदमहो खंदमहो नागमहो वा किमज्ज इह नयरे । दीसइ जणो वयंतो विसेसओ विहियसिंगारो ! ॥५॥
तो तेणं पुरिसेणं कहियं जह अज्ज इत्थ चउनाणी । नाणमहोयही सूरी समोसढो पुव्वउज्जाणे ॥६॥
तव्वंदणवडियाए गच्छइ लोउत्ति इय निसामेउं । सव्विड्ढीए गंतुं वंदइ सूरिं नरवरिंदो ॥७॥
निसुणइ जिणिंदधम्मं सम्मं मुणिनाहवयणओ जाव । ताव सहसा कओवि हु पत्तं सुरजुयलयं तत्थ ॥८॥
एगो य अच्छराहिं पिच्छणयछणं पयट्टए तत्थ । बीओ मणहरसद्देण वायमाणो कणयसिंगं ॥९॥
गोवालिणीण विंदं नच्चावइ फारमुत्तियाहारं । उन्नमयवासनिवसणपीणुन्नयथणहराभोगं ॥१०॥
बहुहावभावसब्भावसंगयं गरुयभत्तिसंजुत्तं । उच्चारावइ छंदंतरम्मि एयं च थुइकुलयं ॥११॥
तथाहि ;—

पणमामि जयत्तयवंसमणिं मणिकंचणमुक्कपमुक्कधणं ।
धणसारसुरिंदनरिंदनयं नयजुत्तसुजुत्तिसुसुत्तकहं ॥१२॥
कहरंजियदेवनरिंदजणं जणमाणसमाणसहंसवरं ।

---

नियमावधेः परतो यथा प्रसूते चतुष्पदं तथा करोति । अतिलोभग्रहग्रस्तः स लभते दुर्लभ इवोपहासम् ॥१॥
गुरुमहीधररमणीयं रत्नाकरसदृशपरिखाकृतशोभम् । सौभाग्यपुरं नगरं जम्बूद्वीपवच्छुभवास(वर्ष)म् ॥२॥
महीधरशिरःस्फुरितकरोऽरितमोभरखण्डनस्तत्रास्ति । सूरवच्छूरसेनो राजा रम्भा प्रिया तस्य ॥३॥
अथान्यदा निविष्टो भवनोपरि पश्यति पुरप्रजाः । पूर्वमुखं यान्तीस्ततो राजा पृच्छति पुरुषम् ॥४॥
इन्द्रमहः स्कन्दमहो नागमहो वा किमद्येह नगरे । दृश्यते जनो व्रजन् विशेषतो विहितशृङ्गारः ! ॥५॥
ततस्तेन पुरुषेण कथितं यथाऽद्यात्र चतुर्ज्ञानः । ज्ञानमहोदधिः सूरिः समवसृतः पूर्वोद्याने ॥६॥
तद्वन्दनवृत्तितया गच्छति लोक इति निशम्य । सर्वर्द्ध्या गत्वा वन्दते सूरिं नरवरेन्द्रः ॥७॥
शृणोति जिनेन्द्रधर्मं सम्यग् मुनिनाथवचनतो यावत् । तावत्सहसा कुतोऽपि हि प्राप्तं सुरयुगलं तत्र ॥८॥
एकश्चाप्सरोभिः प्रेक्षणक्षणं प्रवर्तयति तत्र । द्वितीयो मनोहरशब्देन वादयमानः कनकशृङ्गम् ॥९॥
गोपालिनीनां वृन्दं नर्तयति स्फारमौक्तिकहारम् । उन्नमद्वासोनिवसनपीनोन्नतस्तनभराभोगम् ॥१०॥
बहुहावभावसद्भावसंगतं गुरुभक्तिसंयुक्तम् । उच्चारयति च्छन्दोऽन्तरे एतच्च स्तुतिकुलकम् ॥११॥

प्रणमामि जगत्त्रयवंशमणिं प्रमुक्तमणिकाञ्चनमुक्तधनम् ।
घनसारसुरेन्द्रनरेन्द्रनतं नययुक्तसुयुक्तिसुसूत्रकथम् ॥१२॥

वरनाणमहोयहिपारगयं गयगव्वसमग्गसमाइगुणं ॥१३॥
गुणरिद्धिसबंधुरबुद्धिधरं धरणीधरतुंगथिरत्तजुयं ।
जुयमित्तविइन्नसुदिट्ठिपहं पहसंतथुणंतजणाण समं ॥१४॥
समभत्तियरोरनरिंदगणं गणिसत्तमभुत्तमसत्तधरं ।
धरिदुद्धुरदुद्धरधम्मभरं भरहेसरवंसविसालधयं ॥१५॥

इय पिच्छणावसाणे पुट्ठो रन्ना मुणीसरो एवं । नाह ! सुरजुयलमेयं कह तु इत्थागयं, किंवा ॥१६॥
गोवालियकयवेसो एसो गोवालियाण मज्झम्मि । नचइ पढेइ गायइ, बीओ उण अमरवेसेण ॥१७॥
अमरंगणाण मज्झे नचइ गाएइ विविहभंगीहिं ? । तो गुरुणा पुव्वभवो कहिउं तेसिं समारद्धो ॥१८॥
तंथाहि ;—
अत्थि इह विंझसेलो सज्जणदेहंव नम्मयाकलिओ । तस्स समीवे समवत्तिपुरसमा अत्थि जमपल्ली ॥१९॥
तत्थ निवसिंसु दुन्नि य गोवलिया दुल्लहवल्लहभिहाणा । बहुचउप्पयाइविहवा परुप्परं नेहसंपन्ना ॥२०॥
बहुगोवंगोविवग्गेण परिगया गरुयगिरिनिउंजेसु । चारिंति गोधलाइं ससलिलगुरुहरियहारीसु ॥२१॥
तरुणिजणवेणिवीणामहुरसरुल्लासरासयसयण्हा । चिट्ठंति सयावि तहा सिंगरवाऊरियदियंता ॥२२॥
अह कहवि तत्थ सत्थप्पणोल्लिया अल्लिया य तं पल्लिं । अम्हे, तो दोवि इमे संपत्ता अम्हपासम्मि ॥२३॥
वंदित्तु भूवविट्ठा, अम्हेहिं ताण सम्मुहं भणियं । भो भो लद्धूण इमं दुल्लहं कहवि मणुयत्तं ॥२४॥

---

*कथारञ्जितदेवनरेन्द्रजनं जनमानसमानसहंसवरम् ।*
*वरज्ञानमहोदधिपारगतं गतगर्वसमग्रशमादिगुणम् ॥१३॥*
गुणर्द्धिसबन्धुरबुद्धिधरं धरणीधरतुङ्गस्थिरत्वयुतम् ।
युगमात्रवितीर्णसुदृष्टिपथं प्रहसत्स्तुवज्जनयोः समम ॥१४॥
समभक्तरोरनरेन्द्रगणं गणिसत्तममुत्तमसत्त्वधरम् ।
धृतोद्धुरदुर्धरधर्मभरं भरतेश्वरवंशविशालध्वजम् ॥१५॥

इति प्रेक्षणावसाने पृष्टो राज्ञा मुनीश्वर एवम् । नाथ ! सुरयुगलमेतत्कथं त्वत्रागतं, किंवा ॥१६॥
गोपालिकृतवेश एष गोपालिकानां मध्ये । नृत्यति पठति गायति, द्वितीयः पुनरमरवेशेन ॥१७॥
अमराङ्गनानां मध्ये नृत्यति गायति विविधभङ्गिभिः ? । ततो गुरुणा पूर्वभवः कथयितुं तयोः समारब्धः ॥
अस्तीह विन्ध्यशैलः सज्जनदेहवद् नर्मदा(नम्रता)कलितः । तस्य समीपे समवर्तिपुरसमाऽस्ति यमपल्ली ॥
तत्र न्यवात्सातां द्वौ च गोपालौ दुर्लभवल्लभाभिधानौ । बहुचतुष्पदादिविभवौ परस्परं स्नेहसंपन्नौ ॥२०॥
बहुगोपगोपीवर्गेण परिगतौ गुरुगिरिनिकुञ्जेषु । चारयतो गोधनानि ससलिलगुरुहरितधारिषु ॥२१॥
तरुणीजनवेणीवीणामधुरस्वरोल्लासरासकमुदितौ । तिष्ठतः सदापि तथा शृङ्गरवापूरितदिगन्तौ ॥२२॥
अथ कथमपि तत्र सार्थप्रणोदिता आलीनाश्च तां पल्लीम् । वयं, ततो द्वावपीमौ संप्राप्तावस्मत्पार्श्वे ॥२३॥

धम्मम्मि सया तुब्भेहिं उज्जमो होइ इत्थ कायव्वो । नमिऊण तओ तेहिंवि सप्पणयं भणियमिय वयणं ॥
धम्मुज्जमेण अम्हे मिगमाई मारिऊण निव्वहिमो । तो अम्मेहिं भणियं नहु नहु एयं खमं तुम्ह ॥२६॥
जललवचलम्मि जीए तडितरलविलासलच्छिविच्छड्डे । पडुपवणपहयपउमिणिजलतरले सयणसंजोगे ॥२७॥
महुमत्तकामिणीयणकडक्खविक्खेवचंचले पेम्मे । वामाण माणसं पिव अइचवले जोव्वणभरम्मि ॥२८॥
जिणधम्मो अणुचरिउं जुत्तो तुम्हाण तस्स पुण मूलं । सम्मत्तं निद्दिट्ठं ता तं गहिऊण सविसेसं ॥२९॥
उज्जमह जिणपणीए धम्मे इय जंपियम्मि अम्हेहिं । नमिऊण तेवि पभणंति अम्ह साहेह जिणधम्मं ॥३०॥
तो दुविहोवि कहिओ धम्मो अंगीकओ पुणो तेहिं । पढमे असमत्थेहिं गिहिधम्मो बारसविहोवि ॥३१॥
इत्तो अन्नत्थ गया अम्हे ताणं च धम्मनिरयाणं । अह अन्नया य पंचमवयम्मि अइसंकडं जायं ॥३२॥
जम्हा चउप्पयाणं तेहिं दोहिंपि नियमकालम्मि । थोवा संखा विहिया, पइवरिसं पसवमाणाण ॥३३॥
जायइ जया समहिया तयाइयारो हवेइ इय मुणिउं । मूलपरिमाणमज्झा विक्कणए वल्लहो ताइं ॥३४॥
दुलहेण पुणो पुन्नाए मूलसंखाए नियपगावीणं । नियमावहीए परओ जह गब्भो होइ तह विहियं ॥
तो सो वल्लहराएण पभणिओ मूढ ! इय कुणंतेणं । पंचमवयअइयारो विहिओ तुमए अहियदुहओ ॥
इय सोउं स पभणइ गुरूण पासम्मि जा मए गहिया । सा चउप्पयाण संखा इन्हिंपि हु तत्तिया चेव ॥
न मए किंचिवि अहियं किणियं जेणेह होइ अइयारो । सयमेव चउप्पयाइं मेहुणसन्नाए जायंति ॥३८॥

---

वन्दित्वा भूपविष्टौ, अस्माभिस्तयोः संमुखं भणितम् । भो भो लब्ध्वेदं दुर्लभं कथमपि मनुजत्वम् ॥२४॥
धर्मे सदा युवाभ्यामुद्यमो भवत्यत्र कर्तव्यः । नत्वा ततस्ताभ्यामपि सप्रणयं भणितमिति वचनम् ॥२५॥
धर्मोद्यमेनावां मृगादीन्मारयित्वा निर्वहावः । ततोऽस्माभिर्भणितं नहि नह्येतत्क्षमं युवयोः ॥२६॥
जललवचपले जीविते तडित्तरलविलासलक्ष्मीविस्तारे । पटुपवनप्रहतपद्मिनीजलतरले स्वजनसंयोगे ॥२७॥
मधुमत्तकामिनीजनकटाक्षविक्षेपचञ्चले प्रेमणि । वामानां मानसमिवातिचपले यौवनभरे ॥२८॥
जिनधर्मोऽनुचरितुं युक्तो युवयोस्तस्य पुनर्मूलम् । सम्यक्त्वं निर्दिष्टं तस्मात्तद् गृहीत्वा सुविशेषम् ॥२९॥
उद्यच्छतं जिनप्रणीते धर्म इति जल्पितेऽस्माभिः । नत्वा तावपि प्रभणत आवां कथयत जिनधर्मम् ॥३०॥
ततो द्विविधोऽपि कथितो धर्मोऽङ्गीकृतः पुनस्ताभ्याम् । प्रथमेऽसमर्थाभ्यां गृहिधर्मो द्वादशविधोऽपि ॥३१॥
इतोऽन्यत्र गता वयं तयोश्च धर्मनिरतयोः । अथान्यदा च पञ्चमव्रतेऽतिसंकटं जातम् ॥३२॥
यस्माच्चतुष्पदानां ताभ्यां द्वाभ्यामपि नियमकाले । स्तोका संख्या विहिता, प्रतिवर्षं प्रसूयमानानाम् ॥३३॥
जायेत यदा समधिका तदातिचारो भवेदिति ज्ञात्वा । मूलपरिमाणमध्याद्विक्रीणीते वल्लभस्तानि ॥३४॥
दुर्लभेन पुनः पूर्णायां मूलसंख्यायां निजगवीनाम् । नियमावधेः परतो यथा गर्भो भवेत्तथा विहितम् ॥३५॥
ततः स वल्लभराजेन प्रभणितो मूढ ! इति कुर्वता । पञ्चमव्रतातिचारो विहितस्त्वयाऽधिकदुःखदः ॥३६॥
इति श्रुत्वा स प्रभणति गुरूणां पार्श्वे या मया गृहीता । सा चतुष्पदानां संख्येदानीमपि तावत्येव ॥३७॥
न मया किञ्चिदप्यधिकं क्रीतं येनेह भवत्यतिचारः । स्वयमेव चतुष्पदानि मैथुनसंज्ञया जायन्ते ॥३८॥

को तत्थ मज्झ दोसो इय भासंतो हसिज्जए लोए । इयरो उण जह भणियं तहेव तं पालए पयओ ॥
एवं वच्चंतम्मि उ काले कालेण कवलिया कहवि । वल्लहदुल्लहराया दोविहु नियआउयस्संते ॥४०॥
पढमो पढमे कप्पे बीओ गंधव्विएसु उववन्नो । तो सुमरियपुव्वभवा पाउब्भूया मह समीवे ॥४१॥
एगो तुम्हाण पुरो नियनियमफलं पयासए देवो । अच्छरसाहिं सहिओ पिच्छणयछणविहाणेण ॥४२॥
इयरो सकलंकवओ किव्विसियसुरो सरेवि गोवग्गं । तुम्हपडिबोहणत्थं गायइ गोवीयणेण समं ॥४३॥
इय कहिउं तच्चरियं सूरी जा उवरओ, स गंधव्वो । पढइ सुरो तो एवं पच्छायावेण संतत्तो ॥४४॥
एक्कपहुणो सयासे गहिया विरई मए इमेणावि । ही ही पमायवसओ सकलंका सा मए विहिया ॥४५॥
हा हा चिंतामणिसंनिहाए विरईय कलंकमाणेवि । निब्भग्गसेहरेणं कोडीए वराडिया किणिया ॥४६॥
संतोसामयपाणं काउं उव्वक्किियं हयासेणं । जं गहिऊणं विरई कलंकिया मोहमूढेण ॥४७॥
तं विरइपालणफलं जं कीलइ एस अच्छराहिं समं । मह पुण पलवंतस्सवि न दिंति एयाओ पडिवयणं॥
इय सुणिऊणं राया संवेगवसुच्छलंतसुहभावो । सम्मत्ताईधम्मं पडिवज्जइ सूरिपासम्मि ॥४९॥
देवावि सुगुरुचरणे नमिऊणं पडिगया नियट्ठाणं । कप्पसमत्तीए तओ गुरुवि अन्नत्थ विहरेइ ॥५०॥
ता जह वल्लहराएण पालिया निक्कलंकवयविरई । तह एवं अन्नेणवि पालियव्वा पयत्तेण ॥५१॥

॥ इति परिग्रहपरिमाणचतुर्थातिचारे दुर्लभराजकथानकं समाप्तम् ॥

---

कस्तत्र मम दोष इति भाषमाणो हस्यते लोके । इतरः पुनर्यथा भणितं तथैव तत्पालयति प्रयतः ॥३९॥
एवं व्रजति तु काले कालेन कवलितौ कथमपि । वल्लभदुर्लभराजौ द्वावपि निजायुषोऽन्ते ॥४०॥
प्रथमः प्रथमे कल्पे द्वितीयो गान्धर्विकेषूपपन्नः । ततः स्मृतपूर्वभवौ प्रादुर्भूतौ मम समीपे ॥४१॥
एको युष्माकं पुरो निजनियमफलं प्रकाशयति देवः । अप्सरोभिः सहितः प्रेक्षणक्षणविधानेन ॥४२॥
इतरः सकलङ्कव्रतः किल्बिषिकसुरः स्मृत्वा गोवर्गम् । युष्मत्प्रतिबोधनार्थं गायति गोपीजनेन समम् ॥४३॥
इति कथयित्वा तच्चरितं सूरिर्यावदुपरतः, स गन्धर्वः । पठति सुरस्तत एवं पश्चात्तापेन संतप्तः ॥४४॥
एकप्रभोः सकाशे गृहीता विरतिर्मयाऽनेनापि । ही ही प्रमादवशतः सकलङ्का सा मया विहिता ॥४५॥
हा हा चिन्तामणिसंनिभायां विरतौ कलंकमानीय । निर्भाग्यशेखरेण कोट्या वराटिका क्रीता ॥४६॥
संतोषामृतपानं कृत्वा वमितं हताशेन । यद् गृहीत्वा विरतिः कलङ्किता मोहमूढेन ॥४७॥
तद् विरतिपालनफलं यत्क्रीडत्येषोऽप्सरोभिः समम् । मम पुनः प्रलपतोऽपि न ददत्येताः प्रतिवचनम् ॥४८॥
इति श्रुत्वा राजा संवेगवशोच्छलच्छुभभावः। सम्यक्त्वादिधर्मं प्रतिपद्यते सूरिपार्श्वे ॥४९॥
देवावपि सुगुरुचरणौ नत्वा प्रतिगतौ निजस्थानम् । कल्पसमाप्त्या ततो गुरुरप्यन्यत्र विहरति ॥५०॥
तस्माद्यथा वल्लभराजेन पालिता निष्कलङ्कव्रतविरतिः । तथैवमन्येनापि पालयितव्या प्रयत्नेन ॥५१॥

---

.मूलनियमाहियाइं कचोलाईणि भंजिउं पुणवि । तस्संखं कुणमाणो माणुव्व विराहए विरई ॥१॥
तथाहि;—
अत्थि इह सालिगामो गंधियहट्टंव सुरहिदव्वड्ढो । अमियकलसाभिहाणो सेट्ठी तत्थत्थि विक्खाओ ॥२॥
तब्भज्जा जिणदेवी पुत्तो से माणदेवनामोत्ति । सव्वकलाकुसलोवि हु दोगुच्चुव्वाइओ भमइ ॥३॥
अह जणएणं समयं पत्तो सो साहुसंनिहाणम्मि । नमिऊणं मुणिचरणे निसुणइ सद्देसणं पयओ ॥४॥
तथाहि;—
कायव्वो वरधम्मो सोवि हु संतोसओ हवइ पवरो । सो वंछाविच्छेए तव्विच्छेओ विवेगाओ ॥५॥
सो उण गुरुवयणाओ तव्वयणाण्णणे तओ जत्तो । कायव्वो बुद्धिमया निच्चं निब्भिच्चचित्तेण ॥६॥
जम्हा संतोसोच्चिय परमो मोक्खस्स साहणोवाओ । इहलोइयसोक्खस्सवि सोच्चिय मूलं जओ भणियं ॥
"संतोषैश्वर्यसुखिनां दूरे दुःखसमुच्छ्रयाः । लोभाशाबद्धचित्तानामपमानः पदे पदे ॥"
किं परमं इह दुक्खं सजिगीसं माणसं मणुस्साणं । सोक्खंपि हु किं परमं सुनिरीहत्तं जमिह भणियं ॥
"तन्दुलमानकमेकं कन्दर्पहरापि युवतिरेकैव । पृथ्वीपतेरपि फलं शेषः क्लेशोऽभिमानो वा ॥"
जह जह लोभोवरमो जह जह अप्पो परिग्गहारंभो । तह तह सुहं पवड्ढइ धम्मस्स य होइ संसिद्धी ॥
इच्चाइदेसणं निसुणिऊण वणिएण तणयसहिएण । सम्मदंसणपुव्वं पंचममणुव्वयं गहियं ॥१०॥
तब्भावत्थं नाउं मुणिणो पासम्मि परमविणएण । तो माणदेवसहिओ सिट्ठी वंदेवि मुणिनाहं ॥११॥
संपत्तो नियगेहे पुत्तेण समं करेइ जिणधम्मं । दोगचदुहकिलंतो भमइ सया माणदेवोवि ॥१२॥
अह अन्नया तिदंडी जोगीसरनामओ गुरुज्झाणे । दिट्ठो पुट्ठो य तओ नमिऊणं सायरं तेणं ॥१३॥

---

मूलनियमाधिकानि पात्रादीनि भङ्क्त्वा पुनरपि । तत्संख्यं कुर्वन् मान इव विराधयति विरतिम् ॥१॥
अस्तीह शालिग्रामो गान्धिकहट्टमिव सुरभिद्रव्याढ्यः । अमृतकलशाभिधानः श्रेष्ठी तत्रास्ति विख्यातः ॥२॥
तद्भार्या जिनदेवी पुत्रस्तस्य मानदेवनामेति । सर्वकलाकुशलोऽपि हि दौर्गत्यखिन्नो भ्रमति ॥३॥
अथ जनकेन समं प्राप्तः स साधुसंनिधाने । नत्वा मुनिचरणौ शृणोति सद्देशनां प्रयतः ॥४॥
कर्तव्यो वरधर्मः सोऽपि हि संतोषतो भवति प्रवरः । स वाञ्छाविच्छेदे तद्विच्छेदो विवेकात् ॥५॥
स पुनर्गुरुवचनात् तद्वचनाकर्णने ततो यत्नः । कर्तव्यो बुद्धिमता नित्यं निर्भृत्यचित्तेन ॥६॥
यस्मात् संतोष एव परमो मोक्षस्य साधनोपायः । ऐहलौकिकसौख्यस्यापि स एव मूलं यतो भणितम् ॥७॥
किं परममिह दुःखं सजिगीषं मानसं मनुष्याणाम् । सौख्यमपि हि किं परमं सुनिरीहत्वं यदिह भणितम् ॥
यथा यथा लोभोपरमो यथा यथाऽल्पः परिग्रहारम्भः । तथा तथा सुखं प्रवर्धते धर्मस्य च भवति संसिद्धिः ॥
इत्यादिदेशनां श्रुत्वा वणिजा तनयसहितेन । सम्यग्दर्शनपूर्वं पञ्चममणुव्रतं गृहीतम् ॥१०॥
तद्भावार्थं ज्ञात्वा मुनेः पार्श्वे परमविनयेन । ततो मानदेवसहितः श्रेष्ठी वन्दित्वा मुनिनाथम् ॥११॥
संप्राप्तो निजगेहे पुत्रेण समं करोति जिनधर्मम् । दौर्गत्यदुःखक्लान्तो भ्रमति सदा मानदेवोऽपि ॥१२॥

कहसु उवायं किंपि हु लच्छीलाहो हवेइ मह जेण। इत्तियदिणाणि सव्वे विहला जाया मह उवाया ॥
तो आह तिदंडी तुंडतंडवं मा करेसु मह पुरओ। अतुच्छलच्छिविच्छड्डमिच्छसे वच्छ ! निच्छयओ ॥
जइ ता, तो मह पुट्ठिं मा मुंचसु कहवि जाव छम्मासं। नो भोयणाइचिंता कायव्वा कावि वणिय ! तए ॥
तो तेणं पडिभणियं जुत्तमिणं किंतु मज्झ पियराण। सो नत्थि कोइ दुइओ भोयणमेत्तंपि जो दाही ॥
वुड्ढाइं थइढाइं विहुणियविहवाइं वाहिविहुराइं। मह विरहम्मि मरंती ता कह ताइं करेमिण्हिं ? ॥१८॥
तो जंपेइ तिदंडी जइ एवं वच्छ ! गच्छ नियगेहं। गहिऊण इमं विज्जं वज्जंकुसनामियं पवरं ॥१९॥
एसा य पइदिणंपि हु रुप्पस्स पलाइं पंच तुह दाही। सुमरियमित्तावि लहुं तो जत्तो इत्थ कायव्वो ॥२०॥
इय भणिऊणऽदंसणमह पत्ते तम्मि सोवि नियगेहे। पत्तो रयणीइ तओ विहिपुव्वं सुमरिया विज्जा ॥
तीएवि तस्सुस्सीसे रुप्पस्स पलाइं पंच मुक्काइं। सो पिच्छिय पच्चूसे गिण्हइ ताइं पहिट्ठमणो ॥२२॥
तो ताइं विक्किणिउं गहिउं दव्वं करेइ तेणावि। गेहव्वयाइ सव्वं तह किंचि स देइ धम्मम्मि ॥२३॥
कच्चोलमाइयाणिवि कहवि घडावेइ तेण रुप्पेण। तो पिउणा सो भणिओ रे संपइ वच्छ ! तुह गेहे ॥
कच्चोलाइं दीसंति कह णु कह मूलदव्वविरहेवि। कइमियसंखं दव्वं तए विढत्तं फुडं कहसु ? ॥२५॥
कहिए जहट्ठिए तेण जाव सिट्ठी पलोयए तुट्ठो। कच्चोलाइं नियमाउ समहियाइंपि ता नियइ ॥२६॥
विरइविराहणभीओ तो सो जंपेइ मज्झ तुज्झवि य। कच्चोलाणं दसगं नियमे मुक्कलयमेयाइं ॥२७॥

---

अथान्यदा त्रिदण्डी योगीश्वरनामको गुरूद्याने। दृष्टः पृष्टश्च ततो नत्वा सादरं तेन ॥१३॥
कथयोपायं कमपि खलु लक्ष्मीलाभो भवति मम येन। इयद्दिनानि सर्वे विफला जाता ममोपायाः ॥१४॥
तत आह त्रिदण्डी तुण्डताण्डवं मा कुरु मम पुरतः। अतुच्छलक्ष्मीविस्तारमिच्छसि वत्स ! निश्चयतः ॥
यदि तावत्, ततो मम पृष्ठं मा मुञ्च कथमपि यावत्षण्मासीम्। नो भोजनादिचिन्ता कर्तव्या कापि वणिक् ! त्वया ॥
ततस्तेन प्रतिभणितं युक्तमिदं किन्तु मम पित्रोः। स नास्ति कश्चिद् द्वितीयो भोजनमात्रमपि यो दास्यति ॥
वृद्धौ स्तब्धौ विधुतविभवौ व्याधिविधुरौ। मम विरहे म्रियेते तस्मात्कथं तौ करोमीदानीम् ? ॥१८॥
ततो जल्पति त्रिदण्डी यद्येवं वत्स ! गच्छ निजगेहम्। गृहीत्वेमां विद्यां वज्राङ्कुशानामिकां प्रवराम् ॥१९॥
एषा च प्रतिदिनमपि खलु रूप्यस्य पलानि पञ्च ते दास्यति। स्मृतमात्रापि लघु ततो यत्न इह कर्तव्यः ॥
इति भणित्वाऽदर्शनमथ प्राप्ते तस्मिन् सोऽपि निजगेहे। प्राप्तो रजन्यां ततो विधिपूर्वं स्मृता विद्या ॥२१॥
तयापि तस्योच्छीर्षे रूप्यस्य पलानि पञ्च मुक्तानि। स दृष्ट्वा प्रत्यूषे गृह्णाति तानि प्रहृष्टमनाः ॥२२॥
ततस्तानि विक्रीय गृहीत्वा द्रव्यं करोति तेनापि। गेहव्ययादि सर्वं तथा किञ्चित्स ददाति धर्मे ॥२३॥
पात्रादीन्यपि कथमपि घटयति तेन रूप्येण। ततः पित्रा स भणितो रे संप्रति वत्स ! तव गेहे ॥२४॥
पात्राणि दृश्यन्ते कथं नु कथं मूलद्रव्यविरहेऽपि। कथमितिसंख्यं द्रव्यं त्वयार्जितं स्फुटं कथय ? ॥२५॥
कथिते यथास्थिते तेन यावत् श्रेष्ठी प्रलोकते तुष्टः। पात्राणि नियमात्समधिकान्यपि तदा पश्यति ॥२६॥
विरतिविराधनभीतस्ततः स जल्पति मम तवापि च। पात्राणां दशकं नियमे मुत्कलमेतानि ॥२७॥

दीसंति समहियाइं, इय सुणिउं तेण नियमअहियाइं । ताइं एगीकाउं दससंखाइं करावेइ ॥२८॥
तेणं सिट्ठी भणिओ कच्चोलाइं न ताय ! अहियाइं । जायाइं गहियाए विरईए मा भयं कुणसु ॥२९॥
तुल्ले पुण पंचउणाइं ताइं काराविया ऐयाइं । सिट्ठी पभणइ एवंपि वच्छ ! सकलंकिया विरई ॥३०॥
अवि अग्गिम्मि पवेसो पडणं अवडम्मि रुंदभीमम्मि । अवि उग्गखग्गधाराए रोहणं जलहिपडणं वा ॥
अवि अहियसहियवासे वसियव्वं अवि विसंपि असियव्वं । पुल्लीपओहराओ पायव्वं पायसं वावि ॥३२॥
न उणो नियनियमधुरा कलंकियव्वा कयावि धीरेहिं । तडिचलमडप्फराए लच्छीइ कए विसेसेण ॥३३॥
ता परिहर धणमिणमो धम्मम्मि व देसु समहियं जमिह । अन्नह भवम्मि भीमे विरइं लद्धुंपि भमियव्वं ॥
तत्तो तेणवि भणिओ सिट्ठी मा ताय ! एरिसं भणसु । तइ गहियवत्थुसंखा एवंपि कए न भज्जेइ ॥३५॥
तो सेट्ठी भणइ सुयं मा मा कूडुत्तराइं मह पुरओ । जंपेसु होसु भिन्नो गिण्हेवि नियदव्वभायं च ॥३६॥
तो तेणवि पडिवन्नं जाओ भिन्नो करेइ वाणिज्जं । सिट्ठीवि धम्मनिरओ पालइ गिहिधम्ममकलंकं ॥३७॥
तणओवि अतणुविहवो जाओ कालेण लोहगहमूढो । मूढविसूइयघत्थो मरिउं नरयम्मि संपत्तो ॥३८॥
भमिही भवम्मि अज्जवि पावेणं विरइभंगजणिएणं । पढममइयारमित्तं पच्छा भंगोवि से जाओ ॥३९॥
थेवोवि हु अइयारो पढमं चिय नेय जुज्जए काउं । थेवेण अपच्छासेवणेण रोगुव्व वड्ढेइ ॥४०॥
अमियकलसोत्ति सिट्ठी अविराहियविरइरयणभावाओ । विहिविहियदेहचाओ जाओ य सणंकुमारम्मि ॥

---

दृश्यन्ते समधिकानि, इति श्रुत्वा स नियमाधिकानि । तान्येकीकृत्य दशसंख्यानि कारयति ॥२८॥
तेन श्रेष्ठी भणितः पात्राणि न तात ! अधिकानि । जातानि गृहीताया विरतेर्मा भयं कुरुष्व ॥२९॥
तौल्ये पुनः पञ्चोनानि तानि कारितान्येतानि । श्रेष्ठी प्रभणत्येवमपि वत्स ! संकलङ्किता विरतिः ॥३०॥
अप्यग्नौ प्रवेशः पतनमवटे विशालभीमे । अप्युग्रखड्गधारायां रोहणं जलधिपतनं वा ॥३१॥
अप्यहितसहितवासे वस्तव्यमपि विषमप्यशितव्यम् । व्याघ्रीपयोधरात्पातव्यं पायसं वापि ॥३२॥
न पुनर्निजनियमधुरा कलङ्कयितव्या कदापि धीरैः । तडिच्चलगर्वाया लक्ष्म्याः कृते विशेषेण ॥३३॥
तस्मात्परिहर धनमिदं धर्मे वा देहि समधिकं यदिह । अन्यथा भवे भीमे विरतिं लब्ध्वापि भ्रमितव्यम् ॥
ततस्तेनापि भणितः श्रेष्ठी मा तात ! ईदृशं भण । त्वया गृहीतवस्तुसंख्यैवमपि कृते न भज्यते ॥३५॥
ततः श्रेष्ठी भणति सुतं मा मा कूटोत्तराणि मम पुरतः । जल्प भव भिन्नो गृहीत्वा निजद्रव्यभागं च ॥३६॥
ततस्तेनापि प्रतिपन्नं जातो भिन्नः करोति वाणिज्यम् । श्रेष्ठ्यपि धर्मनिरतः पालयति गृहिधर्ममकलङ्कम् ॥
तनयोऽप्यतनुविभवो जातः कालेन लोभग्रहमूढः । मूढविसूचिकाग्रस्तो मृत्वा नरके संप्राप्तः ॥३८॥
भ्रमिष्यति भवेऽद्यापि पापेन विरतिभङ्गजनितेन । प्रथममतिचारमात्रं पश्चाद् भङ्गोऽपि तस्य जातः ॥३९॥
स्तोकोऽपि खल्वतिचारः प्रथममेव नैव युज्यते कर्तुम् । स्तोकेनापथ्यासेवनेन रोग इव वर्धते ॥४०॥
अमृतकलशोऽपि श्रेष्ठी अविराधितविरतिरत्नभावात् । विधिविहितदेहत्यागो जातश्च सनत्कुमारे ॥४१॥

---

१. क विसंतं ।

तइयभवे भवमुक्को तओ चुओ होहिही य, ता भव्वा ! । थेवोवि वयविसेसो पालेयव्वो निरइयारो ॥
तथा,
तण्हासुसियसरीरा संतोसरसायणं सया पियह । जेण जरमरणहरणं भवियजणा ! निव्वुइं लहह ॥४३॥
ते धणिणो ते गुणिणो ते समिणो ते विवेइणो वइणो । संतोसनंदणवणे रमंति जे पमुइया निच्चं ॥४४॥
यतः,
एगं जस्स कलत्तं चिंतावि हु तस्स थोविया होइ । सा दुगुणाइकमेणं वड्ढइ एक्किक्कवुड्ढीए ॥४५॥
एवं पुत्ताईसुवि हरिकरिरहभवणदविणमाईसु । वड्ढंतेसु विवड्ढइ मणसंतावो मणुस्साणं ॥४६॥
अपरिग्गहाण जा होइ निव्वुई पसमसुहियहिययाणं । वेयंति मुणिवरच्चिय तीसे सुरसं रसं नन्ने ॥४७॥
जेत्तियमित्तो लोहो तेत्तियमित्तं जियाण दारिद्दं । संतोसी सुयइ सुहं सिरकयचरणो दरिद्दस्स ॥४८॥
उवरिमुवरिं नियंतो विद्दाइ धणीवि अइदरिद्दोव्व । रोरोवि ईसरायइ संतोसरसायणे पीए ॥४९॥

॥ इति पञ्चमव्रतपञ्चमातिचारविपाके मानदेवदृष्टान्तः समाप्तः ॥

---

तृतीयभवे भवमुक्तस्ततश्च्युतो भविष्यति च, तस्माद्भव्याः ! । स्तोकोऽपि व्रतविशेषः पालयितव्यो निरतिचारः ॥
तृष्णाशुष्कशरीराः संतोषरसायनं सदा पिबत । येन जरामरणहरणं भव्यजनाः ! निर्वृतिं लभध्वम् ॥४३॥
ते धनिनस्ते गुणिनस्ते शमिनस्ते विवेकिनो व्रतिनः । संतोषनन्दनवने रमन्ते ये प्रमुदिता नित्यम् ॥४४॥
एकं यस्य कलत्रं चिन्तापि हि तस्य स्तोका भवति । सा द्विगुणादिक्रमेण वर्धते एकैकवृद्धौ ॥४५॥
एवं पुत्रादिष्वपि हरिकरिरथभवनद्रविणादिषु । वर्धमानेषु विवर्धते मनःसंतापो मनुष्याणाम् ॥४६॥
अपरिग्रहाणां या भवति निर्वृतिः प्रशमसुखितहृदयानाम् । वेदयन्ति मुनिवरा एव तस्याः सुरसं रसं नान्ये ॥
यावन्मात्रो लोभस्तावन्मात्रं जीवानां दारिद्र्यम् । संतोषी स्वपिति सुखं शिरःकृतचरणो दारिद्र्यस्य ॥४८॥
उपर्युपरि पश्यन् विद्राति धन्यप्यतिदरिद्र इव । रोरोऽपीश्वरायते संतोषरसायने पीते ॥४९॥



कुज्जा जोयणमाणं सड्ढो उड्ढाहतिरियदिसिगमणे । चउदसरज्जुगयाणं जीवाणं अभयहेउत्ति ॥१॥
जं तत्तायसगोलयसमाणया अविरया इहं जीवा । तम्हा मणोरहो इव तं कुव्वंतो हियं लहइ ॥२॥
तथाहि;—
धन्नउरनामगामं धणधन्नसमिद्धवणिजणं आसि । तत्थत्थि वणिपहाणो सुधणो नामेण गुरुसिट्ठी ॥३॥
वरमहिमासंपन्ना महिमा नामेण भारिया तस्स । ताण तणया विणीया मेहरहमणोरहभिहाणा ॥४॥
अह अन्नया भमंतेहिं तेहिं उज्जाणसरिसराईसु । । एकम्मि वणनिगुंजे दिट्ठो मुणिपुंगवो एगो ॥५॥
कथम्?

तवतवणतावतावियसरीरु, दुद्धरवयभारुव्वहणधीरु ।
दुट्ठट्ठकम्मरिउमलणमल्लु, अइघणसामलु धरियजल्लु ॥६॥
नासग्गनिसियलोयणविलोउ, मणसावि न पत्थइ वयविलोउ ।
उवसग्गवग्गविग्गहियदेहु, बावीसपरिसहगरुयगेहु ॥७॥
सो वंदिउ तेहिं सुभत्तिसारु, संसारमहोयहिपत्तपारु ।
सो पुच्छिउ सेट्ठिह नंदणेण, पढमेण सुयणआणंदणेण ॥८॥
जुव्वणभरिनिब्भरि रूवमडप्फरि, गहिय दिक्ख किण कारणिण ।
जइ विग्घु न झाणह गुणमह जाणह, कहहि झत्ति पहु! आयरिण ॥९॥
सियदसणकिरणविच्छुरिय अहरु, तो जंपइ तं पइ मुणिवि महुरु ।

---

कुर्याद् योजनमानं श्राद्ध ऊर्ध्वाधस्तिर्यग्दिग्गमने । चतुर्दशरज्जुगतानां जीवानामभयहेतुरिति ॥१॥
यत् तप्तायसगोलकसमाना अविरता इह जीवाः । तस्माद् मनोरथ इव तत्कुर्वन् हितं लभते ॥२॥
धान्यपुरनामग्रामो धनधान्यसमृद्धवणिग्जन आसीत् । तत्रास्ति वणिक्प्रधानः सुधनो नाम्ना गुरुश्रेष्ठी ॥३॥
वरमहिमसंपन्ना महिमा नाम्ना भार्या तस्य । तयोस्तनयौ विनीतौ मेघरथमनोरथाभिधानौ ॥४॥
अथान्यदा भ्रमद्भ्यां ताभ्यामुद्यानसरित्सरआदिषु । एकस्मिन् वननिकुञ्जे दृष्टो मुनिपुङ्गव एकः ॥५॥

तपस्तपनतापतापितशरीरो दुर्धरव्रतभारोद्वहनधीरः ।
दुष्टाष्टकर्मरिपुमर्दनमल्लोऽतिघनश्यामलो धृतयत्नः ॥६॥
नासाग्रन्यस्तलोचनविलोको मनसापि न प्रार्थयते व्रतविलोपम् ।
उपसर्गवर्गविगृहीतदेहो द्वाविंशतिपरीषहगुरुगेहम् ॥७॥
स वन्दितस्ताभ्यां शुभभक्तिसारं प्राप्तसंसारमहोदधिपारः ।
स पृष्टः श्रेष्ठिनो नन्दनेन प्रथमेन सुजनानन्दनेन ॥८॥
यौवनभरनिर्भरे रूपगर्वे गृहीता दीक्षा केन कारणेन? ।
यदि विघ्नो न ध्यानस्य गुणमथ जानीथ कथयत झटिति प्रभो! आदरेण ॥९॥

कमलिणिगयजललवचंचलम्मि, धणजोव्वणजीवियपियवलम्मि ॥१०॥
सव्वंपि निबंधणु वयइ एउं, परि किंतु मज्झ निवकन्न हेउ।
तहुवियकन्नु वणिसुउ भणेइ, कह सावि हेउ, अह मुणि कहेइ ॥११॥
इह भरहि पसिद्धउं लच्छिसिणिद्धउं, अत्थि नयरु धरणीतिलउ।
तहिं राउ महेसरु रूवि सुरेसरु, चायकित्तिगुणगणनिलउ ॥१२॥
रइरूवतुल्ल तस्सत्थि भज्ज, सुहसीलसलक्खणिय पवरलज्ज।
ताणं च कयावि हु जाय दुहिय, नामेण तिलोत्तिम गुणिहि अहिय ॥१३॥
जुव्वणभरनिब्भरि अह कयाइ, वट्टंती पिच्छिवि निरु झियाइ।
पुहईसरु, कुवि अणुरूवु रमणु, मइ वच्छिहि जुव्वणतुरयदमणु ॥१४॥
इह होही सुंदरु रूवि पुरंदरु, दरियसत्तुवित्तासकरु।
सइ आणपडिच्छउ पूरियवंछउ, छेउ विबुहु बहुबुद्धिधरु ॥१५॥
तो पुच्छिय सा निवपुंगवेण, को तुज्झुं वच्छि! वरु भणि जवेण।
सा भणइ ताय! चारहडिपत्तु, नेमित्तिउ अह विन्नाणजुत्तु ॥१६॥
सो होउ मज्झ भत्तारु सारु, अन्नह मह नियमु न होमि दारु।

---

सितदशनकिरणविच्छुरिताधरस्ततो जल्पति तं प्रति मुनिरपि मधुरम्।
कमलिनीगतजललवचञ्चले धनयौवनजीवितप्रियवले ॥१०॥
सर्वमपि निबन्धनं व्रतस्यैतत् परं किन्तु मम नृपकन्या हेतुः।
ततकर्णो वणिक्सुतो भणति, कथं सापि हेतुः, अथ मुनिर्भणति ॥११॥
इह भरते प्रसिद्धं लक्ष्मीस्निग्धमस्ति नगरं धरणीतिलकम्।
तत्र राजा महेश्वरो रूपेण सुरेश्वरस्त्यागकीर्त्तिगुणगणनिलयः ॥१२॥
रतिरूपतुल्या तस्यास्ति भार्या शुभशीलसलक्षणिता प्रवरलज्जा।
तयोश्च कदापि खलु जाता दुहिता नाम्ना तिलोत्तमा गुणैरधिका ॥१३॥
यौवनभरनिर्भरेऽथ कदाचिद् वर्तमानां दृष्ट्वा निश्चितं ध्यायति।
पृथिवीश्वरः, कोऽनुरूपो रमणो मम वत्साया यौवनतुरगदमनः ॥१४॥
इह भविष्यति सुन्दरो रूपेण पुरन्दरो दृप्तशत्रुवित्रासकरः।
सदाऽऽज्ञाप्रत्येषकः पूरितवाञ्छश्छेको विबुधो बहुबुद्धिधरः ॥१५॥
ततः पृष्टा सा नृपपुङ्गवेन कस्तव वत्स! वरो भण जवेन।
सा भणति तात! चारभटीप्राप्तो नैमित्तिकोऽथ विज्ञानयुक्तः ॥१६॥
स भवतु मम भर्ता सारोऽन्यथा मम नियमो न भवामि दाराः।

इय सुणिवि तेण तक्खणिण भणिय, वरमंतिथइयदंडाहिवइय ॥१७॥
चाउद्दिसि जोयहु कुवि निरीहु, जो लद्धलीहु चारहडीसीहु ।
विन्नाणगरिट्ठु व होउ वावि, नेमित्तिउ जोयहु तसु अभावि ॥१८॥
इय गुणसंजुत्तउ नियहु निरुत्तउ, वरु कत्थवि धरणियलि लहु ।
मह वच्छिहि कमलदलच्छिहि, मंतिथइयदंडाधरहु ! ॥१९॥

तो सचिवमाइएहिं सव्वत्थ गवेसिओ पुरे ताव । न य उवलद्धो कोवि हु पुव्वुत्तगुणेहिं परियरिओ ॥
तो बाहिगामेसुं सव्वेवि निरिक्खयंति, सचिवेण । तो दिट्ठो सूरनरो कोदंडपरिस्समपवीणो ॥२१॥
पुट्ठो सचिवेण तओ का सत्ती तुज्झ परवले मिलिए ?.। लक्खंपि विलक्खं चिय करेमि धणुहेण सो भणइ ॥
को पच्चओ इहत्थे भणिए सचिवेण भणइ सूरोवि । निव्वडियसुहडसहस्सं मए समं मुंच जोहत्थं ॥२३॥
तो मंती तेण समं समरम्मि निरूवए भडसहस्सं । सरधोरणीए तं पइ तं वरिसेउं समारद्धं ॥२४॥
लहुहत्थयाए सूरो ताण सरे खंडए नियसरेहिं । इय खणमेगं दट्ठुं सचिवो सूरं इमं भणइ ॥२५॥
उवसंहर संरंभं परिणयसु रइरंभसंभुघरणिसमं । रायकुमारिं चिरकालचिन्नपुन्नेहिं उवणीयं ॥२६॥
इय भणिऊणं मंती गणयं पुच्छेइ सोहणं लग्गं । अज्जदिणाओ सत्तमदिणम्मि साहेइ सो, इत्तो ॥२७॥
कहकहवि नियंतेणं पडिहारेणावि पाविओ वइसो । अइविन्नाणी तेणावि रहवरो दंसिओ तस्स ॥२८॥
आरोविऊण तम्मी नीओ गयणेण तेण पडिहारो । धरणीतिलए कीलियपओगवसओ तओ तेण ॥२९॥

---

इति श्रुत्वा तेन तत्क्षणेन भणिता वरमन्त्रिस्थगिकदण्डाधिपतयः ॥१७॥
चतुर्दिक्षु पश्यत कमपि निरीहं यो लब्धरेखश्चारभटीसिंहः ।
विज्ञानगरिष्ठो वा भवतु वापि, नैमित्तिकं पश्यत तस्याभावे ॥१८॥
इति गुणसंयुक्तं पश्यत निरुक्तं वरं कुत्रापि धरणितले लघु ।
मम वत्सायाः कमलदलाक्ष्या मन्त्रिस्थगिकदण्डधराः ! ॥१९॥

ततः सचिवादिभिः सर्वत्र गवेषितः पुरे तावत् । न चोपलब्धः कोऽपि हि पूर्वोक्तगुणैः परिकरितः ॥२०॥
ततो बहिर्ग्रामेषु सर्वेऽपि निरीक्षन्ते, सचिवेन । ततो दृष्टः शूरनरः कोदण्डपरिश्रमप्रवीणः ॥२१॥
पृष्टः सचिवेन ततः का शक्तिस्तव परबले मिलिते ? । लक्ष्यमपि विलक्ष्यमेव करोमि धनुषा स भणति ॥२२॥
कः प्रत्यय इहार्थे भणिते सचिवेन भणति शूरोऽपि । निर्वर्तितसुभटसहस्रं मया समं मुञ्च योधार्थम् ॥२३॥
ततो मन्त्री तेन समं समरे निरूपयति भटसहस्रम् । शरधोरण्या तं प्रति तद् वर्षितुं समारब्धम् ॥२४॥
लघुहस्ततया शूरस्तेषां शरान् खण्डयति निजशरैः । इति क्षणमेकं दृष्ट्वा सचिवः शूरमिदं भणति ॥२५॥
उपसंहर संरम्भं परिणय रतिरम्भाशम्भुगृहिणीसमाम् । राजकुमारीं चिरकालचीर्णपुण्यैरुपनीताम् ॥२६॥
इति भणित्वा मन्त्री गणकं पृच्छति शोभनं लग्नम् । अद्यदिनात्सप्तमदिने कथयति सः, इतः ॥२७॥
कथंकथमपि पश्यता प्रतिहारेणापि प्राप्तो वैश्यः । अतिविज्ञानी तेनापि रथवरो दर्शितस्तस्मै ॥२८॥

नीओ कुमरिसयासं सो तेणवि दंसिओ रहो तीए। भणिओ तमेव भत्ता पडिवन्नं तेण तव्वयणं ॥३०॥
अह थइयवाहगेणं कत्थवि निउणं पलोयमाणेण। दिट्ठो तिकालदंसी सुदंसणो पवरनेमित्ती ॥३१॥
सत्तमदिणम्मि तेणं सयमेव निरिक्खियं पवरलग्गं। पाणिग्गहस्स इत्तो सव्वेवि कहंति नरवइणो ॥३२॥
तम्मि य समए केणावि अवहडा सा तिलोत्तमा बाला। तत्तो निवेण पुट्ठो नेमित्ती केण मे वच्छा ॥३३॥
नीया कत्थ व, तो सो भणेइ विज्जाहरेण विंझम्मि। तो भणिओ रहकारो सज्जह रहं तेण तह विहिए॥
भणिओ सूरोवि निवेण रहवरे आरुहेवि गच्छाहि। नेमित्तिएण सद्धिं कुमरिं आणेह तं जिणिउं ॥३५॥
आणं पडिच्छिऊणं तिन्निवि ते रहवरम्मि चडिऊण। नेमित्तियनिद्दिट्ठे ठाणे पत्ता लहुं तत्थ ॥३६॥
कुमरीपुरओ दिट्ठो सो विज्जाहरजुवाणओ तेण। बहुचाडूणि करेंतो तो सूरो तं इमं भणइ ॥३७॥
पुरिसो हवेसु सत्थं सरेसु सुमरेसु देवयं इट्ठं। इय भणिउं सो विद्धो सरेहिं मयणस्सरेहिंव ॥३८॥
आणीया निवपासे कुमरी, नेमित्तियाइणो तत्तो। तीसे परिणयणत्थं कलहंति परोप्परं सव्वे ॥३९॥
नेमित्तिओ भणेइ मज्झ निमित्तेण जाणिया एसा। वइसो भणेइ एसा मए रहेणं समाणीया ॥४०॥
सूरो भणेइ एसा तुम्हसमक्खं मए हणेऊण। तं विज्जाहरदुट्ठं आणीया बालिया एत्थ ॥४१॥
तम्हा मइ जीवंते जो परिणेही इमं निवकुमारिं। विज्जाहरंव हणिऊण तंपि एयं गहिस्सामि ॥४२॥
इय निसुणिऊण राया गुरुचिंतादुक्खसायरनिमग्गो। हक्कारिऊण दुहियं रहम्मि मंतेइ जह वेच्छे[१]॥

---

आरोप्य तस्मिन्नीतो गगनेन तेन प्रतिहारः। धरणीतिलके कीलिकाप्रयोगवशतस्ततस्तेन ॥२९॥
नीतः कुमारीसकाशं स तेनापि दर्शितो रथस्तया। भणितस्त्वमेव भर्ता प्रतिपन्नं तेन तद्वचनम् ॥३०॥
अथ स्थगिकावाहकेन कुत्रापि निपुणं प्रलोकमानेन। दृष्टस्त्रिकालदर्शी सुदर्शनः प्रवरनिमित्ती ॥३१॥
सप्तमदिने तेन स्वयमेव निरीक्षितं प्रवरलग्नम्। पाणिग्रहस्येतः सर्वेऽपि कथयन्ति नरपतये ॥३२॥
तस्मिंश्च समये केनाप्यपहृता सा तिलोत्तमा बाला। ततो नृपेण पृष्टो निमित्ती केन मे वत्सा ॥३३॥
नीता कुत्र वा, ततः स भणति विद्याधरेण विन्ध्ये। ततो भणितो रथकारः सज्जयत रथं तेन तथा विहिते ॥
भणितः शूरोऽपि नृपेण रथवरं आरुह्य गच्छ। नैमित्तिकेन सार्धं कुमारीमानयत तं जित्वा ॥३५॥
आज्ञां प्रतीष्य त्रयोऽपि ते रथवरं आरुह्य। नैमित्तिकनिर्दिष्टे स्थाने प्राप्ता लघु तत्र ॥३६॥
कुमारीपुरतो दृष्टः स विद्याधरयुवा तस्मिन्। बहुचाटूनि कुर्वंस्ततः शूरस्तमिदं भणति ॥३७॥
पुरुषो भव शस्त्रं सर स्मर देवतामिष्टाम्। इति भणित्वा स विद्धः शरैर्मदनशरैरिव ॥३८॥
आनीता नृपपार्श्वे कुमारी, नैमित्तिकादयस्ततः। तस्याः परिणयनार्थं कलहायन्ते परस्परं सर्वे ॥३९॥
नैमित्तिको भणति मम निमित्तेन ज्ञातैषा। वैश्यो भणत्येषा मया रथेन समानीता ॥४०॥
शूरो भणत्येषा युष्मत्समक्षं मया हत्वा। तं विद्याधरदुष्टमानीता बालिकाऽत्र ॥४१॥
तस्माद् मयि जीवति यः परिणेष्यतीमां नृपकुमारीम्। विद्याधरमिव हत्वा तमप्येतां ग्रहीष्यामि ॥४२॥

---

१ क. ख गत्थ।

किं कायव्वं एवं एए उवयारिणो समग्गावि । ता कस्स तुमं देया, सा पभणइ ताय ! सूरस्स ॥४४॥
जम्हा अइप्पयंडो एसो इयरे हणेइ न हु भंती । पडिवन्नो य मए पुण पुव्विं वइसो सचित्तेणं ॥४५॥
नहु चिंतियंपि लब्भइ तम्हा मं देसु तस्स सूरस्स । इयरेवि बुज्झविज्जंतु जंतु सट्ठाणमविलंबं ॥४६॥
ता सविसेसं सक्कारिऊण दोवि हु विसज्जिया रन्ना । सूरो विवाहिऊणं मंडलियपयम्मि संठविओ ॥
रहकारोवि विलक्खो जाओ निरु दुक्खिओ कुमरिविरहे । चिंतइ अहो इमीए पडिवन्नं पालियं नेय ॥
ता किं इमिणा धणजीविएण मह सयणपरियणेणं च । विन्नाणेणवि इमिणा विणा इमीए तओ झत्ति ॥
चडिऊणं गिरिसिहरे अप्पा किल मिल्लिही मरणचित्तो । ता तत्थ मुणी दिट्ठो नाणी झाणम्मि वट्टंतो ॥
पणओ य सविणएणं मुणिणावि हु धम्मलाभिउं भणिओ । निम्माणुसे अरन्ने किमागओ तं सि भो कहसु ?॥
तो सो साहइ मरणस्स कारणा, मुणिवरेण तो भणियं । तुम्हारिसाण जुत्तं न बालमरणं अहो काउं॥
जं एएण कएणवि जीवस्स पुणोवि कम्मवसगस्स । हुंति मरणाइं नूणं तम्हा कम्मक्खयं कुणसु ॥५३॥
सो पुण हवेइ छट्ठट्ठमाइविविहेहिं तवविसेसेहिं । ते पुण हुंति कयत्था तिगरणसुद्धीए, सा य पुणो॥५४॥
सम्मं निव्वहइ जईण चत्तसंगाण, ता तुमंपि जई । हवसु इमं सोऊणं तह विहियं तेण, सो य अहं ॥५५॥
इय सुणिऊणं भणियं मेहरहेणं मुणिंद ! अणुदियहं । जीवाण हुंति सयहा एवंविहहेउणो नवरं ॥५६॥
कोवि हु करेइ एवं ता पसिऊणं ममावि आइसह । उचियं धम्मं जेणं सम्मं तमहं पवज्जामि ॥५७॥

---

इति श्रुत्वा राजा गुरुचिन्तादुःखसागरनिमग्नः । हक्कारयित्वा दुहितरं रहसि मन्त्रयति यथा वत्से ! ॥४३॥
किं कर्तव्यमेवमेत उपकारिणः समग्रा अपि । तस्मात्कस्मै त्वं देया, सा प्रभणति तात ! शूराय ॥४४॥
यस्मादतिप्रचण्ड एष इतरौ हन्यान्न हि भ्रान्तिः । प्रतिपन्नश्च मया पुनः पूर्वं वैश्यः स्वचित्तेन ॥४५॥
नहि चिन्तितमपि लभ्यते तस्मान्मां देहि तस्मै शूराय । इतरावपि बोध्येतां यातां स्वस्थानमविलम्बम् ॥४६॥
तस्मात् सविशेषं सत्कार्य द्वावपि हि विसर्जितौ राज्ञा । शूरो विवाह्य मण्डलिकपदे संस्थापितः ॥४७॥
रथकारोऽपि विलक्षो जातो निश्चितं दुःखितः कुमारीविरहे । चिन्तयत्यहो अनया प्रतिपन्नं पालितं नैव ॥४८॥
तस्मात्किमनेन धनजीवितेन मम स्वजनपरिजनेन च । विज्ञानेनाप्यनेन विनाऽनया ततो झटिति ॥४९॥
आरुह्य गिरिशिखरे आत्मा किल मोक्ष्यते मरणचित्तः । तावत्तत्र मुनिर्दृष्टो ज्ञानी ध्याने वर्तमानः ॥५०॥
प्रणतश्च स विनयेन मुनिनापि खलु धर्मलाभयित्वा भणितः । निर्मानुषेऽरण्ये किमागतस्त्वमसि भोः ! कथय ॥
ततः स कथयति मरणस्य कारणात्, मुनिवरेण ततो भणितम् । युष्मादृशानां युक्तं न बालमरणमहो कर्तुम्॥
यदेतेन कृतेनापि जीवस्य पुनरपि कर्मवशगस्य । भवन्ति मरणानि नूनं तस्मात्कर्मक्षयं कुरु ॥५३॥
स पुनर्भवति षष्ठाष्टमादिविविधैस्तपोविशेषैः । ते पुनर्भवन्ति कृतार्थास्त्रिकरणशुद्ध्या, सा च पुनः ॥५४॥
सम्यग् निर्वहति यतीनां त्यक्तसङ्गानां, तस्मात्त्वमपि यतिः । भवेदं श्रुत्वा तथा विहितं तेन, स चाहम् ॥
इति श्रुत्वा भणितं मेघरथेन मुनीन्द्र ! अनुदिवसम् । जीवानां भवन्ति शतशएवंविधहेतवः किन्तु ॥५६॥
कोऽपि हि करोत्येवं तस्मात्प्रसद्य ममाप्यादिशत । उचितं धर्मं येन सम्यक् तमहं प्रपद्ये ॥५७॥

सम्मत्ताई गुरुणा गिहिधम्मो साहिओ हिओ तेसिं । तत्थवि सविसेसं समुचियंति तो दिसिव्वयं कहइ॥
तत्तायगोलकप्पो पमत्तसत्तोऽणिवारियप्पसरो । सव्वत्थ किं न कुज्जा पावं अविरामपरिणामो ! ॥५९॥
दिसिगमणपरीमाणे गहिए जीवाण होइ नियमेण । जीवदयापरिणामो सुविसुद्धो निच्चकालंपि ॥६०॥
तेण य होइ अहिंसा भावेणं निच्छिया सयाकालं । तीए य निज्जरा निरु तम्हा एयं गहेयव्वं ॥६१॥
चिंतेयव्वं च नमो साहूणं जे सया निरारंभा । विहरंति विप्पमुक्का नगरागरमंडियं वसुहं ॥६२॥
ते धन्ना ताण नमो इरियाइरया रियंति वसुहाए । विहिविहियवरविहारा हारा इव भुवणलच्छीए॥६३॥
तेहिवि सम्मताई गहिओ गिहिधम्मसारजिणधम्मो । अइसविसेसं संखेवओ य सम्मं दिसिव्वयं तु॥६४॥
नमिऊण मुणिं पुणरवि पत्ता गेहम्मि ते पयत्तेण । पालिंति गहियधम्मं सम्मं सम्मत्तमाईयं ॥६५॥
तो अन्नया पयट्टा विसट्टकंदट्टकलियसरयम्मि । उज्जेणिं पइ गंतुं गहिऊणं पवरभंडाइं ॥६६॥
अह तत्थवि भंडाइं गहिऊणं ताइं चेव अन्नेवि । पत्ता बहवे वणिया बहुदेसाणं तओ तत्थ ॥६७॥
अइसयसमग्गं जायं भंडं तो नियवि भंडसालाए । खिवमाणो लहुभाया मेहरहेणं इमो भणिओ ॥६८॥
बंधव ! गम्मउ वाणारसीए जं तत्थ अग्घए एयं । अन्नह उवक्खएणवि मूला घट्टो इहं होही ॥६९॥
तत्तो मणोरहेणं भणियं भज्जेइ दिसिवयं एवं । लाभे उण संदेहो निस्संदेहो नियमभंगो ॥७०॥
यत: ;—

"येऽर्थाः क्लेशेन महता धर्मस्यातिक्रमेण वा । अरेर्वा प्रणिपातेन मा स्म तेषु मनः कृथाः ॥"

मेयरहेणं भणियं पढमं वणिजेण निग्गया अम्हे । तो उवहासं लहिमो लोयाओ, तह य पियराइं॥७१॥

---

सम्यक्त्वादिर्गुरुणा गृहिधर्मः कथितो हितस्तयोः । तत्रापि सविशेषं समुचितमिति ततो दिग्व्रतं कथयति ॥
तप्तायोगोलकल्पः प्रमत्तसत्त्वोऽनिवारितप्रसरः । सर्वत्र किं न कुर्यात्पापमविरामपरिणामः ! ॥५९॥
दिग्गमनपरिमाणे गृहीते जीवानां भवति नियमेन । जीवदयापरिणामः सुविशुद्धो नित्यकालमपि ॥६०॥
तेन च भवत्यहिंसा भावेन निश्चिता सदाकालम् । तया च निर्जरा निश्चितं तस्मादेतद् ग्रहीतव्यम् ॥६१॥
चिन्तयितव्यं च नमः साधुभ्यो ये सदा निरारम्भाः । विहरन्ति विप्रमुक्ता नगराकरमण्डितां वसुधाम् ॥६२॥
ते धन्यास्तेभ्यो नम ईर्यादिरता विहरन्ति वसुधायाम् । विधिविहितवरविहारा हारा इव भुवनलक्ष्म्याः ॥
ताभ्यामपि सम्यक्त्वादिर्गृहीतो गृहिधर्मसारजिनधर्मः । अतिसविशेषं संक्षेपतश्च सम्यग् दिग्व्रतं तु ॥६४॥
नत्वा मुनिं पुनरपि प्राप्तौ गेहे तौ प्रयत्नेन । पालयतो गृहीतधर्मं सम्यक् सम्यक्त्वादिकम् ॥६५॥
ततोऽन्यदा प्रवृत्तौ विकसितनीलोत्पलकलितशरदि । उज्जयिनीं प्रति गन्तुं गृहीत्वा प्रवरभाण्डानि ॥६६॥
अथ तत्रापि भाण्डानि गृहीत्वा तान्येवान्येऽपि । प्राप्ता बहवो वणिजो बहुदेशानां ततस्तत्र ॥६७॥
अतिशयसमर्घं जातं भाण्डं ततो दृष्ट्वा भाण्डशालायाम् । क्षिपँल्लघुभ्राता मेघरथेनायं भणितः ॥६८॥
बान्धव ! गम्यतां वाराणस्यां यत्तत्राऽर्घत एतत् । अन्यथोपक्षयेणापि मूलाद् हानिरिह भविष्यति ॥६९॥
ततो मनोरथेन भणितं भज्यते दिग्व्रतमेवम् । लाभे पुनः संदेहो निःसंदेहो नियमभङ्गः ॥७०॥

नो पुणरवि वणिजेणं निरूवइस्संति तह य धम्मस्स । होही वुड्ढी न जओ गिहिणो दव्वेण सा होइ॥
तो तेणं पडिभणियं को उवहासो नयं पवन्नाण । परदव्वाइवहारे जेणं सो होइ वणियाणं ॥७३॥
ववहरमाणाण पुणो होइ सुलाहो कयावलाभो वा । संगामेवि हु सुहडा हारंति जिणंति कइयावि॥७४॥
एवं तु न भणियव्वं पढमवणिज्जेण मूलहाणीए । पुणरवि य मए वणिज्जं नहु कायव्वंति जं भणियं॥
जइवि गुरुवल्लिगहणे भग्गकमो कहवि केसरी जाओ । तहवि य मत्तगयाणं पुणोवि कुंभत्थलं दलइ ॥
जं भणसि पुणवि पियरो वणिजत्थं नेय पट्ठविस्संति । का अम्हाणं हाणी जइ एवं ते करिस्संति ?॥
जं भणसि धम्मवुड्ढी दव्वेणं होइ सावयजणस्स । तंपि न जुत्तं किं कोवि कुणउ तित्तंपि धम्मत्थं ? ॥
यतः;—

"अन्यायोपात्तवित्तेन यो हितं हि समीहते । भक्षणात् कालकूटस्य सोऽभिवाञ्छति जीवितम्"॥

इच्चाइसुजुत्तीहिं निरुत्तरो सो कओवि तं भणइ । जइ एवं तो बंधव ! मज्झ विभागं समप्पेसु ॥७९॥
तो तं पइ सो जंपइ सव्वंपि धणं धरेसु नियपासे । इह गमिउं कइवि दिणे पिऊण पासे गमिस्सामि ॥
तहवि नय नियमभंगं करेमि मणसावि निच्छओ एस । इत्तो परओ जम्हा दिसिव्वयं समहियं होइ॥
तुज्झवि न जुत्तमेयं मं मोत्तुं तह वयंपि भंजेउं । वाणारसीए गमणं दव्वपिवासाए नडियस्स ॥८२॥
तो मेहरहो जंपइ मा पभणसु किंपि इत्थ विसयम्मि । गंतव्वमवस्सं चिय नियपुन्नपरिक्खणकएण ॥
तो तं दव्वं सव्वं समप्पियं तस्स, सोवि सत्थेण । सह पत्थिओ कमेणं पत्तो वाणारसिं, नयरिं ॥८४॥

---

मेघरथेन भणितं प्रथमं वाणिज्येन निर्गतावावाम् । तत उपहासं लप्स्यावहे लोकात्, तथा च पितरौ ॥७१॥
नो पुनरपि वाणिज्येन निरूपयिष्यतस्तथा च धर्मस्य । भविष्यति वृद्धिर्न यतो गृहिणो द्रव्येण सा भवति ॥७२॥
ततस्तेन प्रतिभणितं क उपहासो नयं प्रपन्नानाम् ? । परद्रव्याद्यपहारे येन स भवति वणिजाम् ॥७३॥
व्यवहरमाणानां पुनर्भवति सुलाभः कदाप्यलाभो वा । संग्रामेऽपि हि सुभटा नश्यन्ति जयन्ति कदापि ॥७४॥
एवं तु न भणितव्यं प्रथमवाणिज्येन मूलहान्याम् । पुनरपि च मया वाणिज्यं न हि कर्तव्यमिति यद् भणितम् ॥
यद्यपि गुरुवल्लीगहने भग्नक्रमः कथमपि केसरी जातः । तथापि च मत्तगजानां पुनरपि कुम्भस्थलं दलयति ॥
यद् भणसि पुनरपि पितरौ वाणिज्यार्थं नैव प्रस्थापयिष्यतः । काऽस्माकं हानिर्यद्येवं तौ करिष्यतः ? ॥७७॥
यद् भणसि धर्मवृद्धिर्द्रव्येण भवति श्रावकजनस्य । तदपि न युक्तं किं कोऽपि करोतु चिन्तामपि धर्मार्थम् ? ॥
इत्यादिसुयुक्तिभिर्निरुत्तरः स कृतोऽपि तं भणति । यद्येवं ततो बान्धव ! मम विभागं समर्पय ॥७९॥
ततस्तं प्रति स जल्पति सर्वमपि धनं धर निजपार्श्वे । इह गमयित्वा कत्यपि दिनान् पित्रोः पार्श्वे गमिष्यामि ॥
तथापि न च नियमभङ्गं करोमि मनसापि निश्चय एषः । इतः परतो यस्माद् दिग्व्रतं समधिकं भवति ॥८१॥
तवापि न युक्तमेतद् मां मुक्त्वा तथा व्रतमपि भङ्क्त्वा । वाराणस्यां गमनं द्रव्यपिपासया नटितस्य ॥८२॥
ततो मेघरथो जल्पति मा प्रभण किमप्यत्र विषये । गन्तव्यमवश्यमेव निजपुण्यपरीक्षणकृते ॥८३॥
ततस्तद् द्रव्यं सर्वं समर्पितं तस्मै, सोऽपि सार्थेन । सह प्रस्थितः क्रमेण प्राप्तो वाराणसीं नगरीम् ॥८४॥

सुंकवियं तं भंडं अवलवित्तं किंपि तस्स मज्झाओ। तं सुंकपालएहिं नायं गहियं च सेसंपि ॥८५॥
जायं समग्घतरयं समुट्ठियं नेय मूलमुल्लंपि। तो धम्माउ पमत्तो चिंतासयसंकुलत्ताओ ॥८६॥
बीओ पुण उज्जेणीवत्थव्ववणिमहिंदसीहस्स। गेहम्मि गमइ दियहे सद्धम्मपरायणो धणियं ॥८७॥
अह अन्नया कयावि हु नरिंदवरनंदणो उदयपालो। बालवयंससमेओ कीलंतो काणणे कम्मि॥
डक्को भुयंगमेणं पायंगुट्ठम्मि तक्खणेणेव। पडिओ धरणीइ तओ समुट्ठिओ कलयलो झत्ति ॥८९॥
तो कहियं एक्केणं कुमारमित्तेण राउले गंतुं। नरवइणो जह कुमरो डक्को अहिणा बहिं देव! ॥९०॥
तं सोउं नरवइणा नरे निरूवित्तु पवरगारुडिया। आहूया तत्थ तओ समगं नीया सबहुमाणं ॥९१॥
विसवसविसप्पिपीडं कुमरं दट्ठुं नरिंदविंदेण। भणियं एसो निज्जउ भवणे जेणुंजिमो देव! ॥९२॥
विहियं तहेव रन्ना तेहिवि विहिणा स उंजिओ पयओ। नियगुरुउवइट्ठं अगयंपि पउंजिअं तत्तो॥
जो जो किंपि पउंजइ सो सो विसवारिओव्व भूवीढे। लुट्टइ विहलंघलोच्चिय तो भीओ नरवई भणइ॥
भो भो तलार! वियरह सव्वत्तो पडहयं तहा भणह। जो कुमरं जीवावइ तस्सद्धं देइ रज्जस्स ॥९५॥
एवं तेणवि विहियं सव्वत्तो मंतवाइणो इंति। नय थेवोवि विसेसो विसेण पुण घारिया सव्वे ॥९६॥
तो खुहिओ सव्वजणो हाहारावो पुरे समुच्छलिओ। पइगेहं पइहट्टं सोऊण मणोरहेण तयं ॥९७॥
भणिओ महिंदसीहो जइ तं पभणेसि ता अहं कुमरं। तक्खणमित्तेणं चिय पउणसरीरं करेमि जओ॥
मज्झवि गुरूवएसो इह विसए कोवि विज्जए पवरो। इय सोऊणं भणिओ महिंदसीहेण सो एवं ॥९९॥

---

शुल्कितं तद् भाण्डमपलपित्वा किमपि तस्य मध्यात्। तत् शुल्कपालकैर्ज्ञातं गृहीतं च शेषमपि ॥८५॥
जातं समर्घतरं समुत्थितं नैव मूलमूल्यमपि। ततो धर्मात् प्रमत्तश्चिन्ताशतसंकुलत्वात् ॥८६॥
द्वितीयः पुनरुज्जयिनीवास्तव्यवणिग्महेन्द्रसिंहस्य। गेहे गमयति दिवसान्सद्धर्मपरायणो गाढम् ॥८७॥
अथान्यदा कदापि हि नरेन्द्रवरनन्दन उदयपालः। बालवयस्यसमेतः क्रीडन् कानने कस्मिन् ॥८८॥
दष्टो भुजंगमेन पादाङ्गुष्ठे तत्क्षणेनैव। पतितो धरण्यां ततः समुत्थितः कलकलो झटिति ॥८९॥
ततः कथितमेकेन कुमारमित्त्रेण राजकुले गत्वा। नरपतये यथा कुमारो दष्टोऽहिना बहिर्देव! ॥९०॥
तत् श्रुत्वा नरपतिना नरान् निरूप्य प्रवरगारुडिकाः। आहूतास्तत्र ततः समं नीताः सबहुमानम् ॥९१॥
विषवशविसर्पिपीडं कुमारं दृष्ट्वा नरेन्द्रवृन्देन। भणितमेष नीयतां भवने येन युञ्ज्महे देव! ॥९२॥
विहितं तथैव राज्ञा तैरपि विधिना स युक्तः पदतः। निजगुरूपदिष्टमगदमपि प्रयुक्तं ततः ॥९३॥
यः यः किमपि प्रयुङ्क्ते स स विषघातितवद् भूपीठे। लुठति विह्वल एव ततो भीतो नरपतिर्भणति ॥९४॥
भो भोः पुरारक्षक! वितरत सर्वतः पटहं तथा भणत। यः कुमारं जीवयति तस्मै अर्धं ददाति राज्यस्य॥
एवं तेनापि विहितं सर्वतो मन्त्रवादिन आयन्ति। नच स्तोकोऽपि विशेषो विषेण पुनर्घातिताः सर्वे ॥९६॥
ततः क्षुभितः सर्वजनो हाहारावः पुरे समुच्छलितः। प्रतिगेहं प्रतिहट्टं श्रुत्वा मनोरथेन तत् ॥९७॥
भणितो महेन्द्रसिंहो यदि त्वं प्रभणसि तदाहं कुमारम्। तत्क्षणमात्रेणैव प्रगुणशरीरं करोमि यतः ॥९८॥

मा मा मणम्मि एवं चिंतसु तं वच्छ ! जेण जो कोवि । तस्स पउंजइ विज्जं मंतं तंतं व सो सहसा ॥
विसघारिओव्व लुट्टइ महीइ अहियं नरिंदविंदोवि । का तत्थ तुज्झ गणणा गुणलवजुत्तस्स वणियस्स?॥
यतः,

"यस्य वज्रमणेर्भेदे भिद्यन्ते लोहसूचयः । करोतु तत्र किं नाम नारीनखविलेखनम् ? ॥"

मा हु अकंडे खंडसु नियजीयं वच्छ ! वारिओ विरम । इय सोउं सो पभणइ एवं चिय नत्थि संदेहो॥
किंनु करुणावरुज्झइ इत्तियलोयस्स दुक्खभरियस्स । परदुक्खक्खयकज्जे पुरिसाणं तिणसमं जीयं ॥
यतः,
जीयं कासु न इट्ठं लच्छी कस्स न वल्लहा होइ । अवसरपत्ताइं पुणो दुन्निवि तिणयाउ लहुयंति॥१०४॥
नवरं पच्छिमरयणीए अज्ज जं सुमिणयं मए दिट्ठं । लक्खेमि तयणुसारेण सव्वमवि अत्तणो कुसलं ॥
इय सोउं सो नीओ महिंदसीहेण नरवइसमीवं । कहिया य तस्स सत्ती, रन्ना तो दंसिओ कुमरो ॥
तेणवि तस्स समीवे पविसंतेणं निसीहिया भणिया । पंचपरमिट्ठिसंथवमिणमो भणिउं समाढत्तो ॥
विहडियपयंडमोहे अट्ठमहापाडिहेरकयसोहे । भवियकमलपडिबोहे नमिमो जिणनाहसंदोहे ॥१०८॥
सिद्धिसुहसमिद्धाणं दंसणवरनाणतेयनिट्ठाणं । तइलोयपसिद्धाणं नमो नमो सव्वसिद्धाणं ॥१०९॥
कंदप्पकरिहरीणं निम्मलगुणरयणरोहणगिरीणं । पणओ हं सूरीणं पंचविहायारधारीणं ॥११०॥
मयणानलविज्झाए अणवरयविणिग्गसाहुसज्झाए । सिद्धिवहूनिज्झाए पयओ पणमामुवज्झाए ॥१११॥
परिचत्तसव्वसंगे दुद्धरनवचरणनिच्चसुसियंगे । बहुविहसहिउवसग्गे नमिमो भत्तीए मुणिवग्गे ॥११२॥

---

ममापि गुरूपदेश इह विषये कोऽपि विद्यते प्रवरः । इति श्रुत्वा भणितो महेन्द्रसिंहेन स एवम् ॥९९॥
मा मा मनस्येवं चिन्तय त्वं वत्स ! येन यः कोऽपि । तस्य प्रयुङ्क्ते विद्यां मन्त्रं तन्त्रं वा स सहसा ॥
विषघातित इव लुठति मह्यामधिकं नरेन्द्रवृन्दमपि । का तत्र तव गणना गुणलवयुक्तस्य वणिजः ?॥१०१॥
मा खल्वकाण्डे खण्डय निजजीवितं वत्स ! वारितो विरम । इति श्रुत्वा स प्रभणत्येवमेव नास्ति संदेहः ॥
किन्तु करुणोपरुणद्धि एतावल्लोकस्य दुःखभृतस्य । परदुःखक्षयकार्ये पुरुषाणां तृणसमं जीवितम् ॥१०३॥
जीवितं कस्य नेष्टं लक्ष्मीः कस्य न वल्लभा भवति । अवसरप्राप्ते पुनर्द्वे अपि तृणाद् लघयन्तिः ॥१०४॥
नवरं पश्चिमरजन्यामद्य यः स्वप्नो मया दृष्टः । लक्षयामि तदनुसारेण सर्वमप्यात्मनः कुशलम् ॥१०५॥
इति श्रुत्वा स नीतो महेन्द्रसिंहेन नरपतिसमीपम् । कथिता च तस्य शक्तिः, राज्ञा ततो दर्शितः कुमारः ॥
तेनापि तस्य समीपे प्रविशता नैषेधिकी भणिता । पञ्चपरमेष्ठिसंस्तवमिमं भणितुं समारब्धः ॥१०७॥
विघटितप्रचण्डमोहानष्टमहाप्रातिहार्यकृतशोभान् । भविककमलप्रतिबोधान् नमामो जिननाथसंदोहान् ॥१०८॥
सिद्धिसुखसमृद्धेभ्यो दर्शनवरज्ञानतेजोनिष्ठेभ्यः । त्रैलोक्यप्रसिद्धेभ्यो नमो नमः सर्वसिद्धेभ्यः ॥१०९॥
कन्दर्पकरिहरीन् निर्मलगुणरत्नरोहणगिरीन् । प्रणतोऽहं सूरीन् पञ्चविधाचारधारिणः ॥११०॥
विध्यातमदनानलानऽनवरतविनिर्गतसाधुस्वाध्यायान् । सिद्धिवधूनिध्यातान् प्रयतः प्रणमाम्युपाध्यायान् ॥१११॥

एयाण गओ सरणं दासो एयाण परमपुरिसाण। भवकूवनिवडियं तिहुयणंपि नित्थारियं जेहिं॥११३॥
इय पणपरमिट्ठीणं परमपयट्ठाण निट्ठियदुहाणं। तीयाणागयसंपइकालगयाणं गयभयाणं॥११४॥
जो कुणइ संथवं नित्थरइ अइदुत्तरंपि दुहजलहिं। तल्लक्खमणो समणो गिही व सो सिवसुहं लहइ॥
एवं भणिऊण थवं होऊण य कुमरकन्नमूलम्मि। सप्पणिहाणं विहिणा तिसत्तखुत्तो इमं भणइ॥११६॥
"ओँ ह्रीँ पञ्चपरमेष्ठिने नमः"
सोऊणमिमं वंतरअहिट्ठिओ भणइ निवसुओ तुमए। नित्थारिओ इमहुणा साहम्मिय परमकारुणिय!॥
परमिट्ठिसवणओ मे नाओ अवहीए पुव्वभवधम्मो। गलियं तह मिच्छत्तं तमंव दिणमणिमऊहेहिं॥
पुव्वं सावयधम्मं सकलंकं काउमाउपज्जंते। वंतरमहोरगेसुं उप्पन्नो पुन्नसेसेण॥११९॥
सो हं कीलंतो काणणम्मि कुमरेण दूमिओ अहियं। गंडूसे खिवमाणेण रोसओ तो इमो डसिओ॥१२०॥
नागसरूवेण मए संपइ पुण पाविऊण सुहबोहिं। उवसंतरोसभावो सट्ठाणं जामि जइ भणसि॥१२१॥
किंतु कुमरेण कज्जो जिणधम्मो निवइणावि जेणेए। तुज्झ पसाएण सुहं लहंति लहु अन्नजम्मेवि॥१२२॥
भणियं मणोरहेणं विसघारियमेयलोयमवि निरुयं। कुणसु महायस! तो तेण सोवि विसविरहिओ विहिओ॥
तत्तो मणोरहेणं भणिओ पत्तंतरम्मि अवयरसु। पुच्छेमि जेण किंचिवि तो सो दीवम्मि अवयरिओ॥
तत्तो कुमरो निद्दक्खएव्व उट्ठइ संभमुब्भंतो। पुच्छइ ताय! किमेयं सोवि कहेई समग्गंपि॥१२५॥
तो रायाइसमक्खं मणोरहो वंतरं इमं भणइ। कह पुव्वभवे विहिया सकलंका देसविरइत्ति?॥१२६॥

---

परित्यक्तसर्वसङ्गान् दुर्धरतपश्चरणनित्यशुष्काङ्गान्। सोढबहुविधोपसर्गान्नमामो भक्त्या मुनिवर्गान्॥११२॥
एतेषां गतः शरणं दास एतेषां परमपुरुषाणाम्। भवकूपनिपतितं त्रिभुवनमपि निस्तारितं यैः॥११३॥
इति पञ्चपरमेष्ठिनां परमपदस्थानां निष्ठितदुःखानाम्। अतीतानागतसंप्रतिकालगतानां गतभयानाम्॥११४॥
यः करोति संस्तवं निस्तरत्यतिदुस्तरमपि दुःखजलधिम्। तल्लक्षमनाः श्रमणो गृही वास शिवसुखं लभते॥
एवं भणित्वा स्तवं भूत्वा च कुमारकर्णमूले। सप्रणिधानं विधिना त्रिसप्तकृत्व इदं भणति॥११६॥
श्रुत्वेदं व्यन्तराधिष्ठितो भणति नृपसुतस्त्वया। निस्तारितोऽहमधुना साधर्मिक परमकारुणिक!॥११७॥
परमेष्ठिश्रवणतो मया ज्ञातोऽवधिना पूर्वभवधर्मः। गलितं तथा मिथ्यात्वं तम इव दिनमणिमयूखैः॥११८॥
पूर्वं श्रावकधर्मं सकलङ्कं कृत्वाऽऽयुष्पर्यन्ते। व्यन्तरमहोरगेषूत्पन्नः पुण्यवशेन॥११९॥
सोऽहं क्रीडन् कानने कुमारेण दूनोऽधिकम्। गण्डूषान् क्षिपता रोषतस्ततोऽयं दष्टः॥१२०॥
नागस्वरूपेण मया संप्रति पुनः प्राप्य शुभबोधिम्। उपशान्तरोषभावः स्वस्थानं यामि यदि भणसि॥१२१॥
किन्तु कुमारेण कार्यो जिनधर्मो नृपतिनापि येनैतौ। तव प्रसादेन सुखं लभेते लघ्वन्यजन्मन्यपि॥१२२॥
भणितं मनोरथेन विषघातितमेतल्लोकमपि नीरुजम्। कुरु महायशः! ततस्तेन सोऽपि विषविरहितो विहितः॥
ततो मनोरथेन भणितः पात्रान्तरेऽवतर। पृच्छामि येन किञ्चिदपि ततः स दीपेऽवतीर्णः॥१२४॥
ततः कुमारो निद्राक्षय इवोत्तिष्ठति संभ्रमोद्भ्रान्तः। पृच्छति तात! किमेतत्सोऽपि कथयति समग्रमपि॥

सो भणइ सुणेसु, आसी इह भरहे सिवपुरम्मि सिवभद्दो । सिट्ठी सम्मद्दिट्ठी पियवई भारिया तस्स॥
ताणं च पंच पुत्ता परोप्परं नेहनिब्भरा सव्वे । वरुणगुणचंदसुंदरजसएवमहिंदनामाणो ॥१२८॥
धम्मम्मि निरहिलासा दुल्ललिया तह अणत्थकुलभवणं । अह सिट्ठिजाणसालाए आगया सूरिणो केवि॥
तो तव्वंदणहेउं इंतं नयरीजणं पलोएउं । सिट्ठिपुट्ठीए लग्गा पंचवि पुत्ता समणुपत्ता ॥१३०॥
वंदिय उवविट्ठाणं सूरीवि कहइ ताण जिणधम्मं । सम्मं सम्मत्ताई सिट्ठीवि तओ इमं भणइ ॥१३१॥
पहु ! मह एए पुत्ता उप्पन्ना चेव सावयकुलम्मि । नवरं देवगुरूणं जाणंति न नाममित्तंपि ॥१३२॥
चिट्ठंतु ताव सावयवयाण अइयारभंगयविसेसा । तो गुरुणा ते भणिया न खमं तुम्हाण इय काउं ॥
बहुकल्लोलसमाउलतिमिजलकरिमयरतंतुसंकिन्ने । जह जलहिम्मि अपारे पडियं न हु लब्भए रयणं ॥
रागाइगाहपउरे जम्मजरामरणरोयकल्लोले । मणुयत्तणंपि इह तह नट्ठं दुलहं भवसमुद्दे ॥१३५॥
मणुयत्तणेवि लद्धे रूवाइअसेसगुणगणोवेए । भवजलहिजाणवत्तं दुलहो जिणदेसिओ धम्मो ॥१३६॥
तम्मिवि लद्धे ऊसीसयम्मि दाऊण वणदवं सुयइ । निच्चिंतो कोवि जहा सम्मुहवायम्मि वायंते॥१३७॥
धम्मम्मि जो पमायइ जरसम्मुहपवणपेरिए इंते । मरणदवे आसन्ने तह सोवि नरो मुणेयव्वो ॥१३८॥
पडिओ अगाहनीरे डज्झंते मंदिरम्मि जो सुयइ । भवदुहसंकडपडिओ सो खलु धम्मे पमाएइ॥१३९॥
पहरंते सत्तुगणे तेणेहिं व मंदिरे मुसिज्जंते । जो सुयइ सुवीसत्थो सो खलु धम्मे पमाएइ ॥१४०॥

---

ततो राजादिसमक्षं मनोरथो व्यन्तरमिदं भणति । कथं पूर्वभवे विहिता सकलङ्का देशविरतिरिति ? ॥१२६॥
स भणति शृणु, आसीदिह भरते शिवपुरे शिवभद्रः । श्रेष्ठी सम्यग्दृष्टिः प्रियंवदा भार्या तस्य ॥१२७॥
तयोश्च पञ्च पुत्राः परस्परं स्नेहनिर्भराः सर्वे । वरुणगुणचन्द्रसुन्दरयशोदेवमहेन्द्रनामानः ॥१२८॥
धर्मे निरभिलाषा दुर्ललितास्तथानर्थकुलभवनम् । अथ श्रेष्ठियानशालायामागताः सूरयः केऽपि ॥१२९॥
ततस्तद्वन्दनहेतोर्यन्तं नगरीजनं प्रलोक्य । श्रेष्ठिपृष्ठे लग्नाः पञ्चापि पुत्राः समनुप्राप्ताः ॥१३०॥
वन्दित्वोपविष्टेभ्यः सूरिरपि कथयति तेभ्यो जिनधर्मम् । सम्यक् सम्यक्त्वादिं श्रेष्ठ्यपि तत इदं भणति ॥१३१॥
प्रभो ! ममैते पुत्रा उत्पन्ना एव श्रावककुले । किन्तु देवगुरूणां जानन्ति न नाममात्रमपि ॥१३२॥
तिष्ठन्तु तावच्छ्रावकव्रतानामतिचारभङ्गविशेषाः । ततो गुरुणा ते भणिता न क्षमं युष्माकमिति कर्तुम् ॥
बहुकल्लोलसमाकुलतिमिजलकरिमकरतन्तुसंकीर्णे । यथा जलधावपारे पतितं न खलु लभ्यते रत्नम् ॥१३४॥
रागादिग्राहप्रचुरे जन्मजरामरणरोगकल्लोले । मनुजत्वमपीह तथा नष्टं दुर्लभं भवसमुद्रे ॥१३५॥
मनुजत्वेऽपि लब्धे रूपाद्यशेषगुणगणोपेते । भवजलधियानपात्रं दुर्लभो जिनदेशितो धर्मः ॥१३६॥
तस्मिन्नपि लब्धे उच्छीर्षके दत्त्वा वनदवं स्वपिति । निश्चिन्तः कोऽपि यथा संमुखवाते वाति ॥१३७॥
धर्मे यः प्रमाद्यति जरासम्मुखपवनप्रेरित आयति । मरणदवे आसन्ने तथा सोऽपि नरो ज्ञातव्यः ॥१३८॥
पतितोऽगाधनीरे दह्यमाने मन्दिरे यः स्वपिति । भवदुःखसंकटपतितः स खलु धर्मे प्रमाद्यति ॥१३९॥
प्रहरति शत्रुगणे स्तेनैर्वा मन्दिरे मुष्यमाणे । यः स्वपिति सुविश्वस्तः स खलु धर्मे प्रमाद्यति ॥१४०॥

विहडंति निविडघडिया पुरिसत्था नियमओ पमाएण। चिरविहडियावि लहु संघडंति सुविढत्तधम्माणं॥
इच्चाइदेसणं निसुणिऊण ते सिट्ठिनंदणा सूरिं। पभणंति जस्स धम्मस्स जोगया अम्ह तं कहह॥१४२॥
तो तेसिं सव्वेसिं सद्देसणदंसणं कयं गुरुणा। पाणिवहाईविरई परूविया-जाव दिसिविरई॥१४३॥
इत्तियमित्तं तेहिवि पडिवन्नं सेसयंपि सद्दहियं। परिचत्तं मिच्छत्तं जावज्जीवंपि तिविहेण॥१४४॥
तो सिट्ठी अइहिट्ठो वंदित्तु भणइ एरिसं वयणं। केणव केण न भणिया एए सद्धम्मविसयम्मि॥१४५॥
किंतु बहिं लुटइ जलं जह भरियघडस्स तह इमेसिंपि। इत्तियदिणाणि वयणं धम्मायरियाण विहिवसओ॥
इण्हिं पुण एएसिं अमयं पिव परिणओ तत्थाएसो। तो सिट्ठिसुया भणिया गुरुणा धम्मे दिढा होह॥१४७॥
एवंति पभणिऊणं गुरुपयपउमं नमित्तु सट्ठाणे। सिट्ठिसमेया पत्ता गमंति कालं समाउत्ता॥१४८॥
सव्वत्थवि लद्धजसा धम्मिट्ठा सच्चवाइणो वणिणो। धणुवेयं पइ कुसला रिद्धिसमिद्धा य संजाया॥१४९॥
अह तन्नयरनिवेणं ताण पसिद्धिं सुणित्तु सिवभद्दो। भणिओ पणयपुरस्सरमेगंते सायरं एवं॥१५०॥
सिट्ठि! मह नत्थि कोवि हु भाया जणओ य सयणवग्गो य। ता एए नियपुत्ता भणसु जहा मज्झ साहिज्जे॥
वट्टंति मए सद्धिं भमंति भुंजंति जंति कज्जेसु। अन्नह न हवइ कइयावि मज्झ मणनिव्वुई सिट्ठि!॥
तो सिट्ठी पभणइ मे तुज्झायत्तं खु जीवियव्वंपि। का तणयाणं गणणा, परं इमे सावया सवया॥१५३॥
खरकम्मनिओगाणं विरया निरयाइदुक्खहेऊण। चीवंदणाइकिच्चं कुव्वंति वयंति मुणिपासे॥१५४॥

---

विघटन्ते निबिडघटिताः पुरुषार्था नियमतः प्रमादेन। चिरविघटिता अपि लघु संघटन्ते स्वर्जितधर्मणाम्॥
इत्यादिदेशनां श्रुत्वा ते श्रेष्ठिनन्दनाः सूरिम्। प्रभणन्ति यस्य धर्मस्य योग्यतास्माकं तं कथय॥१४२॥
ततस्तेभ्यः सर्वेभ्यः सद्देशनदर्शनं कृतं गुरुणा। प्राणिवधादिविरतिः प्ररूपिता यावद् दिग्विरतिः॥१४३॥
इयन्मात्रं तैरपि प्रतिपन्नं शेषमपि श्राद्धितम्। परित्यक्तं मिथ्यात्वं यावज्जीवमपि त्रिविधेन॥१४४॥
ततः श्रेष्ठी अतिहृष्टो वन्दित्वा भणतीदृशं वचनम्। केन वा केन न भणिता एते सद्धर्मविषये?॥१४५॥
किन्तु बहिर्लुठति जलं यथा भृतघटस्य तथैषामपि। इयद्दिनानि वचनं धर्माचार्याणां विधिवशतः॥१४६॥
इदानीं पुनरेतेषाममृतमिव परिणतस्तत्रादेशः। ततः श्रेष्ठिसुता भणिता गुरुणा धर्मे दृढा भवत॥१४७॥
एवमिति प्रभण्य गुरुपदपद्मं नत्वा स्वस्थाने। श्रेष्ठिसमेताः प्राप्ता गमयन्ति कालं समायुक्ताः॥१४८॥
सर्वत्रापि लब्धयशसो धर्मिष्ठाः सत्यवादिनो वणिजः। धनुर्वेदं प्रति कुशला ऋद्धिसमृद्धाश्च संजाताः॥१४९॥
अथ तन्नगरनृपेण तेषां प्रसिद्धिं श्रुत्वा शिवभद्रः। भणितः प्रणयपुरस्सरमेकान्ते सादरमेवम्॥१५०॥
श्रेष्ठिन्! मम नास्ति कोऽपि हि भ्राता जनकश्च स्वजनवर्गश्च। तस्मादेतान्निजपुत्रान् भण यथा मम साहाय्ये॥
वर्तन्ते मया सार्धं भ्रमन्ति भुञ्जते यान्ति कार्येषु। अन्यथा न भवति कदापि मम मनोनिर्वृतिः श्रेष्ठिन्!॥
ततः श्रेष्ठी प्रभणति मे तवायत्तं खलु जीवितव्यमपि। का तनयानां गणना, परमिमे श्रावकाः सव्रताः॥१५३॥
खरकर्मनियोगेभ्यो विरता निरयादिदुःखहेतुभ्यः। चैत्यवन्दनादिकृत्यं कुर्वन्ति व्रजन्ति मुनिपार्श्वे॥१५४॥

---

१ ग. मविमेर्म स°।

ता कह पहुसाहिज्जे वट्टिस्संतीह मह सुया एए ? । तो भणियं नरवइणा खरकम्माइं न कारिस्सं॥१५५॥
चीइंदणाइकिच्चं कुव्वंते कोवि नो निवारेही । किंतु मह संनिहाणं मोत्तव्वं नेय एएहिं ॥१५६॥
तो पडिवन्नं तेणवि निववयणं सोवि नियगिहं पत्तो । पच्चूसे ते तणया सिक्खं दाऊण पेसविया ॥
तेवि निवपायपासे चिट्ठंति कुणंति नियमणुट्ठाणं । इय वच्चंते काले कयावि ते पभणिया रन्ना ॥१५८॥
जह संपइ मह कज्जं समुट्ठियं किंपि सिज्झइ तुमेहिं । तो ते भणंति आइससु देव !, सो जंपए एवं ॥
चउरो महनरवइणो विलोट्ठिया चउदिसिंपि अइबलिणो । पंचमओ मयलायलदुग्गाउ विद्दवइ मह देसं ॥
तो तुब्भे बुद्धिबलेण संगया गरुयगययडसमेया । पंचवि पंचाणुवरिं जहसत्ति जस्स जो जोग्गो ॥१६१॥
सो गच्छउ तस्सुवरिं वयमिह देसस्स मज्झयारम्मि । चिट्ठिस्सामो तम्हा संवहह झडत्ति इय भणिए ॥
सायसगासं पत्ता साहंति निवेण जं रहे भणिया । तो सो लहु गंतूणं निवस्स समुहं भणइ एवं ॥१६३॥
निसुणह मह विन्नत्ति देवो पसिऊण मज्झ लहुपुत्तं । इत्थेव धरउ अन्नत्थ कत्थई मा निरूवेउ ॥१६४॥
नेमित्तिएण जम्हा वीसमवरिसम्मि तस्स निद्दिट्ठा । पाणंतियावई पहु ! वीसमवरिसंपि तं एयं ॥१६५॥
तो भणियं नरवइणा इत्थेव ठियस्स किं न सा होही ? । भवियव्वयाइ नासो न हवेइ कइयावि निच्छयओ ॥
एवं चिय सो पभणइ नवरं इह आवई हवइ दुविहा । सोवक्कमनिरुवक्कमभेएणं तत्थ पढमाए ॥१६७॥
हवइ गुणो उवयारेहिं कम्मवसाओ न उण इयरीए । ताण विसेसं जाणइ सव्वन्नू न उण छउमत्थो ॥
ता अविगप्पं जत्तो कायव्वो आवयाए दुविहाए । सोवक्कमाए विगमो इयराइ निच्छियं मरणं ॥१६९॥

---

तस्मात्कथं प्रभुसाहाय्ये वर्तिष्यन्त इह मम सुता एते ? । ततो भणितं नरपतिना खरकर्मादि न कारयिष्ये॥
चैत्यवन्दनादिकृत्यं कुर्वतः कोऽपि नो निवारयिष्यति । किन्तु मम संनिधानं मोक्तव्यं नैवैतैः ॥१५६॥
ततः प्रतिपन्नं तेनापि नृपवचनं सोऽपि निजगृहं प्राप्तः । प्रत्यूषे ते तनयाः शिक्षां दत्त्वा प्रेषिताः ॥१५७॥
तेऽपि नृपपादपार्श्वे तिष्ठन्ति कुर्वन्ति निजमनुष्ठानम् । इति व्रजति काले कदापि ते प्रभणिता राज्ञा ॥१५८॥
यथा संप्रति मम कार्यं समुत्थितं किमपि सिध्यति युष्माभिः । ततस्ते भणन्त्यादिश देव !, स जल्पत्येवम् ॥
चत्वारो महानरपतयो विलोठिताश्चतुर्दिक्ष्वप्यतिबलिनः । पञ्चमो मलयाचलदुर्गाद् विद्रवति मम देशम् ॥
ततो यूयं बुद्धिबलेन संगता गुरुगजघटासमेताः । पञ्चापि पञ्चानामुपरि यथाशक्ति यस्य यो योग्यः ॥
स गच्छतु तस्योपरि, वयमिह देशस्य मध्ये । स्थास्यामस्तस्मात् संवहत झटितीति भणिते ॥१६२॥
सातसकाशं प्राप्ताः कथयन्ति नृपेण यद्रहसि भणिताः । ततः स लघु गत्वा नृपस्य संमुखं भणत्येवम्॥१६३॥
शृणोतु मम विज्ञप्तिं देवः प्रसद्य मम लघुपुत्रम् । अत्रैव धरत्वन्यत्र कुत्रापि मा निरूपयतु ॥१६४॥
नैमित्तिकेन यस्माद्विंशवर्षे तस्य निर्दिष्टा । प्राणान्तिकापत् प्रभो ! विंशवर्षमपि तदेतत् ॥१६५॥
ततो भणितं नरपतिनाऽत्रैव स्थितस्य किं न सा भविष्यति ? । भवितव्यताया नाशो न भवति कदापि निश्चयतः ॥
एवमेव स प्रभणति किन्त्विहापद् भवति द्विविधा । सोपक्रमनिरुपक्रमभेदेन तत्र प्रथमायाम् ॥१६७॥
भवति गुण उपचारैः कर्मवशतो न पुनरितरस्याम् । तयोर्विशेषं जानाति सर्वज्ञो न पुनश्छद्मस्थः ॥१६८॥

किंचाउरक्खिओ जो पुरिसो सो होइ वरिससयआऊ। इय लोयपवाओवि हु सुव्वइ इय कहाणगं एत्थं ॥
तथाहि;—

आसि पुरा सुपसिद्धो पोयणपुरसामिओ मियंकमुहो। नीइघडो तस्सचिवो भज्जा से रोहिणी नाम ॥
अह तीइ गब्भसंभवतइए मासम्मि पुच्छिओ तेण। नेमित्तिओ जहेसा पसवइ सुयमहव दुहियं वा? ॥१७२॥
तेणवि भणियं पुत्तं परमिह वरिसाइं वीस जा जत्तो। कायव्वो से इहरा कुलक्खयं निच्छयं काही ॥
जं जारिसम्मि लग्गे पसिणो जम्मोवि तम्मि से होही। ताणुवरिं पुण कमसो कुलवुड्ढिं सोवि काहित्ति ॥
भूमिहरयम्मि तम्हा पसवोवि इमीइ तह विहेयव्वो। जह नवि जाणइ कोवि हु सुयजम्मो गब्भभावोवि ॥
तो सचिवो भूमिहरे तप्पभिइं चिय धरेइ रोहिणियं। कालेण सावि पसवइ पुत्तं तत्थट्ठिया चेव ॥१७६॥
तब्भइणीए सव्वं सूइकम्मं कयं तओ सावि। पट्ठविया परदेसे माया पुण कुणइ निच्चंपि ॥१७७॥
नियसुयसुस्सूसं, तो इय जाव गयाइं पंच वरिसाइं। तत्तो य तं समप्पइ लेहायरियस्स पढणत्थं ॥१७८॥
लक्खणसाहित्तपमाणमाइयं दसहिं वच्छरेहिंपि। तेणवि पढाविओ सो गच्छेई तहवि तप्पासे ॥१७९॥
मंतिगिहस्सासन्ने अह निवसइ बालपंडिया एक्का। तीए तस्सुज्झाओ पुट्ठो भो! कत्थ तं जासि? ॥
निच्चंपि सयणभोयणसमएच्चिय दीससे तओ तेण। कहियं पओयणेणं गच्छामि कयावि कत्थवि य ॥
तो तीए सो पुट्ठो मंतिगिहे निच्चमेव पविसंतं। नीहरमाणं च तुमं पिच्छामी केण कज्जेण? ॥१८२॥

---

तस्मादविकल्पं यत्नः कर्तव्य आपदि द्विविधायाम्। सोपक्रमाया विगम इतरस्यां निश्चितं मरणम् ॥१६९॥
किञ्चायूरक्षितो यः पुरुषः स भवति वर्षशतायुष्कः। इति लोकप्रवादोऽपि हि श्रूयत इति कथानकमत्र ॥

आसीत्पुरा सुप्रसिद्धः पोतनपुरस्वामी मृगाङ्कमुखः। नीतिघटस्तत्सचिवो भार्या तस्य रोहिणी नाम ॥
अथ तस्या गर्भसंभवतृतीये मासे पृष्टस्तेन। नैमित्तिको यथैषा प्रसोष्यते सुतमथवा दुहितरं वा? ॥१७२॥
तेनापि भणितं पुत्रं परमिह वर्षाणि विंशतिं यावद्यत्नः। कर्तव्यस्तस्येतरथा कुलक्षयं निश्चयं करिष्यति ॥
यद् यादृशे लग्ने प्रश्नो जन्मापि तस्मिंस्तस्य भविष्यति। तेषामुपरि पुनः क्रमशः कुलवृद्धिं सोऽपि करिष्यतीति ॥
भूमिगृहे तस्मात्प्रसवोऽप्यस्यास्तथा विधातव्यः। यथा नैव जानाति कोऽपि हि सुतजन्म गर्भभावमपि ॥
ततः सचिवो भूमिगृहे तत्प्रभृत्येव धरति रोहिणीम्। कालेन सापि प्रसूते पुत्रं तत्र स्थितैव ॥१७६॥
तद्भगिन्या सर्वं सूतिकर्म कृतं ततः सापि। प्रस्थापिता परदेशे माता पुनः करोति नित्यमपि ॥१७७॥
निजसुतशुश्रूषां, तत इति यावद्गतानि पञ्च वर्षाणि। ततश्च तं समर्पयति लेखाचार्याय पठनार्थम् ॥१७८॥
लक्षणसाहित्यप्रमाणादिकं दशभिर्वत्सरैरपि। तेनापि पाठितः स गच्छति तथापि तत्पार्श्वे ॥१७९॥
मन्त्रिगृहस्यासन्नेऽथ निवसति बालपण्डितैका। तया तस्योपाध्यायः पृष्टो भोः! कुत्र त्वं यासि? ॥१८०॥
नित्यमपि शयनभोजनसमय एव दृश्यसे, ततस्तेन। कथितं प्रयोजनेन गच्छामि कदापि कुत्रापि च ॥
ततस्तया स पृष्टो मन्त्रिगृहे नित्यमेव प्रविशन्तम्। निःसरन्तं च त्वां पश्यामि केन कार्येण? ॥१८२॥

---

१ ग. तस्स सरिसी नमो नाओ।

तो पभणइ मा पुच्छसु वच्छे ! तुच्छाउ जेण इत्थीओ । अइरहसंपि हु कहियं पयडीकुव्वंति सहसेव ॥
तो तीइ सवहपुव्वं सव्वंपि हु पुच्छिऊण विन्नाए । नियघराउ सुरंगा खणाविया जाव भूमिहरं ॥१८४॥
गंतूण सुरंगाए दिट्ठो सो सचिवसंतिओ पुत्तो । तेणवि सा तो पुट्ठा का सि तुमं आगया किमिह ? ॥
सा भणइ सिट्ठितणया हमागया तुज्झ दंसणनिमित्तं । कत्थ वससित्ति भणिए तेणं, सा कहइ तस्स पुरो ॥
इत्थेव नयरमज्झे घरदेउलकूववाविरमणिज्जं । तुहघरपच्चासन्ने मह पिउणो पवरघरमत्थि ॥१८७॥
पुट्ठा पुणोवि तेणं घरपुरमाईणि किंसरूवाणि । जे किल चंदाइच्चा नाममालाए मे पढिया ॥१८८॥
तेसिंपि किं सरूवं भणियं तो तीइ कुमर ! मइ सद्धिं । आगच्छ जेण सव्वं पच्चक्खं तुज्झ पयडेमि॥१८९॥
तो तीए मग्गलग्गो नीहरिओ सो पुरस्स मज्झम्मि । जं जं पिच्छइ तं तं पुच्छइ तो तीए पासम्मि ॥१९०॥
पुणरवि तीए नीओ सट्ठाणे पभणिया य सा एवं । निच्चंपि दंसियव्वं एएण कमेण मह सव्वं ॥१९१॥
तो पुव्वपओगेणं पइदियहं दंसए नयरमज्झे । गहताराइं सव्वं तो भणियं राउले नेसु ॥१९२॥
दूरट्ठियाए तीए तंपि हु से दंसियं, इय कमेण । पायं सव्वोवि हु तस्स दंसिओ वत्थुनिउरंबो ॥१९३॥
भणियं नाहं एत्तो तुज्झ सयासम्मि आगमिस्सामि । जइ कहवि हु तुज्झ पिया वियाणई तो य मह पिउणो॥
कुणइ अणत्थं किंपि हु, तुज्झवि किं हिंडिएण बहुएण । नेमित्तियस्स वयणंपि साहिउं सा गया, तहवि॥
पइरयणीइ भमंतस्स तस्स केणवि तिदंडिणा सद्धिं । जाओ अईव नेहो, अदेसीकारिणी विज्जा ॥१९६॥

---

ततः प्रभणति मा पृच्छ वत्से ! तुच्छा येन स्त्रियः । अतिरहस्यमपि हि कथितं प्रकटीकुर्वन्ति सहसैव ॥
ततस्तया शपथपूर्वं सर्वमपि पृष्ट्वा विज्ञाते । निजगृहात् सुरुङ्गा खानिता यावद् भूमिगृहम् ॥१८४॥
गत्वा सुरुङ्गया दृष्टः स सचिवसत्कः पुत्रः । तेनापि सा ततः पृष्टा कासि त्वमागता किमिह ? ॥१८५॥
सा भणति श्रेष्ठितनयाऽहमागता तव-दर्शननिमित्तम् । कुत्र वससीति भणिते तेन, सा कथयति तस्य पुरः ॥
अत्रैव नगरमध्ये गृहदेवकुलकूपवापीरमणीयम् । त्वद्गृहप्रत्यासन्ने मम पितुः प्रवरगृहमस्ति ॥१८७॥
पृष्टा पुनरपि तेन गृहपुरादीनि किंस्वरूपाणि ? । यौ किल चन्द्रादित्यौ नाममालायां मया पठितौ ॥१८८॥
तयोरपि किं स्वरूपं, भणितं ततस्तया कुमार ! मया सार्धम् । आगच्छ येन सर्वं प्रत्यक्षं तव प्रकटयामि ॥
ततस्तया मार्गलग्नो निःसृतः स पुरस्य मध्ये । यद्यत् पश्यति तत्तत्पृच्छति ततस्तस्याः पार्श्वे ॥१९०॥
पुनरपि तया नीतः स्वस्थाने प्रभणिता च सैवम् । नित्यमपि दर्शयितव्यमेतेन क्रमेण मम सर्वम् ॥१९१॥
ततः पूर्वप्रयोगेण प्रतिदिवसं दर्शयति नगरमध्ये । ग्रहताराादि सर्वं ततो भणितं राजकुले नय ॥१९२॥
दूरस्थितया तया तदपि हि तस्य दर्शितम्, इति क्रमेण । प्रायः सर्वोऽपि खलु तस्य दर्शितो वस्तुनिकुरम्बः ॥
भणितं नाहमितस्तव सकाशं आगमिष्यामि । यदि कथमपि हि तव पिता विजानीयात्ततश्च मम पितुः ॥
कुर्यादनर्थं कमपि खलु, तवापि किं हिण्डितेन बहुना । नैमित्तिकस्य वचनमपि कथयित्वा सा गता तथापि ॥
प्रतिरात्रि भ्रमतस्तस्य केनापि त्रिदण्डिना सार्धम् । जातोऽतीव स्नेहः, अदृश्यीकारिणी विद्या ॥१९६॥

---

१ क ख. 'रघुदेव्वा' । २ क. ख. भाव ।

तो से तेणं दिन्ना, तीइ पभावेण सो परिभमंतो । अक्खलिओ कइयावि हु पत्तो निवत्रासभवणम्मि ॥
पाहरिएहिं अनाओ गिण्हइ तो दप्पणं रयणमइयं । खग्गं छुरियं तह बाहुरक्खयं बीययसमेयं ॥१९८॥
धवलिया य चुन्नेण नासिया नरवरस्स नियठाणे। आगंतुं सो सुत्तो गोवेउं दप्पणाईयं ॥१९९॥
रायावि हु पच्चूसे निद्दाविगमम्मि उट्ठए जाव । किर दप्पणं गहेही पलोयणत्थं न ता नियइ ॥२००॥
अंगपडिचारियाए दिट्ठा चुन्नेण धवलिया नासा । नरवइणो तो भणियं तीए कह चुन्नओ लग्गो ? ॥
तो अन्नदप्पणेणं मुहं पलोइत्तु चिंतए कुविओ । केणेयं मह विहियं, खिवेइ खग्गम्मि तो दिट्ठिं ॥२०२॥
तंपि न पिच्छइ छुरियंपि नेय तो बाहुरक्खयं नियइ । तंपि न पासइ तो खुद्धमाणसो भणइ पाहरिए ॥
रे रे केणवहरियं सव्वस्सं मज्झ कहह मुणिऊण । तेहिं भणियं नरेसर ! न कोवि इह आगओ अन्नो ॥
वासभवणस्स दारं पिहियं अम्हेहिं अड्ढरत्तम्मि । गयनिद्दा निद्दंदा थक्का उद्धट्ठिया चेव ॥२०५॥
तो रन्नावि हु रोसारुणच्छिणा दप्पणाइवुत्तंतो । कहिओ सचिवाण, तओ नीइंधरेणं इमं भणियं ॥
जो तुम्हाणवि भवणे उब्भडभडकोडिसंकडे विसइ । न हु चोरो सो सामिय ! सामन्ननरो मुणेयव्वो ॥
किंपुण विज्जासिज्झो अदेस्सीकरणसंगओ वावि । विज्जाहरोव्व नूणं दुग्गिज्झो भडसहस्साणं ॥२०८॥
तो पहु ! संपइ किज्जउ मज्झे चउहट्टयस्स धवलहरं । अइउच्चं दुप्पवेसं बहुपाहरिएहिं परिकिन्नं ॥२०९॥
कुमरी वासवदत्ता मुच्चउ तत्थेव जुव्वणभिरामा । भणिऊणं जह भद्दे ! परिणेयव्वो तए सोवि ॥२१०॥
जो कोवि दप्पणाई अप्पइ तुह पणइणीए बुद्धीए । तं लग्गं सुमुहुत्तो सुपसत्थं तं दिणं चेव ॥२११॥

---

ततस्तस्मै तेन दत्ता, तस्याः प्रभावेण स परिभ्रमन् । अस्खलितः कदापि हि प्राप्तो नृपवासभवने ॥१९७॥
प्राहरिकैरज्ञातो गृह्णाति ततो दर्पणं रत्नमयम् । खड्गं क्षुरिकां तथा बाहुरक्षकं बीजकसमेतम् ॥१९८॥
धवलिता च चूर्णेन नासिका नरवरस्य, निजस्थाने । आगत्य स सुप्तो गोपायित्वा दर्पणादिकम् ॥१९९॥
राजापि खलु प्रत्यूषे निद्राविगम उत्तिष्ठति यावत् । किल दर्पणं ग्रहीष्यति प्रलोकनार्थं न तावत्पश्यति ॥
अङ्गपरिचारिकया दृष्टा चूर्णेन धवलिता नासा । नरपतेस्ततो भणितं तया कथं चूर्णो लग्नः ? ॥२०१॥
ततोऽन्यदर्पणेन मुखं प्रलोक्य चिन्तयति कुपितः । केनेदं मम विहितं, क्षिपति खड्गे ततो दृष्टिम् ॥२०२॥
तमपि न पश्यति च्छुरिकामपि नैव ततो बाहुरक्षकं पश्यति । तमपि न पश्यति ततः क्षुब्धमानसो भणति प्राहरिकान् ॥
रे रे केनापहृतं सर्वस्वं मम कथयत ज्ञात्वा । तैर्भणितं नरेश्वर ! न कोऽपीहागतोऽन्यः ॥२०४॥
वासभवनस्य द्वारं पिहितमस्माभिरर्धरात्रे । गतनिद्रा निर्द्वन्द्वाः स्थिता ऊर्ध्वस्थिता एव ॥२०५॥
ततो राज्ञापि खलु रोषारुणाक्ष्णा दर्पणादिवृत्तान्तः । कथितः सचिवेभ्यः, ततो नीतिधरेणेदं भणितम् ॥२०६॥
यो युष्माकमपि भवन उद्भटभटकोटिसंकटे विशति । न खलु चौरः स स्वामिन् ! सामान्यनरो ज्ञातव्यः ॥
किन्तु विद्यासिद्धोऽदृश्यीकरणसंगतो वापि । विद्याधर इव नूनं दुर्ग्राह्यो भटसहस्राणाम् ॥२०८॥
ततः प्रभो ! संप्रति क्रियतां मध्ये चतुर्हट्टकस्य धवलगृहम् । अत्युच्चं दुष्प्रवेशं बहुप्राहरिकैः परिकीर्णम् ॥
कुमारी वासवदत्ता मुच्यतां तत्रैव यौवनाभिरामा । भणित्वा यथा भद्रे ! परिणेतव्यस्त्वया सोऽपि ॥२१०॥

इय निच्छयं विहेउं तइए पहरम्मि नियगिहं पत्तो । मंती भोयणकज्जे पढमं चिय पुत्तपासम्मि ॥२१२॥
पट्ठवए तज्जणणिं भोयणकज्जेण तेण सा पुट्ठा । अम्मो ! किमज्ज कज्जं जं लग्गा एत्तिया वारा ? ॥
तीएवि तस्स कहिओ पुव्वुत्तो दप्पणाइवुत्तंतो । ता जा तल्लंभत्थं कओ उवाओ गिहाईओ ॥२१४॥
तुह पिउणा, तो सोवि हु इत्तियवेलाए आगओ गेहे । तयणुमया संपत्ता तो लग्गा इत्तिया वारा ॥
इय सोऊणं काउं च भोयणं सो विसज्जए जणणिं । अह चउहट्टयमज्झे रन्ना विहियम्मि धवलहरे ॥
वासवदत्ताए तहिं ठियाए रयणीइ सोवि संपत्तो । अदिस्सो गहिऊणं तं निवखग्गं, तओ तीए ॥२१७॥
'को सि तुमं' सो पुट्ठो कहेइ को इत्तियाए रयणीए । कुव्वइ परगिहगमणं, तो नाओ तीइ सो एसो ॥
मुट्ठो जेण नरिंदो, इंदो किं एस अहव खयरिंदो । रूवेण कामदेवो देवो वा दाणवो वावि ॥२१९॥
अह होउ जो व सो वा परिणेयव्वो मए इमो नियमा । इय चिंतिवि तस्स कराओ तीए गहिऊण करवालं ॥
भणिओ परिणसु इण्हिं ममं महाभाग ! निययभागेहिं । पत्तं, तो सो जंपइ कह तं अन्नायकुलभवणं ॥
मं परिणसि, सा पभणइ सव्वं च्चिय साहियं तुह गुणेहिं । किंतु निवदप्पणाइवि समप्पियव्वं तए मज्झ॥
इय भणिउं उव्वूढो तीए संखेवओ खणं तत्थ । ठाउं सगिहे पत्तो पइरयणिं जाइ तप्पासे ॥२२३॥
सव्वंपि समप्पइ दप्पणाइं सावि हु निवस्स पेसेइ । तहवि न मुंचइ रोसं राया चुन्नेण जं जणियं ॥
भणिओ सचिवो रन्ना वासवदत्तं भणेसु गंतूणं । केणावि उवाएणं जेण समप्पेइ तं मज्झ ॥२२५॥

---

यः कोऽपि दर्पणादीनर्पयति तव प्रणयिन्या बुद्धया । तल्लग्नं सुमुहूर्तः सुप्रशस्तं तद् दिनमेव ॥२११॥
इति निश्चयं विधाय तृतीये प्रहरे निजगृहं प्राप्तः । मन्त्री भोजनकार्ये प्रथममेव पुत्रपार्श्वे ॥२१२॥
प्रस्थापयति तज्जननीं भोजनकार्येण तेन सा पृष्टा । अम्ब ! किमद्य कार्यं यल्लग्न एतावान् वारः ॥२१३॥
तयापि तस्मै कथितः पूर्वोक्तो दर्पणादिवृत्तान्तः । तावद्यावत्तल्लाभार्थं कृत उपायो गृहादिकः ॥२१४॥
तव पित्रा, ततः सोऽपि खल्वियद्वेलायामागतो गेहे । तदनुमता संप्राप्ता ततो लग्न एतावान् वारः ॥२१५॥
इति श्रुत्वा कृत्वा च भोजनं स विसृजति जननीम् । अथ चतुर्हट्टमध्ये राज्ञा विहिते धवलगृहे ॥२१६॥
वासवदत्तायां तत्र स्थितायां रजन्यां सोऽपि संप्राप्तः । अदृश्यो गृहीत्वा तं नृपखड्गं, ततस्तया ॥२१७॥
'कोऽसि त्वं' स पृष्टः कथयति क इयत्यां रजन्याम् । करोति परगृहगमनं, ततो ज्ञातस्तया स एषः ॥२१८॥
मुष्टो येन नरेन्द्रः, इन्द्रः किमेषोऽथवा खचरेन्द्रः । रूपेण कामदेवो देवो वा दानवो वापि ॥२१९॥
अथ भवतु यो वा स वा परिणेतव्यो मयायं नियमात् । इति चिन्तयित्वा तस्य करात्तया गृहीत्वा करवालम्॥
भणितः परिणयेदानीं मां महाभाग ! निजभाग्यैः । प्राप्तां, ततः स जल्पति कथं त्वमज्ञातकुलभवनम् ॥
मां परिणयसि, सा प्रभणति सर्वमेव कथितं तव गुणैः । किन्तु नृपदर्पणाद्यपि समर्पयितव्यं त्वया मम ॥
इति भणित्वोऽद्व्यूढस्तया संक्षेपतः क्षणं तत्र । स्थित्वा स्वगृहे प्राप्तः प्रतिरजनि याति तत्पार्श्वे ॥२२३॥
सर्वमपि समर्पयति दर्पणादि सापि खलु नृपाय प्रेषयति । तथापि न मुञ्चति रोषं राजा चूर्णेन यो जनितः ॥
भणितः सचिवो राज्ञा वासवदत्तां भण गत्वा । केनाप्युपायेन येन समर्पयति तं मम ॥२२५॥

जइ मारेमि सयं चिय तो मचो भणइ नाह! कह मच्चू। तस्स हविज्ज जहा सो दुहियादइओ, निवो भणइ॥
जइवि हु एवं चिट्ठइ तहवि हु रोसो नियत्तए नो मे। तो भणियं सचिवेणं हरिसट्ठाणेवि न हु रोसो॥
कायव्वो बुद्धिमया जेणिह तेणेण अप्पियं मोसं। परिणीयातुह दुहिया पाणब्भहिया विसेसेण॥२२८॥
अज्जवि सो तुह उचिओ वहुपसायस्स, ता पसीऊण। आणाविज्जइ संपइ पहु! नियपायाण पासम्मि॥
इच्चाइसुजुत्तीहिं निवस्स उत्तारिऊण तं रोसं। वासवदत्ता एवं भणाविया नियपइं इत्थ॥२३०॥
आणेसु मज्झ समीवे जेण पसायं करेमि से गरुयं। तीइवि कहियं पइणो निववयणं, सोवि पडिभणइ॥
पंचवरिसाणमुवरिं कायव्वं देवदंसणं सुयणु!। तीइवि भूवइणो पुण कहावियं तस्स पडिवयणं॥२३२॥
इय काले वच्चंते जाओ पुत्तो निवस्स तणयाए। तो सो अदिस्समाणो लोएणं एइ जह तहवि॥२३३॥
खिल्लाविवि नियतणयं जाइ गिहं ताव जाव पण वरिसा। जाया सुयस्स पच्छा भणिया सा गच्छ पिउपासे॥
अहमवि पयडो होहिम्मि सत्तदिणंते न इत्थ संदेहो। तीइ तहच्चिय विहियं नियपुत्तो दंसिओ रन्नो॥
तेणवि तं दट्ठूणं रूवाइगुणोत्तलक्खणोवेयं। नियअंके काऊणं पुणो पुणो चुंबिउं भणिओ॥२३६॥
तइ दिट्ठे दिट्ठोच्चिय तुज्झ पिया तहवि मह मणो वच्छ!। तद्दंसणंपि वंछइ छणससिबिंबं चकोरुव्व॥
इय पइदिणंपि पयओ संभासइलंकरेइ चुंबेइ। नियअंकसंठियं सो धरेइ गुरुनेहनिब्भरओ॥२३८॥
अह गच्छइ सुयपासे सुमुहुत्ते भज्जसंगओ मंती। पडिपुन्ने वीसइमे वरिसे, तणएण तं सहसा॥२३९॥
दट्ठूणं नियजणणी पुट्ठा को एस, तीइ से कहियं। तुज्झ पिया, ता एयं पणमसु तेणावि तह विहियं॥

---

यथा मारयामि स्वयमेव ततोऽमात्यो भणति नाथ! कथं मृत्युः। तस्य भवेद् यथा स दुहितृदयितः, नृपो भणति॥
यद्यपि खल्वेवं तिष्ठति तथापि हि रोषो निवर्तते नो मे। ततो भणितं सचिवेन हर्षस्थानेऽपि न हि रोषः॥
कर्तव्यो बुद्धिमता येनेह स्तेनेनार्पितो मोषः। परिणीता तव दुहिता प्राणाभ्यधिका विशेषेण॥२२८॥
अद्यापि स तवोचितो बहुप्रसादस्य, तस्मात्प्रसद्य। आनाय्यतां संप्रति प्रभो! निजपादयोः पार्श्वे॥२२९॥
इत्यादिसुयुक्तिभिर्नृपस्योत्तार्य तं रोषम्। वासवदत्तैवं भाणिता निजपतिमत्र॥२३०॥
आनय मम समीपे येन प्रसादं करोमि तस्य गुरुम्। तयापि कथितं पत्युर्नृपवचनं, सोऽपि प्रतिभणति॥
पञ्चवर्षाणामुपरि कर्तव्यं देवदर्शनं सुतनु!। तयापि भूपतेः पुनः कथितं तस्य प्रतिवचनम्॥२३२॥
इति काले व्रजति जातः पुत्रो नृपस्य तनयायाः। ततः सोऽदृश्यमानो लोकेनैति यथा तथापि॥२३३॥
रमयित्वा निजतनयं याति गृहं तावद्यावत् पञ्च वर्षाणि। जातानि सुतस्य पश्चाद्भणिता सा गच्छ पितृपार्श्वे॥
अहमपि प्रकटो भविष्यामि सप्तदिनान्ते नात्र संदेहः। तया तथैव विहितं निजपुत्रो दर्शितो राज्ञे॥२३५॥
तेनापि तं दृष्ट्वा रूपादिगुणोत्तलक्षणोपेतम्। निजाङ्के कृत्वा पुनः पुनश्चुम्बित्वा भणितः॥२३६॥
त्वयि दृष्टे दृष्ट एव तव पिता तथापि मम मनो वत्स!। तद्दर्शनमपि वाञ्छति क्षणशशिबिम्बं चकोर इव॥
इति प्रतिदिनमपि प्रयतः संभाषतेऽलंकरोति चुम्बति। निजाङ्कसंस्थितं स धरति गुरुस्नेहनिर्भरः॥२३८॥
अथ गच्छति सुतपार्श्वे सुमुहूर्ते भार्यासंगतो मन्त्री। परिपूर्णे विंशे वर्षे, तनयेन तं सहसा॥२३९॥

सचिवेण समालिंगिवि कहियं सव्वंपि पुव्वनिद्दिट्ठं । नेमित्तियस्स वयणं तत्तो घरउवरि सो नीओ ॥
मज्जणयाई काराविऊण सचिवेण अप्पणा सद्धिं । सो नीओ निवपासे तं नमिउं दोवि उवविट्ठा ॥२४२॥
तो पुट्ठो नरवइणा मंती, सो भणइ एस मह पुत्तो । तो भणइ निवो न कयावि निसुणिओ तुज्झ सुयजम्मो ॥
तो मंती कहइ निवस्स सवणमूलम्मि निहुयसद्देण । नेमित्तियस्स भणियं तह य उवायं च जहविहियं ॥
जावेवं सो साहइ ताव य सो बालहारनरसहिओ । मंतिसुयस्सवि पुत्तो जणयं दट्ठूणं नेहेण ॥२४५॥
ताओ ताउत्ति पयंपिरो य आलिंगिऊण निरु गाढं । तस्संकम्मि निविट्ठो दिट्ठो सनिवेण लोएण ॥२४६॥
तो तक्खणेण खुद्धो मंती जा किंचि जंपिही तत्थ । ता भूवइणा भणिओ किं तं सो वीरवरपुरिसो? ॥
एवंति तेण भणिए आहूओ नरवरेण नियपासे । आलिंगिऊण संभासिउं च उववेसिओ सविहे ॥२४८॥
तो पंचंगपसायं दाऊणं तह य तुरयकरिकोसं । उक्कोसं गुरुदेसं आवासं सयलरिउवासं ॥२४९॥
अह अन्नया य पुट्ठो रन्ना मंतिस्स नंदणो एवं । किं भो! कुलुग्गएणवि अणज्जकज्जं कयं तुमए? ॥
नेमित्तियस्स वयणं कहियं सव्वंपि तेण जह निसुयं । जणयाओ, तो राया भणइ सच्चो स नेमित्ती ॥
तेण भणियं नरेसर! सच्चाइं मज्झ एत्थ कम्माइं । कम्मवसगेण जम्हा देव! मएणुट्ठियं एयं ॥२५२॥
सुहमसुहं नक्खत्तरासीदिवसाइं कम्मसंजणियं । जाएइ जम्मसमए समएवि जओ इमं भणियं ॥२५३॥
सव्वो पुव्वकयाणं कम्माणं पावए फलविवागं । गहनक्खत्ताई पुणो निमित्तमित्तं चिय हवंति ॥२५४॥

---

दृष्ट्वा निजजननी पृष्टा क एषः, तया तस्य कथितम् । तव पिता, तस्मादेतं प्रणम तेनापि तथा विहितम् ॥
सचिवेन समालिङ्ग्य कथितं सर्वमपि पूर्वनिर्दिष्टम् । नैमित्तिकस्य वचनं ततो गृहोपरि स नीतः ॥२४१॥
मज्जनादि कारयित्वा सचिवेनात्मना सार्धम् । स नीतो नृपपार्श्वे तं नत्वा द्वावप्युपविष्टौ ॥२४२॥
ततः पृष्टो नरपतिना मन्त्री, स भणत्येष मम पुत्रः । ततो भणति नृपो न कदापि श्रुतं तव सुतजन्म ॥२४३॥
ततो मन्त्री कथयति नृपस्य श्रवणमूले निभृतशब्देन । नैमित्तिकस्य भणितं तथा चोपायं च यथाविहितम् ॥
यावदेवं स कथयति तावच्च स बालधारनरसहितः । मन्त्रिसुतस्यापि पुत्रो जनकं दृष्ट्वा स्नेहेन ॥२४५॥
तातस्तात इति प्रजल्पिता चालिङ्ग्य निश्चितं गाढम् । तस्याङ्के निविष्टो दृष्टः सनृपेण लोकेन ॥२४६॥
*ततस्तत्क्षणेन क्षुब्धो मन्त्री यावत्किञ्चिदपि जल्पिष्यति तत्र । तावद् भूपतिना भणितः किं त्वं स वीरवरपुरुषः?॥*
एवमिति तेन भणिते आहूतो नरवरेण निजपार्श्वे । आलिङ्ग्य संभाष्य चोपवेशितः सविधे ॥२४८॥
ततः पञ्चाङ्गप्रसादं दत्त्वा तथा च तुरगकरिकोशम् । उत्कृष्टं गुरुदेशमावासं सकलर्तुवासम् ॥२४९॥
अथान्यदा च पृष्टो राज्ञा मन्त्रिणो नन्दन एवम् । किं भोः! कुलोद्गतेनाप्यनार्यकार्यं कृतं त्वया? ॥२५०॥
नैमित्तिकस्य वचनं कथितं सर्वमपि तेन यथा श्रुतम् । जनकात्, ततो राजा भणति सत्यः स नैमित्तिकः ॥
तेन भणितं नरेश्वर! सत्यानि ममात्र कर्माणि । कर्मवशगेन यस्माद् देव! मयानुष्ठितमेतत् ॥२५२॥
शुभमशुभं नक्षत्रराशिदिवसादि कर्मसंजनितम् । जायते जन्मसमये समयेऽपि यत इदं भणितम् ॥२५३॥
सर्वः पूर्वकृतानां कर्मणां प्राप्नोति फलविपाकम् । ग्रहनक्षत्रादयः पुनर्निमित्तमात्रमेव भवन्ति ॥२५४॥

किञ्च।

दव्वं खित्तं कालं भावं च भवेइ कारणं गरुयं। असुहसुहकम्मभवणे विसेसओ सोवक्कमकम्मे ॥२५५॥
इच्चाइ निसुणिऊणं सचिवसुयाओ निवो भवुव्विग्गो। तं चिय रज्जे ठविउं गिण्हिवि दिक्खं गओ मोक्खं॥
इय कहिउं सो सिट्ठी सिवभद्दो भणइ नरवई! एवं। दुविहाए आवईए तो जत्तो होइ कायव्वो॥२५७॥
तेण जह मंतिणा नियसुयस्स विहिओ तहविहोवाओ। तह वयमवि तं कुणिमो तुज्झाणाए नियसुयस्स॥
तो रन्नाणुन्नाए धरिओ सो नियगिहम्मि जत्तेण। सेसा चउरो तणया रायाएसे समाइट्ठा॥२५९॥
तो रन्ना ते सव्वे निरोविया चउदिसासु वलकलिया। जहजोग्गं सत्तूणं पसाहणत्थं च, इत्तो य॥२६०॥
मलयाचलम्मि चलिओ पढमो चउरंगिणीइ सेणाए। पत्तो कमेण आवासिओ य दुग्गस्स तलवट्टे॥२६१॥
एत्तो महिंदसीहो वरुणसिणेहेण तरलियविवेओ। कहकहवि हु नीहरिओ गिहाउ, पत्तो य तप्पासे॥
तत्थेव तेण धरिओ महया जत्तेण, सिट्ठिणो लेहो। पट्ठविउं जाणावइ बंधुसरूवंपि, इत्तो य॥२६३॥
आगंतूणं इक्केण थविरमवरेण तत्थ सो सहसा। भणिओ मह पसिऊणं वरुण! पयच्छेसु एगंतं॥२६४॥
तेणवि तहत्ति विहियं कहियं तेणावि जह गुहामज्झे। चिट्ठइ गरुयसुरंगा उड्ढगमा माणुसपवेसा॥२६५॥
ता जाव दुग्गमज्झं तम्मि य धवलहरमज्झसिज्जाए। दुग्गाहिवई चिट्ठइ, तप्पासे नेमि जइ मज्झ॥२६६॥
अप्पेसि इमं दुग्गं, सोवि हु मन्नेवि तस्स तं वयणं। तेण समं चिय चलिओ मोत्तुं लहु भायरं सिविरे॥
संपत्तो धवलहरे तस्स य मज्झम्मि सवरराओवि। भज्जाए सह सुत्तो पयंसिओ थेरपुरिसेण॥२६८॥

---

द्रव्यं क्षेत्रं कालो भावश्च भवति कारणं गुरु। अशुभशुभकर्मभवने विशेषतः सोपक्रमकर्मणि॥२५५॥
इत्यादि श्रुत्वा सचिवसुतात् नृपो भवोद्विग्नः। तमेव राज्ये स्थापयित्वा गृहीत्वा दीक्षां गतो मोक्षम्॥२५६॥
इति कथयित्वा स श्रेष्ठी शिवभद्रो भणति नरपते! एवम्। द्विविधायामापदि ततो यत्नो भवति कर्तव्यः॥
तेन यथा मन्त्रिणा निजसुतस्य विहितस्तथाविधोपायः। तथा वयमपि तं कुर्मस्तवाज्ञया निजसुतस्य॥२५८॥
ततो राज्ञानुज्ञाते धृतः स निजगृहे यत्नेन। शेषाश्चत्वारस्तनया राजादेशे समादिष्टाः॥२५९॥
ततो राज्ञा ते सर्वे निरूपिताश्चतुर्दिक्षु बलकलिताः। यथायोग्यं शत्रूणां प्रसाधनार्थं च, इतश्च॥२६०॥
मलयाचले चलितः प्रथमश्चतुरङ्गिण्या सेनया। प्राप्तः क्रमेणावासितश्च दुर्गस्य तलपृष्ठे॥२६१॥
इतो महेन्द्रसिंहो वरुणस्नेहेन तरलितविवेकः। कथंकथमपि खलु निःसृतो गृहात् प्राप्तश्च तत्पार्श्वे॥२६२॥
तत्रैव तेन धृतो महता यत्नेन, श्रेष्ठिने लेखम्। प्रस्थाप्य ज्ञापयति बन्धुस्वरूपमपि, इतश्च॥२६३॥
आगत्यैकेन स्थविरापरेण तत्र स सहसा। भणितो मम प्रसद्य वरुण! प्रयच्छैकान्तम्॥२६४॥
तेनापि तथेति विहितं कथितं तेनापि यथा गुहामध्ये। तिष्ठति गुरुसुरङ्गोर्ध्वगमा मानुषप्रवेशा॥२६५॥
तावद् यावद् दुर्गमध्यं तस्मिंश्च धवलगृहमध्यशय्यायाम्। दुर्गाधिपतिस्तिष्ठति, तत्पार्श्वे नयामि यदि मम॥
अर्पयसीमं दुर्गं, सोऽपि हि मत्वा तस्य तद् वचनम्। तेन सममेव चलितो मुक्त्वा लघुभ्रातरं शिबिरे॥
संप्राप्तो धवलगृहे तस्य च मध्ये शबरराजोऽपि। भार्यया सह सुप्तः प्रदर्शितः स्थविरपुरुषेण॥२६८॥

तो वरुणनिउत्तेहिं पुरिसेहिं बंधिऊण सकलत्तो । नियडेहिं निगडिऊणं समप्पिओ दंडनाहस्स॥२६९॥
तेणवि नियपहुपासम्मि पेसिओ तलवरस्स अप्पेउं । दाऊणं संबलयं तह सत्तंगंपि तल्लच्छि॥२७०॥
नरवइउवायणत्थं, समप्पिउं तह जिणिंदपडिमाओ । फालिहरयणमयाओ पिउणोवि हु पूयणनिमित्तं ॥
थेरसुयं तब्भणिएण ठावए दुग्गनायगपयम्मि । वरुणो दुग्गम्मि तहा नियपहुआणं च दावेइ ॥२७२॥
इत्तो महिंदसीहस्स साहियं दुग्गगिरिसमीवम्मि । केणवि सबरनरेणं विवरं तह कप्पमप्पेउं ॥२७३॥
तो परिवारं वंचिवि करे करेऊण कप्पटिप्पणयं । तब्भणियविहाणेणं पविसइ तो विवरमज्झम्मि॥२७४॥
ता जाव वंतरीए भवणं पासेइ तीएलंकरियं । पढमगुणठाणठियाए तीए सो पभणिओ दट्ठुं ॥२७५॥
उवविससु रमसु मं नाह ! जेण वंतरपणंगणा अहयं । सो भणइ दुविहतिविहं देवीण रयम्मि मह नियमो ॥
तो कुद्धा सा पणभइ किमिहागमणम्मि कारणं कहसु । जइ न ममं उवभुंजसि, भणइ सो कोउगेणेव॥२७७॥
पत्तो ता तं दंससु किंचिवि मह कोउयंति, सा भणइ । मह रमणाउ किमन्नं जं तं पत्थेसि रे मूढ ! ॥२७८॥
जइ न ममं रमसि तुमं संपयमवि ता मरेसि रे नूणं । सो भणइ हवउ मरणंपि नियमनिरयस्स पसयच्छि ! ॥
परं मह साहसु समभूमिभागओ किच्चिरं तुहावासो ।तीए भणियं बहुजोयणाइं, तो भणइ सो एवं ॥२८०॥
जइ एवं ता मज्झं अहोदिसिं जोयणम्मि गंतव्वे । अहियगमणेण जाओ दिसिव्वए दुइयअइयारो ॥२८१॥
इय सोउं सा कुविया पण्हिपहारेण हणिहिही जाव । ता अंतरम्मि पडिओ सम्मदिट्ठी सुरो कोवि ॥२८२॥

---

ततो वरुणनियुक्तैः पुरुषैर्बद्ध्वा सकलत्रः । निगडैर्निगडयित्वा समर्पितो दण्डनाथाय ॥२६९॥
तेनापि निजप्रभुपार्श्वे प्रेषितः पुररक्षायार्पयित्वा । दत्त्वा शम्बलं तथा सप्ताङ्गामपि तल्लक्ष्मीम् ॥२७०॥
नरपत्युपायनार्थं, समर्प्य तथा जिनेन्द्रप्रतिमाः । स्फटिकरत्नमयीः पितुरपि हि पूजननिमित्तम् ॥२७१॥
स्थविरसुतं तद्भणितेन स्थापयति दुर्गनायकपदे । वरुणो दुर्गे तथा निजप्रभ्वाज्ञां च दापयति ॥२७२॥
इतो महेन्द्रसिंहस्य कथितं दुर्गगिरिसमीपे । केनापि शबरनरेण विवरं तथा कल्पमर्पयित्वा ॥२७३॥
ततः परिवारं वञ्चयित्वा करे कृत्वा कल्पटिप्पनकम् । तद्भणितविधानेन प्रविशति ततो विवरमध्ये ॥२७४॥
तावद् यावद् व्यन्तर्या भवनं पश्यति तयाऽलंकृतम् । प्रथमगुणस्थानस्थितया तया स प्रभणितो दृष्ट्वा ॥२७५॥
उपविश रमय मां नाथ ! येन व्यन्तरपणाङ्गनाऽहम् । स भणति-द्विविधत्रिविधं देवीनां रते मम नियमः ॥२७६॥
ततः क्रुद्धा सा प्रभणति किमिहागमने कारणं कथय । यदि न मामुपभुङ्क्षे, भणति स कौतुकेनैव ॥२७७॥
प्राप्तस्तस्मात् त्वं दर्शय किञ्चिदपि मम कौतुकमिति, सा भणति । मम रमणात्किमन्यद्यत्त्वं प्रार्थयसे रे मूढ ! ॥
यदि न मां रमयसि त्वं सांप्रतमपि तदा म्रियसे रे नूनम् । स भणति भवतु मरणमपि नियमनिरतस्य मृगाक्षि ! ॥
परं मम कथय समभूमिभागात् कियद्दूरं तवावासः । तया भणितं बहुयोजनानि, ततो भणति स एवम् ॥
यद्येवं तदा ममाधोदिशि योजने गन्तव्ये । अधिकगमनेन जातो दिग्व्रते द्वितीयातिचारः ॥२८१॥
इति श्रुत्वा सा कुपिता पार्ष्णिप्रहारेण हनिष्यति यावत् । तावदन्तरे पतितः सम्यग्दृष्टिः सुरः कोऽपि ॥

१ ग. नं ८०।

तेणुक्खिविउं सो झत्ति आणिओ वरुणसिविरमज्झमि। दिव्वे वत्थे दाउं स गओ सट्टाणमह वरुणो॥२८३॥
कयउवओगो जा उड्ढदिसिवए ओयणं तओ सरइ। इय जोयणदुगमाणं गमणं नाऊण झूरेइ ॥२८४॥
सव्वविरइं धरेउं मह सत्ती दूरओ गया इन्हिं। एगमुगभरुव्वहणे असमत्थो किं गिरिं वहइ ? ॥२८५॥
कह ते न वंदणिज्जा कह ते पूयारिहा न हु हवंति। मुणिणो महाणुभावा जावज्जीवंपि जे पयया॥२८६॥
पालिंति सव्वविरइं मणवइकाएण तिविहतिविहम्मि। ही ही अहमेण मए विराहिया देसविरईवि ॥२८७॥
एवमणुसोइऊणं वरुणो ओयरइ दुग्गनयराओ। संपत्तो आवासे महिंदसीहस्स तो कहइ ॥ २८८ ॥
सव्वं अइयाराई सोमि हु साहेइ अप्पणो चरियं। अइयारमहोदिसिसंभवं च तो तेण संजुत्तो ॥२८९॥
तट्ठाणाओ नयरिं वरुणो पत्तो नमंसिओ राया। कहियं सव्वंपि तओ जहट्ठियं दुग्गगहणाई ॥२९०॥
नियनियमस्सवि भंगो पसाहिओ, नरवरेण सो भणिओ। न हु तत्थ तुज्झ दोसो मज्झ निओगेण थेवोवि॥
इत्तो पुव्वदिसाए सिट्ठिसुओ आसि पेसिओ पुव्विं। जो गुणचंदभिहाणो सो पत्तो देससंधीए॥२९२॥
तो समरडामरेणं पुव्वदिसाभूसणेण भूवइणा। गुणचंदस्साभिमुहं भणावियं निययदूयाओ ॥२९३॥
जइ मज्झ देसमज्झे मा पविससु जा न संमुहो अहयं। संपत्तो वणिपुत्तय ! इइ अत्थे अत्थि तुह आणा॥
देवगुरूणं नियसामिणो य ता जाव पंचमं दिवसं। तम्मि पुणो हं सयमवि सीमाए समागमिस्सामि॥
तत्तो गुणचंदेणं भणियं भो दूय ! पंचदिणमज्झे। जइ सीममहं लंघेमि ता फुडं एस मह सवहो॥२९६॥
जइ पुणं कहियदिणाणं समहियदिवसंपि सो विलंबेही। ता तुरियं गंतूणं उवविट्ठं चिय गहिस्सामि॥

---

तेनोत्क्षिप्य स झटित्यानीतो वरुणशिबिरमध्ये। दिव्यानि वस्त्राणि दत्त्वा स गतः स्वस्थानमथ वरुणः॥
कृतोपयोगो यावदूर्ध्वदिग्व्रते योजनं ततः स्मरति। इति योजनद्विकमानं गमनं ज्ञात्वा खिद्यते ॥२८४॥
सर्वविरतिं धर्तुं मम शक्तिर्दूरतो गतेदानीम्। एकमुद्गभरोद्वहनेऽसमर्थः किं गिरिं वहति ? ॥२८५॥
कथं ते न वन्दनीयाः कथं ते पूजार्हा न खलु भवन्ति। मुनयो महानुभावा यावज्जीवमपि ये प्रयताः॥
पालयन्ति सर्वविरतिं मनोवचःकायेन त्रिविधत्रिविधेन। ही ही ! अधमेन मया विराधिता देशविरतिरपि॥
एवमनुशोच्य वरुणोऽवतरति दुर्गनगरात्। संप्राप्त आवासे महेन्द्रसिंहस्य ततः कथयति ॥२८८॥
सर्वमतिचारादि सोऽपि खलु कथयत्यात्मनश्चरितम्। अतिचारमधोदिक्संभवं च ततस्तेन संयुक्तः ॥२८९॥
तत्स्थानाद् नगरीं वरुणः प्राप्तो नमस्यितो राजा। कथितं सर्वमपि ततो यथास्थितं दुर्गग्रहणादि ॥२९०॥
निजनियमस्यापि भङ्गः प्रकथितो, नरवरेण स भणितः। न खलु तत्र तव दोषो मम नियोगेन स्तोकोऽपि॥
इतः पूर्वदिशि श्रेष्ठिसुत आसीत्प्रेषितः पूर्वम्। यो गुणचन्द्राभिधानः स प्राप्तो देशसंधौ ॥२९२॥
ततः समरडामरेण पूर्वदिग्भूषणेन भूपतिना। गुणचन्द्रस्याभिमुखं भाणितं निजदूतेन ॥२९३॥
यथा मम देशमध्ये मा प्रविश यावद् न संमुखोऽहम्। संप्राप्तो वणिक्पुत्रक ! इहार्थेऽस्ति तवाज्ञा ॥२९४॥
देवगुरूणां निजस्वामिनश्च तावद्यावत्पञ्चमं दिवसम्। तस्मिन्पुनरहं स्वयमपि सीम्नि समागमिष्यामि॥२९५॥
ततो गुणचन्द्रेण भणितं भो दूत ! पञ्चदिनमध्ये। यदि सीमानमहं लङ्घेय यदा स्फुटमेष मम शपथः॥२९६॥

इय-भणिऊणं दूओ विसज्जिओ सो गओ नियपुरम्मि । साहइ निवस्स तहा जह भणियं दंडनाहेण ॥
तेणवि पुट्ठो दूओ कित्तियमित्ता वणिस्स बलसंखा ? । तो तेणवि से कहियं तुह सिन्नाओ फुडं दुगुणा ॥
किंच ।
सपरक्कमो य कमसंगओ य गुलगयघडाए घडिओ य । सो गुणचंदो नरवर ! तम्हा तं रक्ख अप्पाणं ॥
नियदेसचाएणं दंडपयाणेण वावि छुट्टेसि । अन्नह न हवसि निव ! नत्थि संसओ इय सुणेउं सो ॥
भीओ संवट्टिऊणं वड्ढिऊण अहन्निसं गओ दूरं । तं पणिहीओ नाउं गुणचंदो पिट्ठिमणुलग्गो ॥३०२॥
पुरओ गच्छइ राया पिट्ठीए-तस्स जाइ गुणचंदो । तो.जाव जोयणसयं अहियं तो दिसिवयं सरियं ॥
पुणइ दस जोयणाइं अहियाइं समागओ तओ भणइ । सच्चं जाओ दिसिवयकलंकदंडाहिवो इण्हि ॥
जं मह उब्भासेणवि भग्गो एसुत्ति हरिसिओ अहयं । नियनियमभंगदंडेण दंडिओ इइ न मे नायं ॥
थेवोवि नियमभंगो जणेइ अइदारुणं महादुक्खं । जह विसलवोवि मारइ उवभुत्तो पाणिणं नियमा ॥
ता न खमं मह गंतुं पयंपि इत्तो, तओ य तन्नयरे । मुत्तूणं अहिगारिं वलिओ सो नियपुराहुत्तं ॥
पत्तो य विभूईए गुणचंदो पणमिया नरिंदाई । सव्वंपि जहावित्तं निवेइयं राइणो तेण ॥३०८॥
तइओ सुंदरनामा बुद्धीए बंधुरोत्ति पट्ठविओ । उत्तरदिसाए सिरिसमरवीरपासम्मि सो जम्हा ॥३०९॥
चंडो न दंडसज्झो उद्दंडपयंडपयलबलकलिओ । आईनीइगज्झो न जुज्झसज्झो इमो होइ ॥३१०॥

---

यदि पुनः कथितदिनेभ्यः समधिकदिवसमपि स विलम्बयिष्यति । तदा त्वरितं गत्वोपविष्टमेव ग्रहीष्यामि ॥
इति भणित्वा दूतो विसर्जितः स गतो निजपुरे । कथयति नृपाय तथा यथा भणितं दण्डनाथेन ॥२९८॥
तेनापि पृष्टो दूतः कियन्मात्रा वणिजो बलसंख्या ? । ततस्तेनापि तस्य कथितं तव सैन्यात्स्फुटं द्विगुणा ॥
सपराक्रमश्च क्रमसंगतश्च गुलगजघटया घटितश्च । स गुणचन्द्रो नरवर ! तस्मात्त्वं रक्षात्मानम् ॥३००॥
निजदेशत्यागेन दण्डप्रदानेन वापि छुट्यसे । अन्यथा न भवसि नृप ! नास्ति संशय इति श्रुत्वा सः ॥
भीतः समुद्रा ऊर्ध्वाऽहर्निशं गतो दूरम् । तत् प्रणिधेर्ज्ञात्वा गुणचन्द्रः पृष्ठमनुलग्नः ॥३०२॥
पुरतो गच्छति राजा पृष्ठे तस्य याति गुणचन्द्रः । ततो यावद्योजनशतमधिकं ततो दिग्व्रतं स्मृतम्॥३०३॥
तानि दश योजनान्यधिकानि समागतस्ततो भणति । सत्यं जातो दिग्व्रतकलङ्कदण्डाधिप इदानीम् ॥
यन्ममोद्भासेनापि भग्न एष इति हर्षितोऽहकम् । निजनियमभङ्गदण्डेन दण्डित इति न मया ज्ञातम्॥३०५॥
स्तोकोऽपि नियमभङ्गो जनयत्यतिदारुणं महादुःखम् । यथा विषलवोऽपि मारयत्युपभुक्तः प्राणिनं नियमात् ॥
तस्मान्न क्षमं मम गन्तुं पदमपीतः, ततश्च तन्नगरे । मुक्त्वाधिकारिणं वलितः स निजपुराभिमुखम् ॥३०७॥
प्राप्तश्च विभूत्या गुणचन्द्रः प्रणता नरेन्द्रादयः । सर्वमपि यथावृत्तं निवेदितं राज्ञे तेन ॥३०८॥
तृतीयः सुन्दरनामा बुद्धया बन्धुर इति प्रस्थापितः । उत्तरदिशि श्रीसमरवीरपार्श्वे स यस्मात् ॥३०९॥
चण्डो न दण्डसाध्य उद्दण्डप्रचण्डप्रबलबलकलितः । आदिनीतिग्राह्यो न युद्धसाध्योऽयं भवति ॥३१०॥

---

१ क. दीख'।

अणवरयपयाणेहिं चउरंगवलेण परिगओ सोवि। जाव नियदेससीमं संपत्तो ताव चिंतेइ ॥३११॥
अहह मह जोयणसयं एक्कं चिय मुक्कलं चउदिसिंपि। तं तु ससीमाएवि हु संजायं ता कहं करिमो ?॥
एगत्तो नियनियमो अन्नत्तो गुरुयणस्स मह आणा। जाओ य वग्घदोत्तडिनाओ इय चिंतयंतस्स ॥३१३॥
तस्स मणे विप्फुरियं जह तिण्ह दिसाण मज्झओ गहिउं। दस दस य जोयणाइं खिवेमि इह विरइरक्खट्ठा॥
तीसहियजोयणमया पुरओ सिरिसमरवीरनयरंपि। विज्जइ इय निच्छइउं चलिओ पत्तो य तन्नयरे॥
बहुपाहुडं विहेउं नरनाहं पणमिऊण तो भणियं। विक्कमवलेण रन्ना पट्ठविओ हं तुह समीवे ॥३१६॥
कज्जेणमिमेण निवेस ! संपयं तुम्ह देससीमाए। जे संति अम्ह गामा हणंति ते तुज्झ ठक्कुरया ॥३१७॥
ता किमुविक्खसि रक्खसु न समं तुह पुव्वपुरिसमज्जायं। लोवेउं नरपुंगव ! समग्गगुणगामपरिणाम ! ॥
अन्नं च विक्कमवलो तए समं नेहनिब्भरो बाढं। तेण तुह दुट्ठठक्कुरचिट्ठियमेयं कहावेइ ॥३१९॥
अन्नह नरिंद ! ताणं गणणावि हु नत्थि मज्झ सामिस्स। जस्स अणेगे रिउणो आणं सिरसा पडिच्छंति॥
तं निसुणिवि नरनाहो जंपइ एवं मए न विन्नायं। अन्नह नियमित्तस्सवि गामे किमुवद्दवावेमि ? ॥३२१॥
ता एसोच्चिय दंडो ताणं होउत्ति दुट्ठचरियाण। सीमालठक्कुराणं जो देसो सो मए दिन्नो ॥३२२॥
तुम्हाणं, समइ इन्हिं गिण्हह तद्देसवत्तिं झत्ति। अन्नंपि भणह जं किंपि संपयं समुचियं अम्ह ॥३२३॥
इय भणिऊणं तह नरवरस्स नियपाहुडं समप्पेउं। सम्माणिउं च बहुयं विसज्जिओ सुंदरो वणिओ॥
संपत्तो य कमेणं नियनिवपासे समग्गमवि वित्तं। साहेउं नमिऊण य जणयागिहे जाइ, तत्तो य ॥३२५॥

---

अनवरतप्रयाणैश्चतुरङ्गबलेन परिगतः सोऽपि। यावन्निजदेशसीमानं संप्राप्तस्तावच्चिन्तयति ॥३११॥
अहह मम योजनशतमेकमेव मुत्कलं चतुर्दिक्ष्वपि। तत्तु स्वसीम्न्यपि हि संजातं तस्मात्कथं कुर्मः ?॥३१२॥
एकतो निजनियमोऽन्यतो गुरुजनस्य ममाज्ञा। जातश्च व्याघ्रद्वितटीन्याय इति चिन्तयतः ॥३१३॥
तस्य मनसि विस्फुरितं यथा तिसृणां दिशां मध्यतो गृहीत्वा। दश दश च योजनानि क्षिपामीह विरतिरक्षार्थम् ॥
त्रिंशदधिकयोजनशतात्पुरतः श्रीसमरवीरनगरमपि। विद्यत इति निश्चित्य चलितः प्राप्तश्च तन्नगरे ॥३१५॥
बहुप्राभृतं विधाय नरनाथं प्रणम्य ततो भणितम्। विक्रमबलेन राज्ञा प्रस्थापितोऽहं तव समीपे ॥३१६॥
कार्येणानेन नृपेश ! सांप्रतं तव देशसीम्नि। ये सन्त्यस्मद्ग्रामा घ्नन्ति तांस्तव ठक्कुराः ॥३१७॥
तस्मात्किमुपेक्षसे रक्ष न क्षमं तव पूर्वपुरुषमर्यादाम्। लोपयितुं नरपुङ्गव ! समग्रगुणग्रामपरिणाम ! ॥३१८॥
अन्यच्च विक्रमबलस्त्वया समं स्नेहनिर्भरो बाढम्। तेन तव दुष्टठक्कुरचेष्टितमेतत्कथयति ॥३१९॥
अन्यथा नरेन्द्र ! तेषां गणनापि हि नास्ति मम स्वामिनः। यस्यानेके रिपव आज्ञां शिरसा प्रतीच्छन्ति ॥
तत् श्रुत्वा नरनाथो जल्पत्येवं मया न विज्ञातम्। अन्यथा निजमित्रस्यापि ग्रामान्किमुपद्रावयामि ? ॥३२१॥
तस्मादेष एव दण्डस्तेषां भवत्विति दुष्टचरितानाम्। सीमस्थठक्कुराणां यो देशः स मया दत्तः ॥३२२॥
युष्मभ्यम्, क्षमयतेदानीं गृह्णीत तद्देशवार्तिं झटिति। अन्यदपि भणत यत्किमपि सांप्रतं समुचितं मम ॥
इति भणित्वा तथा नरवराय निजप्राभृतं समर्प्य। सम्मान्य च बहु विसर्जितः सुन्दरो वणिक् ॥३२४॥

जसचंदो जो तुरिओ तुरियं सो पेसिओ य राएण। सिंधुविसयाहिवइणो उवरिं चउरंगवलकलिओ॥
पत्तो य तमुद्देसं तत्तो चिंतेइ दिसिवयं तइया। किंपरिमाणं गहियं न सुमरिमो सुगुरुमूलम्मि ॥३२७॥
अहह पमाओ जाओ नरिंदलच्छीए अहव उम्माओ। जं सुगुरूणुवएसो पम्हुट्ठो अहह मुट्ठो हं ॥३२८॥
इय चिंतंतो तत्तो विन्नत्तो हेरिएहिं जह राया। संपइ पलाइउमणो संवहमाणोऽत्थ चिट्ठेइ ॥३२९॥
तो सिग्धं चिय तुब्भे जइ देह पयाणगं तओ तस्स। सत्तंगंपि हु लच्छिं गिण्हह अचिरेण चिरमुत्तं॥
तो तक्खणेण ढक्का दवाविया रयणिपढमपहरम्मि। चलिओ सारवलेणं गओ य वहिऊण बहुदेसं॥
तेणवि आगच्छंतो विन्नाओ तो पलाणिओ दूरं। तो तेणं सव्वंपि हु गहियं तस्संतियं दव्वं ॥३३२॥
मोत्तूण तत्थ सिन्नं संपत्तो नियपुरम्मि निवपासे। कयपडिवत्ती सव्वं साहित्ता नियगिहं पत्तो ॥३३३॥
एवं कमेण चउरो पत्ता पिउपायवंदणनिमित्तं। पिउणावि तओ पुट्ठा कहेह नियनियमनिव्वहणं? ॥३३४॥
तेहिवि सव्वं कहियं सवित्थरं नियनियाण नियमाण। जो जस्स जत्थ जाओ उड्ढदिसाइक्कमाइओ॥
अइयारो, तो सोउं सिट्ठी जंपेइ अइ! निरु अजुत्तं। विहियं वच्छापच्छं सुतुच्छलच्छीइ कज्जेण ॥३३६॥
परिहरिया सिवलच्छी वरसुहकुच्छी पसन्नमुहलच्छी। रज्जसिरी उ अलच्छी जा गहिया विरइवाहाए॥
तालोयह दुचरियं गुरूण पासम्मि चरह पच्छित्तं। परिहरह रायसेवं जइ देवं मुणह सव्वन्नुं ॥३३८॥
तो ते भोगहिसंगा रायसिरीसाहिलासिणो जाया। पभणंति जणयसमुहं अविणयवयणाइं सव्वेवि॥३३९॥

---

संप्राप्तश्च क्रमेण निजनृपपार्श्वे समग्रमपि वृत्तम्। कथयित्वा नत्वा च जनकगृहे याति, ततश्च ॥३२५॥
यशश्चन्द्रो यस्तुर्यस्त्वरितं स प्रेषितश्च राज्ञा। सिन्धुविषयाधिपतेरुपरि चतुरङ्गबलकलितः ॥३२६॥
प्राप्तश्च तमुद्देशं ततश्चिन्तयति दिग्व्रतं तदा। किंपरिमाणं गृहीतं न स्मरामः सुगुरुमूले ॥३२७॥
अहह प्रमादो जातो नरेन्द्रलक्ष्म्या अथवोन्मादः। यत्सुगुरूणामुपदेशो विस्मृतोऽहह मुष्टोऽहम् ॥३२८॥
इति चिन्तयंस्ततो विज्ञप्तो हेरिकैर्यथा राजा। संप्रति पलायितुमनाः संवहमानश्च तिष्ठति ॥३२९॥
ततः शीघ्रमेव यूयं यदि दत्त प्रयाणकं ततस्तस्य। सप्ताङ्गामपि हि लक्ष्मीं गृहीताचिरेण चिरमुक्ताम्॥
ततस्तत्क्षणेन ढक्का दापिता रजनिप्रथमप्रहरे। चालितः सारबलेन गतश्चोढ्वा बहुदेशम् ॥३३१॥
तेनाप्यागच्छन् विज्ञातस्ततः पलायितो दूरम्। ततस्तेन सर्वमपि खलु गृहीतं तत्संबन्धि द्रव्यम् ॥३३२॥
मुक्त्वा तत्र सैन्यं संप्राप्तो निजपुरे नृपपार्श्वे। कृतप्रतिपत्तिः सर्वं कथयित्वा निजगृहं प्राप्तः ॥३३३॥
एवं क्रमेण चत्वारः प्राप्ताः पितृपादवन्दननिमित्तम्। पित्रापि ततः पृष्टाः कथयत निजनियमनिर्वहणम्॥
तैरपि सर्वं कथितं सविस्तरं निजनिजानां नियमानाम्। यो यस्य यत्र जात ऊर्ध्वदिगाद्यतिक्रमादिकः॥
अतिचारः, ततः श्रुत्वा श्रेष्ठी जल्पति अयि! निश्चितमयुक्तम्। विहितं वत्सापथ्यं सुतुच्छलक्ष्म्याः कार्येण॥
परिहृता शिवलक्ष्मीर्वरशुभकुक्षिः प्रसन्नमुखलक्ष्मीः। राज्यश्रीस्त्वलक्ष्मीर्या गृहीता विरतिबाधया ॥३३७॥
तस्मादालोचयत दुश्चरितं गुरूणां पार्श्वे चरत प्रायश्चित्तम्। परिहरत राजसेवां यदि देवं जानीत सर्वज्ञम् ॥३३८॥

---

१ प्र सुमरि म सु°।

ताय ! तएच्चिय रन्नो समप्पिया सुप्पियावि किं पढमं ? । इण्हिं वणिज्जकज्जे लज्जामो उज्जमं काउं ॥
जिणधम्मं पुण करिमो पभावणाईहिं ताय ! निच्चंपि । निच्चिंतो उ तुमंपि हु मा कस्सवि सेवमणुसरसु॥
सरसु सुगुरूण सेवं कुणसु पयत्तेण दाणधम्माई । अम्हाणं पुण तत्तिं मा कुणसु कयावि मणसावि ॥
तो मोणं काऊणं सिट्ठीवि ठिओ समुट्ठिया तणया । रायकुले संपत्ता भमंति सिच्छाए रिद्धीए ॥३४३॥
जह जह रायपसाओ तह तह ओसरइ धम्मपरिणामो । तेसिं पमायवसओ सिट्ठिसुयाणं समग्गाणं ॥
सिट्ठीवि कालमासे कालं काऊण सुरवरो जाओ । ते चउरो सेट्ठिसुया विसयासत्ता विगयधम्मा ॥
मरिऊण कमेण तओ कुगइगया विसहिऊण दुक्खाइं । पावियजिणवरधम्मा पुणोवि सुगइं गमिस्संति ॥
जो उण पढमो पुत्तो वरुणो नामेण सो अहं जाओ । मरिउं महोरगेसुं दिसिनियमविराहणावसओ ॥
इय सोउं संबुद्धो नरवइकुमराइबहुयजणनिवहो । तो नरवइणा भणिओ मणोरहो लेसु मह रज्जं ॥३४८॥
जेण तए मह पुत्तो मओ य जीवाविओ सुधम्मम्मि । ठविओ अहंपि तेणं परमुवयारी तुमं मज्झ ॥३४९॥
तो सो भणेइ नरवर ! नियपुन्नं चेव फलइ जीवाण । तस्सुदए अन्नोवि हु निमित्तमित्तं पुण हवेइ ॥३५०॥
रज्जेण मह न कज्जं नरिंद ! धम्ममि उज्जमो निच्चं । किज्जो ते निब्भिच्चो सुभिच्चजुत्तेण जत्तेण ॥३५१॥
तो रन्ना धवलहरं हरंव बहुभूइरेहिरं रुइरं । गोक्खगणागणेहिं निसेवणिज्जं समप्पेउं ॥३५२॥
ठविओ सेट्ठिपए सो विसिट्ठदिट्ठीपभावणापुव्वं । कुव्वंतो जिणधम्मं गमेइ दियहाइं तत्थेव ॥३५३॥

---

ततस्ते भोगाभिष्वङ्गाद्राजश्रीसाभिलाषिणो जाताः । प्रभणन्ति जनकसंमुखमविनयवचनानि सर्वेऽपि ॥३३९॥
तात ! त्वयैव राज्ञे समर्पिताः सुप्रिया अपि किं प्रथमम् ? । इदानीं वाणिज्यकार्ये लज्जामहे उद्यमं कर्तुम् ॥
जिनधर्मं पुनः कुर्मः प्रभावनादिभिस्तात ! नित्यमपि । निश्चिन्तस्तु त्वमपि हि मा कस्यापि सेवामनुसर ॥
स्मर सुगुरूणां सेवां कुरु प्रयत्नेन दानधर्मादि । अस्माकं पुनश्चिन्तां मा कुरु कदापि मनसापि ॥३४२॥
ततो मौनं कृत्वा श्रेष्ठ्यपि स्थितः समुत्थितास्तनयाः । राजकुले संप्राप्ता भ्रमन्ति स्वेच्छया ऋद्ध्या ॥३४३॥
यथा यथा राजप्रसादस्तथा तथापसरति धर्मपरिणामः । तेषां प्रमादवशतः श्रेष्ठिसुतानां समग्राणाम् ॥३४४॥
श्रेष्ठ्यपि कालमासे कालं कृत्वा सुरवरो जातः । ते चत्वारः श्रेष्ठिसुता विषयासक्ता विगतधर्माणः ॥३४५॥
मृत्वा क्रमेण ततः कुगतिगता विषह्य दुःखानि । प्राप्तजिनवरधर्माः पुनरपि सुगतिं गमिष्यन्ति ॥३४६॥
यः पुनः प्रथमः पुत्रो वरुणो नाम्ना सोऽहं जातः । मृत्वा महोरगेषु दिग्नियमविराधनावशतः ॥३४७॥
इति श्रुत्वा संबुद्धो नरपतिकुमारादिबहुजननिवहः । ततो नरपतिना भणितो मनोरथो लाहि मम राज्यम् ॥
येन त्वया मम पुत्रो मृतश्च जीवितः सुधर्मे । स्थापितोऽहमपि तेन परमोपकारी त्वं मम ॥३४९॥
ततः स भणति नरवर ! निजपुण्यमेव फलति जीवानाम् । तस्योदयेऽन्योऽपि हि निमित्तमात्रं पुनर्भवति ॥
राज्येन मम न कार्यं नरेन्द्र ! धर्मे उद्यमो नित्यम् । क्रियते निर्भृत्यः सुभृत्ययुक्तेन यत्नेन ॥३५१॥
ततो राज्ञा धवलगृहं गृहमिव बहुभूतिराजितं रुचिरम् । गवाक्षगणैर्निषेवणीयं समर्प्य ॥३५२॥
स्थापितः श्रेष्ठिपदे स विशिष्टदृष्टिप्रभावनापूर्वम् । कुर्वन् जिनधर्मं गमयति दिवसानि तत्रैव ॥३५३॥

तत्तो सो तव्वंधू मेहरहो मुणिवि तस्स वुत्तंतं । संपत्तो तन्नयरे कवड्डियाएवि रहिओ सो ॥३५४॥
संझाए मणोरहसिट्ठिमंदिरे दारवालिपुनरेण । खलिओ खलोव्व पुरओ तत्तो सो साहए तस्स ॥३५५॥
मेहरहो नामेणं जेट्ठो वंधू य सिट्ठिणो अहयं । वाणारसीउ पत्तो ता कहसु तुमं इमं तस्स ॥३५६॥
तक्कहिएणं सिट्ठी ससंभमं संमुहो समणुपत्तो । तेणवि नमिउं आलिंगिओ य गुरुगोरवेण तओ ॥३५७॥
नीओ गिहम्मि विहिया सयला तक्कालउचियपडिवत्ती । पच्चूसे जिणभवणे नीओ कयफारसिंगारो ॥
अट्ठप्पयारपूयं कारविओ विहिपुरस्सरं तत्तो । आहूओ य नरिंदो मेहरहो दंसिओ तस्स ॥३५९॥
कहिओ नियसंबंधो तप्पियराइंपि राइणा तत्थ । हक्कारियाइं सम्मं करिंति धम्मं जिणपणीयं ॥३६०॥
तो जह मणोरहेणं दिसिव्वयं पालियं निरइयारं । तह अन्नेणवि एवं पालेयव्वं पयत्तेण ॥३६१॥
सव्वजगज्जीवहियं अप्पहियं सो करेइ जो अहियं । वज्जेइ दिसाजत्तं पयत्तओ सुत्तजुत्तीओ ॥३६२॥
अइयारपंकमुक्को दिसिव्वयं जो धरेइ धीरप्पा । पसरियदसदिसिकित्ती सो पावइ परमसंपत्ती ॥३६३॥

॥ इति पञ्चातिचारदृष्टान्तयुक्तं दिग्व्रते मनोरथकथानकं समाप्तम् ॥

' सापेक्षत्वमन्ययोरेवातिचारयोर्ज्ञेयं न त्वाद्यानाम्; आद्यास्त्वनाभोगातिक्रमादिभिरेव भवन्ति, अन्यथा प्रवृत्तौ भङ्ग एव' इति केचित् ।

---

ततः स तद्बन्धुर्मेघरथो ज्ञात्वा तस्य वृत्तान्तम् । संप्राप्तस्तन्नगरे कपर्दिकया विरहितः सः ॥३५४॥
सन्ध्यायां मनोरथश्रेष्ठिमन्दिरे द्वारपालकनरेण । स्खलितः खल इव पुरतस्ततः स कथयति तस्य ॥३५५॥
मेघरथो नाम्ना ज्येष्ठो बन्धुश्च श्रेष्ठिनोऽहम् । वाराणसीतः प्राप्तस्तस्मात्कथय त्वमिदं तस्मै ॥३५६॥
तत्कथितेन श्रेष्ठी ससंभ्रमं संमुखः समनुप्राप्तः । तेनापि नत्वाऽऽलिङ्गितश्च गुरुगौरवेण ततः ॥३५७॥
नीतो गृहे विहिता सकला तत्कालोचितप्रतिपत्तिः । प्रत्यूषे जिनभवने नीतः कृतस्फारशृङ्गारः ॥३५८॥
अष्टप्रकारपूजां कारितो विधिपुरस्सरं ततः । आहूतश्च नरेन्द्रो मेघरथो दर्शितस्तस्मै ॥३५९॥
कथितो निजसंबन्धस्तत्पितरावपि राज्ञा तत्र । हक्कारितौ सम्यक्कुरुतो धर्मं जिनप्रणीतम् ॥३६०॥
ततो यथा मनोरथेन दिग्व्रतं पालितं निरतिचारम् । तथाऽन्येनाप्येवं पालयितव्यं प्रयत्नेन ॥३६१॥
सर्वजगज्जीवहितमात्महितं स करोति योऽधिकाम् । वर्जयति दिग्यात्रां प्रयत्नतः सूत्रयुक्तितः ॥३६२॥
अतिचारपङ्कमुक्तो दिग्व्रतं यो धरति धीरात्मा । प्रसृतदशदिक्कीर्तिः स प्राप्नोति परमसंपत्तीः ॥३६३॥

दुविहं भोगवयं इह भोयणओ कम्मओ य उवभोगो । तंबोलाहाराई परिभोगे वत्थललणाई ॥१॥
भोयणओ सड्ढेणं भोत्तव्वं फासुएसणियदव्वं । तयभावेणेसणीयं नवरं सच्चित्तपरिवज्जं ॥२॥
तस्सवि य असंतेणंतकायबहुवीयवज्जणं तत्थ । असणम्मि अद्दयाइं पाणम्मि य मंसरसयाइं ॥३॥
तह खाइमम्मि उंबरपंचगपरिवज्जणं सया कुज्जा । महुपभिईणं पुण साइमम्मि इय वुड्ढउवएसो ॥४॥
परिभोगम्मि य थूलप्पमुल्लवत्थाइं परिमियं सिज्जा । सासणपभावणट्ठा वराइं जा देवदूसाइं ॥५॥
नवरं तप्परिमाणं कुज्जा आहरणमाइयाणंपि । कम्मयओ पुण भण्णइ उवभोगो, कुणइ जं सड्ढो ॥६॥
गुत्तिपालाइकम्मं इगवारं पहरववहरणनियमा । जं पुण पुणो पुणोच्चिय कीरइ सो होइ परिभोगो ॥७॥
अन्ने उण आयरिया कम्मयओ जोयणं न कुव्वंति । उवभोगपरीभोगाणं एस वुड्ढाण उवएसो ॥८॥
जो वज्जइ सच्चित्तं आहारं सावओ सयाकालं । सो विस्ससेणकुमरुव्व लहइ सिवसंपयं कमसो ॥९॥
तथाहि;—

नंदणवणंव गुरुसालसंगयं गयमुहंव रयणड्ढं । नामेणं भोगपुरं परं पुरं अत्थि भरहम्मि ॥१०॥
आसि ससिसुद्धकित्ती विबुहपिओ पविपवित्तकरकमलो । राया पुरंदरो इव पुरंदरो दरियरिउदलणो ॥
तस्सत्थि पिया रइरुवविब्भमा विब्भमाण कुलभवणं । विब्भमवईभिहाणा सुसीलगुणसालिणी सरला ॥
ताणं च सुओ भुवणम्मि विस्सुओ विस्ससेणवरकुमरो । कुमरकरिगंधसिंधुरसमप्पहो धरियधवलगुणो ॥
गुणचंदसोमचंदाभिहाणया संति तस्सवि वयंसा । अह अन्नया स पत्तो तेहिं समं मलयगिरिसिहरे ॥१४॥

---

द्विविधं भोगव्रतमिह भोजनतः कर्मतश्च उपभोगः । ताम्बूलाहारादिः परिभोगे वस्त्रललनादिः ॥१॥
भोजनतः श्राद्धेन भोक्तव्यं प्रासुकैषणीयद्रव्यम् । तदभावेऽनेषणीयं किन्तु सचित्तपरिवर्जम् ॥२॥
तस्यापि चासत्त्वेऽनन्तकायबहुबीजवर्जनं तत्र । अशने आर्द्रकादि पाने च मांसरसादि ॥३॥
तथा खादिम्नि उदुम्बरपञ्चकपरिवर्जनं सदा कुर्यात् । मधुप्रभृतीनां पुनः स्वादिम्नीति वृद्धोपदेशः ॥४॥
परिभोगे च स्थूलप्रमूल्यवस्त्रादि परिमितं शय्या । शासनप्रभावनार्थं वराणि यावद् देवदूष्याणि ॥५॥
किन्तु तत्परिमाणं कुर्यादाभरणादिकानामपि । कर्मतः पुनर्भण्यत उपभोगः, करोति यत् श्राद्धः ॥६॥
गुप्तिपालादिकर्मैकवारं प्रहरव्यवहरणनियमात् । यत्पुनः पुनः पुनरेव क्रियते स भवति परिभोगः ॥७॥
अन्ये पुनराचार्याः कर्मतो योजनं न कुर्वन्ति । उपभोगपरीभोगयोरेष वृद्धानामुपदेशः ॥८॥
यो वर्जयति सचित्तमाहारं श्रावकः सदाकालम् । स विश्वसेनकुमारवल्लभते शिवसंपदं क्रमशः ॥९॥

नन्दनवनमिव गुरुशालसंगतं गजमुखमिव रत्ना(रचना)ढ्यम् । नाम्ना भोगपुरं परं पुरमस्ति भरते ॥१०॥
आसीच्छशिशुद्धकीर्तिर्विबुधप्रियः पविपवित्रकरकमलः । राजा पुरन्दर इव पुरन्दरो दृप्तरिपुदलनः ॥११॥
तस्यास्ति प्रिया रतिरूपविभ्रमा विभ्रमाणां कुलभवनम् । विभ्रमवत्यभिधाना सुशीलगुणशालिनी सरला ॥१२॥
तयोश्च सुतो भुवने विश्रुतो विश्वसेनवरकुमारः । कुमारकरिगन्धसिन्धुरसमप्रभो धृतधवलगुणः ॥१३॥

---

१ ग °मुहव । २ ख. ग. चंदनवणंव बहुभोगिरम्मं ।

पिच्छइ तत्थ मयच्छि एक्कं पक्कंबलुंबियाहत्थं । इत्थिं वित्थिण्णनियंबहारिणिं पुन्नचंदमुहिं ॥१५॥
रणरणयपभावुल्लसिरपंचमुग्गारमणहरगिराए । गायंति विरहसमुब्भवाइं गेयाइं विहुरंगी ॥१६॥
गयसारंगा सारंगियव्व पियविरहिया रहंगिव्व । दुहदाहदीहनीसाससुसियअहरा पढइ एवं ॥१७॥

चित्तह मासह चूयह मंजरि, पिच्छिवि मयणमयल्लहि मंजरि ।
विस्ससेणकुमरिणु हउं रत्ती, दुह अणुहवउ बहुय दिणरत्ती ॥१८॥
कयसिंगारफार तसुरेसिहिं, चिट्ठहु इह किसतणु तसुरेसिहिं ।
किर हउं होसु कुमरवरमाणिणि, तेण विहिय हयहिय हउं माणिणि ॥१९॥

नियनामसंकिरेणं पुट्ठा मा सुयणु ! को इमो कुमरो ! तइ गिज्जइ जइ जुज्जइ तो सुंदरि ! मज्झ तं कहसु ॥
तो सा ससंभमं चिय पुलइयदेहा पलोयए जाव । संकिन्नरसं बाला ता तक्खणमेवमणुहवइ ॥२१॥
तथाहि;—
किमिमो सोत्ति सहरिसा कत्तो तस्संभवोत्ति सविसाया । परपुरिसोत्ति य सभया रूवेणहियत्ति सासंका ॥
नेमित्तिएण कहियं अज्जं पियमेलउत्ति सविसंभा । वामभुयअच्छिफुरणे सुनिच्छया तह सुसउणाओ ॥
एमाइरसंतरतरलमाणसा माणसम्मि चिंतेइ । होउ इह जो व सो वा अतिही विणयारिहो ताव ॥२४॥
तो देइ पल्लवासणमुवविट्ठो तम्मि भणइ तयभिमुहं । जइवि न जुज्जइ जह तह मणवल्लहनामउल्लवणं ॥
तहवि तन्नामभणणे अमयरसासायणं लहउ रसणा । सप्पुरिसनामगहणं कुणेइ जं दुक्खनिम्महणं ॥२६॥

---

गुणचन्द्रसोमचन्द्राभिधानौ स्तस्तस्यापि वयस्यौ । अथान्यदा स प्राप्तस्तैः समं मलयगिरिशिखरे ॥१४॥
पश्यति तत्र मृगाक्षीमेकां पक्वाम्रलम्बिकाहस्ताम् । स्त्रियं विस्तीर्णनितम्बधारिणीं पूर्णचन्द्रमुखीम् ॥१५॥
औत्सुक्यप्रभावोल्लसितपञ्चमोद्गारमनोहरगिरा । गायन्ती विरहसमुद्भवानि गेयानि विधुराङ्गी ॥१६॥
गतसारङ्गा सारङ्गीव प्रियविरहिता रथाङ्गीव । दुःखदाहदीर्घनिःश्वासशुष्काधरा पठत्येवम् ॥१७॥

चैत्रे मासे चूतस्य मञ्जरीं, दृष्ट्वा मदनलतामञ्जरीम् ।
विश्वसेनकुमारेणाहं रक्ता, दुःखमनुभवामि बहु दिनरात्रीः ॥१८॥
कृतशृङ्गारस्फारा तदर्थं, तिष्ठामीह कृशतनुस्तदर्थम् ।
किलाहं भविष्यामि कुमारवरमानिनी, तेन विहिता हतहृदयाऽहं मानिनी ॥१९॥

निजनामशङ्कित्रा पृष्टा सा सुतनु ! कोऽयं कुमारः । त्वया गीयते यदि युज्यते तदा सुन्दरि ! मम तत्कथय ॥२०॥
ततः सा ससंभ्रममेव पुलकितदेहा प्रलोकते यावत् । संकीर्णरसं बाला तावत्तत्क्षणमेवमनुभवति ॥२१॥
किमयं स इति सहर्षा कुतस्तत्संभव इति सविषादा । परपुरुष इति च सभया रूपेणाधिक इति साशङ्का ॥
नैमित्तिकेन कथितमद्य प्रियमेल इति सविश्रम्भा । वामभुजाक्षिस्फुरणे सुनिश्चया तथा सुशकुनात् ॥२३॥
एवमादिरसान्तरतरलमानसा मानसे चिन्तयति । भवत्विह यो वा स वाऽतिथिर्विनयार्हस्तावत् ॥२४॥
ततो ददाति पल्लवासनमुपविष्टस्तस्मिन्भणति तदभिमुखम् । यद्यपि न युज्यते यथा तथा मनोवल्लभनामोल्लपनम् ॥

भोगपुराहिवतणओ नामेणं विस्ससेणवरकुमरो । चाई कयन्नुओ वच्छलो य पडिवन्ननिव्वहणो ॥२७॥
इच्चाइगुणगणो मागहेहिं गहिओ पुरा पुरो मज्झ। पोयणपुरउज्जाणे जिणभवणगयाए गरिमाए ॥२८॥
पुट्ठा न किंपि ते तत्थ किंतु सम्माणिया मए बहुयं। मह पिउणा नेमित्ती मज्झ वरट्ठा तया पुट्ठो॥२९॥
तेणवि कहिओ सो चेव पिययमो मागहेहिं जो पढिओ। तो मज्झ तस्स उवरिं जाओ य सपग्गलो राओ ॥
तो नियसहीमुहाओ पुट्ठो नेमित्तिओ जहा कइया । तेण समं मेलावो कुमरीए कहसु कत्थवि य ? ॥
तेणं च इमं कहियं सत्तमदिवसम्मि मलयसेलम्मि। होही संगमसोक्खं तेण सहातक्कियं किंतु ॥३२॥
अइदूरे सो सेलो सत्तमदिवसं तु आगयं चेव । अइउच्छुगो य अहयं कज्जवसेणं गमिस्सामि ॥३३॥
इहरा तंपि कहंतो, तो सा तोसेण कहइ तं गंतुं । कुमरीए तो भणियं हला ! दिणे सत्त, इत्तो य ॥
सत्तसयजोयणेहिं कुमरो चिट्ठइ कह णु तव्वयणं । घडइ अइदुग्घडमिणं घडिस्सए नवरि विहिवसओ ॥
अहवा सपच्चओच्चियं नेमित्ती अवितहं च तव्वयणं । होही न इत्थ भंती परंतु कह गम्मिही तत्थ ? ॥
इय संदेहदोलयमारूढा रूढपेमपब्भारा । अइउक्कंठविसंठुलदेहा भूमीए लोट्टंती ॥३७॥
दिट्ठा अदिट्ठपुव्वेण केणवि विज्जाहरेण हरिऊण । आणीया इह अब्भत्थिया य जा सत्त दिवसाइं ॥
तथाहि;—
हे सुंदरि ! मं मन्नसु भत्तारं कणयचूडनामाणं । उत्तरसेढीसामिस्स नंदणं पवणवेयस्स ॥३९॥

---

तथापि तन्नामभणनेऽमृतरसास्वादनं लभतां रसना । सत्पुरुषनामग्रहणं करोति यद् दुःखनिर्मथनम् ॥२६॥
भोगपुराधिपतनयो नाम्ना विश्वसेनवरकुमारः । त्यागी कृतज्ञो वत्सलश्च प्रतिपन्ननिर्वहणः ॥२७॥
इत्यादिगुणगणो मागधैर्गृहीतः पुरा पुरो मम । पोतनपुरोद्याने जिनभवनगताया गरिम्णा ॥२८॥
पृष्टा न किमपि ते तत्र किन्तु सम्मानिता मया बहु । मम पित्रा नैमित्तिको मम वरार्थं तदा पृष्टः ॥२९॥
तेनापि कथितः स एव प्रियतमो मागधैः पठितः । ततो मम तस्योपरि जातश्च समर्गलो रागः ॥३०॥
ततो निजसखीमुखात्पृष्टो नैमित्तिकोऽथवा कदा । तेन समं मेलः कुमार्याः कथय क्वापि च ! ॥३१॥
तेन चेदं कथितं सप्तमदिवसे मलयशैले । भविष्यति संगमसौख्यं तेन सहातर्कितं किन्तु ॥३२॥
अतिदूरे स शैलः सप्तमदिवसं त्वागतमेव । अत्युत्सुकश्चाहं कार्यवशेन गमिष्यामि ॥३३॥
इतरथा तदप्यकथयिष्यम्, ततः सा तोषेण कथयति तां गत्वा । कुमार्या ततो भणितं हले दिनाः सप्त, इतश्च ॥
सप्तशतयोजनेषु कुमारस्तिष्ठति कथं नु तद्वचनम् । घटतेऽतिदुर्घटमिदं घटिष्यते केवलं विधिवशतः ॥३५॥
अथवा सप्रत्यय एव नैमित्तिकोऽवितथं च तद्वचनम् । भविष्यति नात्र भ्रान्तिः परन्तु कथं गमिष्यते तत्र ? ॥
इति संदेहदोलामारूढा रूढप्रेमप्राग्भारा । अत्युत्कण्ठविसंस्थुलदेहा भूम्यां लुठन्ती ॥३७॥
दृष्टाऽदृष्टपूर्वेण केनापि विद्याधरेण हृत्वा । आनीतेहाभ्यर्थिता च यावत्सप्त दिवसानि ॥३८॥
हे सुन्दरि ! मां मन्यस्व भर्तारं कनकचूडनामानम् । उत्तरश्रेणिस्वामिनो नन्दनं पवनवेगस्य ॥३९॥

---

१ ग. कयन्नो इहम्मि भणिया य तेण इमं ।

इच्चाइ जाव जंपइ तावुत्तरओ सुरयणपुंजोव्व । तेएण तरणिमंडलमवि तरलंतो मुणी पत्तो ॥४०॥
अब्भुट्ठिऊण दोण्णिवि पयओ पणयाइं साहुपयपउमं । चारणमुणिणा तो धम्मलाहिउं सो इमं भणिओ॥
किं कणयचूड ! एयं विचिट्ठियं सिट्ठगरहियं कज्जं । मह भाइसुओवि तुमं न लज्जसेणज्जकज्जेण ॥४२॥
न य तुम्ह कुले केणवि कयावि विहिया कलंकसंकावि । इण्हिं पुण तव चरियं विवरीयं दीसए वच्छ !॥
किञ्च ।
विसयपिवासानडिओ इहेव जं रमसि परमहेलाओ । तं नूण परमहेलाए परमहेलाए सहसि दुहं ॥४४॥
वंछाविच्छेओ किं कयाइ संभवइ विसयसेवाए ? । तण्हा नवरिं अहिया वड्ढइ लवणंबुपाणेण ॥४५॥
किञ्च ।
नायागयावि विसया दुसहदुहं देंति इय मुणेऊण । चत्ता धीरेहिं, तुमं ते वंछसि पुण अनाएणं ॥४६॥
विसतरुफलंव विसया भुंजंति सुहेण महुरभावेण । दुहदायगदीहरमोहसंगमो दूसही पुरओ ॥४७॥
जह खलु जहन्नकम्मं जूयं विउसाण गरहणिज्जं च । जाणियजिणवयणाणं तह एवं विसयसंगोवि॥४८॥
हारेइ खणेण जीओ जूएण चिरज्जियं जहा विहवं । विसयपसत्तो सत्तो तह चेव चिरज्जियं सुकयं॥४९॥
ता वच्छ ! तुज्झ जं किंचि रुचए कुणसु तं वियारेउं । दुच्चरियं तुह होही पुरओ दुहदायगं एयं ॥५०॥
अह दुच्चरियसमज्जियदुक्कम्मसमुत्थभाविदुहभीओ । सो पणिवायपुरस्सरमेवं विन्नविउमाढत्तो ॥५१॥
भयवं ! चिरकालमहं पवंचिओ विसयसुक्खरसरसिओ । नियहियंकरेहिं करणेहिं दारुणेहिं विमूढमणो॥५२॥
संसारवियारगहीरसायरे मज्झ मज्जणं हुंतं । जइ मं न मूढहिययं समुद्धरंतो दयाए तुमं ॥५३॥

---

इत्यादि यावज्जल्पति तावदुत्तरतः सुरत्नपुञ्ज इव । तेजसा तरणिमण्डलमपि तरलयन्मुनिः प्राप्तः ॥४०॥
अभ्युत्थाय द्वावपि पदतः प्रणतौ साधुपादपद्मम् । चारणमुनिना ततो धर्मलाभयित्वा स इदं भणितः ॥४१॥
किं कनकचूड ! एतद् विचेष्टितं शिष्टगर्हितं कार्यम् । मम भ्रातृसुतोऽपि त्वं न लज्जसेऽनार्यकार्येण ॥४२॥
न च तव कुले केनापि कदापि विहिता कलङ्कशङ्कापि । इदानीं पुनस्तव चरितं विपरीतं दृश्यते वत्स ! ॥
विषयपिपासानटित इहैव यद्रमयसि परमहेलाः । तद् नूनं परमहेलया परमहेलया सहसे दुःखम् ॥४४॥
वान्छाविच्छेदः किं कदाचित्संभवति विषयसेवया ? । तृष्णा केवलमधिका वर्धते लवणाम्बुपानेन ॥४५॥
न्यायागता अपि विषया दुःसहदुःखं ददतीति ज्ञात्वा । त्यक्ता धीरैः, त्वं तान्वाञ्छसि पुनरन्यायेन॥४६॥
विषतरुफलमिव विषयां भुज्यन्ते सुखेन मधुरभावेन । दुःखदायकदीर्घमोहसंगमो दुःसहः पुरतः ॥४७॥
यथा खलु जघन्यकर्म द्यूतं विदुषां गर्हणीयं च । ज्ञातजिनवचनानां तथैवं विषयसङ्गोऽपि ॥४८॥
नाशयति क्षणेन जीवो द्यूतेन चिरार्जितं यथा विभवम् । विषयप्रसक्तः सत्त्वस्तथैव चिरार्जितं सुकृतम् ॥४९॥
तस्माद् वत्स ! तव यत्किंचिद्रोचते कुरु तद्विचार्य । दुश्चरितं तव भविष्यति पुरतो दुःखदायकमेतत् ॥५०॥
अथ दुश्चरितसमर्जितदुष्कर्मसमुत्थभाविदुःखभीतः । स प्रणिपातपुरस्सरमेवं विज्ञपयितुमारब्धः ॥५१॥
भगवन् ! चिरकालमहं प्रवञ्चितो विषयसौख्यरसरसिकः । निजाहितकरैः करणैर्दारुणैर्विमूढमनाः ॥५२॥

तो कयपरदारवओ सो उट्टिवि मं खमाविउं भणइ । मह भइणी नं संपइ ता पगु नएमि सट्ठाणं ॥५४॥
तो जंपियं मए तं वच्च अहं पुण इहेव चिट्टिस्सं । नेमित्तिएण कहिओ जम्हा पियसंगमो एत्थ ॥५५॥
तं सोउं नियठाणं संपत्तो संपयं कणयचूडो । चारणमुणीवि मलयद्दिकंदरे चिट्ठए इन्हि ॥५६॥
इय सव्वंपि हु कहियं नियचरियं संपयं तुमं मज्झ । साहसु कुमार ! कत्तो समागओ इत्थ को य तुमं ? ॥
अहव निमित्तियकहणेण इंगिएहिं च तुमं मए नाओ । सो चेव विस्ससेणो मह दइओ पाणअब्भहिओ ॥
ता मं तायसु इन्हिं नियकरकमलेण मह करं गहिउं । सो चिय पमत्थकालो चिंतामणिणा जहिं जोगो ॥
तक्कालोचियविहिणा कुमरो तं परिणेई तयणुरोहा । परपत्थणाए गरुया पिएवि पाणे परिच्चयंति ॥६०॥
तत्तो कुमरीए समं गंतुं मलयद्दिकंदरे विहिणा । चारणमुणिमभिवंदेइ सपरियणो परमविणएणं ॥६१॥
मुणिणावि जहोच्चियसंभमेण सम्माणिओ तओ कुमरो । उवविसइ वसुमईए मुणीवि इय भणइ तयभिमुहं ॥
अणवरयमरणरणरणयरोयसोयाउलम्मि संसारे । जीवाण नत्थि सोक्खं खणंपि किं कुमर ! न मुणेसि ?॥
जं विलससि सिच्छाए निरग्गलं समयमयगलोव्व तुमं । असमं जमं समज्जसु चएसु असमंजसं तह य ॥
असमंजसोववज्जणमिह जायइ सव्वसंगचायाओ । सो उण रागनिरोहा रागनिरोहो य सच्चरणा ॥६५॥
सच्चरणं पुण काउं पारिज्जइ पउणकरणगामेण । करणाण पुणो जायइ पउणत्तं जोव्वणे चेव ॥६६॥
वुड्ढत्ते जीवाणं न पउणभावो हवेइ कइयावि । दुव्वारजरागममज्जरिज्जमाणाण करणाणं ॥६७॥

---

संसारविकारगम्भीरसागरे मम मज्जनमभविष्यत् । यदि मां न मूढहृदयं समुदधारिष्यो दयया त्वम् ॥५३॥
ततः कृतपरदारव्रतः स उत्थाय मां क्षमयित्वा भणति । मम भगिनी त्वं संप्रति तस्मादेहि नयामि स्वस्थानम् ॥
ततो जल्पितं मया त्वं व्रजाहं पुनरिहैव स्थास्यामि । नैमित्तिकेन कथितो यस्मात्प्रियसंगमोऽत्र ॥५५॥
तत् श्रुत्वा निजस्थानं संप्राप्तः सांप्रतं कनकचूडः । चारणमुनिरपि मलयाद्रिकन्दरे तिष्ठतीदानीम् ॥५६॥
इति सर्वमपि हि कथितं निजचरितं सांप्रतं त्वं मम । कथय कुमार ! कुतः समागतोऽत्र कश्च त्वम् ! ॥५७॥
अथवा नैमित्तिककथनेनेङ्गितैश्च त्वं मया ज्ञातः । स एव विश्वसेनो मम दयितः प्राणाभ्यधिकः ॥५८॥
तस्मान्मां त्रायस्वेदानीं निजकरकमलेन मम करं गृहीत्वा । स एव प्रशस्तकालश्चिन्तामणिना यत्र योगः ॥
तत्कालोचितविधिना कुमारस्तां परिणयति तदनुरोधात् । परप्रार्थनया गुरवः प्रियानपि प्राणान्परित्यजन्ति ॥
ततः कुमार्या समं गत्वा मलयाद्रिकन्दरे विधिना । चारणमुनिमभिवन्दते सपरिजनः परमविनयेन ॥६१॥
मुनिनापि यथोचितसंभ्रमेण सम्मानितस्ततः कुमारः । उपविशति वसुमत्यां मुनिरपीति भणति तदभिमुखम् ॥
अनवरतमरणौत्सुक्यरोगशोकाकुले संसारे । जीवानां नास्ति सौख्यं क्षणमपि किं कुमार ! न जानासि ॥६३॥
यद् विलससि स्वेच्छया निरर्गलं समदमदकलवत् त्वम् । असमं यशः समर्जय त्यजासमञ्जसं तथा च ॥६४॥
असमञ्जसोपवर्जनमिह जायते सर्वसङ्गत्यागात् । स पुना रागनिरोधाद् रागनिरोधस्तु सच्चरणात् ॥६५॥
सच्चरणं पुनः कर्तुं शक्यते प्रगुणकरणग्रामेण । करणानां पुनर्जायते प्रगुणत्वं यौवन एव ॥६६॥
वृद्धत्वे जीवानां न प्रगुणभावो भवति कदापि । दुर्वारजरागमजर्जर्यमाणानां करणानाम् ॥६७॥

यालत्ते जीवाणं कज्जाकज्जाइनाणरहियाणं । कह सच्चरणविहाणं जायइ पउणिंदियाणंपि ? ॥६८॥
अपरं च ।
जह जोव्वणम्मि अहमा महंति विसयामिसं जहा पुरिसा । तह सुयणा सिवसुक्खं महिंति विमुहा विसयसुक्खे ॥
इमिणा निबंधणेणं कुमार ! नियकम्मनिहणकयचित्तो । सिवसुहकएण तरुणोवि उज्जमं कुणसु सद्धम्मे ॥
सो उण दुविहो भणिओ जइगिहिभेएण पढमओ तत्थ । कहिओ सवित्थरं तो सम्मत्ताई य गिहिधम्मे ॥
नीसामन्नं सामन्नमग्गमासेविउं अचायंतो । तो गुरुमूले सावयवयाइं गिण्हेइ सो कुमरो ॥७२॥
गुणचंदसोमचंदेहिं संजुओ तह विलासवइयाए । बारसवि विहाणेणं नाऊणं ताण भावत्थं ॥७३॥
बीयं गुणव्वयं पुण कुमरेणं कहवि संकडं गहियं । मित्तकलत्तजुएणवि पवड्ढमाणाए सद्धाए ॥७४॥
जलपत्ताइं मोत्तुं सेससचित्तस्स भोयणे नियमो । कम्मयओ पुण जयणा खरकम्माईण सव्वाण ॥७५॥
दुप्पक्कापक्कासारभक्खणं परिहरेइ परभागे । सच्चेयणं च तप्पडिबद्धं च विसुद्धपरिणामो ॥७६॥
इच्चाइ पवज्जेउं वंदेउं मुणिवरं च जा चलिओ । ताव सुरमिहुणमेगं समागयं मुणिवरं नमिउं ॥७७॥
भणिओ य तेण कुमरो पिच्छणयच्छणं निएसु खणमेगं । इय सुणिऊणं सो जाव चिट्ठए तत्थ तो तेण ॥
लहुउत्तरवेउव्वियदेवीदेवाण बहुयरूवेहिं । पारद्धं पिच्छणयं पिच्छइ अच्छरियभूयंव ॥७९॥
भूयं पणच्चमाणं ताणं मज्झम्मि संझसमवन्नं । कंठे विलग्गिऊणं विलासवइयं इमं भणइ ॥८०॥ –
सत्तमदिणाउ दिट्ठा वच्छे ! तं तुह पियामही अहयं । तुज्झ विओए उब्बंधेउं मया वंतरी जाया ॥८१॥

---

बालत्वे जीवानां कार्याकार्यादिज्ञानरहितानाम् । कथं सच्चरणविधानं जायते प्रगुणेन्द्रियाणामपि ? ॥६८॥
यथा यौवनेऽधमाः काङ्क्षन्ति विषयामिषं यथा पुरुषाः । तथा सुजनाः शिवसौख्यं काङ्क्षन्ति विमुखा विषयसौख्ये ॥
अनेन निबन्धनेन कुमार ! निजकर्मनिघातकृतचित्तः । शिवसौख्यकृते तरुणोऽप्युद्यमं कुरु सद्धर्मे ॥७०॥
स पुनर्द्विविधो भणितो यतिगृहिभेदेन प्रथमतस्तत्र । कथितः सविस्तरं ततः सम्यक्त्वादिश्च गृहिधर्मः॥७१॥
निःसामान्यं श्रामण्यमार्गमासेवितुमशक्नुवन् । ततो गुरुमूले श्रावकव्रतानि गृह्णाति स कुमारः ॥७२॥
गुणचन्द्रसोमचन्द्राभ्यां संयुतस्तथा विलासवत्या । द्वादशापि विधानेन ज्ञात्वा तेषां भावार्थम् ॥७३॥
द्वितीयं गुणव्रतं पुनः कुमारेण कथमपि संकटं गृहीतम् । मित्रकलत्रयुतेनापि प्रवर्धमानया श्रद्धया ॥७४॥
जलपत्राणि मुक्त्वा शेषसचित्तस्य भोजने नियमः । कर्मतः पुनर्यतना खरकर्मादीनां सर्वेषाम् ॥७५॥
दुष्पक्वापक्वासारभक्षणं परिहरति परभागे । सच्चेतनं च तत्प्रतिबद्धं च विशुद्धपरिणामः ॥७६॥
इत्यादि प्रपद्य वन्दित्वा मुनिवरं च यावच्चलितः । तावत्सुरमिथुनमेकं समागतं मुनिवरं नत्वा ॥७७॥
भणितश्च तेन कुमारः प्रेक्षणक्षणं पश्य क्षणमेकम् । इति श्रुत्वा स यावत्तिष्ठति तत्र ततस्तेन ॥७८॥
लघूत्तरविकृतदेवीदेवानां बहुरूपैः । प्रारब्धं प्रेक्षणकं पश्यत्याश्चर्यभूतमिव ॥७९॥
भूतं प्रनृत्यत् तेषां मध्ये संध्यासमवर्णम् । कण्ठे विलग्य विलासवतीमिदं भणति ॥८०॥
सप्तमदिनाद् दृष्टा वत्स ! त्वं तव पितामही अहम् । तव वियोग उद्बध्य मृता व्यन्तरी जाता ॥८१॥

दट्ठूण विभंगेणं इहागया गरुयनेहपडिबद्धा। ता सव्वहा पियावि हु तुह मरिही विरहहयहियओ ॥८२॥
जद्दिवसाओ तं अवहिया सि समगं तु पवसियं तस्स। निद्दाछुहाइयं तह मुया पुणो तक्खणं अहयं ॥८३॥
तम्मि दिणेच्चिय सव्वत्थ निरु गविट्ठावि नोवलद्धा सि। ता तुम्भे सव्वेवि हु चिट्ठह इत्थेव खणमेगं ॥८४॥
जाव अहं रणमल्लं तुह पियरं पुत्ति! इत्थ आणेमि। तो तक्खणेण गंतुं समागया तं गहेऊण ॥८५॥
सो वंदेउं साहुं उवविट्ठो तो कुमारमाईहिं। अभिवंदिओ भणेई विलासवईसम्मुहं एवं ॥८६॥
सव्वोवि मए नाओ जणणीवयणा वइयरो तुज्झ। अह निवपुरंदरोवि हु कुमरगवेसणाए संपत्तो ॥८७॥
रणमल्लाईहिं तओ अब्भुट्ठेऊण वंदिओ राया। मुणिणावि समारद्धा पुणोवि सद्देसणा तेसिं ॥८८॥
"देशादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात। आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः॥"
इच्चाइदेसणंते रणमल्लेणं पुरंदरो भणिओ। एसा मह पाणपिया दुहिया पीईए दट्ठव्वा ॥८९॥
निवरणमल्लो नीओ पुरंदरेणं नियम्मि नयरम्मि। गुणचंदाओ नाउं सव्वं संबंधमाईयं ॥९०॥
देवमिहुणंपि दाउं कुमरवहूणं सुरयणमाहरणं। सट्ठाणे संपत्तं मुणीवि विहरेइ वसुहाए ॥९१॥
कइवयदिणाइं धरिउं सम्माणेउं विसज्जिओ रन्ना। रणमल्लो संपत्तो नियनयरे कुणइ सद्धम्मं ॥९२॥
बीयगुणव्वयरक्खं कुव्वंतो कुणइ विसयपरिभोगं। सिरिविस्ससेणकुमरो सुमरंतो सुगुरुगुरुआणं ॥९३॥
गुणचंदसोमचंदा कालेण गलियसुगुरुउवएसा। बीए गुणव्वयम्मी अइयारे ते कुणंतेवं ॥९४॥
उंबीकणमाईणं हुरडं भुंजेत्तु भुंजए पढमो। अप्पक्के परिभोगं बीओवि हु कुणइ कइयावि ॥९५॥

---

दृष्ट्वा विभङ्गेनेहागता गुरुस्नेहप्रतिबद्धा। तस्मात्सर्वथा पितापि हि तव मरिष्यति विरहहतहृदयः ॥८२॥
यद्दिवसात्त्वमपहृतासि समं तु प्रोषितं तस्य। निद्राक्षुदादिकं तथा मृता पुनस्तत्क्षणमहम् ॥८३॥
तस्मिन्दिन एव सर्वत्र निश्चितं गवेषितापि नोपलब्धासि। तस्माद् यूयं सर्वेऽपि हि तिष्ठतात्रैव क्षणमेकम् ॥८४॥
यावदहं रणमल्लं तव पितरं पुत्रि! अत्रानयामि। ततस्तत्क्षणेन गत्वा समागता तं गृहीत्वा ॥८५॥
स वन्दित्वा साधुमुपविष्टस्ततः कुमारादिभिः। अभिवन्दितो भणति विलासवतीसंमुखमेवम् ॥८६॥
सर्वोऽपि मया ज्ञातो जननीवचनाद् व्यतिकरस्तव। अथ नृपपुरन्दरोऽपि हि कुमारगवेषणया संप्राप्तः ॥८७॥
रणमल्लादिभिस्ततोऽभ्युत्थाय वन्दितो राजा। मुनिनापि समारब्धा पुनरपि सद्देशना तेषाम् ॥८८॥
इत्यादिदेशनान्ते रणमल्लेन पुरन्दरो भणितः। एषा मम प्राणप्रिया दुहिता प्रीत्या द्रष्टव्या ॥८९॥
नृपरणमल्लो नीतः पुरन्दरेण निजे नगरे। गुणचन्द्राज्ज्ञात्वा सर्वं संबन्धादिकम् ॥९०॥
देवमिथुनमपि दत्त्वा कुमारवधूभ्यां सुरत्नमाभरणम्। स्वस्थाने संप्राप्तं मुनिरपि विहरति वसुधायाम् ॥९१॥
कतिपयदिनानि धृत्वा सम्मान्य विसर्जितो राज्ञा। रणमल्लः संप्राप्तो निजनगरे करोति सद्धर्मम् ॥९२॥
द्वितीयगुणव्रतरक्षां कुर्वन् करोति विषयपरिभोगम्। श्रीविश्वसेनकुमारः स्मरन् सुगुरुगुर्वाज्ञाम् ॥९३॥
गुणचन्द्रसोमचन्द्रौ कालेन गलितसुगुरूपदेशौ। द्वितीये गुणव्रतेऽतिचारांस्तौ कुरुत एवम् ॥९४॥
उम्बीकणादीनां समूहं भुक्त्वा भुङ्क्ते प्रथमः। अपक्वे परिभोगं द्वितीयोऽपि हि करोति कदापि ॥९५॥

तो विस्ससेणकुमरो कोमलवाणीए भणइ नाऊण । भो.मित्ता ! नो जुत्तं गुणव्वयं इय कलंकेउं ॥९६॥
अवि उग्गगरलविसहरमुहकुहरे पक्खिवंति नियपाणि । हेलाए हालाहलकवलणपउणा अवि हवंति ॥९७॥
तक्खणपसूयपुल्लीपओहरेसुं सुहं पियंति पयं । अनुकूलीकयपवणे दवदहणमुहे सुयंति वरं ॥९८॥
परिओसेणं पविसंति नक्कचक्काउलं महाजलहिं । रहसेणं परिरंभंति भीसणं तिक्खखरनहरं ॥९९॥
न उणो खणंपि पुरिसा पमायलेसंपि कइयवि कुणंति । पइजम्मजणियदूसहदुहदंदोलीमहाभीमं ॥१००॥
इय अमयबिंदुसंदोहदायगं निसुणिऊण कुमरगिरं । ते दोवि हु बाहुडिया अइयाराणाणकरणम्मि ॥१०१॥

अह अन्नया वसंते विलासवईए ससंभमं कुमरो । भणिओ पिययम ! कीलापरम्मुहो जइवि तं तहवि ॥
मह कोउयं महंतं ता समगं एहि नंदणुज्जाणे । गंतूण कयलिलवलीएलाइवणेसु कीलेमो ॥१०३॥
तो कुमरेणं भणियं पसयच्छि ! न संगयं इमं काउं । तुज्झुवरोहो तहवि हु अवरज्झइ इय भणेऊणं ॥
तीइ समं संचलिओ पत्तो सो नंदणम्मि उज्जाणे । पविसइ जिणभवणंतो भुवणपहुं पूइउं थुणिउं ॥१०५॥
निक्खंतो सो तत्तो पत्तो गहिरम्मि वणनिगुंजम्मि । गुंजंतमहुरमहुयरपरहुयरवभरियनहविवरे ॥१०६॥
कुसुमभरभारभासुरसुरविडविमरट्टभंजणसमत्थो । सच्चविओ तत्थिक्को महातरू सरलसाहालो ॥१०७॥
अविरलगुरुदलमासलियबहलच्छायाए छन्नदेसम्मि । सह पिययमाए कुमरो उवविट्ठो जा पलोएइ ॥१०८॥
तस्सोहं तो सहसा गयणाउ समागओ गुरुयवेगो । एगो उ महव्वइओ रूवस्सी गहियसव्वंगो ॥१०९॥
भासुरजडाकडप्पो घंटाटंकाररेउररवड्ढो । ससिसमकवालपाणी पाणीणं पलयकालोव्व ॥११०॥

---

ततो विश्वसेनकुमारः कोमलवाण्या भणति ज्ञात्वा । भो मित्रे ! नो युक्तं गुणव्रतमिति कलङ्कयितुम् ॥९६॥
अप्युग्रगरलविषधरमुखकुहरे प्रक्षिपन्ति निजपाणिम् । हेलया हालाहलकवलनप्रगुणा अपि भवन्ति ॥९७॥
तत्क्षणप्रसूतव्याघ्रीपयोधरेषु सुखं पिबन्ति पयः । अनुकूलीकृतपवने दवदहनमुखे स्वपन्ति वरम् ॥९८॥
परितोषेण प्रविशन्ति नक्रचक्राकुलं महाजलधिम् । रभसेन परिरभन्ते भीषणं तीक्ष्णखरनखरम् ॥९९॥
न पुनः क्षणमपि पुरुषाः प्रमादलेशमपि कदापि कुर्वन्ति । प्रतिजन्मजनितदुःसहदुःखद्वन्द्वालीमहाभीमम् ॥
इत्यमृतबिन्दुसंदोहदायिकां श्रुत्वा कुमारगिरम् । तौ द्वावपि लज्जितावतिचाराज्ञानकरणे ॥१०१॥

अथान्यदा वसन्ते विलासवत्या ससंभ्रमं कुमारः । भणितः प्रियतम ! क्रीडापराङ्मुखो यद्यपि त्वं तथापि ॥
मम कौतुकं महत् तस्मात्समम् एहि नन्दनोद्याने । गत्वा कदलीलवल्येलादिवनेषु क्रीडावः ॥१०३॥
ततः कुमारेण भणितं मृगाक्षि ! न संगतमिदं कर्तुम् । तवोपरोधस्तथापि ह्यपराध्यतीति भणित्वा ॥१०४॥
तया समं संचलितः प्राप्तः स नन्दन उद्याने । प्रविशति जिनभवनान्तो भुवनप्रभुं पूजयित्वा स्तुत्वा ॥१०५॥
निष्क्रान्तः स ततः प्राप्तो गभीरे वननिकुञ्जे । गुञ्जन्मधुरमधुकरपरभृतरवभृतनभोविवरे ॥१०६॥
कुसुमभरभारभासुरसुरविटपिगर्वभञ्जनसमर्थः । दृष्टस्तत्रैको महातरुः सरलशाखः ॥१०७॥
अविरलगुरुदलमांसलितबहलच्छायया छन्नदेशे । सह प्रियतमया कुमार उपविष्टो यावत्प्रलोकते ॥१०८॥
तस्योर्ध्वं ततः सहसा गगनात्समागतो गुरुवेगः । एकस्तु महाव्रतिको रूपवान् गृहीतसर्वाङ्गः ॥१०९॥

डमडमियडमरुयारावभीसणो पेच्छिऊण सो कुमरं। अणमिसनयणोव्व ठिओ न जंपए किंपि लिहिउव्व ॥
उक्कीलिउव्व परिथंभिउव्व सुन्नुव्व मुक्कजीउव्व। कुमरेण पिया भणिया न होइ पुरिसो इमो, इत्थी ॥
भणियं विलासवईए कहमेयं नाह ! पुरिसरूवधरं। जंपसि रमणीकरणीरहियंपि हु इत्थियं एयं ? ॥११३॥
तो भणियं कुमरेण मयच्छि ! चिट्ठं नियसु एयस्स। तिरिच्छीए नियच्छइ मं पिच्छिवि सेयमुव्वहइ ॥
उव्वहइ बहलपुलयं चरणंगुट्ठेण खणइ खोणियलं। इय चिट्ठं कुणमाणि माणिणि ! मुण भामिणि एयं ॥
विज्जासिद्धिनिमित्तं गहिओ वेसो इमीए इह एसो। जम्हा कीइवि कोविहु विज्जाए साहणोवाओ ॥ ११६॥
इय जा जंपइ कुमरो सा विज्जा तीइ तक्खणं सिद्धा। तो मोत्तुं कावालियवेसं सा इत्थिया जाया ॥११७॥
भणइ य तुह दंसणओ सिद्धा विज्जा कुमार ! सुचिराओ। कप्पद्दुमंव सप्पुरिसदंसणमहवा न किं कुणइ ?॥
तो मह देहं जीयं सव्वं तुम्हाण चेव आयत्तं। गंतूणं वेयड्ढे पियराइं जाव आणेमि ॥११९॥
ताव खणं इत्थेव य चिट्ठसु पाणेस ! मह दयं काउं। तुज्झुवयारकएणं देहं जा देमि ते विहिणा ॥१२०॥
इय भणिऊण गया सा तत्तो पच्छन्नभमिररूवेण। विज्जाहरेण सव्वं निसुयं दिट्ठं च तच्चरियं ॥१२१॥
सो उण पुव्वणुरत्तो छम्मासे तीइ पुट्ठिमणुलग्गो। भमिओ जा तद्दिवसं विज्जासिद्धिं पडिच्छंतो ॥१२२॥
तो सो पउट्ठचित्तो करिरूवेणं कुमारमुक्खिविउं। उप्पइओ आगासे पिच्छंतस्सवि परियणस्स ॥१२३॥
तत्तो विलासवईए पुक्करियं विहुरविरहसद्देण। तो गुणचंदपमुहा पहाविया गहियसियसत्था ॥१२४॥

---

भासुरजटासमूहो घण्टाटङ्कारनूपुररवाढ्यः। शशिसमकपालपाणिः प्राणिनां प्रलयकाल इव ॥११०॥
डमडमितडमरुकारावभीषणो दृष्ट्वा स कुमारम्। अनिमिषनयनवत् स्थितो न जल्पति किमपि लिखितवत् ॥
उत्कीलितवत्परिस्तम्भितवच्छून्यवद् मुक्तजीवितवत्। कुमारेण प्रिया भणिता न भवति पुरुषोऽयं, स्त्री ॥११२॥
भणितं विलासवत्या कथमेनं नाथ ! पुरुषरूपधरम्। जल्पसि रमण्याकाररहितमपि हि स्त्रियमेनम् ? ॥११३॥
ततो भणितं कुमारेण मृगाक्षि ! चेष्टां पश्यैतस्य। तिर्यगक्ष्णा पश्यति मां दृष्ट्वा स्वेदमुद्वहति ॥११४॥
उद्वहति बहुलपुलकं चरणाङ्गुष्ठेन खनति क्षोणितलम्। इति चेष्टां कुर्वाणं मानिनि ! जानीहि भामिनीमेतम् ॥
विद्यासिद्धिनिमित्तं गृहीतो वेषोऽनयेहैषः। यस्मात्कस्या अपि कोऽपि खलु विद्यायाः साधनोपायः ॥११६॥
इति यावज्जल्पति कुमारः सा विद्या तस्यास्तत्क्षणं सिद्धा। ततो मुक्त्वा कापालिकवेषं सा स्त्री जाता ॥११७॥
भणति च तव दर्शनतः सिद्धा विद्या कुमार ! सुचिरात्। कल्पद्रुमवत् सत्पुरुषदर्शनमथवा न किं करोति ? ॥
ततो मम देहो जीवितं सर्वं युष्माकमेवायत्तम्। गत्वा वैताढ्ये पितरौ यावदानयामि ॥११९॥
तावत्क्षणमत्रैव च तिष्ठ प्राणेश ! मम दयां कृत्वा। तवोपकारकृते देहं यावद्ददामि ते विधिना ॥१२०॥
इति भणित्वा गता सा ततः प्रच्छन्नभ्रमितृरूपेण। विद्याधरेण सर्वं श्रुतं दृष्टं च तच्चरितम् ॥१२१॥
स पुनः पूर्वानुरक्तः षण्मासांस्तस्याः पृष्ठमनुलग्नः। भ्रान्तो यावत्तद्दिवसं विद्यासिद्धिं प्रतीच्छन् ॥१२२॥
ततः स प्रद्विष्टचित्तः करिरूपेण कुमारमुत्क्षिप्य। उत्पतित आकाशे पश्यत्यपि परिजने ॥१२३॥
ततो विलासवत्या पूत्कृतं विधुरविरहशब्देन। ततो गुणचन्द्रप्रमुखाः प्रधाविता गृहीतशितशस्त्राः ॥१२४॥

रायावि कहवि नाऊण कुमरवुत्तंतमेइ जा तत्थ । ता पिच्छइ मुच्छाए निमीलियच्छिं विलासवइं ॥१२५॥
तो भणइ य नियपुरिसे भो भो गंधोदयं समाणेउं । तुरियं छंटह एयं तह वीयह तालयंटेण ॥१२६॥
तो तह विहिए पउणा सा जाया तत्थ ता पत्ता । गुणचंदाई सुहडा साहंति निवस्स जह देव ! ॥
कुमरो करिणा गयणे दिट्ठो अम्हेहिं नीयमाणो तो । किं कुणिमो से जं सो अगोयरो अम्हवाणाण ॥
अह सा सह पियरेहिं पत्ता विज्जाहरीवि पुच्छेइ । कत्थ गओ तुम्ह सुओ, कहइ निवो केणवि हडोत्ति॥
तो तीए नायमिणं हरिओ सो तेण पावखयरेण । कहियं च तस्सरूवं पिउणो, सो भणइ नरनाहं ॥
जह सत्तदिणाणंतो तुह पुत्तं निच्छएण आणिस्सं । ता मा खणमवि खेयं कुणसु तुमं वच्चसु सगेहं ॥
सोवि गिहं पइ चलिओ गुणचंदाओ विलासवइदेविं । संधीरंतो पत्तो, खयरोवि कुढावए लग्गो ॥१३२॥
सो दुट्ठो गयणचरो जलनिहिदीवम्मि खिविवि तं कुमरं । गंतूण वेयड्ढे करेइ सामग्गियं पउणं ॥१३३॥
परिणयणत्थं, तत्तो कुमरो दीवम्मि वियरए जाव । वणदेवयव्व तत्थवि दिट्ठा ता भामिणी एगा॥१३४॥
तो पुट्ठा कुमरेणं का सि तुमं किंनिमित्तमिह पत्ता ? । तो मुक्कदीहउण्हसाससुसियाए तीएवि ॥१३५॥
भणियं पुच्छ सुदिव्वं जेणाहं निम्मिया अमियदुक्खा । भुवणपसिद्धम्मि कुले जणिऊण पुणो इहाणीया ॥
इय भणिउं रुयमाणी कुमरेण निवारिउं इमं भणिया । मा कुणसु मणे खेयं परिभावसु दिव्वपरिणामं ॥
उच्चे नीए नीए य उन्नए विहविणो दरिद्दे य । रोरे य राइणोवि य राए रंके कुणइ कम्मं ॥१३८॥
तम्हा कम्मुच्छेए छेए ! तं आयरं कुणसु जेण । न पुणो पुणब्भवो भवदुहाण तुह जायइ कयाई॥१३९॥

---

राजापि कथमपि ज्ञात्वा कुमारवृत्तान्तमेति यावत्तत्र । तावत्पश्यति मूर्च्छया निमीलिताक्षीं विलासवतीम् ॥
ततो भणति च निजपुरुषान् भो भो गन्धोदकं समानीय । त्वरितमुक्षतैतां तथा वीजयत तालवृन्तेन ॥१२६॥
ततस्तथा विहिते प्रगुणा सा जाता तत्र तावत्प्राप्ताः । गुणचन्द्रादयः सुभटाः कथयन्ति नृपस्य यथा देव ! ॥
कुमारः करिणा गगने दृष्टोऽस्माभिर्नीयमानस्ततः । किं कुर्मस्तस्य यत्सोऽगोचरोऽस्मद्बाणानाम् ॥१२८॥
अथ सा सह पितृभ्यां प्राप्ता विद्याधर्यपि पृच्छति । कुत्र गतस्तव सुतः, कथयति नृपः केनापि हृत इति ॥
ततस्तया ज्ञातमिदं हृतः स तेन पापखचरेण । कथितं च तत्स्वरूपं पितुः, स भणति नरनाथम् ॥१३०॥
यथा सप्तदिनानामन्तस्तव पुत्रं निश्चयेनानेष्यामि । तस्मान्मा क्षणमपि खेदं कुरुष्व त्वं व्रज स्वगेहम् ॥१३१॥
सोऽपि गृहं प्रति चलितो गुणचन्द्राद् विलासवतीदेवीम् । संधीरयन् प्राप्तः खचरोऽपि गवेषयितुं लग्नः ॥
स दुष्टो गगनचरो जलनिधिद्वीपे क्षिप्त्वा तं कुमारम् । गत्वा वैताढ्ये करोति सामग्रीं प्रगुणाम् ॥१३३॥
परिणयनार्थं, ततः कुमारो द्वीपे विचरति यावत् । वनदेवतेव तत्रापि दृष्टा तावद् भामिन्येका ॥१३४॥
ततः पृष्टा कुमारेण काऽसि त्वं किंनिमित्तमिह प्राप्ता ? । ततो मुक्तदीर्घोष्णश्वासशुष्कया तयापि ॥१३५॥
भणितं पृच्छ दैवं येनाहं निर्मिताऽमितदुःखा । भुवनप्रसिद्धे कुले जनयित्वा पुनरिहानीता ॥१३६॥
इति भणित्वा रुदती कुमारेण निवार्येदं भणिता । मा कुरु मनसि खेदं परिभावय दिव्यपरिणामम् ॥१३७॥
उच्चान्नीचान् नीचांश्चोन्नतान् विभविनो दरिद्रांश्च । रोरांश्च राज्ञोऽपि च राज्ञो रङ्कान्करोति कर्म ॥१३८॥

इच्चाइदेसणाए सोयं मोयाविया कुमारेण । संठविया ठाणविसंठुलावि गोविव्व गोवेण ॥१४०॥
तो साहिउं पउत्ता परओ चरियं नियं कुमारस्स । जह सिरिनयरनिवासिस्स सेट्ठिणो सोमदेवस्स ॥
तणया हं कणयसिरी परिणीया सालिभद्दनामेणं । तन्नयरवासिणा सायरं च नीया य नियगेहे॥१४२॥
भुंजइ सो विसयसुहं मए समं समहियाणुराएण । भणिया हं तेण पिए ! पिउगेहे नेव गंतव्वं॥१४३॥
एवंति मए भणियं नवरं कइयावि अंबतायाण । आहवणे मोक्कलयं अणुनायाए तए नाह ! ॥१४४॥
तंपि हु न बहु मयं तस्स, अन्नया रयणिअद्धरत्तम्मि । कोवि मए गायंतो निसुओ नियडम्मि गेहम्मि॥
तो भणिओ नियभत्ता मए इमं नाह ! गायणो कोवि । गायइ पणवीसवओ खत्तियकुलसंभवो गोरो ॥
अप्पाऊ अइसुभगो पीवरदेहो न एत्थ संदेहो । गुज्झम्मि मसो असमो परिस्समो तस्स धणुवेए॥१४७॥
इय जाव मए भणियं नाऊणं सरविसेसमत्थाओ । तो तम्मणम्मि जलिओ पबलो ईसानलो सहसा ॥
तो तद्दिणाउ चत्तो संभासोवि हु मए समं तेण । तो चिंतियं मए नणु गुणोवि दोसत्तणं पत्तो॥१४९॥
तद्दिणपभिइंपि इमो समुद्दजत्तासमूसुओ जाओ। तत्तो पियरणुनाओ संचलिओ सोहणदिणम्मि॥१५०॥
अहमवि तस्सुवरोहं विणावि सह तेण पोयमारूढा। रयणीए जलहिमज्झम्मि उट्ठिया विगयनिद्दाहं॥१५१॥
जा देहचिंतठाणं पत्ता जलहिम्मि तेण ता खित्ता । संपत्तफलहखंडा इहागया अज्ज छुहिया हं ॥१५२॥
इय कहिऊण समप्पइ कुमरस्स फलाइं सा सचित्ताइं। ताइं न भुंजइ कुमरो मणम्मि नियमं नियं नाउं॥

---

तस्मात्कर्मोच्छेदे छेके! त्वमादरं कुरु येन । न पुनः पुनर्भवो भवदुःखानां तव जायते कदाचित् ॥१३९॥
इत्यादिदेशनया शोकं मोचिता कुमारेण । संस्थापिता स्थानविसंस्थुलापि गोपीव गोपेन ॥१४०॥
ततः कथयितुं प्रवृत्ता परतश्चरितं निजं कुमारस्य । यथा श्रीनगरनिवासिनः श्रेष्ठिनः सोमदेवस्य ॥१४१॥
तनयाऽहं कनकश्रीः परिणीता शालिभद्रनाम्ना । तन्नगरवासिना सादरं च नीता च निजगेहे ॥१४२॥
भुङ्क्ते स विषयसुखं मया समं समधिकानुरागेण । भणिताऽहं तेन प्रिये ! पितृगेहे नैव गन्तव्यम् ॥१४३॥
एवमिति मया भणितं किन्तु कदाप्यम्बातातयोः । आह्वाने मुत्कलमनुज्ञातायास्तव नाथ ! ॥१४४॥
तदपि हि न बहु मतं तस्य, अन्यदा रजन्यर्धरात्रे । कोऽपि मया गायन् श्रुतो निकटे गेहे ॥१४५॥
ततो भणितो निजभर्ता मयेदं नाथ ! गायनः कोऽपि । गायति पञ्चविंशतिवयाः क्षत्रियकुलसंभवो गौरः ॥
अल्पायुरतिसुभगः पीवरदेहो नात्र संदेहः । गुह्ये तिलोऽसमः परिश्रमस्तस्य धनुर्वेदे ॥१४७॥
इति यावद् मया भणितं ज्ञात्वा स्वरविशेषशास्त्रात् । ततस्तन्मनसि ज्वलितः प्रबल ईर्ष्यानलः सहसा ॥१४८॥
ततस्तद्दिनात् त्यक्तः संभाषोऽपि हि मया समं तेन । ततश्चिन्तितं मया ननु गुणोऽपि दोषत्वं प्राप्तः ॥
तद्दिनप्रभृत्यप्ययं समुद्रयात्रासमुत्सुको जातः । ततः पित्रनुज्ञातः संचलितः शोभनदिने ॥१५०॥
अहमपि तस्योपरोधं विनापि सह तेन पोतमारूढा । रजन्यां जलधिमध्य उत्थिता विगतनिद्राहम् ॥१५१॥
यावद् देहचिन्तास्थानं प्राप्ता जलधौ तेन तावत् क्षिप्ता । संप्राप्तफलकखण्डेहागताऽद्य क्षुधिताहम् ॥१५२॥

---

१ क. ग. चिन्ताठाणं सो देण पणुल्लिऊण इह खित्ता।

तो गुरुअवरोहेणं भणिओ सो तीए कहइ जह मज्झ। मोत्तूण पत्तसलिलं नियमो सचित्तदव्वस्स॥१५४॥
एवं सत्त दिणे सो मणसावि हु वंछए न य सचित्तं। तह देसणाए विहिया बारसवयधारिणी सावि॥१५५॥
तो कयसचित्तनियमा साववासेहिं सत्त दिवसाइं। चिट्ठइ ता पुव्वुत्ता पत्ता विज्जाहरी तत्थ ॥१५६॥
बहुपरिवारसमेया पासइ कुमरं अईव किसकायं। पुरओ य ठिआए खामोयरीए सह किंपि जंपंत॥१५७॥
तो सिरकयकरकमला सा जंपइ तं पइ इमं वयणं। आरुहह विमाणमिणं गच्छामो तुह पुरे जेण ॥१५८॥
निहओ मह ताएणं सो तुह अवयारकारओ खयरो। इय सुणिउं सो जंपइ अहह विरुद्धं कहं विहियं ?॥
कणयसिरीए धम्मोवलंभहेउत्तणेण हं जाओ। जं तेण इहाणीओ सो उवयारी अओ मज्झ ॥१६०॥
अहवा तस्स विकम्मं किंचिवि चिरसंचियं इमं फलियं। इय जंपियावसाणे वणिवहुया कहइ खयरीए॥
जइ अज्ज सत्तमदिणं वट्टइ उववासियस्स कुमरस्स। जम्हा जं वा तं वा न भुंजए एस धीरप्पा॥१६२॥
तो खयरीपरिवारो आणइ फलपत्तकुसुमकंदाइं। ढोएइ कुमरपुरओ पुव्वंव न भुंजए तंपि ॥१६३॥
तो तप्परिवारेणं भुत्ताइं ताइं, धारिओ सहसा। सो सव्वो तो कुमरो मणम्मि एवं विचिंतेइ ॥१६४॥
सो जयइ जए धम्मो जस्स पभावेण आवइसमुद्दं। लंघंति भवे भविणो भाविसुभद्दा य जायंति॥१६५॥
किञ्च।
ते गुरुणो गुणगुरुणो सुहफलतरुणो तमोहदिणमणिणो। जीयंतु जए जेहिं नियमपयाणेण हं धरिओ॥
निव्वडंतं। निविडावइगुरुतरअइवियडअयडसट्टाए। कम्मखडभवाडवीए अडणंपि हु वारियं जेहिं॥१६७॥

---

इति कथयित्वा समर्पयति कुमाराय फलानि सा सचित्तानि। तानि न भुङ्क्ते कुमारो मनसि नियमं निजं ज्ञात्वा॥
ततो गुर्ववरोधेन भणितः स तया कथयति यथा मम। मुक्त्वा पत्रसलिलं नियमः सचित्तद्रव्यस्य ॥१५४॥
एवं सप्त दिनानि स मनसापि हि वाञ्छति न च सचित्तम्। तथा देशनया विहिता द्वादशव्रतधारिणी सापि॥
ततः कृतसचित्तनियमा साप्युपवासैः सप्त दिवसानि। तिष्ठति तावत्पूर्वोक्ता प्राप्ता विद्याधरी तत्र ॥१५६॥
बहुपरिवारसमेता पश्यति कुमारमतीव कृशकायम्। पुरतश्च स्थितया क्षामोदर्या सह किमपि जल्पन्तम्॥
ततः शिरःकृतकरकमला सा जल्पति तं प्रतीदं वचनम्। आरोहत विमानमिदं गच्छामस्तव पुरे येन ॥१५८॥
निहतो मम तातेन स तवापकारकारकः खचरः। इति श्रुत्वा स जल्पत्यहह विरुद्धं कथं विहितम्? ॥१५९॥
कनकश्रिया धर्मोपलम्भहेतुत्वेनाहं जातः। यत्तेनेहानीतः स उपकारी अतो मम ॥१६०॥
अथवा तस्य विकर्म किञ्चिदपि चिरसंचितमिदं फलितम्। इति जल्पितावसाने वणिग्वधूः कथयति खचर्याः॥
यथाऽद्य सप्तमदिनं वर्तते उपोषितस्य कुमारस्य। यस्माद् यद्वा तद्वा न भुङ्क्ते एष धीरात्मा ॥१६२॥
ततः खचरीपरिवार आनयति फलपत्रकुसुमकन्दानि। ढौकते कुमारपुरतः पूर्वमिव न भुङ्क्ते तदपि ॥१६३॥
तत्परिवारेण भुक्तानि तानि, पातितः सहसा। स सर्वस्ततः कुमारो मनस्येवं विचिन्तयति ॥१६४॥
स जयति जगति धर्मो यस्य प्रभावेणापत्समुद्रम्। लङ्घन्ते भवे भविनो भाविसुभद्राश्च जायन्ते ॥१६५॥
ते गुरवो गुणगुरवः शुभफलतरवस्तमओघदिनमणयः। जीयासुर्जगति यैर्नियमप्रदानेनाहं धृतः ॥१६६॥

इय चिंतंते कुमरे खयरी विज्जाए मुणइ जह पढमं । पुव्वुत्तखेयरेण विसेण वासित्तु एयाइं ॥१६८॥
आरोवियाइं इण्हिं ताणं पभावो वियंभिओ एसो । इय निच्छिऊण आणेइ ओसहिं विसविघायकरिं ॥
तो तीए नासिओवरिठवियाए उट्ठिआ इमे सहसा । तो खयरीए कुमरो कणयसिरीए सह विमाणे ॥
आरोविऊण नीओ भोगपुरे गरुयविरहदुहियाण । पणओ पियराण तओ महाविभूईए वीवाहो ॥१७१॥
पारद्धो खयरेहिं तत्तो सा तेण परिणीया खयरी । सुरसुंदरीभिहाणा सुमुणीणवि मोहसंजणणी॥१७२॥
कणयसिरीवि सुनिच्चलचित्ता निच्चंपि सावयवएसु । निवसइ तस्सेव गिहे भइणीए निव्विसेसयरा॥१७३॥
तो समयं नाऊणं राया गिण्हेइ जिणमए दिक्खं। सिरिविस्ससेणकुमरं रज्जे ठविऊण सुहलग्गे ॥१७४॥
सोवि कलत्तदुगेणं सद्धिं भुंजेइ रज्जसिरिमिणहं । सावयवएसु निच्चं अइयारपयंपि रक्खंतो ॥१७५॥
तो कालेणं जाओ विलासवईए सुओ जयाणंदो । बाहत्तरिकलकुसलो कमेण सो जोव्वणं पत्तो ॥१७६॥
सुरसुंदरीए जाया दुहिया पडिपुन्नलक्खणोवेया । इत्तियमित्तकुडुंबं, निअमो सेसस्स तेण कओ ॥१७७॥
रज्जं सुरज्जुबंधो भोगा रोगव्व भवणमभिभवणं । पणइणीओ सप्पिणीओ इय मन्नंतो गमइ कालं ॥
जस्स पयावो आरक्खिओ य मंतीवि नियमइप्पसरो । आणच्चिय चारयबंधणाइ धणियं धणं पुण्णं ॥
अह कहवि कम्मवसओ विलासवईए तणुम्मि गुरुरोगो । संजाओ विज्जेहिवि उवयरिया माउलिंगेण ॥
संजाया नीरोगा तहावि सा भुंजए पइदिणंपि। अब्भासाउ सचित्तं तो रन्ना वारिया एवं ॥१८१॥

---

निपतन् निबिडापद्गुरुतरातिविकटावटगर्ते । कर्कशभचाटव्यामटनमपि हि वारितं यैः ॥१६७॥
इति चिन्तयति कुमारे खचरी विद्यया जानाति यथा प्रथमम् । पूर्वोक्तखेचरेण विषेण वासयित्वैतानि ॥१६८॥
आरोपितानीदानीं तेषां प्रभावो विजृम्भित एषः । इति निश्चित्यानयत्योषधीं विषविघातकरीम् ॥१६९॥
ततस्तया नासिकोपरिस्थापितायामुत्थिता इमे सहसा । ततः खचर्या कुमारः कनकश्रिया सह विमाने ॥१७०॥
आरोप्य नीतो भोगपुरे गुरुविरहदुःखितयोः । प्रणतः पित्रोस्ततो महाविभूत्या वीवाहः ॥१७१॥
प्रारब्धः खचरैस्ततः सा तेन परिणीता खचरी । सुरसुन्दर्यभिधाना सुमुनीनामपि मोहसंजननी ॥१७२॥
कनकश्रीरपि सुनिश्चलचित्ता नित्यमपि श्रावकव्रतेषु । निवसति तस्यैव गृहे भगिन्या निर्विशेषतरा ॥१७३॥
ततः समयं ज्ञात्वा राजा गृह्णाति जिनमते दीक्षाम् । श्रीविश्वसेनकुमारं राज्ये स्थापयित्वा शुभलग्ने ॥१७४॥
सोऽपि कलत्रद्विकेन सार्धं भुङ्क्ते राज्यश्रियमक्षताम् । श्रावकव्रतेषु नित्यमतिचारपदमपि रक्षन् ॥१७५॥
ततः कालेन जातो विलासवत्याः सुतो जगदानन्दः । द्वासप्ततिकलाकुशलः क्रमेण स यौवनं प्राप्तः ॥१७६॥
सुरसुन्दर्यां जाता दुहिता परिपूर्णलक्षणोपेता । एतावन्मात्रकुटुम्बं, नियमः शेषस्य तेन कृतः ॥१७७॥
राज्यं सुरज्जुबन्धुर्भोगा रोगा इव भवनमभिभवनम् । प्रणयिन्यः सर्प्य इति मन्यमानो गमयति कालम् ॥१७८॥
यस्य प्रताप आरक्षिकश्च मन्त्र्यपि निजमतिप्रसरः । आज्ञैव चारकबन्धनानि गाढं धनं पुण्यम् ॥१७९॥
अथ कथमपि कर्मवशतो विलासवत्यास्तनौ गुरुरोगः । संजातो वैद्यैरप्युपचरिता मातुलिङ्गेन ॥१८०॥
संजाता नीरोगा तथापि सा भुङ्क्ते प्रतिदिनमपि । अभ्यासात् सचित्तं ततो राज्ञा वारितैवम् ॥१८१॥

वीयगुणव्वयमेवं मा मा अइयरह कारणेण विणा। संजायगाढगिद्धी कुणइ इमा उत्तरं एवं ॥१८२॥
जइ माउलिंगमहुणा महुणा सह अह कहं न भुंजेमि। तो रोगो मह देहे करेइ पीडं महंतंपि ॥१८३॥
तो भणिया भूवइणा भद्दे! सच्चित्तओसहाईहिं। संजायपडुसरीरा करेसि इय उत्तरमजुत्तं ॥१८४॥
यतः,
एगस्स कए नियजीवियस्स बहुयाउ जीवकोडीओ। जे के ठवंति दुक्खे ताणं किं सासओ अप्पा? ॥
"कृमयो भस्म विष्ठा वा निष्ठा यस्येयमीदृशी। स कायः परपीडाभिः पोष्यतामिति को नयः? ॥
महता पुण्यपण्येन क्रीतेयं कायनौस्त्वया। पारं दुःखोदधेर्गन्तुं त्वर यावन्न भिद्यते ॥"
सुगुरुमुहनिग्गयाणं वयणाणं नियमुहप्पवन्नाण। जं गंजणं विहिज्जइ तं मन्ने मोहमाहप्पं ॥१८६॥
इह लोएवि दुहं चिय परलोए नित्तुलं तु तं होही। गुरुआणाभंगाओ बोहीवि हु दुल्लहा मन्ने ॥१८७॥
इच्चाइदेसणाए विहियाएवि हु न तीइ पडिवयणं। दिन्नं गुरुकम्माए अहह अहो दारुणो मोहो ॥१८८॥
अवहीरिया निवेणं कंदाई सेवए निरग्गलए। रोगेणवि अभिभूया दुहावि गयदिट्ठिया जाया ॥१८९॥
अणुभविउं गुरुदुक्खं मरिऊणं वंतरेसु उववन्ना। भमिऊण भवे लहिही कमेण कम्मक्खया मोक्खं ॥
कणयसिरी वणिदुहिया गहियाणुव्वयगुणव्वया तइया। तस्संसग्गवसेणं सिढिलेइ गुणव्वयं बीयं ॥
अइपक्कअंबयाइं अचित्ताइंति मन्नमाणी सा। सच्चित्तप्पडिबद्धं भुंजइ सच्चित्तकयनियमा ॥१९२॥
तो नाए नरवइणा भणिया करभोरु! किं न जाणासि। करयलकलियजलं पिव गलेइ जं आउयं तह य॥
किं न नियच्छसि पसयच्छि! लच्छिलीलासुहाइं विरसाइं। परिणामदारुणाइं अणंतभवभमणहेऊणि॥

---

द्वितीयगुणव्रतमेवं मा मातिचरत कारणेन विना। संजातगाढगृद्धिः करोतीयमुत्तरमेवम् ॥१८२॥
यदि मातुलिङ्गमधुना मधुना सहाहं कथं न भुञ्जेय। ततो रोगो मम देहे करोति पीडां महतीमपि ॥१८३॥
ततो भणिता भूपतिना भद्रे! सचित्तौषधादिभिः। संजातपटुशरीरा करोषीत्युत्तरमयुक्तम् ॥१८४॥
एकस्य कृते निजजीवितस्य बह्वीर्जीवकोटीः। ये के स्थापयन्ति दुःखे तेषां किं शाश्वत आत्मा? ॥१८५॥
सुगुरुमुखनिर्गतानां वचनानां निजमुखप्रपन्नानाम्। यदवमाननं विधीयते तन्मन्ये मोहमाहात्म्यम् ॥१८६॥
इहलोकेऽपि दुःखमेव परलोके निस्तुलं तु तद् भविष्यति। गुर्वाज्ञाभङ्गाद् बोधिरपि हि दुर्लभो मन्ये ॥१८७॥
इत्यादिदेशनाया विहितायां अपि हि न तया प्रतिवचनम्। दत्तं गुरुकर्मयाऽहह अहो दारुणो मोहः ॥१८८॥
अवधीरिता नृपेण कन्दादीन् सेवते निर्गलान्। रोगेणाप्यभिभूता द्विधापि गतदृष्टिका जाता ॥१८९॥
अनुभूय गुरुदुःखं मृत्वा व्यन्तरेषूपपन्ना। भ्रान्त्वा भवे लप्स्यते क्रमेण कर्मक्षयाद् मोक्षम् ॥१९०॥
कनकश्रीवणिग्दुहिता गृहीताणुव्रतगुणव्रता तदा। तत्संसर्गवशेन शिथिलयति गुणव्रतं द्वितीयम् ॥१९१॥
अतिपक्वाम्रान्यचित्तानीति मन्यमाना सा। सचित्तप्रतिबद्धं भुङ्क्ते कृतसचित्तनियमा ॥१९२॥
ततो ज्ञाते नरपतिना भणिता करभोरु! किं न जानासि। करतलकलितजलमिव गलति यदायुस्तथा च॥१९३॥
किं न पश्यसि मृगाक्षि! लक्ष्मीलीलासुखानि विरसानि। परिणामदारुणान्यनन्तभवभ्रमणहेतून् ॥१९४॥

जो नाम पमायाओ नियमधुरं धरिवि हारए सो उ। तुच्छविसयाण कज्जे कोडीए वराडियं किणइ॥
थेवोवि नियमभंगो भवगुरुदुक्खाइं देइ नियमेण। जह विसलवोवि भुत्तो मरणदुहं देइ देहीण॥१९६॥
सचित्तपडिबद्धे मा गिद्धिं कुणसु सुणसु गुरुवयणं। गुरुकम्मयाए तीइवि न किंचि पच्चुत्तरं दिन्नं॥
अवहीरियाए तीए अप्पडिकंताउ तस्स ठाणाओ। मज्झिमसुरेसुमाउं बद्धं सोहम्मकप्पम्मि॥१९८॥
सुरसुंदरीवि जाया सिढिलियभावा गुणव्वए बीए। तुच्छोसाहिपरिभोगं करेइ निच्चं पमायाओ॥१९९॥
तो नाया भूवइणा भणिया भद्दे! न सुंदरं एयं। पडिवन्नंपि चइज्जइ जइ ताव निरत्थयं जीयं॥२००॥
पडिवज्जंति न धीरा अह पडिवज्जंति निव्वहंते य। वाया फुरइ नराणं तीए विणा हुंति मयकप्पा॥
पडिवन्नो पढमं चिय मह पासे सो गिहत्थवरधम्मो। बीयं गुणव्वयं पुण विसेसओ इय तए गहियं॥
मोत्तूण कुसुमतंबोलपाणियं निययदेहकज्जेण। सेसमसेसंपि तए सच्चित्तं दूरओ चत्तं॥२०३॥
ता कह तं अईयारकलुसियं कुणसि गुणव्वयं बीयं?। नियजीहापडिवन्नं सम्मं पालेसु वयमेयं॥२०४॥
जललवचलम्मि जीए विज्जुलयाभंगुरेसु भोगेसु। सोगवसाणे पियसंगमम्मि न खमं इमं काउं॥२०५॥
सावि गुरुकम्मयाए निवस्स न य किंपि उत्तरं देइ। रसगिद्धिसंनिवाएण रुद्धवाणीव संजाया॥२०६॥
तत्तोऽवहीरियच्चिय रन्ना परिगलियविरइसम्मत्ता। कम्मवसओ तओ सा मरिऊणं वंतरी जाया॥२०७॥
गुणचंदसोमचंदा अप्पडिकंता चएवि देहमिणं। नागेसुं उववन्ना सिज्झिस्संतीह तइयभवे॥२०८॥

---

यो नाम प्रमादाद् नियमधुरां धृत्वा नाशयति स तु। तुच्छविषयाणां कार्ये कोट्या वराटिकां क्रीणाति॥१९५॥
स्तोकोऽपि नियमभङ्गो भवगुरुदुःखानि ददाति नियमेन। यथा विषलवोऽपि मरणदुःखं ददाति देहिनाम्॥
सचित्तप्रतिबद्धे मा गृद्धिं कुरु शृणु गुरुवचनम्। गुरुकर्मया तयापि न किंचित्प्रत्युत्तरं दत्तम्॥१९७॥
अवहीरितया तयाऽप्रतिक्रान्तात् तस्य स्थानात्। मध्यमसुरेष्वायुर्बद्धं सौधर्मकल्पे॥१९८॥
सुरसुन्दर्यपि जाता शिथिलितभावा गुणव्रते द्वितीये। तुच्छौषधीपरिभोगं करोति नित्यं प्रमादात्॥१९९॥
ततो ज्ञाता भूपतिना भणिता भद्रे! न सुन्दरमेतत्। प्रतिपन्नमपि त्यज्यते यदि तदा निरर्थकं जीवितम्॥२००॥
प्रतिपद्यन्ते न धीरा अथ प्रतिपद्यन्ते निर्वहन्ति च। वाक् स्फुरति नराणां तया विना भवन्ति मृतकल्पाः॥
प्रतिपन्नः प्रथममेव मम पार्श्वे स गृहस्थवरधर्मः। द्वितीयं गुणव्रतं पुनर्विशेषत इति त्वया गृहीतम्॥२०२॥
मुक्त्वा कुसुमताम्बूलपानीयं निजदेहकार्येण। शेषमशेषमपि त्वया सचित्तं दूरतस्त्यक्तम्॥२०३॥
तस्मात्कथं त्वमतिचारकलुषितं करोषि गुणव्रतं द्वितीयम्। निजजिह्वाप्रतिपन्नं सम्यक्पालय व्रतमेतत्॥२०४॥
जललवचले जीविते विद्युल्लताभङ्गुरेषु भोगेषु। शोकावसाने प्रियसंगमे न क्षममिदं कर्तुम्॥२०५॥
सापि गुरुकर्मतया नृपस्य न च किमप्युत्तरं ददाति। रसगृद्धिसंनिपातेन रुद्धवाणीव संजाता॥२०६॥
ततोऽवहीरितैव राज्ञा परिगलितविरतिसम्यक्त्वा। कर्मवशतस्ततः सा मृत्वा व्यन्तरी जाता॥२०७॥
गुणचन्द्रसोमचन्द्रावप्रतिक्रान्तौ त्यक्त्वा देहमिमम्। नागेषूपपन्नौ सेत्स्यत इह तृतीयभवे॥२०८॥

अह विस्ससेणराया धम्मम्मि समुज्जओ गमइ कालं । तो केणवि निसीहे पढिया गाहा इमा तत्थ ॥२०९॥
मुचंति रज्जुबद्धा संकलबद्धा य नियलबद्धा य । नेहनियडेसु बद्धा भवकोडिगया किलिस्संति ॥२१०॥
अवहारिऊण गाहत्थमेस भावेइ नियमणे एवं । मा जीव ! कत्थवि तुमं पडिबंधं कुणसु इइ मुणिउं ॥
रे जीव ! लालसमणो रज्जाइसु मा हविज्ज ईसिंपि । जाणंतो एयाणं अवसाणं दारुणविवागं ॥२१२॥
आईमज्झवसाणं जारिसयं तारिसंपि जीव ! तुमं । परिभावसु सुहुमाए बुद्धीए धम्म-रज्जाण ॥२१३॥
एगं एगंतसुहं बीयं एगंतदुहयरं चेव । गरुओवि किर विसेसो जाणिज्जइ निरु विवेईहिं ॥२१४॥
मोहविमूढा पुरिसा रज्जसुहेहिंपि चेलविज्जंति । दीसंतमणहरेहिं धणियं परमत्थविरसेहिं ॥२१५॥
इच्चाइ चिंतयंतो ताव ठिओ जाव उग्गओ सूरो । आवस्सयाइ काउं अत्थाणसहाए उवविट्ठो ॥२१६॥
आहूया सचिवाई कहियं तेसिं जहा जलंतस्स । गेहस्स मज्झयारे सुत्तम्मि य वल्लहे दुलहे ॥२१७॥
निद्दक्खए विबुद्धो जइ सो नीहरइ तस्स मज्झाओ । तो किं धारेयव्वो सुयणेहिं बलावि बाहाहिं ? ॥
कायव्वं किं अव्वो ! साहह निसुयं विभाविउं चित्ते । तेहिं भणियं नरेसर ! बालोवि वियाणए एयं ॥
नीहरियव्वो सुयणेहिं वल्लहो निरु पमत्तसुत्तोवि । किं पुण सयंपबुद्धो तह य सयं नीहरंतो वा ॥२२०॥
पज्जलियगिहाहिंतो, इहरा ते वल्लहावि य न हुंति । तो भणियं भूवइणा जइ एवं तो निसामेह ॥२२१॥
भवगिहमज्झम्मि पमायजलणजलियम्मि मोहनिद्दाए । मं सुत्तं जो इह उट्ठवेइ न निवारियव्वो सो॥२२२॥
इय जाव किंपि भणिहंति ताव पडिहारसूइओ पत्तो । उज्जाणपालपुरिसो विन्नवइ निवं नमिवि एवं॥

---

अथ विश्वसेनराजो धर्मे समुद्यतो गमयति कालम् । ततः केनापि निशीथे पठिता गाथेयं तत्र ॥२०९॥
मुच्यन्ते रज्जुबद्धाः शृङ्खलबद्धाश्च निगडबद्धाश्च । स्नेहनिगडैर्बद्धा भवकोटिगताः क्लिश्यन्ति ॥२१०॥
अवधार्य गाथार्थमेष भावयति निजमनस्येवम् । मा जीव ! कुत्रापि त्वं प्रतिबन्धं कुरुष्वेति ज्ञात्वा ॥२११॥
रे जीव ! लालसमना राज्यादिषु मा भवेरीषदपि । जानन्नेतेषामवसानं दारुणविपाकम् ॥२१२॥
आदिमध्यावसानं यादृशं तादृशमपि जीव ! त्वम् । परिभावय सूक्ष्मया बुद्धया धर्म-राज्ययोः ॥२१३॥
एकमेकान्तसुखं द्वितीयमेकान्तदुःखतरमेव । गुरुरपि किल विशेषो ज्ञायते निश्चितं विवेकिभिः ॥२१४॥
मोहविमूढाः पुरुषा राज्यसुखैरपि वञ्च्यन्ते । दृश्यमानमनोहरैर्गाढं परमार्थविरसैः ॥२१५॥
इत्यादि चिन्तयंस्तावत् स्थितो यावदुद्गतः सूरः । आवश्यकादि कृत्वाऽऽस्थानसभायामुपविष्टः ॥२१६॥
आहूताः सचिवादयः कथितं तेषां यथा ज्वलतः । गेहस्य मध्ये सुप्ते च वल्लभे दुर्लभे ॥२१७॥
निद्राक्षये विबुद्धो यदि स निस्सरति तस्य मध्यात् । ततः किं धारयितव्यः स्वजनैर्बलादपि बाहुभिः?॥२१८॥
कर्तव्यं किं हन्त ! कथयत निभृतं विभाव्य चित्ते । तैर्भणितं नरेश्वर ! बालोऽपि विजानात्येतद् ॥२१९॥
निःसारयितव्यः स्वजनैर्वल्लभो निश्चितं प्रमत्तसुप्तोऽपि । किं पुनः स्वयं प्रबुद्धस्तथा च स्वयं निस्सरन् वा ॥
प्रज्वलितगृहात्, इतरथा ते वल्लभा अपि च न भवन्ति । ततो भणितं भूपतिना यद्येवं ततो निशामयत ॥
भवगृहमध्ये प्रमादज्वलनज्वलिते मोहनिद्रया । मां सुप्तं य इहोत्थापयति न निवारयितव्यः सः ॥२२२॥

सिरिनेमिचंदसूरी सुभद्दए उदयसेहरुज्जाणे । चउनाणी संपत्तो सुपत्तमुणिसंगओ सुगओ ॥२२४॥
तो तुट्ठेणं रन्ना नियंगलग्गं समग्गमाभरणं । तस्स विइन्नं महसा समुट्ठिओ सूरिनमणत्थं ॥२२५॥
सूरिचरणारविंदं वंदेउं देसणं च सुणिऊण । रज्जम्मि जयाणंदं कुमरं ठावेइ गिहपत्तो ॥२२६॥
उच्छप्पणापुरस्सरमिह राया सूरिपायपासम्मि । गिण्हइ दिक्खं सिक्खादुगं च तह जाइ मोक्खेवि ॥
भज्जाउ विहरिऊणं भवम्मि भीमम्मि जिणमयं पप्प । कइवयभवाण मज्झे सिज्झिस्संतीह धुयकम्मा ॥
तो जह इमिणा निवपुंगवेण बीयं गुणव्वयं धरियं । अइविसमसंकडम्मिवि अक्खलियं जावजीवंपि ॥
तह अन्नेहिवि भव्वेहिं भाविमड्डेहिं देहनिरवेक्खं । पालेयव्वो नियमो नियमा कंठट्ठियजिएहिं ॥२३०॥

॥ इति भोगपरिभोगव्रते विश्वसेनकुमारकथानकं पञ्चातिचारकथासमन्वितं समाप्तम् ॥

---

इति यावत्किमपि भणिष्यन्ति तावत्प्रतिहारसूचितः प्राप्तः । उद्यानपालपुरुषो विज्ञपयति नृपं नत्वैवम् ॥२२३॥
श्रीनेमिचन्द्रसूरिः सुभद्र उदयशेखरोद्याने । चतुर्ज्ञानः संप्राप्तः सुपात्रमुनिसंगतः सुगतः ॥२२४॥
ततस्तुष्टेन राज्ञा निजाङ्गलग्नं समग्रमाभरणम् । तस्मै वितीर्णं महसा समुत्थितः सूरिनमनार्थम् ॥२२५॥
सूरिचरणारविन्दं वन्दित्वा देशनां च श्रुत्वा । राज्ये जयदानन्दं कुमारं स्थापयति गृहप्राप्तः ॥२२६॥
उत्सर्पणापुरस्सरमिह राजा सूरिपादपार्श्वे । गृह्णाति दीक्षां शिक्षाद्विकं च तथा याति मोक्षेऽपि ॥२२७॥
भार्ये विहृत्य भवे भीमे जिनमतं प्राप्य । कतिपयभवानां मध्ये सेत्स्यत इह धुतकर्मे ॥२२८॥
ततो यथाऽनेन नृपपुङ्गवेन द्वितीयं गुणव्रतं धृतम् । अतिविषमसंकटेऽप्यस्खलितं यावज्जीवमपि ॥२२९॥
तथान्यैरपि भव्यैर्भाविमड्डैर्देहनिरपेक्षम् । पालयितव्यो नियमो नियमात्कण्ठस्थितजीवितैः ॥२३०॥



तह वीयगुणव्वयधारिणा ओ विदलं सगोरसं वज्जं । भोअणओ महुमंसं राइभत्तं च सव्वेहिं ॥१॥
जे उण राईभत्तं चयंति दत्तोव्व मुणिवि मुणिवयणं । ते इह भवंतरेसुवि हवंति सुहिणो सयाकालं ॥२॥
तथाहि :--
सुपयासओ सगोवो बहुवणसंडो सुवच्छसच्छाओ । अत्थि सुरट्ठा देसो घोसोव्व सुतित्थकयसोहो ॥३॥
तत्थत्थि धणसमिद्धं गिरिनयरं नाम पट्टणं तम्मि । राया रिउबलमहणो महणो नामेण सुपसिद्धो ॥४॥
तह य महेसरदत्तो सिट्ठी निवसिसु पउरधणकलिओ । ललिया तस्सत्थि पिया दत्तो नामेण ताण सुओ॥
दुल्ललियगोट्ठिखित्तो पियरेहिं वियरए पइपुरंपि । विलसइ वेसाण गिहे विविहविलासेहिं दुल्ललिओ॥६॥
पियइ सुरं तह सरयं सुरयपसत्तो गमेइ दियहाइं । अह अन्नया गओ सो उज्जाणीए सपरिवारो ॥७॥
महुमंडगमोयगमंडियाण इड्डरियगुंदवडयाणं । गुरुगड्डीओ भरिउं वडयकरंबाण य तहेव ॥ ८ ॥
वीणावेणुपवीणं सुपाउलं समगमेव आणेइ । तो गरुयगहिरसरसीतडम्मि दाऊणमावासं ॥ ९ ॥
जा गंतुं कयलिहरे पारद्धं पिच्छणं तहिं ताव । तन्नासाए पविट्ठो कत्तोवि हु दुरहिमलगंधो ॥१०॥
दत्तावहाणचित्तो जाव य पुच्छेइ परियणं एसो । कत्तो समेइ गंधो समुद्धुरो दुद्धरो घणियं ॥११॥
तो परियणमज्झाओ एगो गंधाणुसारओ तत्थ । जा गच्छइ वणमज्झे ता पिच्छइ मुणिवरं एक्कं॥१२॥
निप्पडिकम्मसरीरं निविट्ठदिट्ठिं दिणिदबिंबम्मि । कयउद्धबाहुजुयलेण देसयंतंव सिवमग्गं ॥१३॥
घणरोमकूवउल्लसियसमलबहुसेयसलिलधाराहिं । पावमलंव झरंतं तवग्गितवियाउ देहाउ ॥१४॥

---

तथा द्वितीयगुणव्रतधारिणा तु द्विदलं सगोरसं वर्ज्यम् । भोजनतो मधुमांसं रात्रिभक्तं च सर्वैः ॥१॥
ये पुना रात्रिभक्तं त्यजन्ति दत्तवज्ज्ञात्वा मुनिवचनम् । त इह भवान्तरेष्वपि भवन्ति सुखिनः सदाकालम्॥

सुप्रजाशतः (सुपयआशकः) सगोपो बहुवनषण्डः सुवृक्ष ( सुवत्स ) सच्छायः ।
अस्ति सुराष्ट्रा देशो घोष इव सुतीर्थकृतशोभः ॥ ३ ॥

तत्रास्ति धनसमृद्धं गिरिनगरं नाम पत्तनं तस्मिन् । राजा रिपुबलमथनो मथनो नाम्ना सुप्रसिद्धः ॥ ४ ॥
तथा च महेश्वरदत्तः श्रेष्ठी न्यवसत्प्रचुरधनकलितः । ललिता तस्यास्ति प्रिया दत्तो नाम्ना तयोः सुतः ॥५॥
दुर्ललितगोष्ठीक्षिप्तः पितृभ्यां विचरति प्रतिपुरमपि । विलसति वेश्यानां गृहे विविधविलासैर्दुर्ललितः ॥६॥
पिबति सुरां तथा सरकं सुरतप्रसक्तो गमयति दिवसानि । अथान्यदा गतः स औद्यान्यां सपरिवारः॥७॥
मधुमण्डकमोदकमण्डितानामिड्डरिकगुन्द्रवटकानाम् । गुरुशकटानि भृत्वा वटककरम्बयोश्च तथैव॥८॥
वीणावेणुप्रवीणं सुगायनवृन्दं सममेवानयति । ततो गुरुगभीरसरसीतटे दत्त्वाऽऽवासम् ॥ ९ ॥
यावद् गत्वा कदलीगृहे मारब्धं प्रेक्षणं तत्र तावत् । तन्नासायां प्रविष्टः कुतोऽपि हि दुरभिमलगन्धः ॥१०॥
दत्तावधानचित्तो यावच्च पृच्छति परिजनमेषः । कुतः समेति गन्धः समुद्धुरो दुर्धरो गाढम् ? ॥ ११ ॥
ततः परिजनमध्यादेको गन्धानुसारतस्तत्र । यावद् गच्छति वनमध्ये तावत्पश्यति मुनिवरमेकम् ॥१२॥
निष्प्रतिकर्मशरीरं निविष्टदृष्टिं दिनेन्द्रबिम्बे । कृतोर्ध्वबाहुयुगलेन देशयन्तमिव शिवमार्गम् ॥ १३ ॥

उक्कडगंधं उत्ततकणयवन्नं अणंगसमरूवं । तं दट्ठुं विम्हइओ सो गंतुं कहइ दत्तस्स ॥ १५ ॥
सव्वं तं वुत्तंतं तो सो तोसेण जाइ मुणिपासे । पासइ पसंतरूवं तं साहुं वंदइ समित्तो ॥ १६ ॥
तेणवि झाणं मुत्तुं दाऊणं धम्मलाभमिय भणिओ । किं दत्त ! दत्तहत्थो धम्मस्स भमेसि भयरहिओ ? ॥
यतः,

"सत्यं मनोरमाः कामाः सत्यं रम्या विभूतयः । किन्तु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम् ॥
लक्ष्मीलताकुठारस्य भोगाम्भोदनभस्वतः । शृङ्गारवनदावस्य को हि कालस्य विस्मृतः" ? ॥

पवणपइल्लिरजलनिहितरंगरंगंतवेविरंगस्स । अणुहरइ नवरि ससिणो जीयं तरलत्तणगुणेण ॥१८॥
जरकोट्ठसासहिक्कासिरवियणविसूइयाइरोगेहिं । आइड्ढिज्जइ जीयं कयंतपासेहिंव सयावि ॥१९॥
घडियामुहुत्तपहरद्धमाससमासाइसाहिखंडेहिं । परिसडइ जुन्नरुक्खुव्व देहिणो जीवियत्थंबो ॥२०॥
इय एरिसम्मि जीए विलससि सिच्छाइ पियसि मज्जमहुं । जं दत्त ! तुमं तं तुह सुकुलुप्पन्नस्स न हु जुत्तं ॥
तह भुंजसि रयणीए खिल्लसि जूयं रमेसि वेसाणं । धम्मस्स पुणो वत्तंपि नेय पुच्छेसि कइयावि॥२२॥
तो भणियं दत्तेणं को दोसो मज्जपाणयाईसु ? । कहसु पसिऊण जेणं चएमि, तो साहए साहू ॥२३॥
भुवणोयरम्मि नित्थामयाए सव्वेवि जे अणायारा । ते मत्तवालयं अल्लियंति लहु एक्ककालंपि ॥२४॥
अणहिगयसरूवाइं कज्जाकज्जाइं जेण नज्जंति । तं हीरइ विन्नाणं मज्जेण, धिरत्थु मज्जस्स ॥२५॥
इत्थत्थे दिट्ठंतं सुणेहि दो बंधुणो पुरे कम्मि । निवसिंसु, तओ जिट्ठो मओ य कालेण तब्भज्जा॥२६॥

---

घनरोमकूपोल्लसितसमलबहुस्वेदसलिलधाराभिः । पापमलमिव झरन्तं तपोऽग्नितप्ताद् देहात् ॥१४॥
उत्कटगन्धमुत्तप्तकनकवर्णमनङ्गसमरूपम् । तं दृष्ट्वा विस्मयितः स गत्वा कथयति दत्ताय ॥१५॥
सर्वं तं वृत्तान्तं ततः स तोषेण याति मुनिपार्श्वे । पश्यति प्रशान्तरूपं तं साधुं वन्दते समित्रः ॥१६॥
तेनापि ध्यानं मुक्त्वा दत्त्वा धर्मलाभमिति भणितः । किं दत्त ! दत्तहस्तो धर्मे भ्रमसि भयरहितः ? ॥१७॥
पवनप्रचलितृजलनिधितरङ्गरङ्गद्वेपित्राङ्गम् । अनुहरते केवलं शशिनं जीवितं तरलत्वगुणेन ॥१८॥
जराकोष्ठश्वासहिक्काशिरोवेदनाविसूचिकादिरोगैः । आकृष्यते जीवितं कृतान्तपाशैरिव सदापि ॥१९॥
घटिकामुहूर्तप्रहरार्धमासमासादिशाखिखण्डैः । परिशटति जीर्णवृक्षवद् देहिनो जीवितस्तम्भः ॥२०॥
ईदृशे जीविते विलससि स्वेच्छया पिबसि मद्यमधु । यद्दत्त ! त्वं तत्तव सुकुलोत्पन्नस्य न खलु युक्तम् ॥
तथा भुङ्क्षे रजन्यां रमसे द्यूतं रमयसि वेश्याः । धर्मस्य पुनर्वार्तामपि नैव पृच्छसि कदापि ॥२२॥
ततो भणितं दत्तेन को दोषो मद्यपानकादिषु ? । कथय प्रसद्य येन त्यजामि, ततः कथयति साधुः ॥२३॥
भुवनोदरे निःस्थामतया सर्वेऽपि येऽनाचाराः । ते मत्तवालमुपसर्पन्ति लघ्वेककालमपि ॥२४॥
अनधिगतस्वरूपाणि कार्याकार्याणि येन ज्ञायन्ते । तद् ह्रियते विज्ञानं मद्येन, धिगस्तु मद्यम् ॥२५॥
अत्रार्थे दृष्टान्तं शृणु द्वौ बन्धू पुरे कस्मिन् । न्यवात्सातां, ततो ज्येष्ठो मृतश्च, कालेन तद्भार्या ॥२६॥

---

१ ह. ग. °हरा । २ ह. ग. °थंभ अंखिड़हैं ।

अणुरत्ता य कणिट्ठे तं पइ जंपेइ मयणसरविहुरा । तं चिय सरणं देवर ! भुंजसु-भोए मए सद्धिं ॥२७॥
तो तेणं पडिभणियं आ अम्मोसं तयं इमं पावं । गुरुबंधुणो य भज्जा जणणीतुल्ला जणे भणिया ॥२८॥
ता मा सुमिणेवि तुमं पावं चिंतेसु एरिसं अव्वो ! । इहपरलोयविरुद्धं निद्धंधसचिट्ठियमणिट्ठं ॥२९॥
तं सोउं सा काऊण गंगलिं गलियगुणलवा गेहे । कम्माइं कुणइ तीसे कयं च बहु मन्नए एसो ॥३०॥
इय काले वचंते कयाइ कयकइयवा गिहस्संतो । चिट्ठइ मंचयपडिया नय तत्तिं कुणइ गेहस्स ॥३१॥
तो बाहिराउ दियरो समागओ तं न पिच्छए तत्तो । पुच्छइ गिहिणिं कह तुह न दीसए इत्थ जिट्ठाणी ? ॥
तो सा साहइ जं सा अपडुसरीरा सिरस्स वियणाए । चिट्ठइ गिहस्स मज्झे सुत्ता सिज्जाए दुक्खत्ता ॥
तो संभंतो एसो करेइ सद्दं दुवारदेसम्मि । उग्घाडेसु कवाडे कुसलं तुह जेण पुच्छामि ॥ ३४ ॥
उग्घाडिऊण दारं मज्झपविट्ठस्स तस्स सा पुणवि । देइ दुवारं गाढं भुयग्गलं तह पयच्छेइ ॥ ३५ ॥
थालीठइयपईवं पयडइ पुव्वाणियं च सुरमंसं । ढोएइ तस्स पुरओ भणेइ मंसं च मज्जं च ॥ ३६ ॥
एयाणं एगयरं उवभुंजसु नत्थि अन्नहा मोक्खो । तो संकडम्मि पडिओ एवं दियरो वियक्केइ ॥३७॥
एसा जणणीतुल्ला जेणं जिट्ठस्स बंधुणो भज्जा । मंसस्सवि भक्खणयं न खमं एयं विसिट्ठाण ॥३८॥
जओ,
विलसावणयमभक्खं दुग्गंधिमलाविलं वसालिद्धं । जीववहसंकिलिट्ठं निसायरासेवियं मंसं ॥ ३९ ॥
जो असइ मंसपेसिं करगहियं तोडिऊण दंतेहिं । सो सुणउव्व अछिप्पो कुलग्गयाणं, न उण पुरिसो ॥

---

अनुरक्ता च कनिष्ठे तं प्रति जल्पति मदनशरविधुरा । त्वमेव शरणं देवर ! भुङ्क्ष्व-भोगान् मया सार्धम् ॥
ततस्तेन प्रतिभणितमा अमर्ष्यं तदिदं पापम् । गुरुबन्धोश्च भार्या जननीतुल्या जने भणिता ॥२८॥
तस्माद् मा स्वप्नेऽपि त्वं पापं चिन्तयेदृशं हन्त ! । इहपरलोकविरुद्धं निष्ठुरचेष्टितमनिष्टम् ॥२९॥
तत् श्रुत्वा सा कृत्वा तूष्णीं गलितगुणलवा गेहे । कर्माणि करोति तया कृतं च बहु मन्यत एषः ॥३०॥
इति काले व्रजति कदाचित्कृतकैतवा गृहस्यान्तः । तिष्ठति मञ्चपतिता न च चिन्तां करोति गेहस्य॥३१॥
ततो बहिष्टो देवरः समागतस्तां न पश्यति ततः । पृच्छति गृहिणीं कथं तव न दृश्यतेऽत्र ज्येष्ठा ? ॥३२॥
ततः सा कथयति यत्साऽपटुशरीरा शिरसो वेदनया । तिष्ठति गृहस्य मध्ये सुप्ता शय्यायां दुःखार्त्ता ॥३३॥
ततः संभ्रान्त एष करोति शब्दं द्वारदेशे । उद्घाटय कपाटौ कुशलं तव येन पृच्छामि ॥ ३४ ॥
उद्घाट्य द्वारं मध्यप्रविष्टे तस्मिन् सा पुनरपि । ददाति द्वारं गाढं भुजार्गलां तथा प्रयच्छति ॥ ३५ ॥
स्थालीस्थगितप्रदीपं प्रकटयति पूर्वानीतं च सुरमांसम् । ढौकयति तस्य पुरतो भणति मांसं च मद्यं च ॥३६॥
एतयोरेकतरमुपभुङ्क्ष्व नास्त्यन्यथा मोक्षः । ततः संकटे पतित एवं देवरो वितर्कयति ॥३७॥
एषा जननीतुल्या येन ज्येष्ठस्य बन्धोर्भार्या । मांसस्यापि भक्षणं न क्षममेतद् विशिष्टानाम् ॥३८॥
यतः,
विलासकमभक्ष्यं दुर्गन्धिमलाविलं वसारिलष्टम् । जीववधसंक्लिष्टं निशाचरासेवितं मांसम् ॥ ३९ ॥

मज्जं पुण कसिणजलं कणकट्ठसमुब्भवं न दोसिल्लं । ता अवियप्पं पिज्जइ विउसेहिवि आरनालंव ॥४१॥
इय चिंतिऊण भणियं पायसु मज्जं मयच्छि ! लहुमेव । गच्छामि जेण लोओ भणिस्सइ किंपि अलियंपि ॥
जणणीएवि हु सद्धिं रहम्मि जंपंतयस्स अववाओ । जायइ, किं पुण मयभिभलाए तुमए समं नेय ?॥
तो तीए उट्टेउं करे करेऊण करविंय समयं । तह पाइओ जहिच्छं मज्जं जह घुमिउं लग्गो ॥ ४४॥
नय चेयइ किंपि तओ रमिओ सो तीए पोढमहिलाए । असियं मंसंपि तओ जाओऽणत्थाण पत्थारो॥
ता दत्त ! दत्तदोसं मज्जं वज्जसु अवज्जसयमूलं । जूयस्सवि दिट्ठंतं सुणसु तुमं अवहिओ होउं ॥

इह कुसुमपुरे नयरे धणसेट्ठिसुओ सुदंसणो आसि । सव्वकलापत्तट्ठो अइवसणी जूयविसयम्मि ॥४७॥
नीहारियाओ कणयस्स दोन्नि कोडीओ पिउगिहा तेण । लच्छीपडिहत्थाइं कयाइं जूयारिगिहाइं ॥
तो पिउणा कालेणं फालत्तखरिओ तहावि तज्जणणी । सिट्ठिदिट्ठिं पवंचिवि अप्पइ से किंचि आहरणं॥
अह कहियं तं केणवि धणस्स तो तेण सा गिहे भिन्ने । निब्भच्छिऊण ठविया निव्वाहं किंपि दाउं च ॥
तो अन्नदिणे तणएण तेण बहु हारियं हयासेण । गाढं गहिओ जूयारिएहिं खित्तो य खड्डाए ॥५१॥
कहियं तज्जणणीए केणवि एयं तओ य रुयमाणी । पत्ता ताण सगासं गासंपि अकाउमइवेगा ॥५२॥
पुट्ठो य तीए सहिओ कित्तियदव्वेण छुट्टए एसो? । तेणवि भणियं सिट्ठिणि ! मुच्चइ लक्खेण कणयस्स ॥
तो तीए संलत्तं तं पइ दूरेण संपया पत्ता । सिट्ठिगिहेवि न[1] विज्जइ भोयणमित्तंपि तस्सेव ॥५४॥

---

योऽश्नाति मांसपेशीं करगृहीतां त्रोटयित्वा दन्तैः । स शुनक इवास्मरयः कुलोद्गतानां, न पुनः पुरुषः ॥
मद्यं पुनः कृष्णजलं कणकाष्ठसमुद्भवं न दोषवत् । तस्मादविकल्पं पीयते विद्वद्भिरप्यारनालमिव ॥४१॥
इति चिन्तयित्वा भणितं पायय मद्यं मृगाक्षि ! लघ्वेव । गच्छामि येन लोको भणिष्यति किमप्यलीकमपि॥
जनन्यापि हि सार्धं रहसि जल्पतोऽपवादः । जायते,किं पुनर्मदविह्वलया त्वया समं नैव ? ॥४३॥
ततस्तयोत्थाय करे कृत्वा करविकां समम् । तथा पायितो यथेच्छं मद्यं यथा घूर्णयितुं लग्नः ॥ ४४ ॥
न च चेतति किमपि ततो रमितः स तया प्रौढमहिलया । अशितं मांसमपि ततो जातोऽनर्थानां प्रस्तरः ॥
तस्माद् दत्त ! दत्तदोषं मद्यं वर्जयावद्यशतमूलम् । द्यूतस्यापि दृष्टान्तं शृणु त्वमवहितो भूत्वा ॥ ४६ ॥

इह कुसुमपुरे नगरे धनश्रेष्ठिसुतः सुदर्शन आसीत् । सर्वकलासुन्दरोऽतिव्यसनी द्यूतविषये ॥४७॥
निर्वासिते कनकस्य द्वे कोटी पितृगृहात्तेन । लक्ष्मीपूर्णानि कृतानि द्यूतकारिगृहाणि ॥ ४८ ॥
ततः पित्रा कालेनोपालब्धस्तथापि तज्जननी । श्रेष्ठिदृष्टिं प्रवञ्च्यार्पयति तस्मै किञ्चिदाभरणम् ॥ ४९ ॥
अथ कथितं तत्केनापि धनस्य ततस्तेन सा गृहे भिन्ने । निर्भर्त्स्य स्थापिता निर्वाहं कमपि दत्त्वा च ॥५०॥
ततोऽन्यदिने तनयेन तेन बहु हारितं हताशेन । गाढं गृहीतो द्यूतकारिभिः क्षिप्तश्च गर्तायाम् ॥ ५१ ॥
कथितं तज्जनन्याः केनाप्येतत्ततश्च रुदती । प्राप्ता तेषां सकाशं ग्रासमप्यकृत्वाऽतिवेगात् ॥ ५२ ॥
पृष्टश्च तया पुरस्कृतः कियद्द्रव्येण छुट्यत एषः ? । तेनापि भणितं श्रेष्ठिनि ! मुच्यते लक्षेण कनकस्य ॥

---

[1] न दि॰ ।

तो मं उल्ले धरिऊण मुयइ एयंति तीए संलत्ते । सहिएणं सा गहिया मुक्को नीहारिउं पुत्तो ॥५५॥
गच्छंतेणं आकरिसिऊण जणणीए साडिया तेण । गहिया, सहिएण तओ लज्जाए समप्पिया अन्ना॥
तत्तो सुदंसणो पुण साडियं मिल्लिऊण खिल्लेइ । जूयं, जणणी पुण कुणइ सहियगेहम्मि कम्माइं ॥
तो एसो वुत्तंतो कहिओ सेट्ठिस्स केणवि सवित्थरो । तो सेट्ठी नियचित्ते परिभावइ भावणं एवं ॥
जह पढमंपि हु माऊए जुव्वणं हरइ नंदणो जाओ । नामकरणाइएसुं पिउणो लच्छिं च अवहरइ॥५९॥
तयणु परिवड्ढमाणो हरेइ भोयणविलेवणप्पमुहं । जं जंपि सुहसरूवं परिगिण्हइ नंदणो तस्स ॥ ६० ॥
तारुण्णसमागमविप्फुरंतवम्महपरवसो तयणु । अच्छिंदइ गयसंकं पिउणो विहवाइयं सव्वं ॥ ६१ ॥
इय कारणेहिं पिउणो दुहावहो सव्वहा हवइ पुत्तो । जं तम्मिवि पडिबंधो कीरइ तं पुण महच्छरियं ॥
अहवा को नाम दुहावहस्स तणयस्स जम्मसवणम्मि । हरिसिज्ज जइ नवि होज्ज मोहमाहप्पसंपत्ती?॥
तो नियमो मह संपइ पुत्तं पइ, तम्मए पुणो हिययं । तीइ कए भज्जाए कह सा किल छुट्टिही वराई?॥
हुं नायं तीइ सहोयराण साहेमि कस्सवि मुहेण । सिरिनयरे, ते जेणं दव्वं दाऊण छोडिंति ॥६५॥
तो लिहिऊणं लेहं पुरिसो संपेसिओ पयत्तेण । पत्तो थेवदिणेहिं ताणं सो अप्पए लेहं ॥६६ ॥
तत्र चेदं लिखितम्;—
जलहिसलिलंव मुणिणा महगिहदव्वं सुएण एक्कपए । नीसेसंपि हु गसियं जूयाइदुव्वसणतिसिएण ॥

ततस्तया संलपितं तं प्रति दूरेण संपत् प्राप्ता । श्रेष्ठिगृहेऽपि न विद्यते भोजनमात्रमपि तस्यैव ॥ ५४ ॥
ततो मामृणे धृत्वा मुञ्चतैतमिति तया संलपिते । पुरस्कृतेन सा गृहीता मुक्तो निःसार्य पुत्रः ॥ ५५ ॥
गच्छताऽऽकृष्य जनन्याः शाटिका तेन । गृहीता, पुरस्कृतेन ततो लज्जया समर्पिताऽन्या ॥ ५६ ॥
ततः सुदर्शनः पुनः शाटिकां मुक्त्वा रमते । द्यूतं, जननी पुनः करोति पुरस्कृतगेहे कर्माणि ॥५७॥
तत एष वृत्तान्तः कथितः श्रेष्ठिनः केनापि सविवरः । ततः श्रेष्ठी निजचित्ते परिभावयति भावनामेवम् ॥
यथा प्रथममपि हि मातुर्यौवनं हरति नन्दनो जातः । नामकरणादिकेषु पितुर्लक्ष्मीं चापहरति ॥ ५९ ॥
तदनु परिवर्धमानो हरति भोजनविलेपनप्रमुखम् । यद् यदपि सुखस्वरूपं परिगृह्णाति नन्दनस्तस्य ॥ ६० ॥
तारुण्यसमागमविस्फुरन्मन्मथपरवशस्तदनु । आच्छिनत्ति गतशङ्कं पितुर्विभवादिकं सर्वम् ॥ ६१ ॥
इति कारणैः पितुर्दुःखावहः सर्वथा भवति पुत्रः । यत्तस्मिन्नपि प्रतिबन्धः क्रियते तत्पुनर्महाश्चर्यम् ॥६२॥
अथवा को नाम दुःखावहस्य तनयस्य जन्मश्रवणे । हृष्येद् यदि नैव भवेद् मोहमाहात्म्यसंप्राप्तिः? ॥६३॥
ततो नियमो मम संप्रति पुत्रं प्रति,तन्मयं पुनर्हृदयम्। तस्याः कृते भार्यायाः कथं सा किलच्छुटिष्यते वराकी?॥
हुं ज्ञातं तस्याः सहोदरान्कथयामि कस्यापि मुखेन । श्रीनगरे, ते येन द्रव्यं दत्त्वा छोटयन्ति ॥ ६५ ॥
ततो लिखित्वा लेखं पुरुषः संप्रेषितः प्रयत्नेन । प्राप्तः स्तोकदिनैस्तेभ्यः सोऽर्पयति लेखम् ॥ ६६ ॥
जलधिसलिलमिव मुनिना मद्गृहद्रव्यं सुतेनैकपदे । निःशेषमपि हि ग्रसितं द्यूतादिदुर्व्यसनतृषितेन ॥६७॥

१ ग. दणइ ।

तुम्ह भइणीवि उल्ले धरिया जूयारिएहिं तम्मुक्का । इगलक्खस्स कएणं जं जाणह तं करिज्जासु ॥
इय वाइऊण वाहुल्ललोयणा वंधुणो परोप्परओ ।'जंपंति पणयसारं अहह अहो दारुणं दुक्खं ॥६९॥
संजायं भइणीए ता किं एएण दव्वजाएण । गयकन्नचंचलेणं, उवजुज्जउ भइणिकज्जम्मि ॥ ७० ॥
को तुल्लो भइणीए हविज्ज सयणाण मज्झयारम्मि । जीए आसीवयणा दुरियपबंधा विलिज्जंति ॥
सव्वेवि उच्छवा निच्छएण भइणीपुरस्सरा हुंति । ता धन्नाण गिहीणं भयणीओ हुंति सीलड्ढा ॥
इच्चाइवासणावासिएहिं सव्वंपि विक्कियं भंडं । किच्छेण तओ लक्खो संपत्तो, तं गहेऊण ॥ ७३ ॥
जा पत्ता तम्मि पुरे सरस्स पालीए वंधुणो तत्थ । भरियंभकुंभनिब्भरभारोणयकंधरा भइणी ॥७४॥
दिट्ठा सा तेहिं तओ पच्चभिनाया झडत्ति गंतूण । उत्तारिऊण कुंभो निसुंभिओ भूमिभागम्मि ॥७५॥
भूनिहियमत्थएहिं पणया सा लज्जिया य ते दट्ठुं । नयणंसुसित्तनित्ताए जंपियं तीइ तो एवं ॥७६॥
कुसलं मह वंधूणं, अतक्कियं तुम्हदंसणं जायं । केण व पओयणेणं इहागया, इय निसामेउं ॥७७॥
मन्नुभरभरियवयणेहिं तेहिं भणियं हयम्ह कुसलत्तं । जीवंताणवि जेसिं भइणी घडचेडिया जाया ॥७८॥
हा हा भइणि! सुनयणे! सहस्सलोयाण सामिणी हुंता । इण्हिं दासिव्व जलं वहेसि रे सिं परेसिं च ॥
हीही अणज्जकज्जुज्जयस्स तुह दिव्व! कित्तियं भणिमो । जीइ सिरं सुकुमारं भारं कुसुमाण न सहंतं॥
इन्हि जलभरियघडे वहेइ तंपि हु सुनिट्ठुरं जायं । तुह दिव्व! मणसरिच्छं सच्छंदपयारदुल्ललियं॥८१॥
इच्चाइ विलवमाणेहिं तेहिमारोविया सुहासणए । नीया सहियस्स गिहे तेणवि गहिउं कणयलक्खं ॥

युष्मद्भगिन्यपि ऋणे धृता द्यूतकारिभिस्तन्मुक्ता । एकलक्षस्य कृते यज्जानीत तत् कुरुत ॥ ६८ ॥
इति वाचयित्वा बाष्पवल्लोचना बन्धवः परस्परतः । जल्पन्ति प्रणयसारमहह अहो दारुणं दुःखम्॥६९॥
संजातं भगिन्यास्तस्मात् किमेतेन द्रव्यजातेन । गजकर्णचञ्चलेन, उपयुज्यतां भगिनीकार्ये ॥७०॥
कस्तुल्यो भगिन्या भवेत् स्वजनानां मध्ये । यस्या आशीर्वचनाद् दुरितप्रबन्धा विलीयन्ते ॥७१॥
सर्वेऽप्युत्सवा निश्चयेन भगिनीपुरस्सरा भवन्ति । तस्माद् धन्यानां गृहिणां भगिन्यो भवन्ति शीलाढ्याः॥
इत्यादिवासनावासितैः सर्वमपि विक्रीतं भाण्डम् । कृच्छ्रेण ततो लक्षः संप्राप्तः, तं गृहीत्वा ॥७३॥
यावत्प्राप्तास्तस्मिन् पुरे सरसः पाल्यां बन्धवस्तत्र । भृताम्भःकुम्भनिर्भरभारावनतकन्धरा भगिनी ॥७४॥
दृष्टा सा तैस्ततः प्रत्यभिज्ञाता झटिति गत्वा । उत्तार्य कुम्भो निशुम्भितो भूमिभागे ॥ ७५ ॥
भूनिहितमस्तकैः प्रणता सा लज्जिता च तान् दृष्ट्वा । नयनाश्रुसिक्तनेत्रया जल्पितं तया तत एवम्॥७६॥
कुशलं मम बन्धूनां, अतर्कितं युष्मद्दर्शनं जातम् । केन वा प्रयोजनेनेहागताः, इति निशम्य ॥७७॥
मन्युभरभृतवदनैस्तैर्भणितं हतमस्मत्कुशलत्वम् । जीवतामपि येषां भगिनी घटचेटिका जाता ॥ ७८ ॥
हा हा भगिनि! सुनयने! सहस्रलोकानां स्वामिन्यभवः । इदानीं दासीव जलं वहसि रे एषां परेषां च ॥
ही ही अनार्यकार्योद्यतस्य तव दैव! कियद्भणामः । यस्याः शिरः सुकुमारं भारं कुसुमानां नासहत ॥८०॥
इदानीं जलभृतघटान् वहति तदपि हि सुनिष्ठुरं जातम् । तव दैव! मनःसदृशं स्वच्छन्दप्रसरदुर्ललितम् ॥

मुक्का तो सिट्ठिगिहे नीया सा तेहिं पणमिओ सेट्ठी । तस्सवि य किंपि दाउं संपत्ता ते नियट्ठाणे ॥८३॥
इत्तो य सुदंसणेणवि जूयपसाएण पावियं तत्थ । करचरणनासछेयं मरणंपि हु जूयवसणाओ ॥८४॥
ता दत्त ! दंत्तदुक्खं जूयं जूयंव चयसु दुक्खकरं । कुलसीलगुणेहिं समं हारिज्जइ जत्थ बहुदविणं॥८५॥
संपइ राईभोयणदोसपवाहंपि सुणसु जत्तेण । इहलोयपारलोइयदुहाण मूलं खु निसिभुत्तं ॥८६॥
रयणीए रयणिचरा चरंति वोट्टंति अन्नमाईयं । तव्विट्टालियमन्नं भुंजंता हुंति तत्तुल्ला ॥८७॥
ता दिणयरकरपूयं सुपवित्तं अतिहिकप्पियविभागं । कुंथुपिवीलियरहियं सयावि दिवसम्मि भुत्तव्वं ॥
तह सुहुमेयरजीवा हवंति संपाइमावि अन्नम्मि । तो निसि भुंजंताणं ताणं खु विराहणा हवइ ॥८९॥
तीएवि गरुयपावं तेण य संजायए भवब्भमणं । तम्मि य महंतदुक्खं तम्हा जीवा निधजियंव ॥९०॥
रक्खेयव्वा ताणं पुण रक्खा हवइ दिट्ठिविसयम्मि । दिट्ठिविसओ य दिवसे रयणीए न संभवइ तम्हा॥
दिणयरकरावदायं भत्तं पेहित्तु चक्खुणा सम्मं । जइ रहियं जीवेहिं तो भुंजइ इयरहा वज्जं ॥९२॥
जे पुण अन्नाणंधा अवियाणियपुन्नपावसब्भावा । राईभोयणगिद्धा मुद्धा ते जंति कुगईसु ॥ ९३ ॥
अविसुद्धं अपवित्तं पेउच्छिट्ठं सयावि सावज्जं । विसमिव सुविणासकरं निसिभत्तं वज्जयंति बुहा ॥
कालस्सद्धं हरई दिवायरो सव्वरीवि[1] तस्सद्धं । जो उ न भुंजइ राओ सो उववासी तयद्धेण ॥ ९५॥
अन्नं च;—

---

*इत्यादि विलपद्भिस्तैरारोपिता सुखासने । नीता पुरस्कृतस्य गृहे तेनापि गृहीत्वा कनकलक्षम् ॥८२॥*
मुक्ता ततः श्रेष्ठिगृहे नीता सा तैः प्रणतः श्रेष्ठी । तस्यापि च किमपि दत्त्वा संप्राप्तास्ते निजस्थाने ॥८३॥
इतश्च सुदर्शनेनापि द्यूतप्रसादेन प्राप्तं तत्र । करचरणनासाच्छेदं मरणमपि हि द्यूतव्यसनात् ॥८४॥
तस्माद् दत्त ! दत्तदुःखं द्यूतं यूकामिव त्यज दुःखकरम् । कुलशीलगुणैः समं नाश्यते यत्र बहुद्रविणम् ॥
संप्रति रात्रिभोजनदोषप्रवाहमपि शृणु यत्नेन । ऐहलौकिकपारलौकिकदुःखयोर्मूलं खलु निशाभुक्तम् ॥८६॥
रजन्यां रजनिचराश्चरन्त्युच्छिष्टयन्त्यन्नादिकम् । तदुच्छिष्टमन्नं भुञ्जाना भवन्ति तत्तुल्याः ॥८७॥
तस्माद् दिनकरकरपूतं सुपवित्रमतिथिकल्पितविभागम् । कुन्थुपिपीलिकारहितं सदापि दिवसे भोक्तव्यम्॥८८॥
*तथा सूक्ष्मेतरजीवा भवन्ति संपातिमानोऽप्यन्ने । ततो निशि भुञ्जानानां तेषां खलु विराधना भवति ॥८९॥*
तयापि गुरुपापं तेन च संजायते भवभ्रमणम् । तस्मिंश्च महादुःखं तस्माज्जीवा निजजीवितमिव ॥९०॥
रक्षितव्यास्तेषां पुना रक्षा भवति दृष्टिविषये । दृष्टिविषयश्च दिवसे रजन्यां न संभवति तस्मात् ॥९१॥
दिनकरकरावदातं भक्तं प्रेक्ष्य चक्षुषा सम्यक् । यदि रहितं जीवैस्ततो भुञ्जीतेतरथा वर्ज्यम् ॥९२॥
ये पुनरज्ञानान्धा अविज्ञातपुण्यपापसद्भावाः । रात्रिभोजनगृद्धा मुग्धास्ते यान्ति कुगतिषु ॥९३॥
अविशुद्धमपवित्रं प्रेतोच्छिष्टं सदापि सावद्यम् । विषमिव सुविनाशकरं निशाभक्तं वर्जयन्ति बुधाः ॥९४॥
कालस्यार्धं हरति दिवाकरः शर्वर्यपि तस्यार्धम् । यस्तु न भुङ्क्ते रात्रौ स उपवासी तदर्धेन ॥९५॥

---

१ ग. दिव।

जो जीवइ वरिससयं जीवो निसिभोयणं विवज्जंतो । सो लहइ नूण पन्नासवरिसविहिओववासफलं ॥
तेण य सग्गम्मि सुरंगणाहिं सह सुक्खमणुहवेऊण । उप्पज्जइ मणुयभवे तम्मिवि पावेइ जिणदिक्खं ॥
तत्तो मोक्खं कम्मक्खएण पालेइ जो वयं एयं । जो पुण गहिउं भुंजइ सो दुक्खं लहइ सुलसोव्व ॥
तथाहि;—

अत्थि अवंतीविसए उज्जेणी जोइणीपढमपीढं । तत्थत्थि सिद्धराओ जस्स समाइं निसिदिणाइं॥९९॥
दिवसे कीलइ पमयाजणेण राओ उ जोइणिगणेण । न मुणइ गयंपि कालं विलासकीलाहिं दुल्ललिओ॥
रयणिचरियाए कइया गओ वहिं भीसणे मसाणम्मि । पभणइ गरुयसरेणं निब्भयचित्तो इमं वयणं ॥
भो भो भूयपिसाया रक्खा जक्खा व जोइणीनिवहा । निसुणेह मज्झ वयणं एगग्गमणा खणं ताव॥१०२॥
सोहं सिद्धनरिंदो समागओ कोउगेण सुणिऊण । तुम्ह पसिद्धिं रिद्धिं ता पयडह अप्पणो रूवे ॥१०३॥
सुणिऊण इमं वयणं किलिकिलियं तेहिं भइरवसरेण । पयदद्दुरेहिं पहया पुहईवि खणेण थरहरिया ॥
तह फिक्करंति पेया भूयाणिवि हुंकरंति घूयव्व । अट्टट्टहासफुट्टंतदिसिप्पहा उट्ठिया रक्खा ॥१०५॥
ताण मज्झाउ भणियं असियक्खभिहाणजक्खराएण । अहह अहो को एसो सीहं सुत्तं पबोहेइ ? ॥
को नियजीहं कंडुयइ सप्पतुंडीए कंडुहरणट्ठा ? । को जमपुरीसमाणे समसाणे एवमुल्लवइ ? ॥१०७॥
तो भणियं भूवइणा मा गव्वं वहह एरिसं तुब्भे । जइ अत्थि कावि सत्ती ता पयडह मह पुरो अज्ज ॥
तो असियक्खो जक्खो उच्चत्तेणं दुजोयणपमाणं । काऊण नियसरीरं खिविउं नरमुंडमालं च ॥१०९॥

---

अन्यच्च ।
यो जीवति वर्षशतं जीवो निशाभोजनं विवर्जयन् । स लभते नूनं पञ्चाशद्वर्षविहितोपवासफलम् ॥९६॥
तेन च स्वर्गे सुराङ्गनाभिः सह सौख्यमनुभूय । उत्पद्यते मनुजभवे तस्मिन्नपि प्राप्नोति जिनदीक्षाम् ॥९७॥
ततो मोक्षं कर्मक्षयेण पालयति यो व्रतमेतत् । यः पुनर्गृहीत्वा भुङ्क्ते स दुःखं लभते सुलस इव ॥९८॥

अस्त्यवन्तीविषय उज्जयिनी योगिनीप्रथमपीठम् । तत्रास्ति सिद्धराजो यस्य समानि निशादिनानि ॥
दिवसे क्रीडति प्रमदाजनेन रात्रौ तु योगिनीगणेन । न जानाति गतमपि कालं विलासक्रीडाभिर्दुर्ललितः ॥
रजनिचर्यया कदा गतो वहिर्भीषणे श्मशाने । प्रभणति गुरुस्वरेण निर्भयचित्त इदं वचनम् ॥१०१॥
भो भो भूतपिशाचा रक्षांसि यक्षा वा योगिनीनिवहाः । शृणुत मम वचनमेकाग्रमनसः क्षणं तावत् ॥१०२॥
सोऽहं सिद्धनरेन्द्रः समागतः कौतुकेन श्रुत्वा । युष्माकं प्रसिद्धिमृद्धिं तस्मात्प्रकटयतात्मनो रूपाणि ॥१०३॥
श्रुत्वेदं वचनं किलकिलितं तैर्भैरवस्वरेण । पाददर्दुरैः प्रहता पृथिव्यपि क्षणेन कम्पिता ॥१०४॥
तथा फित्कुर्वन्ति प्रेता भूतान्यपि हुङ्कुर्वन्ति घूकवत् । अट्टाट्टहासस्फुटद्दिशाप्रमाण्युत्थितानि रक्षांसि॥१०५॥
तेषां मध्याद् भणितमसिताक्षाभिधानयक्षराजेन । अहह अहो । क एष सिंहं सुप्तं प्रबोधयति ? ॥१०६॥
को निजजिह्वां कण्डूयति सर्पतुण्डेन कण्डूहरणार्थम् ? । को यमपुरीसमाने श्मशान एवमुल्लपति ? ॥१०७॥
ततो भणितं भूपतिना मा गर्वं वहतेदृशं यूयम् । यद्यस्ति कापि शक्तिस्तदा प्रकटयत मम पुरोऽद्य ॥१०८॥

गुरुमोग्गरगयहत्थो हत्थिव्व गहीरथणियभरियदिसो। हक्कंतो वग्गंतो समुट्ठिओ निवइणो समुहं॥११०॥
तो तं दट्ठुं राया ऊससियमणो भणेइ तं एवं। किं साहावियरूवं उय कोववसेण कयमेवं?॥१११॥
जइ साहावियमेयं रूवं ता गच्छ रक्ख! सट्ठाणे। दिट्ठं जं दट्ठव्वं देवा सुव्वंति रमणीया॥११२॥
उय कोवफुरियमेयं ता किं कोवस्स कारणं तुम्ह?। अह भणसि मह मसाणे समागओ तेण मह कोवो॥
तंपि न जुत्तं जम्हा समुद्दपेरंतधरणिनाहो हं। तो सव्वं गिरिपुरकाणणाइ मह संतियं एयं॥११४॥
जइ इत्थ निवसिउमणा तुब्भे ता देह मह करं इण्हिं। अन्नह मह पडिबद्धं भूमिं सिग्घं परिच्चयह॥
तं सुणिउं ते कुविया सव्वे भूयाइणो भणंतेवं। भो भूव! सरणमहुणा अणुसरसु सरेसु इट्ठं च॥११६॥
तो असियक्खो जक्खो मुग्गरमुग्गीरिऊण जा चलिओ। तो सो सहसा थंभुव्व थंभिओ थंभविज्जाए॥
अह उट्ठिओ य भूओ अचब्भुअडामरेहिं वयणेहिं। खोभंतो सो रन्ना बद्धो चोरुव्व मंतेण॥११८॥
तो तस्स परियणेणं भणिओ राया जहा इमं मुयह। जं किंपि मग्गसि करं तं तुह मिलिऊण दावामो॥
तो भणियं भूवइणा जक्खो मह अंगरक्खओ होउ। रक्खो धरेउ छत्तं भूयपिसायाइया अन्ने॥१२०॥
मह पुरओ पिच्छणयं कुणंतु निच्चंपि इय निसामेउं। सव्वं तहेत्ति तेहिंवि पडिवन्नं विणयपणएहिं॥
तो असियक्खं उत्थंभिऊण रयणीए चरिमसमयम्मि। नियमंदिरम्मि पत्तो नरनाहो तेहिं परिकलिओ॥
ताव पडुपडहढक्काभुक्कासंखाइतूरपूरस्स। अतुच्छो उच्छलिओ गहिररवो तत्थ, इत्तो य॥१२३॥

---

ततोऽसिताक्षो यक्ष उच्चरवेण द्वियोजनप्रमाणम्। कृत्वा निजशरीरं क्षिप्त्वा नरमुण्डमालां च॥१०९॥
गुरुमुद्गरगदाहस्तो हस्तीव गभीरस्तनितभृतदिक्कः। निषेधन् वल्गन् समुत्थितो नृपतेः संमुखम्॥११०॥
ततस्तं दृष्ट्वा राजोच्छ्वसितमना भणति तमेवम्। किं स्वाभाविकरूपमुत कोपवशेन कृतमेवम्?॥१११॥
यदि स्वाभाविकमेतद् रूपं तदा गच्छ रक्षः! स्वस्थाने। दृष्टं यद् द्रष्टव्यं देवाः श्रूयन्ते रमणीयाः॥११२॥
*उत कोपस्फुरितमेतत् तदा किं कोपस्य कारणं तव?। अथ भणसि मम श्मशाने समागतस्तेन मम कोपः॥*
तदपि न युक्तं यस्मात्समुद्रपर्यन्तधरणिनाथोऽहम्। ततः सर्वं गिरिपुरकाननादि मम सम्बन्ध्येतत्॥११४॥
*यद्यत्र निवस्तुमनसो यूयं तदा दत्त मम करमिदानीम्। अन्यथा मम प्रतिबद्धां भूमिं शीघ्रं परित्यजत॥*
तत् श्रुत्वा ते कुपिताः सर्वे भूतादयो भणन्त्येवम्। भो भूप! शरणमधुनाऽनुसर स्मरेष्टं च॥११६॥
ततोऽसिताक्षो यक्षो मुद्गरमुद्गीर्य यावच्चलितः। तावत्स सहसा स्तम्भवत्स्तम्भितः स्तम्भविद्यया॥११७॥
अथोत्थितश्च भूतोऽप्यद्भुतडामरैर्वचनैः। क्षोभयन् स राज्ञा बद्धश्चौर इव मन्त्रेण॥११८॥
ततस्तस्य परिजनेन भणितो राजा यथेमं मुञ्चत। यं कमपि मार्गयसि करं तं तुभ्यं मिलित्वा दापयामः॥
ततो भणितं भूपतिना यक्षो ममाङ्गरक्षको भवतु। रक्षो धरतु छत्रं भूतपिशाचादिका अन्ये॥१२०॥
मम पुरतः प्रेक्षणकं कुर्वन्तु नित्यमपीति निशम्य। सर्वं तथेति तैरपि प्रतिपन्नं विनयप्रणतैः॥१२१॥
ततोऽसिताक्षमुत्तभ्य रजन्यां चरमसमये। निजमन्दिरे प्राप्तो नरनाथस्तैः परिकलितः॥१२२॥
तावत्पटुपटहढक्काभुक्काशङ्खादितूर्यपूरस्य। अतुच्छ उच्छलितो गभीररवस्तत्र, इतश्च॥१२३॥

२

पच्चूसगयवरुम्मूलियाए उड्डीणससिविहंगाए । धवलाइं गलंति निसालयाए नक्खत्तकुसुमाइं ॥१२४॥
दिणमणिमऊहमंजरियदिसिवहुवयणकमलसोहिल्ले । पच्चूसे तो राया विहेवि आवस्सयं तत्तो ॥१२५
उवविट्ठो अत्थाणे परियरिओ तेहिं जक्खरक्खेहिं । वेउव्वियरूवेहिं पच्चक्खं मंसचक्खूणं ॥१२६॥
पारद्धं पिच्छणयं भूयपिसाएहिं विविहभंगीहिं । तुलचेलयकयहत्थो नच्चइ एगो महारक्खो ॥१२७॥
कयवुड्ढवणियवेसो तो रन्ना पुच्छिओ इमं एसो । किं वुड्ढवणियवेसेण नच्चसे कहसु फुडमेयं ? ॥१२८
तो रक्खेणं भणियं नच्चेमि खणं तओ य पयडिस्सं । नियचरियं उच्चरिउं सविसेसं निययजीहाए
तो पिक्खणावसाणे जीहं निल्लालिऊण अइदीहं । खणमेगं गयचेट्ठो ठिओ तओ जंपए एवं ॥१३०।
भो नरनाह ! निसामसु जेणं एवं अहं पणच्चामि । तो कहइ जहा रसणादोसेणं पुव्वजम्मम्मि ॥१३१
लद्धूणवि जिणधम्मं मणुयत्तं हारियंति, तो राया । पुच्छइ कहंति, तो सो पुव्वभवं साहिउं लग्गो ॥

इह आसि पुरा सिट्ठी ईसरनामा पसिद्धगुणकलिओ । तब्भज्जा बंधुमई ताण सुओ सुलसनामोत्ति
अह जोव्वणम्मि पत्तेण तेण सिच्छाए परिभमंतेण । कत्थवि दिट्ठो साहू बावीसपरीसहसहोत्ति ॥१३४
तं वंदिऊण साहुं निसुणइ सद्देसणं मणभिरामं । पुव्वागयपरिसाए कहमाणं कहपबंधेण ॥ १३५ ॥
राईभोयणविरईगुणदोसवियारणं च पुव्वुत्तं । सुणिउं तेणवि गहिया विरई रयणीए भत्तस्स ॥१३६।
भद्दगभावगएणं न उणो सम्मत्तमाइगिहिधम्मो । तप्पिउणा उ पवन्नो सम्मत्ताईवि गिहिधम्मो ॥१३७
पुत्तगवेसणहेउं समागएणं मुणिस्स पासम्मि । तं नमिवि गिहं पत्ता जहगहियवयाइं पालंता ॥१३८॥

---

प्रत्यूषगजवरोन्मूलिताया उड्डीनशशिविहङ्गायाः । धवलानि गलन्ति निशालताया नक्षत्रकुसुमानि ॥१२४।
दिनमणिमयूखमञ्जरितदिग्वधूवदनकमलशोभावति । प्रत्यूषे ततो राजा विधायावश्यकं ततः ॥१२५॥
उपविष्ट आस्थाने परिकरितस्तैर्यक्षरक्षोभिः । विकुर्वितरूपैः प्रत्यक्षं मांसचक्षुषाम् ॥१२६॥
प्रारब्धं प्रेक्षणकं भूतपिशाचैर्विविधभङ्गिभिः । तूलचेलककृतहस्तं नृत्यत्येकं महारक्षः ॥१२७॥
कृतवृद्धवणिग्वेषस्ततो राज्ञा पृष्ट इदमेषः । किं वृद्धवणिग्वेषेण नृत्यसि कथय स्फुटमेतत् ? ॥१२८॥
ततो रक्षसा भणितं नृत्यामि क्षणं ततश्च प्रकटयिष्यामि । निजचरितमुच्चार्य सविशेषं निजजिह्वया ॥१२९
ततः प्रेक्षणावसाने जिह्वां निर्लाल्यातिदीर्घाम् । क्षणमेकं गतचेष्टः स्थितस्ततो जल्पत्येवम् ॥ १३० ॥
भो नरनाथ ! निशमय येनैवमहं प्रनृत्यामि । ततः कथयति यथा रसनादोषेण पूर्वजन्मनि ॥ १३१ ॥
लब्ध्वापि जिनधर्मं मनुजत्वं हारितमिति, ततो राजा । पृच्छति कथमिति, ततः स पूर्वभवं कथयितुं लग्नः

इहासीत्पुरा श्रेष्ठीश्वरनामा प्रसिद्धगुणकलितः । तद्भार्या बन्धुमती तयोः सुतः सुलसनामेति ॥ १३३
अथ यौवनं प्राप्तेन तेन स्वेच्छया परिभ्रमता । कुत्रापि दृष्टः साधुर्द्वाविंशतिपरीषहसह इति ॥ १३४ ॥
तं वन्दित्वा साधुं शृणोति सद्देशनां मनोभिरामाम् । पूर्वागतपरिषदि कथ्यमानां कथाप्रबन्धेन ॥ १३५ ॥
रात्रिभोजनविरतिगुणदोषविचारणं च पूर्वोक्तम् । श्रुत्वा तेनापि गृहीता विरती रजन्यां भक्तस्य ॥१३६॥
भद्रकभावगतेन न पुनः सम्यक्त्वादिगृहिधर्मः । तत्पित्रा तु प्रपन्नः सम्यक्त्वादिरपि गृहिधर्मः ॥ १३७ ।

चिट्ठंति मयावि मणिच्छियाइं सुक्खाइं अणुहवंता य। अह अन्नदिणे सुलसो मित्तेण समं निसीहम्मि ॥
विडचरियाए चरंतो चच्चरचउहट्टदिसालासु। तो मित्तेणं तेणं आणेउं मंडयाईयं ॥१४०॥
भणिओ सुलसो भुंजसु मंडयइड्डरियवोलवट्टयाई। सो आह अजुत्तमिणं नो कप्पइ रयणिभत्तं मे ॥
जम्हा सुगुरुसमीवे गहिओ नियमो निसाए भुत्तव्वे। ता मा भणेसु बंधव! इत्थत्थे मज्झ ते सवहो ॥
उल्लुंठेणं तेणं भणियं रयणीए भुंजमाणाणं। किं कवलो कन्नंतो पविसइ, नो वयणकुहरम्मि ? ॥
दीवयउज्जोएणं सुनिरिक्खेऊण मोयगाईयं। कुंथुपिपीलियरहियं जइ भुज्जइ तत्थ को दोसो ? ॥
हा वंचिओ सि बंधव ! इत्तियकालं विसुद्धभुज्जस्स। जम्हा रयणीभत्तं कामकरं होइ कामीण ॥
ता अज्ज ताव भुंजसु मह उवरोहा विलासिणीहिं समं। पच्छा जं ते रुच्चइ तं कायव्वं वियारेउं॥१४६॥
इय भणिए से वयणे मोयगखंडं बलावि पक्खित्तं। तस्सन्नियवेसाए सेसं सव्वं सयं भोत्तं ॥१४७॥
तो पइदिणंपि भुंजइ रयणीए मित्तविंदसंजुत्तो। हट्टपहे वच्चंतो खप्परकयमंडयाईयं ॥१४८॥
पुट्ठिं सुस्सरडुंबीहिं गायमाणीहिं नच्चमाणीहिं। विलसइ विलासिणीसत्थपरिगओ जाव पच्चूसं॥१४९॥
तत्तो वेसाण गिहे मढमंडवदेउलेसु वा सुयइ। जाव दिणद्धं तो उट्ठिऊण गच्छेइ पिउगेहे ॥१५०॥
तो पिउणा सो नाओ भणिओ रे रयणिभत्तनियमोवि। भग्गो निब्भग ! तए हा हा हा हारिओ जम्मो॥
वरमरिगिहेसु कम्मं वर मरणं सुहडसरपहारेहिं। उल्लसियबहलजालोलिजडिले जलणे पवेसो वा॥१५२

---

पृथगवेषणहेतोः समागतेन मुनेः पार्श्वे। तं नत्वा गृहं प्राप्तौ यथागृहीतव्रतानि पालयन्तौ ॥ १३८ ॥
तिष्ठतः सदापि मनईप्सितानि सौख्यान्यनुभवन्तौ च। अथान्यदिने सुलसो मित्रेण समं निशीथे ॥१३९॥
विटचर्यया चरंश्चत्वरचतुर्हट्टद्यूतशालासु। ततो मित्रेण तेनानीय मण्डकादिकम् ॥ १४० ॥
भणितः सुलसो भुङ्क्ष्व मण्डकेड्डरिकाघोलवटकादीन्। स आहायुक्तमिदं नो कल्पते रजनिभक्तं मे ॥१४१॥
यस्माद् गुरुसमीपे गृहीतो नियमो निशायां भोक्तव्ये। तस्मान्मा भण बान्धव! अत्रार्थे मम ते शपथः ॥
उल्लुण्ठेन तेन भणितं रजन्यां भुञ्जानानाम्। किं कवलः कर्णान्तः प्रविशति, नो वदनकुहरे ! ॥१४३॥
दीपकोद्द्योतेन सुनिरीक्ष्य मोदकादिकम्। कुन्थुपिपीलिकारहितं यदि भुज्यते तत्र को दोषः ? ॥१४४॥
हा वञ्चितोऽसि बान्धव ! इयत्कालं विशुद्धभोज्यात्। यस्माद्रजनिभक्तं कामकरं भवति कामिनाम् ॥१४५॥
तस्मादद्य तावद् भुङ्क्ष्व ममोपरोधाद् विलासिनीभिः समम्। पश्चाद् यत्ते रोचते तत्कर्तव्यं विचार्य ॥१४६॥
इति भणिते तस्य वदने मोदकखण्डं बलादपि प्रक्षिप्तम्। तत्संज्ञितवेश्यया शेषं सर्वं स्वयं भुक्तम् ॥१४७॥
ततः प्रतिदिनमपि भुङ्क्ते रजन्यां मित्रवृन्दसंयुक्तः। हट्टपथे व्रजन् कर्परकृतमण्डकादिकम् ॥१४८॥
पृष्ठे सुस्वरश्वपचीभिर्गायन्तीभिर्नृत्यन्तीभिः। विलसति विलासिनीसार्थपरिगतो यावत्प्रत्यूषम् ॥१४९॥
ततो वेश्यानां गृहे मठमण्डपदेवकुलेषु वा स्वपिति। यावद् दिनार्धं तत उत्थाय गच्छति पितृगेहे ॥१५०॥
ततः पित्रा स ज्ञातो भणितो रे रजनिभक्तनियमोऽपि। भग्नो निर्भाग्य ! त्वया हा हा हा हारितं जन्म ॥
वरमरिगृहेषु कर्म वरं मरणं सुभटशरप्रहारैः। उल्लसितबहलज्वालालिजटिले ज्वलने प्रवेशो वा ॥१५२॥

तहवि न वयविग्घकरं राईए भुंजिउं हवइ जुत्तं । वच्छ ! अपत्थं एयं पच्छायावं बहुं जणिही ॥१५३॥
तो तेण इमं भणियं जयंपि भुंजेइ ताव रयणीए । मोत्तुं सावयलोयं ता तम्मग्गम्मि हं भग्गो ॥१५४॥
न य किंचिवि भणियव्वं तए ममं पइ इमम्मि विसयम्मि । जो जेत्तियस्स जोग्गो सो लहइ तत्तियं अत्थं॥
अवहीरिओ तओ सो पिउणा हिरिवज्जिओ य रयणीए । भुंजेइ गिहे विडविंदपरिगओ भमइ सच्छंदं ॥
सावयवसुमित्तेणं अह अन्नया सह गओ विवाहम्मि । बालमित्तोत्ति सो मह पत्तो रयणीए गामम्मि ॥
वत्राहिएण भणियं किंत्तियलोयस्स भोयणं पउणं । कुणिमो तेहिंवि कहियं न कोवि अम्हच्चओ राओ ॥
भुंजिस्सइ, तो भणियं सुलसेण अहं तु भुंजइस्सामि । पउणं करेह कूरं ससक्करं पायसं च तहा॥१५९॥
तेहिंवि तहत्ति विहियं नवरं खीरे कढिज्जमाणम्मि । बहुधूमविहुरियंगो पडिओ नागो तहिं एगो॥१६०॥
अइउसिणतावतविओ विलीणगत्तो खयं गओ तत्थ । तस्स परिवेसियं तं ससक्करं पाउमणुलग्गो॥१६१॥
पढमघुंटम्मि खलिया जीहा हत्थाउ निवडियं वट्टं । विहलंघलो य जाओ पडिओ तत्थेव ठाणम्मि ॥
भाहावियं च परिवेसियाए मिलिओ य तत्थ बहुलोओ । मित्तेण समं पत्तो जन्नत्ताए य पउरजणो ॥
दीवुज्जोयं काउं जोइज्जइ जाव थालिया जीए । दुद्धं चिट्ठइ कढियं तो अहिणो खंडखंडाइं ॥१६४॥
दीसंति सुसिन्नाइं, तम्मित्तेणं ससंभमं भणियं । आणह मणिणो तह तंतवाइणो पवरगारुडिया ॥१६५॥
तेहिंवि तहत्ति विहियं ओहलिउं मणिगणंपि नीरेण । छडछडछडत्ति छंटेइ सो तओ सवणनयणेसु ॥

---

तथापि न व्रतविघ्नकरं रात्रौ भोक्तुं भवति युक्तम् । वत्स ! अपथ्यमेतत्पश्चात्तापं बहुं जनयिष्यति ॥१५३॥
ततस्तेनेदं भणितं जगदपि भुङ्क्ते तावद् रजन्याम् । मुक्त्वा श्रावकलोकं, तस्मात्तन्मार्गेऽहं भग्नः ॥१५४॥
न च किञ्चिदपि भणितव्यं त्वया मां प्रत्यस्मिन् विषये । यो यावतो योग्यः स लभते तावन्तमर्थम् ॥१५५॥
अवधीरितस्ततः स पित्रा ह्रीवर्जितश्च रजन्याम् । भुङ्क्ते गृहे विटवृन्दपरिगतो भ्रमति स्वच्छन्दम् ॥१५६॥
श्रावकवसुमित्रेणाथान्यदा सह गतो विवाहे । बालमित्रमिति स मम, प्राप्तो रजन्यां ग्रामे ॥१५७॥
वैवाहिकेन भणितं कियल्लोकस्य भोजनं प्रगुणम् । कुर्मस्तैरपि कथितं न कोऽप्यस्मदीयो रात्रौ ॥१५८॥
भोक्ष्यते, ततो भणितं सुलसेनाहं तु भोक्ष्ये । प्रगुणं कुरुत कूरं सशर्करं पायसं च तथा ॥१५९॥
तैरपि तथेति विहितं किन्तु क्षीरे क्वथ्यमाने । बहुधूमविधुरिताङ्गः पतितो नागस्तत्रैकः ॥१६०॥
अत्युष्णतापतप्तो विलीनगात्रः क्षयं गतस्तत्र । तस्य परिवेषितं तत्सशर्करं पातुमनुलग्नः ॥१६१॥
प्रथमपाने स्खलिता जिह्वा हस्तान्निपतितं पात्रम् । विह्वलाङ्गश्च जातः पतितस्तत्रैव स्थाने ॥१६२॥
आरटितं च परिवेषिकया मिलितश्च तत्र बहुलोकः । मित्रेण समं प्राप्तो जनतायाश्च प्रचुरजनः ॥१६३॥
दीपोद्द्योतं कृत्वा दृश्यते यावत्स्थालिका यस्याम् । दुग्धं तिष्ठति क्वथितं ततोऽहेः खण्डखण्डानि ॥१६४॥
दृश्यन्ते सुशीर्णानि, तन्मित्रेण ससंभ्रमं भणितम् । आनयत मणींस्तथा तन्त्रवादिनः प्रवरगारुडिकान् ॥
तैरपि तथेति विहितमवघृष्य मणिगणमपि नीरेण । छडछडछडेत्युक्षति स ततः श्रवणनयनेषु ॥१६६॥

---

१ ख. ग. °ण्वयंगो भो ।

उंजंति य गारुडिया तंताइं पउंजयंति जत्तेण। नय कोवि गुणो जाओ पिच्छंताणं मओ सहसा ॥
तो कूवइ से मित्तो हा हा हा मित्त! मे निसिद्धोवि। गिद्धो रयणीभत्ते न ठिओ तं भुंजिउं लग्गो ॥
तस्स सुसड्ढस्स सुओ होउं गुरुदिन्ननियमकयभंगो। हा हारियनरजम्मो एमेव मओ सि रसगिद्धो ॥
इचाइ पलवमाणो मित्तो तद्देहदाहमायरइ। चइऊणं परिणयणं पुणो नियत्तो गिहं पत्तो ॥१७०॥
सो हं तस्स कुमित्तो मरिऊणं रक्खसो समुप्पन्नो। वसुमित्तं नियमित्तं दट्ठुं भंडारियं तुम्ह ॥१७१॥
पुव्वभवनेहवसओ विभंगनाणेण अत्तणो चरियं। जाणेउं ते कहियं संपइ मह देह आएसं ॥१७२॥
तं सोउं नरवइणा वसुमित्तो पुच्छिओ जहा सच्चं। जं कहइ इमो एयं, सो भणइ देव! एवमिमं ॥१७३॥
तो जक्खरक्खसाई विसज्जिया नरवरेण भीएण। राईभोयणविरई गहिया तच्चरियमणुसोउं ॥१७४॥
ता दत्त! तुमं रयणीए भोयणंपि हु चइज्ज सावज्जं। लोइयसिद्धंतेसुवि निसिद्धमेयं जओ भणियं ॥
नेवाहुई नवा न्हाणं न सद्धं देवयच्चणं। दाणं वा विहियं राओ भोयणं तु विसेसओ ॥१७६॥

तथा च स्मृतिः—

"दिवसस्याष्टमे भागे मन्दीभूते दिवाकरे। नक्तं तद्धि विजानीयाद् न नक्तं निशि भोजनम् ॥
दिवसं पक्षं मासं चातुर्मास्यायनं च अब्दं च। यस्तु न भुङ्क्ते रात्रौ कृतपुण्यः सोऽपि कृष्णमते ॥
नोदकमपि पातव्यं रात्रावत्र युधिष्ठिर!। तपस्विना विशेषेण गृहिणापि विवेकिना ॥
सूत्रोदितेन विधिना कृत्वा रात्र्यशनवर्जनं प्रयतः। यदि म्रियते हि मनुष्यो अनशनफलमेवमाप्नोति ॥
जात्यकाञ्चनवर्णाभा उपद्रविसमप्रभाः। वैमानिकाः प्रजायन्ते रात्रीभोजनवर्जनात् ॥"

जे उण गहिऊण वयं इमं विराहिंति साइयारं वा। कुव्वंति हुंति किव्विसियसुरयणा किच्छबोहीया॥१७७॥
इय मुणिउं दत्तेणं राईभत्तस्स विरमणं विहियं। तम्हा सुसावएणं भोयणओ राइभत्तंपि ॥१७८॥

---

युञ्जन्ति य गारुडिकास्तन्त्राणि प्रयुञ्जते यत्नेन। न च कोऽपि गुणो जातः पश्यतां मृतः सहसा ॥१६७॥
ततो विलपति तस्य मित्रं हा हा हा मित्र! मे निषिद्धोऽपि। गृद्धो रजनिभक्ते न स्थितस्त्वं भोक्तुं लग्नः ॥
तस्य सुश्राद्धस्य सुतो भूत्वा कृतगुरुदत्तनियमभङ्गः। हा हारितनरजन्मैवमेव मृतोऽसि रसगृद्धः ॥१६९॥
इत्यादि प्रलपद् मित्रं तद्देहदाहमाचरति। त्यक्त्वा परिणयनं पुनर्निवृत्तो गृहं प्राप्तः ॥ १७० ॥
सोऽहं तस्य कुमित्रं मृत्वा राक्षसः समुत्पन्नः। वसुमित्रं निजमित्रं दृष्ट्वा भाण्डागारिकं तव ॥१७१॥
पूर्वभवस्नेहवशतो विभङ्गज्ञानेनात्मनश्चरितम्। ज्ञात्वा ते कथितं संप्रति मम दत्ताऽऽदेशम् ॥१७२॥
तत् श्रुत्वा नरपतिना वसुमित्रः पृष्टो यथा सत्यम्। यत्कथयत्ययमेतत, स भणति देव! एवमिदम् ॥
ततो यक्षराक्षसादयो विसर्जिता नरवरेण भीतेन। रात्रिभोजनविरतिर्गृहीता तच्चरितमनुश्रुत्य ॥१७४॥
तस्माद्दत्त! त्वं रजन्यां भोजनमपि हि त्यज सावद्यम्। लौकिकसिद्धान्तेष्वपि निषिद्धमेतद् यतो भणितम् ॥
नैवाहुतिर्नवा स्नानं न श्राद्धं देवतार्चनम्। दानं वा विहितं रात्रौ भोजनं तु विशेषतः ॥१७६॥
ये पुनर्गृहीत्वा व्रतमिदं विराधयन्ति सातिचारं वा। कुर्वन्ति भवन्ति किल्बिषिकसुरजनाः कृच्छ्रबोधिकाः ॥

वज्जेयव्वं तह कम्मओ य-इंगालवणिजमाईयं । बीयगुणव्वयवइणा खरकम्माइंपि चिचाइं ॥१७९॥
भोगुवभोगविरत्ता सत्ता सज्झायझाणकिरियासु । जे मुणिणो गुणमणिणो कसायसमिणो नमो ताणं ॥
इय अइयारविमुक्कं गुणव्वयं जे धरंति इह बीयं । सुरवरसिरीइ संभोयभायणं ते लहुं हुंति ॥१८१॥

॥ इति भोजनतः कर्मतोऽपि सातिचारं द्वितीयं गुणव्रतं समाप्तम् ॥

---

इति ज्ञात्वा दत्तेन रात्रिभक्तस्य विरमणं विहितम् । तस्मात् सुश्रावकेण भोजनतो रात्रिभक्तमपि ॥१७८॥
वर्जयितव्यं तथा कर्मतश्चाङ्गारवाणिज्यादिकम् । द्वितीयगुणव्रतपतिना खरकर्माण्यपि त्याज्यानि ॥१७९॥
भोगोपभोगविरक्ताः सक्ताः स्वाध्यायध्यानक्रियासु । ये मुनयो गुणमणयः कषायशमिनो नमस्तेभ्यः ॥
इत्यतिचारविमुक्तं गुणव्रतं ये धरन्तीह द्वितीयम् । सुरवरश्रियाः संभोगभाजनं ते लघु भवन्ति ॥१८१॥

सत्थग्गिमुसलवत्थूण दावणं वियरणं च जमणट्ठा । तमणत्थदंडनामं गुणव्वयं तइयमिह भणियं ॥१॥
जो जिणवयणपसत्तो पालइ अइयारवज्जियं एयं । सो सग्गमोक्खसोक्खाइं पावए विमलसड्ढोव्व ॥२॥
तथाहि;—
नंदणवणं व सुमणोवभासियं बहुविलाससोहिल्लं । सुविसालसालकलियं कुसत्थलं अत्थि इह नयरं ॥
तत्थवि य पवरसिट्ठी कुवलयचंदोत्ति कुवलयाणंदो । आणंदसिरी भज्जा ताण सुया विमलसहदेवा ॥४॥
पढमो गुणनिलओ तव्विवरीओ य बंधवो लहुओ । तहवि य अवरोप्परओ ताणं वुड्ढिं गया पीई ॥५॥
समगं रमंति समगं पढंति समगं कुणंति वाणिज्जं । अह रहमारुहिऊणं पत्ता ते काणणे तत्थ ॥६॥
कुसुमफलाणुच्चिणणं कुणंति जा ताव चूयतरुमूले । सिरिनंदणंव रइविरहकरिसियं ते नियंति मुणिं ॥७॥
तं दट्ठुं हिट्ठमणा नमंति तच्चरणपंकयं पयओ । तेणवि झाणसमत्तीए भासिओ धम्मलाभोत्ति ॥८॥
पारद्धा धम्मकहा मुणिणा जा ताण समुचिया जम्हा । मुग्गरसजुग्गयाणं अहिउच्चिय मोयगाहारो ॥९॥
तथाहि;—
धम्मो दयापहाणो देवो दोनवगदोसपरिहीणो । तत्तकुसलो य सुगुरू सिवमग्गो रयणतियमिणमो ॥१०॥
सव्वत्थवि निसुणिज्जइ जणेण नामक्खराइं धम्मोत्ति । ताण पुणो परमत्थं सकयत्थो कोवि परिकलइ ॥
सव्वंपि सत्तवग्गं दुग्गइपुरपत्थियं धरइ जम्हा । सुहठाणम्मि य तह धारए य धम्मो तओ भणिओ ॥१२॥
सग्गापवग्गपभवाण परमसोक्खाण कारणं पउणं । जीवाण समायरणं जं तं धम्मं भणंति बुहा ॥१३॥
तं समयमेयभिन्नं भणंति बहुभंगियाहिं दंसणिणो । पुव्वावराविरुद्धो सुहमइणा स पुण गहियव्वो ॥१४॥

---

शस्त्राग्निमुशलवस्तूनां दापनं वितरणं च यदनर्थार्थम् । तदनर्थदण्डनाम गुणव्रतं तृतीयमिह भणितम् ॥१॥
यो जिनवचनप्रसक्तः पालयत्यतिचारवर्जितमेतत् । स स्वर्गमोक्षसौख्यानि प्राप्नोति विमलश्राद्ध इव ॥२॥
नन्दनवनमिव सुमनोऽवभासितं बहुविलासशोभावत् । सुविशालशालकलितं कुशस्थलमस्तीह नगरम् ॥३॥
तत्रापि च प्रवरश्रेष्ठी कुवलयचन्द्र इति कुवलयानन्दः । आनन्दश्रीर्भार्या तयोः सुतौ विमलसहदेवौ ॥४॥
प्रथमो गुणनिलयस्तद्विपरीतश्च बान्धवो लघुः । तथापि च परस्परतस्तयोर्वृद्धिं गता प्रीतिः ॥५॥
समं रमेते समं पठतः समं कुरुतो वाणिज्यम् । अथ रथमारुह्य प्राप्तौ तौ कानने तत्र ॥६॥
कुसुमफलानामुच्चयनं कुरुतो यावत्तावच्चूततरुमूले । श्रीनन्दनमिव रतिविरहकर्षितं तौ पश्यतो मुनिम् ॥७॥
तं दृष्ट्वा हृष्टमनसौ नमतस्तच्चरणपङ्कजं पदतः । तेनापि ध्यानसमाप्त्या भाषितौ धर्मलाभ इति ॥८॥
प्रारब्धा धर्मकथा मुनिना यावत्तयोः समुचिता यस्मात् । मुद्गरसयोग्यानामहित एव मोदकाहारः ॥ ९ ॥
धर्मो दयाप्रधानो देवो द्विनवकदोषपरिहीणः । तत्त्वकुशलश्च सुगुरुः शिवमार्गो रत्नत्रिकमिदम् ॥ १० ॥
सर्वत्रापि श्रूयते जनेन नामाक्षराणि धर्म इति । तेषां पुनः परमार्थं स्वकृतार्थः कोऽपि परिकलयति ॥११ ॥
सर्वमपि सत्त्ववर्गं दुर्गतिपुरप्रस्थितं धरति यस्मात् । शुभस्थाने च तथा धारयति च धर्मस्ततो भणितः ॥१२॥
स्वर्गापवर्गप्रभवाणां परमसौख्यानां कारणं प्रगुणम् । जीवानां समाचरणं यत्तं धर्मं भणन्ति बुधाः ॥ १३ ॥

विविहपहेसुं पुरिसो गिण्हइ पुरपावगं जहा सुपहं । कुसलो सिवपुरहेउं बहूसु धम्मेसु तह धम्मं ॥१५॥
जह मुद्धमओ मायण्हियाए तिसिओ करेइ जलबुद्धिं । तह निव्विवेयपुरिसो कुणइ अधम्मेवि धम्ममइं ॥
जो उण विवेयअंजणगयतमनयणो नरो हवइ सम्मं । पुव्वावरपरियालोयणेण सो गिण्हए धम्मं ॥१७॥
जह जीववज्जियाणं जीवाण न कज्जसाहगो देहो । संपज्जइ तह धम्मो करुणाए पराए परिहीणो ॥१८॥
सा पुण जिणधम्मेच्चिय, इय नाऊणं तमेव आयरह । तह चेव सरूवमिमं साहिप्पंतं निसामेह ॥१९॥
रागद्दोससमुब्भवसमग्गभवदोससंगमविमुक्को । सो होइ देवदेवो चउतीसाइसयसंपन्नो ॥ २० ॥
गारवतिगम्मि विमुहो तिगुत्तिगुत्तो जिइंदिओ अममो । विहिविहियविहारकमो गीयत्थो तहय मज्झत्थो ॥
इय एवमाइनिम्मलगुणगामविहूसिओ महासत्तो । होइ सुगुरू गरिट्ठो भवजलनिहितारणतरंडो ॥२२॥
इय मुणिवयणं सोउं रयणतिगं परिणयं मणे ताण । दुक्कम्मविगमनिम्मवियविमलपरिणामजुत्ताण ॥२३॥
तत्तो सम्मत्ताई गहिओ धम्मो दुवालसविहोवि । असमत्थेहिं तेहिं दुद्धरजइधम्मधुरधरणे ॥२४॥
सविसेसं तइयगुणव्वयं तु तप्पुच्छिओ कहइ सूरी । चउभेयंपि तओ ते नाउं पत्ता सगेहम्मि ॥२५॥
अट्टज्झाणं वज्जंति तह य मज्जाइपणविहपमायं । अप्पंति न तह सत्थं सावज्जं नोवएसंति ॥२६॥
विमलो विमलसहावो सहएवो पुण सहावओ चवलो । धम्मे पमायबहुलो सयावि केलीकिलत्तणओ ॥
ते अन्नया य गहिऊण पवरभंडाइं पुव्वदेसम्मि । संचलिया तो पुट्ठो केणवि पहिएण अद्धपहे ॥२८॥

---

तं समयभेदभिन्नं भणन्ति बहुभाङ्गिभिर्दर्शनिनः । पूर्वापराविरुद्धः शुभमतिना स पुनर्ग्रहीतव्यः ॥ १४ ॥
विविधपथेषु पुरुषो गृह्णाति पुरप्रापकं यथा सुपथम् । कुशलः शिवपुरहेतुं बहुषु धर्मेषु तथा धर्मम् ॥१५॥
यथा मुग्धमृगो मृगतृष्णिकायां तृषितः करोति जलबुद्धिम् । तथा निर्विवेकपुरुषः करोत्यधर्मेऽपि धर्मबुद्धिम्॥
यः पुनर्विवेकाञ्जनगततमोनयनो नरो भवति सम्यक् । पूर्वापरपर्यालोचनेन स गृह्णाति धर्मम् ॥ १७ ॥
यथा जीववर्जितानां जीवानां न कार्यसाधको देहः । संपद्यते तथा धर्मः करुणया परया परिहीणः ॥१८॥
सा पुनर्जिनधर्म एव, इति ज्ञात्वा तमेवाचरत । तथैव स्वरूपमिदं कथ्यमानं निशमयत ॥ १९ ॥
रागद्वेषसमुद्भवसमग्रभवदोषसंगमविमुक्तः । स भवति देवदेवश्चतुस्त्रिंशदतिशयसंपन्नः ॥ २० ॥
गौरवत्रिके विमुखस्त्रिगुप्तिगुप्तो जितेन्द्रियोऽममः । विधिविहितविहारक्रमो गीतार्थस्तथाच मध्यस्थः ॥२१॥
इत्येवमादिनिर्मलगुणग्रामविभूषितो महासत्त्वः । भवति सुगुरुर्गरिष्ठो भवजलनिधितारणतरण्डः ॥ २२ ॥
इति मुनिवचनं श्रुत्वा रत्नत्रिकं परिणतं मनसि तयोः । दुष्कर्मविगमनिर्मितविमलपरिणामयुक्तयोः ॥२३॥
ततः सम्यक्त्वादिर्गृहीतो धर्मो द्वादशविधोऽपि । असमर्थाभ्यां ताभ्यां दुर्धरयतिधर्मधुराधरणे ॥२४॥
सविशेषं तृतीयगुणव्रतं तु तत्पृष्टः कथयति सूरिः । चतुर्भेदमपि ततस्तौ ज्ञात्वा प्राप्तौ स्वगेहे ॥ २५ ॥
आर्तध्यानं वर्जयतस्तथा च मद्यादिपञ्चविधप्रमादम् । अर्पयतो न तथा शास्त्रं सावद्यं नोपदिशतः ॥२६॥
विमलो विमलस्वभावः सहदेवः पुनः स्वभावतश्चपलः । धर्मे प्रमादबहुलः सदापि केलिकिलत्वतः ॥२७॥
तावन्यदा च गृहीत्वा प्रवरभाण्डानि पूर्वदेशे । संचलितौ ततः पृष्टः केनापि पथिकेनार्धपथे ॥ २८ ॥

विमलो पंजलमग्गं नीरिंधणनीरणाइसंजुत्तं । विमलेण विमलमइणा तो भणियमहं न याणामि ॥ २९ ॥
पहिएण पुणो भणियं तुब्भेहिं सिट्ठि! कम्मि नयरम्मि । गंतव्वं, सो साहइ पणियं अग्घिस्सए जत्थ ॥
पहिएण पुणो पुट्ठं नियनयरं कहह मह जहिं वससि । सो भणइ रायहाणीए नत्थि मह संतियं नयरं ॥
तो भणियं पहिएणं अहंपि समगं समागमिस्सामि । तो विमलेणं भणियं किं भणिमो वयमिय वयंता ॥३२॥
पत्ता पुरस्स बाहिं तत्थ य आवासिया मलयमज्झे । धन्नस्स रंधणट्ठा अग्गी संधुक्किओ जाव ॥३३॥
पाइक्केहिं केहिवि जलंपि किउ आणियं तओ पहिओ । विमलं मग्गइ अग्गिं सो तेण तओ इमं भणिओ ॥
पहिय ! अइ अम्ह पासे भुंजइ नो कप्पए जलणदाणं । जलणाईदाणाइं जेण निसिद्धाइं समयम्मि॥३५॥
तद्यथा;—

"न ग्राह्याणि न देयानि पञ्च द्रव्याणि पण्डितैः । अग्निर्विषं तथा शस्त्रं मद्यं मांसं च पञ्चमम् ॥"

तो कुविओव्व स जंपइ तं पइ रे धिट्ठ दुट्ठधम्मिट्ठ ! । किं कुव्वंतो कूडुत्तराइं तं मह पुरो मुद्ध !॥३६॥
नो लज्जसि न निविज्जसि इय भणिउं सो पवड्ढिउं लग्गो । तह जह भीयं पिव तस्स किंचिउच्चं गयं गयणं ॥
तं दट्ठुं सव्वेवि हु नट्ठा तो विमलमालवइ पहिओ । भो अप्पह मह जलणं जइ कज्जं तुह जीएण ॥३८॥
जेणित्थ मणुयमंसं पइउं भुंजेमि भुक्खिओ बाढं । विमलो भणेइ जं तुह पडिहाइ करेसु तं जम्हा ॥३९॥
जाएण जीवलोए मरियव्वं ताव निच्छओ एस । नियमम्मि पुण विणट्ठे धम्मविणासो धुवं होइ ॥४०॥
तम्मि विणट्ठेऽणिट्ठाइं हुंति दुक्खाइं भवसहस्सेसु। नियमसहियस्स मरणे मणयंपि हवेइ नहु दुक्खं॥४१॥
तो जं जाणसु तं कुणसु न उण भंगं करेमि नियमस्स। तो संहरिय तणुं सो सुररूवं काउमाह तयं॥४२॥

---

विमलः प्राञ्जलमार्गं नीरेन्धननीरणादिसंयुक्तम् । विमलेन विमलमतिना ततो भणितमहं न जानामि ॥ २९ ॥
पथिकेन पुनर्भणितं युष्माभिः श्रेष्ठिन् ! कस्मिन्नगरे । गन्तव्यं, स कथयति पण्यमर्घिष्यते यत्र ॥३०॥
पथिकेन पुनः पृष्टं निजनगरं कथयत मम यत्र वससि । स भणति राजधान्यां नास्ति मम संबन्धि नगरम् ॥
ततो भणितं पथिकेनाहमपि समं समागमिष्यामि । ततो विमलेन भणितं किं भणामो वयमिति व्रजन्तः ॥३२॥
प्राप्ताः पुराद् बहिस्तत्र चावासिता मलयमध्ये । धान्यस्य पचनार्थमग्निः संदीपितो यावत् ॥ ३३ ॥
पदातिभिः कैरपि जलमपि किलानीतं ततः पथिकः । विमलं मार्गयत्यग्निं स तेन तत इदं भणितः ॥३४॥
पथिक ! अयि मम पार्श्वे भुङ्क्ष्व नो कल्पते ज्वलनदानम् । ज्वलनादिदानानि येन निषिद्धानि समये ॥३५॥
ततः कुपित इव स जल्पति तं प्रति रे धृष्ट दुष्टधर्मिष्ठ ! । किं कुर्वन् कूटोत्तराणि त्वं मम पुरो मुग्ध !॥३६॥
नो लज्जसे न निर्विद्यसे इति भणित्वा स प्रवर्धितुं लग्नः । तथा यथा भीतमिव तस्मात्किञ्चिदुच्चं गतं गगनम् ॥
तद् दृष्ट्वा सर्वेऽपि हि नष्टा ततो विमलमालपति पथिकः । भो अर्पयत मम ज्वलनं यदि कार्यं तव जीवितेन ॥
येनात्र मनुजमांसं पक्त्वा भुञ्जीय बुभुक्षितो बाढम् । विमलो भणति यत्तव प्रतिभाति कुरुष्व तद्यस्मात्॥३९॥
जातेन जीवलोके मर्तव्यं तावद् निश्चय एषः । नियमे पुनर्विनष्टे धर्मविनाशो ध्रुवं भवति ॥ ४० ॥
तस्मिन् विनष्टेऽनिष्टानि भवन्ति दुःखानि भवसहस्रेषु । नियमसहितस्य मरणे मनागपि भवति नहि दुःखम् ४१

धन्नो सि तुमं सावय ! तुज्झ सुलद्धं च माणुसं जम्मं। जो थुव्वसि सुरपहुणा सुराण मज्झम्मि एवमहो ॥
देवो व दाणवो वा नय सक्को कोवि खोभिउं भरहे । विमलं सड्ढं गाढं तइयाउ गुणव्वयाहितो ॥४४॥
तं सोउं असद्दहंतो समागओ तुज्झ खोहणनिमित्तं । सावज्जवयणमग्गेवि नो गओ तं च पुट्ठोवि ॥४५॥
तो तुट्ठो हं मग्गसु मणस्स जं किंचि तुज्झ पडिहाइ। तो विमलेणं भणियं सव्वं चिय मे तए दिन्नं ॥४६॥
नियदेहं पयडंतेण नियमकसवट्टयं वहंतेणं । तहवि इमं पत्थिज्जसि धम्मम्मि समुज्जमं कुणसु ॥४७॥
किञ्च ।
सप्पंति तवमणेगे जवंति मंते तहा सुविज्जाओ । वियरंति दंसणं पुण देवा केसिंचि विरलाण ॥४८॥
सो देवो भणइ तुमं जइवि निरीहो तहावि मणिमेगं । पसिऊण इमं गिण्हसु सव्वविसुच्छेयणपवीणं ॥
सोऽणिच्छंतस्सवि तस्स उत्तरीयम्मि बंधिऊण मणिं । सग्गं गओ सुरो सो साहइ सव्वं सुरिंदस्स॥५०॥
विमलोवि कुणइ सद्दं सहदेवाईण तेवि तं सुणिउं । संपत्ता तप्पासे पुच्छंति य पहियवुत्तंतं ॥५१॥
सोवि हु साहइ सव्वं सवित्थरं ताण हरिसिया सव्वे । तो वंदंति जिणिंदे तत्थेव ठिया सुभत्तीए॥५२॥
अवलोयणं मुणीणं काउं भुंजंति परियणसमेया । भुत्तुत्तरम्मि पुरपरिसराओ मज्झम्मि संचलिया॥५३॥
पत्ता नयरदुवारे सुणंति हट्टेसु खडहडारावं । उत्तालतालयाणं वणिएहिं दिज्जमाणाणं ॥५४॥
पेक्खंति य पक्खरिए तुरंगमे सुहडसोहियरहे य । तह गुडियगयघडाओ इओ तओ परिभमंतीओ ॥
तह तलवरं च सन्नहियसुहडसहियं भमंतमित्तो य । विमलेणं कोवि नरो पुट्ठो भो कहसु कहमित्थ॥५६॥

---

ततो यज्जानीयास्तत् कुर्यां न पुनर्भङ्गं करोमि नियमस्य। ततः संहृत्य तनुं स सुररूपं कृत्वाऽऽह तम्॥४२॥
धन्योऽसि त्वं श्रावक ! तव सुलब्धं च मानुषं जन्म । यः स्तूयसे सुरप्रभुणा सुराणां मध्य एवमहो॥४३॥
देवो वा दानवो वा नच शक्तः कोऽपि क्षोभयितुं भरते । विमलं श्राद्धं गाढं तृतीयाद् गुणव्रतात् ॥४४॥
तत् श्रुत्वाऽश्रद्दधत् समागतस्तव क्षोभणनिमित्तम् । सावद्यवचनमार्गेऽपि नो गतस्त्वं च पृष्टोऽपि ॥ ४५ ॥
ततस्तुष्टोऽहं मार्गय मनसो यत्किञ्चित्तव प्रतिभाति । ततो विमलेन भणितं सर्वमेव मे त्वया दत्तम् ॥४६॥
निजदेहं प्रकटयता नियमकषपट्टं वहता । तथापीदं प्रार्थ्यसे धर्मे समुद्यमं कुरु ॥ ४७ ॥
तप्यन्ते तपोऽनेकं जपन्ति मन्त्रांस्तथा सुविद्याः । वितरन्ति दर्शनं पुनर्देवाः केषांचिद्विरलानाम् ॥ ४८ ॥
ततो देवो भणति त्वं यद्यपि निरीहस्तथापि मणिमेकम् । प्रसद्येमं गृहाण सर्वविषोच्छेदनप्रवीणम् ॥४९॥
ततोऽनिच्छतोऽपि तस्योत्तरीये बद्ध्वा मणिम् । स्वर्गं गतः सुरः स कथयति सर्वं सुरेन्द्रस्य ॥ ५० ॥
विमलोऽपि करोति शब्दं सहदेवादीनां तेऽपि तं श्रुत्वा । संप्राप्तास्तत्पार्श्वे पृच्छन्ति च पथिकवृत्तान्तम् ॥
सोऽपि हि कथयति सर्वं सविस्तरं तेषां हर्षिताः सर्वे । ततो वन्दन्ते जिनेन्द्रांस्तत्रैव स्थिताः सुभक्त्या ॥
अवलोकनं मुनीनां कृत्वा भुञ्जते परिजनसमेताः । भुक्तोत्तरे पुरपरिसराद् मध्ये संचालिताः ॥५३॥
प्राप्ता नगरद्वारे शृण्वन्ति हट्टेषु खटखटारावम् । उत्तालतालकानां वणिग्भिर्दीयमानानाम् ॥५४॥
प्रेक्षन्ते च संनद्धांस्तुरंगमान् सुभटशोभितरथांश्च । तथा गुडितगजघटा इतस्ततः परिभ्रमन्तीः ॥५५॥

खुद्दो सव्वोवि जणो परिभमइ पुरम्मि गोउरदुवारे । दिज्जंति कवाडाइं कुट्टुवरि भडा ठविज्जंति? ॥
किं परचक्काउ भयं सचक्कओ वा दुहावि भयमहवा । नरवइणो वा किंचिवि जायं अहिमरकयमणिट्टं ? ॥
तो तेणं परिकहियं सवणदुवारम्मि तस्स जह इत्थ । निवसइ राया पुरिसोत्तमोत्ति भुवणत्तयपसिद्धो ॥
एक्कुच्चिय तस्स सुओ अरिमल्लो नाम मयणसमरूवो । सो सुत्तो वासहरे अहिणा दुट्टेण दट्टोत्ति॥६०॥
तो तस्स पिययमाए पुक्करिए धाविओ परियणोवि । जाव पलोयइ सव्वं ता सप्पो कत्थवि पलाणो ॥
इय कुमरवइयरं निसुणिऊण रायावि तत्थ संपत्तो । दीहरनिद्दपसुत्तंव पिच्छिउं नियसुयं सहसा ॥६२॥
मुच्छानिमीलियच्छो लुढिओ पुढवीए गाढकुढउव्व । नियसुयपाणवहारिस्स पिट्ठिमणुधावणनिमित्तं ॥
अवरोहकामिणीओ निवस्स कुमरस्स उवरि पडियाओ। रोयंति य अइकरुणं पुरपउरजणोवि सव्वत्तो ॥
हक्कारिज्जंति नरिंदविंदविंदारगा अमच्चेहिं । तेवि नियमंततंते आगंतुं संपउज्जंति ॥ ६५ ॥
नय थेवोवि विसेसो विसस्स निग्घायणे हवइ कोवि । रायावि कहवि सत्थो जाओ जलवाउदाणेण ॥
पभणइ सचिवाइजणं जइ कहवि विरूवयं कुमारस्स । संपज्जिस्सइवस्सं तो चियकट्ठेण पढमेण ॥६७॥
होयव्वमिमस्स मए, अणुमन्नह एस निच्छओ मज्झ । इय सोउं पउरजणो संभंतो एवमायरइ ॥६८॥
अह रायावि हु पडहयमुहेण इमं घोसावए नयरे । जो जीववए कुमरं तस्सद्धं देमि रज्जस्स ॥ ६९ ॥
तं सोउं सहदेवो विमलं पभणेइ कुणसु उवयारं । मणिमोहलिउं छंटसु कुमरं, उज्जीवए जेण ॥७०॥

---

तथा पुरारक्षकं च संनद्धसुभटसहितं भ्रमन्तमितश्च । विमलेन कोऽपि नरः पृष्टो भोः कथय कथमत्र ॥५६॥
क्षुब्धः सर्वोऽपि जनः परिभ्रमति पुरे गोपुरद्वारे । दीयन्ते कपाटानि दुर्गोपरि भटाः स्थाप्यन्ते ? ॥५७॥
किं परचक्राद् भयं स्वचक्रतो वा द्विधापि भयमथवा । नरपतेर्वा किंचिदपि जातमभिमरकृतमनिष्टम् ? ॥५८॥
ततस्तेन परिकथितं श्रवणद्वारे तस्य यथाऽत्र । निवसति राजा पुरुषोत्तम इति भुवनत्रयप्रसिद्धः ॥५९॥
एक एव तस्य सुतोऽरिमल्लो नाम मदनसमरूपः । स सुप्तो वासगृहेऽहिना दुष्टेन दष्ट इति ॥६०॥
ततस्तस्य प्रियतमया पूत्कृते धावितः परिजनोऽपि । यावत्प्रलोकते सर्वं तावत्सर्पः क्वापि पलायितः ॥६१॥
इति कुमारव्यतिकरं श्रुत्वा राजापि तत्र संप्राप्तः । दीर्घनिद्राप्रसुप्तमिव दृष्ट्वा निजसुतं सहसा ॥६२॥
मूर्च्छानिमीलिताक्षो लुठितः पृथिव्यां गाढाहत इव । निजसुतप्राणापहारिणः पृष्ठेऽनुधावननिमित्तम् ॥
अवरोधकामिन्यो नृपस्य कुमारस्योपरि पतिताः । रुदन्ति चातिकरुणं पुरप्रचुरजनोऽपि सर्वतः ॥ ६४ ॥
हक्कार्यन्ते नरेन्द्रवृन्दवृन्दारका अमात्यैः । तेऽपि निजमन्त्रतन्त्राण्यागत्य संप्रयुञ्जते ॥ ६५ ॥
न च स्तोकोऽपि विशेषो विषस्य निर्घातने भवति कोऽपि । राजापि कथमपि स्वस्थो जातो जलवायुदानेन ॥
प्रभणति सचिवादिजनं यदि कथमपि विरूपं कुमारस्य । संपत्स्यतेऽवश्यं ततश्चिताकाष्ठेन प्रथमेन ॥६७॥
भवितव्यमस्य मया, अनुमन्यध्वमेष निश्चयो मम । इति श्रुत्वा पौरजनः संभ्रान्त एवमाचरति ॥ ६८ ॥
अथ राजापि हि पटहमुखेन घोषयतीदं नगरे । यो जीवयति कुमारं तस्मा अर्धं ददामि राज्यस्य ॥ ६९ ॥

---

( ख. कुविउ° ।

अहिगरणमिणं बंधव ! महप्पमाणं न होइ कायव्वं । किं रज्जेणं कज्जं सज्जो सावज्जमूलेण ? ॥७१॥
इय विमलवयणमायन्निऊण जंपेइ सो तओ एवं । उच्छिंदह दालिद्दं अम्हकुलस्सावि पसिऊण॥७२॥
जीवावसु रायसुयं मणिमाहप्पंपि पिच्छिमो ताव । तह धम्मंपि पवज्जइ जइ कहवि हु जीवए एसो ॥
इच्चाइ तम्मि भणिरे विमलो नो किंपि उत्तरं देइ । जा ताव तेण सहसा वत्थाओ छोडिओ गंठी ॥
गहिओ मणी तओ लहुं छित्तो पडहो पहट्ठचित्तेण । नीओ कुमरसमीवं सो निवपुरिसेहिं तो तेण ॥
ओहलिऊण मणिं सो नीरेण झडत्ति छंटिओ कुमरो । सुत्तविउद्धेणव तेण तो दिसाओ नियंतेण॥७६॥
दिट्ठो सहदेवो नरवईवि संतेउरो पुरजणो य । तो पुच्छिया सजणणी किंअम्मो ! एस मेलावो? ॥७७॥
हरिसंसुसित्तनित्ताए तीए कहियं सवित्थरं सव्वं । तो रन्ना सहदेवो निमंतिओ अद्धरज्जेण ॥ ७८ ॥
तेण भणियं नरेसर ! महत्थि बंधू सहोयरो विमलो । तस्स पभावो एसो कुमरस्सुज्जीवणे जाओ॥७९॥
चउहट्टयम्मि सोवि हु उवविट्ठो चिट्ठए सपरिवारो । सद्दाविऊणं सिग्घं तस्स पसायं कुणउ देवो॥८०॥
तो तत्थ सयं गच्छइ सह सहदेवेण करिवरारूढो । राया विमलं दट्ठुं अवगूहिवि पभणए एवं ॥ ८१ ॥
भो मज्झ पाणभिक्खा दिन्ना तुमए सुदीणहिययस्स । तो पसिऊण संपइ आगच्छसु तं मह गिहम्मि ॥
जह जह उल्लवइ निवो पुणो पुणो पणयसारवयणाइं। तह तह विमलस्स मणे सल्लइ वयविसयअइयारो॥
तो विमलेणं सनयं रायं पइ जंपियं जहा देव ! । सहदेवविलसियमिणं ता किज्जउ जमुचियमिमस्स ॥

---

तत् श्रुत्वा सहदेवो विमलं प्रभणति कुरूपचारम् । मणिमवघृष्योक्ष कुमारं, उज्जीवति येन ॥ ७० ॥
अधिकरणमिदं बान्धव ! महाप्रमाणं न भवति कर्तव्यम् । किं राज्येन कार्यं सद्यः सावद्यमूलेन ? ॥७१॥
इति विमलवचनमाकर्ण्य जल्पति स तत एवम् । उच्छिन्त दारिद्र्यमस्मत्कुलस्यापि प्रसद्य ॥ ७२ ॥
जीवय राजसुतं मणिमाहात्म्यमपि पश्यामस्तावत् । तथा धर्ममपि प्रपद्यते यदि कथमपि हि जीवत्येषः ॥७३॥
इत्यादि तस्मिन् भणितरि विमलो नो किमप्युत्तरं ददाति । यावत्तावत्तेन सहसा वस्त्राच्छोटितो ग्रन्थिः॥७४॥
गृहीतो मणिस्ततो लघु स्पृष्टः पटहः प्रहृष्टचित्तेन । नीतः कुमारसमीपं स नृपपुरुषैस्ततस्तेन ॥ ७५ ॥
अवघृष्य मणिं स नीरेण झटित्युक्षितः कुमारः । सुप्तविबुद्धेनेव तेन ततो दिशः पश्यता ॥ ७६ ॥
दृष्टः सहदेवो नरपतिरपि सान्तःपुरः पुरजनश्च । ततः पृष्टा स्वजननी किमम्ब ! एष मेलकः ? ॥७७॥
हर्षाश्रुसिक्तनेत्रया तया कथितं सविस्तरं सर्वम् । ततो राज्ञा सहदेवो निमन्त्रितोऽर्धराज्येन ॥ ७८ ॥
तेन भणितं नरेश्वर ! ममास्ति बन्धुः सहोदरो विमलः । तस्य प्रभाव एष कुमारस्योज्जीवने जातः॥७९॥
चतुर्हट्टके सोऽपि खलूपविष्टस्तिष्ठति सपरिवारः । शब्दयित्वा शीघ्रं तस्मै प्रसादं करोतु देवः ॥८०॥
ततस्तत्र स्वयं गच्छति सह सहदेवेन करिवरारूढः । राजा विमलं दृष्ट्वाऽवगुह्य प्रभणत्येवम् ॥८१॥
भो मम प्राणभिक्षा दत्ता त्वया सुदीनहृदयस्य । ततः प्रसद्य संप्रत्यागच्छ त्वं मम गृहे ॥८२॥
यथा यथोल्लपति नृपः पुनः पुनः प्रणयसारवचनानि । तथा तथा विमलस्य मनसि शल्यति व्रतविषयातिचारः॥
ततो विमलेन सनयं राजानं प्रति जल्पितं यथा देव ! । सहदेवविलसितमिदं तस्मात्क्रियतां यदुचितमस्य ॥

तो धरिवि करेण करं करेणुयारोविओ य सो रन्ना। नीओ गिहम्मि काराविओ य सो मज्जणाईयं ॥
सहिओ सहदेवेणं भणिओ भुत्तुत्तरम्मि सो रन्ना। रज्जस्सद्धं गिण्हसु उवणीयं नियपुन्नेहिं ॥८६॥
तो भणियं विमलेणं मा देसु नरिंद! सासणं एयं। रज्जलवोवि न कप्पइ किमंग! अद्धं समिद्धंपि ॥
एक्कं ता खरकम्मं बीयं अइरेगलच्छिपरिभोगो। पंचमवयाइयारो ता कज्जं नेय रज्जेण ॥ ८८ ॥
तो सजिगीसं नाउं सहदेवं पइ पयंपियं रन्ना। पच्चासन्नुवयारी अम्हाणं तं चिय तओ य ॥८९॥
गिण्हमिणं तं रज्जं जहभणियं तो भणेइ सो एवं। नियवायापडिवन्नं वियरिज्जउ तेण तो दिन्नं॥९०॥
धवलहरं रहतुरए करिवररहपभिइं विभइउं सव्वं। विमलो पुण सिट्ठिपए संठविओणिच्छमाणोवि ॥
नियजणपाईलोओ समाणिओ तेहिं तत्थ तो विमलो। सावयधम्मं सम्मं पालंतो गमइ बहुकालं॥९२॥
इयरो रज्जे रट्ठे विसयसुहे मोहिओ महागिद्धो। निद्धंधसो य जाओ निरविक्खो विरइमालिन्ने॥९३॥
नियगामभूरिभूमिं पडियं खेडावए लहु करेण। देइ धाडीउ बहुहा हणेइ गामाइ अन्नाणं ॥९४॥
वियरइ पावुवएसे तस्स नरिंदस्स जह इमो लोओ। लूसिज्जउ धणकलिओ विउलकरो किज्जउ इयरो॥
इच्चाइ चरंतो सो भणिओ विमलेणणत्थदंडवयं। अइयरसि किं सयं चिय गहिऊणं जेण मणुयभवे॥
एगत्तो विगराला मत्ता वग्घीव घुरुघुरायंती। जररक्खसी पयंडा उत्थरइ तणुम्मि जीवाण ॥९७॥
अन्नत्तो वाहीओ दारुणरूवाउ किल किलंतीओ। देहे ठियाउ निच्चं नच्चंति य डाइणीउव्व ॥९८॥
इंताणं जंताणं तह य सुयंताण भुंजमाणाणं। जंतूणं नियइ छलं मरणमहारक्खसो रुद्दो ॥९९॥

---

ततो धृत्वा करेण करं करेणुकारोपितश्च स राज्ञा। नीतो गृहे कारितश्च स मज्जनादिकम् ॥८५॥
सहितः सहदेवेन भणितो भुक्तोत्तरे स राज्ञा। राज्यस्यार्धं गृहाणोपनीतं निजपुण्यैः ॥८६॥
ततो भणितं विमलेन मा देहि नरेन्द्र! शासनमेतत्। राज्यलवोऽपि न कल्पते किमङ्ग! अर्धं समृद्धमपि ॥
एकं तावत्खरकर्म द्वितीयमतिरेकलक्ष्मीपरिभोगः। पञ्चमव्रतातिचारस्तस्मात् कार्यं नैव राज्येन ॥८८॥
ततः सजिगीषं ज्ञात्वा सहदेवं प्रति प्रजल्पितं राज्ञा। प्रत्यासन्नोपकार्यस्माकं त्वमेव ततश्च ॥८९॥
गृहाणेदं त्वं राज्यं यथाभणितं ततो भणति स एवम्। निजवाक्प्रतिपन्नं वितीर्यतां तेन ततो दत्तम् ॥९०॥
धवलगृहं रथतुरगान् करिवररथप्रभृति विभज्य सर्वम्। विमलः पुनः श्रेष्ठिपदे संस्थापितोऽनिच्छन्नपि॥९१॥
निजजनकादिलोकः समानीतस्तैस्तत्र ततो विमलः। श्रावकधर्मं सम्यक्पालयन् गमयति बहुकालम् ॥९२॥
इतरो राज्ये राष्ट्रे विषयसुखे मोहितो महागृद्धः। निष्ठुरश्च जातो निरपेक्षो व्रतमालिन्ये ॥९३॥
निजग्रामभूरिभूमिं पतितां कर्षयति लघु करेण। ददाति धाटीर्बहुधा हन्ति ग्रामाद्यन्येषाम् ॥९४॥
वितरति पापोपदेशांस्तस्मै नरेन्द्राय यथाऽयं लोकः। लुण्ट्यतां धनकलितो विपुलकरः क्रियतामितरः ॥९५॥
इत्यादि चरन् स भणितो विमलेनानर्थदण्डव्रतम्। अतिचरसि किं स्वयमेव गृहीत्वा येन मनुजभवे ॥९६॥
एकतो विकराला मत्ता व्याघ्रीव घुर्घुरायमाणा। जराराक्षसी प्रचण्डाऽऽक्रामति तनुं जीवानाम् ॥९७॥
अन्यतो व्याधयो दारुणरूपाः किल क्रीडन्तः। देहे स्थिता नित्यं नृत्यन्ति च डाकिन्य इव ॥९८॥

अन्नेवि एवमाई जीवियधणबंधुनासणसमत्था । जीवाण अदूरत्था उवद्दवा संति सयकालं ॥१००॥
ताणत्थदंडविरइं मा बंधव ! अइयारेसु अइदुलहं । पिच्चभवे परमसुहं जइ महसि तुमंति किं बहुणा ?॥
इय सुणिउं सो जंपइ जइ हं एवंविहं उवइसेमि । नो नरवइणो ता मह अपसाओ हवइ नियमेण॥१०२॥
भरियघडस्सव नीरं बाहिं लोट्टंति तुज्झ उवएसा । तो विमलेणं मोणं पडिवन्नं तस्स विसयम्मि॥१०३॥
तो सो विवन्नविरई विगयरई जिणमयम्मि संजाओ। अइघणअणत्थदंडं कुणइ तहा कारवेई य ॥१०४॥
अह अन्नया कयाई निरत्थयं कोवि बहुं कयत्थेउं। मुक्को दव्वं गहिउं तेण पउट्टेण सो एसो ॥१०५॥
अहिमरपओगपुव्वं पंचत्तं पाविओ अकयधम्मो । पढमपुढवीए पत्तो तत्तो उव्वट्टिओ संतो ॥१०६॥
भमिऊण भवे कइवि हु सुतिक्खदुक्खाइं अणुहवेऊण । सिज्झिस्सइ धुयकम्मो पावियचरणो समाहीए॥
विमलो पुण विमलमई अक्खलियं पालिऊण गिहिधम्मं । विहिणाराहिवि परलोयमग्गमह सो गओ सग्गं॥
ता जह एवं विमलेण पालियं निरईयारवयमेयं । तह अन्नेहिवि भव्वेहिं पालेयव्वं सयाकालं ॥१०९॥

॥ इति तृतीयाणुव्रतपरिपालने विमलदृष्टान्तः समाप्तः ॥

---

आयतां यातां तथा च स्वपतां भुञ्जानानाम् । जन्तूनां पश्यति च्छलं मरणमहाराक्षसो रौद्रः ॥९९॥
अन्येऽप्येवमादयो जीवितधनबन्धुनाशनसमर्थाः । जीवानामदूरस्था उपद्रवाः सन्ति सदाकालम् ॥१००॥
तस्मादनर्थदण्डाविरतिं मा बान्धव ! अतिचरातिदुर्लभाम् । प्रेत्यभवे परमसुखं यदि काङ्क्षसि त्वमिति किं बहुना !
इति श्रुत्वा स जल्पति यद्यहमेवंविधमुपदिशामि । नो नरपतये तदा ममाप्रसादो भवति नियमेन ॥१०२॥
भृतघटस्येव नीरं बहिर्लोठयन्ति तवोपदेशाः । ततो विमलेन मौनं प्रतिपन्नं तस्य विषये ॥१०३॥
ततः स विपन्नविरतिर्विगतरतिर्जिनमते संजातः । अतिघनानर्थदण्डं करोति तथा कारयति च ॥ १०४ ॥
अथान्यदा कदाचिन्निरर्थकं कोऽपि बहु कदर्थयित्वा । मुक्तो द्रव्यं गृहीत्वा तेन प्रकुष्टेन स एषः ॥१०५॥
अभिमरप्रयोगपूर्वं पञ्चत्वं प्रापितोऽकृतधर्मः । प्रथमपृथिव्यां प्राप्तस्तत उद्वृत्तः सन् ॥ १०६ ॥
भ्रमित्वा भवे कत्यपि हि सुतीक्ष्णदुःखान्यनुभूय । सेत्स्यति धुतकर्मा प्राप्तचरणः समाधिना ॥ १०७ ॥
विमलः पुनर्विमलमतिरस्खलितं पालयित्वा गृहिधर्मम् । विधिनाऽऽराध्य परलोकमार्गमथ स गतः स्वर्गम् ॥
तस्माद् यथैवं विमलेन पालितं निरतिचारव्रतमेतत् । तथान्यैरपि भव्यैः पालयितव्यं सदाकालम् ॥१०९॥

तह पारेवयरसियं कुणइ तहामुद्दियं लहुं जेण । दिढसीलाउवि नारीउ हुंति कंदप्पवसगाओ ॥१५॥
तो कुमरेणं भणियं तयभिमुहं मा करेसु तुममेवं । तइयगुणव्वयपढमो अइयारो एस जं भणिओ ॥१६॥
तं सोउं सो कंदप्पभावओ नेय कहवि उवरमई । केलीरसियत्तणओ कुमरेण उवेहिओ तत्तो ॥१७॥
कस्सवि भडस्स भज्जं पउत्थवइयं अहन्नया दट्ठुं । तह कहवि कुणइ सो सुरयकूवियं तप्पुरो जेण ॥१८॥
कंदप्पपीडिया सा सहसा तस्सेव विलइया कंठे । तो तद्दियरो दट्ठुं रुट्ठो तज्जेइ तं एवं ॥ १९ ॥
रे धिट्ठ ! तए एसा कंदप्पपरवसा कया मुद्धा । सुसीलावि वराई तो सो तं बंधए धणियं ॥२०॥
भणइ य कुमारमित्तं तमसि जओ तो हणेमि नो सहसा । तं सोऊणं कुमरो मोयावइ तस्स पासाओ ॥
आणई य गिहं बंधेहिं पीडियं तं भणेइ तो कुमरो । बंधव ! इहंपि पत्तं वयअइयरणतरुकुसुमं ॥२२॥
फलमणुहविसि तं पुण परत्त अइतिक्खदुक्खसंजणयं । जं वारिओवि तइया नोवरओ इयइयाराओ॥२३॥
ता अज्जवि तं सुमरसु अरिहं देवो गुरू य नाणधरा । आलोयसु दुच्चरियं तह खामसु पाणिसंघायं॥२४॥
तेणवि कुमरो भणिओ बंधव ! बंधेहिं पीडिओ गाढं। न सरेमि अहं किंचिवि ता किंचिवि कुणसु पडियारं॥
इय पभणंतो मरिउं उववन्नो करिवरो स विंझम्मि । तत्तो भवम्मि भमिउं भवट्ठगं तो स सिज्झिहिही ॥
कुमरोवि निरइयारं सावगधम्मं चिरंपि पालेउं । विहिणा पवन्नचरणो सासयसोक्खं गओ मोक्खं॥२७॥

॥ इति तृतीयगुणव्रते प्रथमातिचारविपाके मित्रसेनकथानकं समाप्तम् ॥

---

तथा पारापतरसितं करोति तथामुद्रितं लघु येन । दृढशीला अपि नार्यो भवन्ति कन्दर्पवशाः ॥ १५ ॥
ततः कुमारेण भणितं तदभिमुखं मा कुरुष्व त्वमेवम् । तृतीयगुणव्रतप्रथमोऽतिचार एष यद् भणितः ॥१६॥
तत् श्रुत्वा स कन्दर्पभावतो नैव कथमप्युपरमति । केलीरसिकत्वतः कुमारेणोपेक्षितस्ततः ॥ १७ ॥
कस्यापि भटस्य भार्यां प्रोषितपतिकामथान्यदा दृष्ट्वा । तथा कथमपि करोति स सुरतकूजितं तत्पुरो येन ॥
कन्दर्पपीडिता सा सहसा तस्यैव विलगिता कण्ठे । ततस्तद्देवरो दृष्ट्वा रुष्टस्तर्जयति तमेवम् ॥ १९ ॥
रे धृष्ट ! त्वयैषा कन्दर्पपरवशा कृता मुग्धा । सुशीलापि वराकी ततः स तं बध्नाति गाढम् ॥ २० ॥
भणति च कुमारमित्रं त्वमसि यतस्ततो हन्मि नो सहसा । तत् श्रुत्वा कुमारो मोचयति तस्य पार्श्वात् ॥२१॥
आनयति च गृहं बन्धैः पीडितं तं भणति ततः कुमारः । बान्धव ! इहापि प्राप्तं व्रतातिचरणतरुकुसुमम् ॥
फलमनुभविष्यसि त्वं पुनः परत्रातितीक्ष्णदुःखसंजनकम् । यद् वारितोऽपि तदा नोपरत इत्यतिचारात् ॥२३॥
तस्मादद्यापि त्वं स्मरार्हन्तं देवं गुरूंश्च ज्ञानधरान् । आलोचय दुश्चरितं तथा क्षमय प्राणिसंघातम् ॥२४॥
तेनापि कुमारो भणितो बान्धव ! बन्धैः पीडितो गाढम् । न स्मराम्यहं किञ्चिदपि तस्मात्किञ्चिदपि कुरु प्रतिकारम्॥
इति प्रभणन् मृतोपपन्नः करिवरः स विन्ध्ये । ततो भवे भ्रमित्वा भवाष्टकं ततः स सेत्स्यति ॥ २६ ॥
कुमारोऽपि निरतिचारं श्रावकधर्मं चिरमपि पालयित्वा । विधिना प्रपन्नचरणः शाश्वतसौख्यं गतो मोक्षम् ॥२७॥

भंडाईणव नयणाइयाण सवियारकरणमिह भणियं । कुक्कुइयं,तं कुणई जो सो सीहोव्व लहइ दुहं ॥१॥
तथाहि;—
बहुपत्तपत्तसोहं ससिरीयं रायहंसकयसोहं । पउमंव पोयणपुरं भरहे पुरमत्थि सुपसिद्धं ॥२॥
तत्थत्थि धणयसिट्ठी धणउव्व पिया य तस्स सोमसिरी । ताणं तणओ सीहो मित्तो तस्सत्थि सहदेवो ॥
सहपंसुकीलिओ कीलणत्थमह अन्नया य तत्थेव । रइसागराभिहाणे उज्जाणे तेण सह पत्तो ॥४॥
कीलइ विविहविलासेहिं जाव ता तत्थ सुणइ महुरझुणिं । तो तयणुसारओ सो वच्चंतो पिच्छए सूरिं ॥
बहुमुणिगणपरियरियं छणससिबिंबंव तारयसणाहं । धम्मंव मुत्तिमंतं देसंतं भूरिभव्वाणं ॥६॥
सग्गापवग्गमग्गं, तो तं नमिऊण तत्थ उवविट्ठो । पुच्छइ सिंहो सूरिं भयवं! मे संसयं हरसु ॥७॥
किं धम्मंपि कुणंतो लच्छिब्भंसं लहेइ कोवि नरो?। लाभंतरायवसओ लहइच्चिय भणइ तत्थ गुरू॥८॥
तो सीहेणं भणियं लच्छिब्भंसं लहेइ धम्मीवि । जइ पहु! ता पज्जत्तं धम्मेण किलेसमूलेणं ॥९॥
तो भणइ मुणिवरिंदो जइवि हु धम्मंतरायदोसेणं । होइ विहवस्स नासो पुणोवि धम्माउ पावेइ ॥१०॥
सविसेसं धणलाभं निच्छयसारं करेइ जइ धम्मं । दिट्ठंतो इह सिट्ठी मुणिदासो,सुणसु उवउत्तो॥११॥
तथाहि;—
देवविणिम्मियगुरुथुभथूभसोभाए महुरनयरीए । आसि मुणिदाससिट्ठी अमुणियविहवपरिमाणो ॥१२॥
अविचलसम्मत्तधरो कम्मवसा तस्स अन्नया विहवो । सव्वोवि परिब्भट्ठो अवमाणपयं तओ जाओ ॥
लोयाणं वंधूणं नरवइणो नियसुयाण भज्जाए । किं बहुणा, पडिवयणंपि तस्स नो देइ कोवि तहिं ॥१४॥

---

विटादीनामिव नयनादिकानां सविकारकरणमिह भणितम् । कौकुच्यं, तत्करोति यः स सिंहवल्लभते दुःखम् ॥
बहुपा(प)त्रप्राप्तशोभं सश्रीकं राजहंसकृतशोभम् । पद्ममिव पोतनपुरं भरते पुरमस्ति सुप्रसिद्धम् ॥२॥
तत्रास्ति धनदश्रेष्ठी धनद इव प्रिया च तस्य सोमश्रीः । तयोस्तनयः सिंहो मित्रं तस्यास्ति सहदेवः ॥३॥
सहपांशुक्रीडितः क्रीडनार्थमथान्यदा च तत्रैव । रतिसागराभिधान उद्याने तेन सह प्राप्तः ॥४॥
क्रीडति विविधविलासैर्यावत्तावत्तत्र शृणोति मधुरध्वनिम् । ततस्तदनुसारतः स व्रजन् पश्यति सूरिम् ॥५॥
बहुमुनिगणपरिकरितं क्षणशशिबिम्बमिव तारकासनाथम् । धर्ममिव मूर्त्तिमन्तं दिशन्तं भूरिभव्येभ्यः ॥६॥
स्वर्गापवर्गमार्गं, ततस्तं नत्वा तत्रोपविष्टः । पृच्छति सिंहः सूरिं भगवन् ! मे संशयं हर ॥७॥
किं धर्ममपि कुर्वल्लँक्ष्मीभ्रंशं लभते कोऽपि नरः ? । लाभान्तरायवशतो लभत एव भणति तत्र गुरुः ॥८॥
ततः सिंहेन भणितं लक्ष्मीभ्रंशं लभते धर्म्यपि । यदि प्रभो ! तदा पर्याप्तं धर्मेण क्लेशमूलेन ॥९॥
ततो भणति मुनिवरेन्द्रो यद्यपि धर्मान्तरायदोषेण । भवति विभवस्य नाशः पुनरपि धर्मात्प्राप्नोति ॥१०॥
सविशेषं धनलाभं निश्चयसारं करोति यदि धर्मम् । दृष्टान्त इह श्रेष्ठी मुनिदासः, शृणूपयुक्तः ॥११॥
देवविनिर्मितगुरुशुभ्रस्तूपशोभायां मथुरानगर्याम् । आसीन्मुनिदासश्रेष्ठ्यज्ञातनिजविभवपरिमाणः ॥१२॥
अविचलसम्यक्त्वधरः कर्मवशात्तस्यान्यदा विभवः । सर्वोऽपि परिभ्रष्टोऽपमानपदं ततो जातः ॥१३॥

सो उण अविसन्नमणो तिकालं कुणइ भावओ पूयं। सेइकारियजिणमंदिरजिणपडिमाए जहासत्ति ॥१५॥
तत्तणया तो सिट्ठिं सीयंतं बिंति विरम पूयाए। एत्तियकालं हट्टे जइ तं चिट्ठेइ वणिजकए ॥१६॥
तो नहु खूणं जायइ भोयणओ, वत्थमाइयं सव्वं। अम्हे उण परगेहे कम्मं काऊणुवज्जिस्सं ॥१७॥
इहलोइच्चिय दिट्ठं पूयाइ फलं जिणिंदबिंबाणं। तहवि न विरमसि एईए नूण मूढो सि तं वूढ! ॥१८॥
तो ताणं पइ जंपइ मा मेवं वयह धम्मचाएणं। जम्हा न कज्जसिद्धी जायइ जीवाण कइयावि ॥१९॥
जं पुण दारिद्ददुहं समागयं अम्ह एत्थ जम्मम्मि। तं पुव्वजम्मपावस्स विलसियं जेणिमं भणियं ॥२०॥
सुंदरधम्मरयाणवि विसमं विहिविलसियं समावडइ। जं तत्थ कारणमिणं अन्नभवे खंडिओ धम्मो ॥
तो जाउ सिरी विहडंतु बंधवा होउ लोयअवमाणं। तहवि न जिणिंदपूयं वज्जिस्समहं जओ भणियं ॥
पूयाए जिणिंदाणं फलमिह सग्गापवग्गसोक्खाइं। तम्हा तुम्हेवि हु इत्थ आयरं कुणह इय भणिए ॥
तयभिमुहं भणइ जणो जह जह जिणपूयणं तुमं कुणसि। तह तह दालिद्दतरू सुफलफलं फुलइ तुह गेहे[1]॥
इय मुणिउं जणवायं धम्मखिसत्ति मन्नमाणो सो। चइऊण पुरं पत्तो पच्चासन्नम्मि गामम्मि ॥२५॥
तत्थवि गिहपडिमाए तिकालं कुणइ पूयमणवज्जं। अह चउमासगदिवसे सो पत्तो महुरनयरीए ॥२६॥
जिणमंदिरस्स दारे तो मालाकारिणी भणइ सिट्ठिं। चउसरमेगं कुसुमाण गिण्ह पूएसु जिणबिंबं ॥
तो गिण्हइ नो सिट्ठी दव्वाभावा भणेइ सा एवं। तुज्झ पसाएण इमेलंकारा अम्ह देहम्मि ॥२८॥

---

लोकानां बन्धूनां नरपतेर्निजसुतानां भार्यायाः। किं बहुना, प्रतिवचनमपि तस्य नो ददाति कोऽपि तत्र ॥१४॥
स पुनरविषण्णमनास्त्रिकालं करोति भावतः पूजाम्। स्वकारितजिनमन्दिरजिनप्रतिमाया यथाशक्ति ॥१५॥
तत्तनयास्ततः श्रेष्ठिनं सीदन्तं ब्रुवन्ति विरम पूजायाः। इयत्कालं हट्टे यदि त्वं तिष्ठसि वाणिज्यकृते ॥
ततो न खलु क्षूणं जायते भोजनतः, वस्त्रादिकं सर्वम्। वयं पुनः परगेहे कर्म कृत्वोपार्जयिष्यामः ॥१७॥
इहलोक एव दृष्टं पूजायाः फलं जिनेन्द्रबिम्बानाम्। तथापि न विरमस्येतस्या नूनं मूढोऽसि त्वं वृद्ध! ॥१८॥
ततस्तान् प्रति जल्पति मा मैवं वदत धर्मत्यागेन। यस्मान्न कार्यसिद्धिर्जायते जीवानां कदापि ॥१९॥
यत्पुनर्दारिद्र्यदुःखं समागतं ममात्र जन्मनि। तत्पूर्वजन्मपापस्य विलसितं येनेदं भणितम् ॥२०॥
सुन्दरधर्मरतानामपि विषमं विधिविलसितं समापतति। यत्तत्र कारणमिदमन्यभवे खण्डितो धर्मः ॥२१॥
ततो यातु श्रीर्विघटन्तां बान्धवा भवतु लोकापमानः। तथापि न जिनेन्द्रपूजां वर्जयिष्याम्यहं यतो भणितम् ॥
पूजाया जिनेन्द्राणां फलमिह स्वर्गापवर्गसौख्यानि। तस्माद् यूयमपि खल्वत्रादरं कुरुतेति भणिते ॥२३॥
तदभिमुखं भणति जनो यथा यथा जिनपूजनं त्वं करोषि। तथा तथा दारिद्र्यतरुः सुफलफलं फलति तव गेहे॥
इति ज्ञात्वा जनवादं धर्महेलेति मन्यमानः सः। त्यक्त्वा पुरं प्राप्तः प्रत्यासन्ने ग्रामे ॥२५॥
तत्रापि गृहप्रतिमायास्त्रिकालं करोति पूजामनवद्याम्। अथ चतुर्मासदिवसे स प्राप्तो मथुरानगर्याम् ॥२६॥
जिनमन्दिरस्य द्वारे ततो मालाकारिणी भणति श्रेष्ठिनम्। चतुर्मालामेकां कुसुमानां गृहाण पूजय जिनबिम्बम् ॥

---

[1] क. ख फल्हिही तुज्झवि य गेहम्मि।

चारकएण तुमए कुसुमाई गिण्हियाइं सयकालं । ता गिण्हसु एयाइं पुण्णं तुम्हाण मे दिन्नं ॥२९॥
पूयसु जिणिंदबिंबं तो सिट्ठी कुणइ ताइं नियहत्थे । निस्सीहियं भणेउं पविसइ विहिणा जिणसमीवे ॥
भत्तिब्भरनिब्भरुब्भिन्नबहलरोमंचकंचुइज्जंतो । पूयइ जिणिंदबिंबं इय भावंतो मणे सिट्ठी ॥३१॥
धन्नो हं जेण मए अणोरपारम्मि भवसमुद्दम्मि । भवसयसहस्सदुलहं लद्धं सद्धम्मजाणंति ॥३२॥
एयस्स पभावेणं पालिज्जंतस्स सइ पयत्तेण । जम्मंतरेवि जीवा पावंति न दुक्खदोहग्गं ॥३३॥
चिंतामणी अउव्वो एस अउव्वो य कप्परुक्खोत्ति । एसो परमो मंतो एयं परमामयं इत्थ ॥३४॥
तेसिं नमो तेसिं नमो भावेण पुणो पुणोवि तेसिं नमो । अणुवकयपरहियरया जीवाण कहिंति जे धम्मं॥
सुलहो विमाणवासो एगच्छत्तावि मेइणी सुलहा । लोगम्मि नवरि दुलहो जणेण जिणदेसिओ धम्मो ॥
ता दुल्लंभो लद्धो धम्मो सव्वन्नुपूयणाईओ । अन्नेण मे न कज्जं इय चिंतिवि वंदए देवे ॥३७॥
जिणवंदणावसाणे पिच्छइ वक्खाणमंडवे सूरिं । वागरमाणं धम्मं सम्मं भव्वाण तो सिट्ठी ॥३८॥
वंदइ दूरट्ठिओ तं सूरीवि हु सायरं गुरुगिराए । दाऊणं धम्मलाभं तप्पुरओ साहए एवं ॥३९॥
जलहिवडियंव रयणं दुलहं मणुयत्तमित्थ संसारे । ता लद्धूणं एयं जइयव्वं सुगइमग्गम्मि ॥४०॥
स चायम्;—

पूया जिणिंदेसु रई वएसु जत्तो य सामाइयपोसहेसु ।
दाणं सुपत्ते सवणं सुतित्थे सुसाहुसेवा सुमईइ मग्गो ॥४१॥

---

ततो गृह्णाति नो श्रेष्ठी-द्रव्याभावाद्भणति सैवम् । तव प्रसादेनेमेऽलङ्कारा मम देहे ॥२८॥
इच्छाक्रयेण त्वया कुसुमानि गृहीतानि सदाकालम् । तस्माद् गृहाणैतानि पुण्यं युष्मभ्यं मया दत्तम् ॥२९॥
पूजय जिनेन्द्रबिम्बं, ततः श्रेष्ठी करोति तानि निजहस्ते । नैषेधिकीं भणित्वा प्रविशति विधिना जिनसमीपे ॥
भक्तिभरनिर्भरोद्भिन्नबहलरोमाञ्चकञ्चुकायमानः । पूजयति जिनेन्द्रबिम्बमिति भावयन्मनसि श्रेष्ठी ॥३१॥
धन्योऽहं येन मयाऽनादिपारे भवसमुद्रे । भवशतसहस्रदुर्लभं लब्धं सद्धर्मयानमिति ॥३२॥
एतस्य प्रभावेण पाल्यमानस्य सदा प्रयत्नेन । जन्मान्तरेऽपि जीवाः प्राप्नुवन्ति न दुःखदौर्भाग्यम् ॥३३॥
चिन्तामणिरपूर्व एषोऽपूर्वश्च कल्पवृक्ष इति । एष परमो मन्त्र एतत् परमामृतमत्र ॥३४॥
तेभ्यो नमस्तेभ्यो नमो भावेन पुनः पुनरपि तेभ्यो नमः । अनुपकृतपरहितरता जीवानां कथयन्ति ये धर्मम् ॥
सुलभो विमानवास एकच्छत्रापि मेदिनी सुलभा । लोके केवलं दुर्लभो जनेन जिनदेशितो धर्मः ॥३६॥
तस्माद् दुर्लभो लब्धो धर्मः सर्वज्ञपूजनादिकः । अन्येन मे न कार्यमिति चिन्तयित्वा वन्दते देवान् ॥३७॥
जिनवन्दनावसाने पश्यति व्याख्यानमण्डपे सूरिम् । व्याकुर्वन्तं धर्मं सम्यग् भव्येभ्यः, ततः श्रेष्ठी ॥३८॥
वन्दते दूरस्थितस्तं सूरिरपि हि सादरं गुरुगिरा । दत्त्वा धर्मलाभं तत्पुरतः कथयत्येवम् ॥३९॥
जलधिपतितमिव रत्नं दुर्लभं मनुजत्वमत्र संसारे । तस्माल्लब्ध्वैतद् यतितव्यं सुगतिमार्गे ॥४०॥

पूजा जिनेन्द्रेषु रतिर्व्रतेषु यत्नश्च सामायिकपौषधेषु ।

इच्चाइवित्थरेणं कहियाए देसणाए सुरीहिं । सिट्ठी जंपइ संवेगनिब्भरं सूरिसमुहमिणं ॥४२॥
तुज्झ पसाएण महं निच्चं निव्वहइ नाह ! जिणपूया । किंपुण पहु ! अंगरुहा कुणंति अप्पत्तियं बहुयं ॥
जंपंति तहा विज्जइ न किंपि पूयाए तुह फलं ताय ! । पुव्वज्जियावि लच्छी नवरं नीहरइ गेहाओ ॥
लोओवि भणइ एवं धम्मेण धणं इमस्स हारवियं । मम पुणं मणयंपि न किंपि माणसे फुरइ तव्वयणं ॥
ता थिरकरणोवाओ हविज्ज जइ कोवि ताणवि मुणिंद ! । तो निव्वहिज्ज धम्मो सुहेण मह नाह ! इय वोत्तुं॥
मोणेण ठिओ सिट्ठी उवयारं जाणिऊण सूरीवि । उवइसइ तस्स मंतं निरवज्जं पढियसिद्धं च ॥४७॥
कसिणचउद्दसिरयणीए अद्धरत्तम्मि पेयवणमज्झे । काउस्सग्गेण ठिओ सुमरिज्जसु तं इमं मंतं ॥४८॥
तो पच्चक्खो होही कवड्डिजक्खो मुहुत्तमित्तेण । भणिही सो तुह समुहं अभिरुइयं मग्गसु वरंति ॥४९॥
तो तुमए सो एवं एवं वत्तव्वओत्ति भणिऊण । सूरीवि विहारेणं अन्नत्थ गओ तओ सिट्ठी ॥५०॥
भणियदिवसम्मि पत्तो मसाणभूमीए कहियविहिपुव्वं । काउस्सग्गम्मि ठिओ तो पुव्वुत्तं समग्गंपि ॥
तह जायं जह भणियं जक्खाभिमुहं भणेइ तो सिट्ठी । चउमासदिणे पूया जा विहिया च्चउसरेण मए॥
तीइ फलेण पसायं कुणसु तुमं अत्थि तुज्झ जइ सत्ती । इय सुणिउं सो जक्खो उवओगं देइ अवहीए॥
उल्लवियं तो तेणं तीए फलं वियरिउं असत्तो हं । जम्हा जिणस्स पूयाए एक्कसिं भावविहियाए ॥
सग्गसिरीवि हु लब्भइ अइवित्थिन्ना ममं च सा नत्थि । वंतरजाईओ हं ता अन्नं भणसु तं किंपि ॥

---

दानं सुपात्रे श्रवणं सुतीर्थे सुसाधुसेवा सुगतेर्मार्गः ॥४१॥
इत्यादिविस्तरेण कथितायां देशनायां सूरिभिः । श्रेष्ठी जल्पति संवेगनिर्भरं सूरिसम्मुखमिदम् ॥४२॥
तव प्रसादेन मम नित्यं निर्वहति नाथ ! जिनपूजा । किन्तु प्रभो ! अङ्गरुहाः कुर्वन्त्यप्रत्ययं बहुम् ॥४३॥
जल्पन्ति तथा विद्यते न किमपि पूजायास्तव फलं तात !। पूर्वार्जितापि लक्ष्मीः किन्तु निस्सरति गेहात ॥४४॥
लोकोऽपि भणत्येवं धर्मेण धनमस्य नाशितम् । मम पुनर्मनागपि न किमपि मानसे स्फुरति तद्वचनम् ॥४५॥
तस्मात्स्थिरकरणोपायो भवेद् यदि कोऽपि तेषामपि मुनीन्द्र ! । ततो निर्वहेद् धर्मः सुखेन मम नाथ ! इत्युक्त्वा॥
मौनेन स्थितः श्रेष्ठ्युपकारं ज्ञात्वा सूरिरपि । उपदिशति तस्य मन्त्रं निरवद्यं पठितसिद्धं च ॥ ४७ ॥
कृष्णचतुर्दशीरजन्यामर्धरात्रे प्रेतवनमध्ये । कायोत्सर्गेण स्थितः स्मरेस्त्वमिमं मन्त्रम् ॥ ४८ ॥
ततः प्रत्यक्षो भविष्यति कपर्दियक्षो मुहूर्तमात्रेण । भणिष्यति स तव संमुखमभिरुचितं मार्गय वरमिति ॥४९॥
ततस्त्वया स एवमेवं वक्तव्य इति भणित्वा । सूरिरपि विहारेणान्यत्र गतस्ततः श्रेष्ठी ॥ ५० ॥
भणितदिवसे प्राप्तः श्मशानभूमौ कथितविधिपूर्वम् । कायोत्सर्गे स्थितस्ततः पूर्वोक्तं समग्रमपि ॥ ५१ ॥
तथा जातं यथा भणितं यक्षाभिमुखं भणति ततः श्रेष्ठी । चतुर्मासदिने पूजा या विहिता चतुर्मालेन मया॥५२॥
तस्याः फलेन प्रसादं कुरुष्व त्वमस्ति तव यदि शक्तिः । इति श्रुत्वा स यक्ष उपयोगं ददात्यवधेः ॥५३॥
उल्लापितं ततस्तेन तस्याः फलं वितरीतुमशक्तोऽहम् । यस्माज्जिनस्य पूजयैकया भावविहितया ॥ ५४ ॥
स्वर्गश्रीरपि हि लभ्यतेऽतिविस्तीर्णा मम च सा नास्ति । व्यन्तरजातीयोऽहं तस्मादन्यद्भण त्वं किमपि ॥५५॥

सो भणइ जक्ख! तुह दंसणेण तुट्ठो अहं वयसु ठाणं। जिणधम्मपभावेणं किं मह तं जं न होहित्ति? ॥
तो तं पइ सो जंपइ ससत्तिओ तुह करेमि वच्छल्लं। साहम्मिउत्ति काउं तेणाणुमए भणइ जक्खो ॥
तुह गेहे चउसुवि कोणएसु चिट्ठंति गुरुनिहाणाइं। गिण्हेयव्वाइं तए इय वोत्तुमदंसणं पत्तो ॥५८॥
पच्छिमनिसाए सिट्ठी पत्तो गेहम्मि भणइ नियतणए। जइ धम्मे कुणह मइं तो इह जम्मेवि तुम्हाणं ॥
दंसेमि फलमुयारं, तो ते जंपंति जइ इमं कुणसि। तो निउणतरं धम्मं तुज्झ सयासाउ पकरेमो ॥६०॥
दाऊण ताण सवहं तिक्कालं जिणगिहस्स गमणम्मि। पूयाईकरणम्मि य पयंसिओ तो निही एगो ॥६१॥
दट्ठुं महप्पमाणं पडिपुण्णं टंकयाण तं हिट्ठा। सव्वं चिय तव्वयणं कुणंति भावेण पइदियहं ॥६२॥
तत्तो कमेण निहिणो सेसावि पयंसिया गिहस्संतो। अह अन्नया य पत्तो सोच्चिय सूरी तहिं, तत्तो ॥
नियसव्वसुएहिं समं महंतरिद्धीए ताण नमणत्थं। सिट्ठी पत्तो अन्नोवि पुरजणो विहियसिंगारो ॥६४॥
ति पयाहिणीकरेउं नमिउं सूरिं न याइदूरम्मि। उवविट्ठा सव्वेवि हु तो सिट्ठी भणइ समयम्मि॥६५॥
भयवं! मज्झ सुयाणं सम्मत्ताई गिहत्थसद्धम्मो। उवइसिऊणं दिज्जउ सूरीवि तहेव तं कुणइ ॥६६॥
इय सोऊणं भणियं सीहेणं नाह! मज्झवि कहेह। वित्थरओ गिहिधम्मं जेणाहं तं पवज्जेमि ॥६७॥
तो कहइ गुरू तस्सवि अन्नेसिंपि हु तओ य केणावि। सम्मत्तं पडिवन्नं तह केणवि अणुव्वयाईणि ॥६८॥
सहदेवेण समं पुण सीहो गिण्हेइणत्थदंडवयं। सम्मत्तजुअं साहइ तस्स सरूवं गुरूवि इमं ॥६९॥
पावोवएसहिंसप्पयाणओ अट्टझाणकरणाओ। मज्जाइपमायाओ अणत्थदंडो भवे चउहा ॥७०॥

---

स भणति यक्ष! तव दर्शनेन तुष्टोऽहं व्रज स्थानम्। जिनधर्मप्रभावेण किं मम तद्यन्न भविष्यतीति? ॥५६॥
ततस्तं प्रति स जल्पति स्वशक्तितस्तव करोमि वात्सल्यम्। साधर्मिक इति कृत्वा तेनानुमते भणति यक्षः ॥
तव गेहे चतुर्ष्वपि कोणेषु तिष्ठन्ति गुरुनिधानानि। ग्रहीतव्यानि त्वयेत्युक्त्वाऽदर्शनं प्राप्तः ॥ ५८ ॥
पश्चिमनिशायां श्रेष्ठी प्राप्तो गेहे भणति निजतनयान्। यदि धर्मे कुरुत मतिं तत इह जन्मन्यपि युष्माकम् ॥
दर्शयामि फलमुदारं, ततस्ते जल्पन्ति यदीदं करोषि। ततो द्विगुणतरं धर्मं तव सकाशात्प्रकुर्मः ॥ ६० ॥
दत्त्वा तेषां शपथं त्रिकाले जिनगृहस्य गमने। पूजादिकरणे च प्रदर्शितस्ततो निधिरेकः ॥ ६१ ॥
दृष्ट्वा महाप्रमाणं परिपूर्णं टङ्कानां तं हृष्टाः। सर्वमेव तद्वचनं कुर्वन्ति भावेन प्रतिदिवसम् ॥ ६२ ॥
ततः क्रमेण निधयः शेषा अपि प्रदर्शिता गृहस्यान्तः। अथान्यदा च प्राप्तः स एव सूरिस्तत्र, ततः ॥६३॥
निजसर्वसुतैः समं महद्धर्या तेषां नमनार्थम्। श्रेष्ठी प्राप्तोऽन्योऽपि पुरजनो विहितशृङ्गारः ॥६४॥
त्रिः प्रदक्षिणीकृत्य नत्वा सूरिं न चातिदूरे। उपविष्टाः सर्वेऽपि हि ततः श्रेष्ठी भणति समये ॥६५॥
भगवन्! मम सुतानां सम्यक्त्वादिर्गृहस्थसद्धर्मः। उपदिश्य दीयतां सूरिरपि तथैव तत्करोति ॥६६॥
इति श्रुत्वा भणितं सिंहेन नाथ! ममापि कथयत। विस्तरतो गृहिधर्मं येनाहं तं प्रपद्ये ॥६७॥
ततः कथयति गुरुस्तस्याप्यन्येषामपि हि ततश्च केनापि। सम्यक्त्वं प्रतिपन्नं तथा केनाप्यणुव्रतादीनि ॥६८॥
सहदेवेन समं पुनः सिंहो गृह्णात्यनर्थदण्डव्रतम्। सम्यक्त्वयुतं कथयति तस्य स्वरूपं गुरुरपीदम् ॥६९॥

अहिगरणपउणकरणं भोगुवभोगाण अहियकरणं च । अणवरयं मोहरियं कंदप्पं तह य कुक्कुइयं ॥७१॥
वज्जेयव्वं गिहिणा अणत्थदंडव्वयं धरंतेण । इय निसमिऊण समगं भत्तीए सीहसहदेवा ॥७२॥
तत्तो नमिऊण गुरुं गिहम्मि पत्ता कुणंति जिणधम्मं । अह अन्नया य सीहो हट्टे ववहरइ जा ताव ॥
रायसुहासियभासी भंडो पत्तो भणेइ तयभिमुहं । कइहेसु वैणिय ! कोडिं वेहियावट्टाण दड्ढाण ॥७४॥
तो तह करेइ सीहो सोवि हु अप्पेइ विंटयं तस्स । मुल्लं ठविऊण तओ फालवइ कन्नमूलम्मि ॥७५॥
सव्वेवि वेहियवट्टे भणइ य न कयावि सवणविवरेसु । मज्झ पविट्ठो एसो चरचरसद्दो सवणसुहओ ॥
तो हसइ सीहवणिओ सह वणिउत्तेहिं मिल्लए मोल्लं । ताणं तंबोलाई दाऊण विसज्जए भंडं ॥७७॥
तो पइदिणम्मि भंडो आगच्छइ सीहपासम्मि अक्खलिओ । कुणइ विविहे वियारे तह भूभंगाइपरिहासे॥
तह विडविज्जं पयडइ हसंति सीहाइया जहा सव्वे । मुत्तूणं सहदेवं,सीहो तो दूरहयहियओ ॥७९॥
मुहनयणाइवियारे अणवरयं कुणइ तस्स पासठिओ । किं बहुणा सो जाओ तओवि गरुओ महाभंडो ॥
सहदेवो उण वारइ अणवरयं सो न विरमइ तहावि । रमणीमणआणंदं करेइ विविहाहिं चिट्ठाहिं ॥८१॥
मुद्धत्ताउ न याणइ अइयारमिमं सुमित्तकहियंपि । हासरसाउलहियओ हसावए सव्वमवि लोयं ॥८२॥
कन्नडयरायउत्तस्स भारिया कप्पडस्स किणणत्थं । अह कइयावि हु हट्टे पत्ता सीहस्स पासम्मि ॥८३॥
वत्थं हत्थे अप्पइ तीए नयणाइएहिं विविकरियं । कुणइ जह भोलिया सा मुल्लं बहुयं पयच्छेइ ॥८४॥

---

पापोपदेशहिंस्रप्रदानत आर्तध्यानकरणात् । मद्यादिप्रमादादनर्थदण्डो भवेच्चतुर्धा ॥७०॥
अधिकरणप्रगुणकरणं भोगोपभोगानामधिककरणं च । अनवरतं मौखर्यं कन्दर्पस्तथा च कौकुच्यम् ॥७१॥
वर्जयितव्यं गृहिणाऽनर्थदण्डव्रतं धरता । इति निशम्य समं भक्त्या सिंहसहदेवौ ॥७२॥
ततो नत्वा गुरुं गृहे प्राप्तौ कुरुतो जिनधर्मम् । अथान्यदा च सिंहो हट्टे व्यवहरति यावत्तावत् ॥७३॥
रागसुभाषितभाषी विटः प्राप्तो भणति तदभिमुखम् । कथय वणिक् ! कोटिं वहिकावृत्तानां दग्धानाम् ॥७४॥
ततस्तथा करोति सिंहः सोऽपि खल्वर्पयति पोट्टलं तस्य । मूल्यं स्थापयित्वा ततः स्फालयति कर्णमूले ॥
सर्वानपि वहिकावृत्तान् भणति च न कदापि श्रवणविवरेषु । मम प्रविष्ट एष चरचरशब्दः श्रवणसुखदः ॥
ततो हसति सिंहवणिक् सह वणिक्पुत्रैर्मुञ्चति मूल्यम् । तेषां ताम्बूलादीन् दत्त्वा विसृजति विटम् ॥७७॥
ततः प्रतिदिनं विट आगच्छति सिंहपार्श्वेऽस्खलितः । करोति विविधान्विकारांस्तथा भ्रूभङ्गादिपरिहासान् ॥
तथा विटविद्यां प्रकटयति हसन्ति सिंहादिका यथा सर्वे । मुक्त्वा सहदेवं, सिंहस्ततो दूरहतहृदयः ॥७९॥
मुखनयनादिविकारानऽनवरतं करोति तस्य पार्श्वस्थितः । किं बहुना स जातस्ततोऽपि गुरुर्महाविटः ॥८०॥
सहदेवः पुनर्वारयत्यनवरतं स न विरमति तथापि । रमणीमनआनन्दं करोति विविधाभिश्चेष्टाभिः ॥८१॥
मुग्धत्वान्न जानात्यतिचारमिमं सुमित्रकथितमपि । हास्यरसाकुलहृदयो हासयति सर्वमपि लोकम् ॥८२॥
कर्णाटकराजपुत्रस्य भार्या कर्पटस्य क्रयणार्थम् । अथ कदापि हि हट्टे प्राप्ता सिंहस्य पार्श्वे ॥८३॥

---

१ ग. भणयको° । २ क. विहि° ।

इत्तो तब्भत्तारो पत्तो पुट्ठीए पिच्छए सव्वं। तव्विक्किरियं तत्तो कुविओ सो गुरुचवेडाए ॥८५॥
हणइ कवोलपएसे भणइ य रे रे अणज्ज! वणिओवि। भंडाणवि अहिओ तं जो मह महिलापुणो एवं ॥
कुणसि विविहे वियारे इय भणिउं जाव निहणिही ताव। वणिउत्तेहिं सहसा धरिओ बाहाए भणिओ य ॥
खमसु महायस! इण्हिं खमापहाणा य हुंति सप्पुरिसा। इच्चाइ पयंपेउं कोवो उत्तारिओ तस्स ॥८८॥
सीहो चवेडघाएण पीडिओ मुच्छिओ य खणमिक्कं। खुडियक्कनयणगोलो उवयरिओ चंदणाईहिं ॥
नीओ घरम्मि नय किंपि चेयए वेयणाए विद्दविओ। अणुसासिओ य बहुयं सीहो सहदेवमित्तेण ॥
सत्तमदिणम्मि तत्तोणालोइयदुक्कडो गओ निहणं। नागकुमारो जाओ भमिही दुहिओ भवे घोरे ॥९१॥
सहदेवो सयकालं कलंकमुक्कव्वयं चरेऊण। पज्जंतकयाणसणो विहिणा पाणे परिच्चइउं ॥९२॥
सोहम्मे उववन्नो तत्तो चविउं महाविदेहम्मि। सिज्झिस्सइ धुयकम्मो पावियचरणो समाहीए ॥९३॥

॥ इति तृतीयगुणव्रते द्वितीयातिचारविपाके सिंहवणिक्कथानकं समाप्तम् ॥

---

वस्त्रं हस्तेऽर्पयति तस्या नयनादिकैर्विक्रियाम्। करोति यथा भद्रिका सा मूल्यं बहु प्रयच्छति ॥८४॥
इतस्तद्भर्त्ता प्राप्तः पृष्ठे पश्यति सर्वाम्। तद्विक्रियां ततः कुपितः स गुरुचपेटया ॥८५॥
हन्ति कपोलप्रदेशे भणति च रे रेऽनार्य! वणिगपि। विटेभ्योऽप्यधिकस्त्वं यो मन्महिलायाः पुर एवम् ॥८६॥
करोषि विविधान्विकारानिति भणित्वा यावन्निहनिष्यति तावत्। वणिक्पुत्रैः सहसा धृतो बाहुना भणितश्च ॥
क्षमय महायशः! इदानीं क्षमाप्रधानाश्च भवन्ति सत्पुरुषाः। इत्यादि प्रजल्प्य कोप उत्तारितस्तस्य ॥८८॥
सिंहश्चपेटाघातेन पीडितो मूर्च्छितश्च क्षणमेकम्। खण्डितैकनयनगोलक उपचरितश्चन्दनादिभिः ॥८९॥
नीतो गृहे न च किमपि चेतति वेदनया विद्रुतः। अनुशासितश्च बहु सिंहः सहदेवमित्रेण ॥९०॥
सप्तमदिने ततोऽनालोचितदुष्कृतो गतो निधनम्। नागकुमारो जातो भ्रमिष्यति दुःखितो भवे घोरे ॥९१॥
सहदेवः सदाकालं कलङ्कमुक्तव्रतं चरित्वा। पर्यन्तकृतानशनो विधिना प्राणान् परित्यज्य ॥९२॥
सौधर्मे उपपन्नस्ततश्च्युत्वा महाविदेहे। सेत्स्यति धुतकर्मा प्राप्तचरणः समाधिना ॥९३॥

आलप्पायं मोहरियभावओ जो पलप्पए सड्ढो । तइयगुणव्वयधारी दुहाइं सो लहइ पउमोव्व ॥१॥
तथाहि; —
पुरमत्थि पुरिमतालं तं पालइ पत्थिवो विजयपालो । तस्सत्थि पिया रंभा रंभव्व वियंभियसुभोया॥२॥
अह अन्नया नरिंदो करिंदखंधग्गओ सपरिवारो । रायवडियाइ गच्छइ तो पिच्छइ वणिगिहे कम्मि ॥
पढमुल्लसंतजोव्वणरसाउलं लच्छिनामियं कन्नं । गयरूवं, तो तदुवरि तस्सणुराओ कहवि जाओ ॥४॥
तज्जणयाई मग्गाविऊण परिणेइ तं सहत्थेण । अंतेउरम्मि खिविउं तीइ समं विलसइ नरिंदो ॥५॥
न कुणइ कस्सवि तत्तिं पुरस्स अंतेउरस्स रज्जस्स । तीइ परिभोगरसिओ राओदिवसंपि तीइ गिहे ॥६॥
चिट्ठइ पडिओ नडिओ तीए सिणेहेण हारियविवेओ । परिहरियसव्वकज्जो भणिओ तो मंतिणा एवं॥
इयरोवि जणो रागस्स वसगओ बहु विगुप्पए नूणं । किं पुण पुहईवइणो अंतररिउछक्कअक्कंता? ॥८॥
धम्मं अत्थं कामं नीईए निसेवयंति नरवइणो । जे ताणं पुरिसत्था दिंति फलं निप्फला इहरा ॥९॥
किञ्च ।
दूरं नासंति गुणा दूरं चिय वीसरंति सत्थत्था । दूरं गुरूवएसा रागंधाणं नराण तओ ॥१०॥
वड्डंतरम्मि भुल्लो देवो चइऊण रज्जरट्ठं च । धम्मं च जं इमीए आसत्तो चिट्ठइ सयावि ॥११॥
तो भणियं नरवइणा सचिव! तुमं मा भणेसु मह सम्मुहं । किंचिवि जमिमं रज्जं तुह दिन्नं पालसु तमेव॥
जावेसा मिगनयणा महनयणपहे पयट्टइ सयावि । तावच्चिय मह जीयं किं कज्जं रज्जमाईहिं? ॥१३॥
पिच्छ कह एस राया रागेण विडंबिओ न चेएइ । अप्पाणं गयलज्जो इय सचिवो चिंतए जांव॥१४॥

---

आलप्रायं मौखर्यभावतो यः प्रलपति श्राद्धः । तृतीयगुणव्रतधारी दुःखानि स लभते पद्म इव ॥१॥
पुरमस्ति पुरिमतालं तत्पालयति पार्थिवो विजयपालः । तस्यास्ति प्रिया रम्भा रम्भेव विजृम्भितसुभोगा ॥
अथान्यदा नरेन्द्रः करीन्द्रस्कन्धगतः सपरिवारः । राजवाटिकायां गच्छति ततः पश्यति वणिग्गृहे कस्मिन्॥
प्रथमोल्लसद्यौवनरसाकुलां लक्ष्मीनामिकां कन्याम् । गतरूपां, ततस्तदुपरि तस्यानुरागः कथमपि जातः ॥
तज्जनकादीन्मार्गयित्वा परिणयति तां स्वहस्तेन । अन्तःपुरे क्षिप्त्वा तया समं विलसति नरेन्द्रः ॥५॥
न करोति कस्यापि चिन्तां पुरस्यान्तःपुरस्य राज्यस्य । तस्यां परिभोगरसिको रात्रिदिवसमपि तस्या गृहे ॥
तिष्ठति पतितो नटितस्तस्य स्नेहेन हारितविवेकः । परिहृतसर्वकार्यो भणितस्ततो मन्त्रिणैवम् ॥७॥
इतरोऽपि जनो रागस्य वशगतो बहु विगुप्यते नूनम् । किं पुनः पृथिवीपतय आन्तरारिषट्काक्रान्ताः ? ॥
धर्ममर्थं कामं नीत्या निषेवन्ते नरपतयः । ये तेषां पुरुषार्था ददति फलं निष्फला इतरथा ॥९॥
दूरं नश्यन्ति गुणा दूरमेव विस्मर्यन्ते शास्त्रार्थाः । दूरं गुरूपदेशा रागान्धानां नराणां ततः ॥१०॥
महान्तरे भ्रष्टो देवस्त्यक्त्वा राज्यराष्ट्रं च । धर्मं च यदस्यामासक्तस्तिष्ठति सदापि ॥११॥
ततो भणितं नरपतिना सचिव! त्वं मा भण मम संमुखम् । किञ्चिदपि यदिदं राज्यं तव दत्तं पालय त्वमेव॥
यावदेषा मृगनयना मम नयनपथे प्रवर्तते सदापि । तावदेव मम जीवितं किं कार्यं राज्यादिभिः ? ॥१३॥

ता तीइ चरिमजामे वासियवमणं कहंपि संजायं। तो राया संखुद्धो विज्जे वाहरइ तेवि तओ ॥१५॥
छड्डावणाइं विविहाइं जाव पउंजंति ताव सहसावि। सा मुक्का पाणेहिं मिहिरस्स समुग्गमे तत्तो ॥
मुच्छानिमीलियच्छो राया धरणीए निवडिओ दट्ठुं। गयपाणं पाणपियं ठिओ य कट्ठंव निच्चिट्ठो ॥
चंदणरसेण सित्तो पवीइओ तालविंटएण निवो। पत्ते चेयणभावे विलवइ गुरुमुक्कपुक्कारो ॥१८॥
हा लच्छि मयच्छि सुदच्छि किमिह पुच्छंतयस्स पडिवयणं। न हु देसि मज्झ छणससिवयणे रुट्ठासि किं सुयणु
इच्चाइ-पलवमाणो न मुयइ पासं करेइ नय गासं। नय देई अवगासं कस्सवि तो पभणए मंती ॥२०॥
देव ! मयच्चिय एसा मुंचसु पासं करेमि सक्कारं। एईए जेणाहं कुविओ तो नरवई भणइ ॥२१॥
सक्कारह नियदेहं पुत्तपपुत्ताइएहिं सह तुमयं। मह पाणपिया दइया जीविस्सइ कोडिवासाइं ॥२२॥
मह कन्नकडुयवयणं अमंगलं जो भणिस्सइ इमीए। सो निच्छएण मरिही तो वंचेऊण तद्दिट्ठिं ॥२३॥
मंती कम्मयराओ सक्कारावइ कडेवरं तीसे। उम्मुक्कगरुयपुक्को तमपेच्छंतो नरवरोवि ॥ २४ ॥
विलवइ भणेइ एवं भुंजिस्समहं पियाए दिट्ठाए। जेणवहरिया देवी जमगेहम्मि य गए तम्मि ॥२५॥
एवं कयप्पइन्नो दिणदसगं गमइ नरवरो तत्तो। सिक्खविउं सचिवेणं तप्पासे पेसिओ पुरिसो ॥२६॥
तेण भणियं नराहिव ! वद्धाविज्जह पियाए सुद्धीए। सो भणइ साहसु कहिं उवलद्धा तीइ सुद्धित्ति ॥
सो आह नाह ! देवी संपइ सग्गम्मि सुरवइसमीवे। चिट्ठइ सुहेण तीए तुह पासे पेसिओ अहयं ॥२८॥

---

पश्य कथमेष राजा रागेण विडम्बितो न चेतति। आत्मानं गतलज्ज इति साचिवश्चिन्तयति यावत् ॥१४॥
तावत्तस्याश्चरमयामे वासितवमनं कथमपि संजातम्। ततो राजा संक्षुब्धो वैद्यानाह्वयति तेऽपि ततः ॥१५॥
मोचनानि विविधानि यावत्प्रयुञ्जते तावत्सहसापि। सा मुक्ता प्राणैर्मिहिरस्य समुद्गमे ततः ॥१६॥
मूर्च्छानिमीलिताक्षो राजा धरण्यां निपतितो दृष्ट्वा। गतप्राणां प्राणप्रियां स्थितश्च काष्ठमिव निश्चेष्टः ॥
चन्दनरसेन सिक्तः प्रवीजितस्तालवृन्तेन नृपः। प्राप्ते चेतनभावे विलपति मुक्तगुरुपूत्कारः ॥१८॥
हा लक्ष्मि-मृगाक्षि सुदक्षे किमिह पृच्छतः प्रतिवचनम्। न हि ददासि मम क्षणशशिवदने रुष्टासि किं सुतनु॥
इत्यादि प्रलपन्न मुञ्चति पार्श्वं करोति नच ग्रासम्। नच ददात्यवकाशं कस्यापि ततः प्रभणति मन्त्री ॥
देव ! मृतैवैषा मुञ्च पार्श्वं करोमि संस्कारम्। एतस्या येनाहं, कुपितस्ततो नरपतिर्भणति ॥२१॥
संस्कुरुत्व निजदेहं पुत्रप्रपुत्रादिकैः सह त्वम्। मम प्राणप्रिया दयिता जीविष्यति कोटिवर्षाणि ॥२२॥
मम कर्णकटुकवचनममङ्गलं यो भणिष्यत्यस्याः। स निश्चयेन मरिष्यति ततो वञ्चित्वा तद्दृष्टिम् ॥२३॥
मन्त्री कर्मकरात्संस्कारयति कलेवरं तस्याः। उन्मुक्तगुरुपूत्कारस्तामपश्यन्नरवरोऽपि ॥२४॥
विलपति भणत्येवं भोक्ष्येऽहं प्रियायां दृष्टायाम्। येनापहृता देवी यमगृहे च गते तस्मिन् ॥२५॥
एवं कृतप्रतिज्ञो दिनदशकं गमयति नरवरस्ततः। शिक्षयित्वा साचिवेन तत्पार्श्वे प्रेषितः पुरुषः ॥२६॥
तेन भणितं नराधिप ! वर्ध्यध्वे प्रियायाः शुद्ध्या। स भणति कथय कुत्रोपलब्धा तस्याः शुद्धिरिति ॥२७॥
स आह-नाथ ! देवी संप्रति स्वर्गे सुरपतिसमीपे। तिष्ठति सुखेन तया तव पार्श्वे प्रेषितोऽहम् ॥२८॥

तह संदिट्ठं एयं तुम्हाणं नाह ! एत्थवत्थाणं । न हु जुत्तं जेणेसो मणुस्सलोओ अइदुग्गंधो ॥२९॥
वाहिजरादुहकलिओ, सग्गो उण एयविरहिओ रम्मो । तह जइ मएवि कज्जं ता सिग्घं एज्ज इह नाह ! ॥
तो भणियं नरवइणा दंसह सग्गस्स वत्तणी मज्झ । पिच्छामि पिययमाए जेणाहं विमलमुहकमलं ॥३१॥
तेण भणियं नराहिव ! भुंजसु मज्जेसु कुणसु सिंगारं । रज्जं रट्ठं कोसं संभालसु रमसु धम्मम्मि ॥
जाव अहं देवीए गंतुं साहेमि तुम्ह आगमणं । तो तव्वयणेण निवो भोयणमाई कुणइ सव्वं ॥३३॥
यतः,
विहवीवि बुद्धिकलिओवि पुहइनाहोवि होउ दक्खोवि । गुरुरागगहगहिओ अलियंपि वियाणए सच्चं ॥
देवीविरहक्कंतो पइदिणमवलोयए पुरिसमग्गं । सोवि हु चिरकालाओ समागओ निवइपासम्मि ॥३५॥
अप्पेवि कप्पपायवफलोवमे सक्करुक्करसड्ढे । नारंगफले नमिऊण नरवरो तो इमं भणिओ ॥३६॥
देवीए पेसियाइं देव ! फलाइं ईमाइं सग्गाओ । तुह भणियं तं कहियं तह संदिट्ठं च मह जोग्गं ॥३७॥
मग्गेयव्वो देवो आहरणं जेण अमररमणीणं । मज्झे सोहामि अहं सालंकारा विसेसेण ॥३८॥
तो तक्खणेण सचिवे पभणइ राया इमस्स पुरिसस्स । देवीए जमाइट्ठं लहु आहरणं तमप्पेह ॥३९॥
मंतीहिं तहा विहियं तस्स नियंतस्स तयणु भंडारे । पक्खिविउं सो पुरिसो निगूहिओ कइवयदिणाइं ॥
पुणरवि एइ वएइ य गहिउं आहरणमाइयं किंचि । तो केणवि धुत्तेणं नाओ इय वइयरो कहवि ॥४१॥
तो तेण कणयपत्तं भुज्जंव कराविऊण उक्किरिया । तत्थक्खराउ भरिया सुयंधकत्थूरियरसेण ॥४२॥

---

तथा संदिष्टमेतद् युष्माकं नाथ ! अत्रावस्थानम् । न खलु युक्तं येनैष मनुष्यलोकोऽतिदुर्गन्धः ॥२९॥
व्याधिजरादुःखकलितः, स्वर्गः पुनरेतद्विरहितो रम्यः । तथा यदि ममापि कार्यं तदा शीघ्रमेया इह नाथ ! ॥
ततो भणितं नरपतिना दर्शय स्वर्गस्य वर्तनीं मम । पश्यामि प्रियतमाया येनाहं विमलमुखकमलम् ॥३१॥
तेन भणितं नराधिप ! भुङ्क्ष्व मज्ज कुरु शृङ्गारम् । राज्यं राष्ट्रं कोशं संभालय रमस्व धर्मे ॥३२॥
यावदहं देवीं गत्वा कथयामि तवागमनम् । ततस्तद्वचनेन नृपो भोजनादि करोति सर्वम् ॥३३॥
विभव्यपि बुद्धिकलितोऽपि पृथिवीनाथोऽपि भूत्वा दक्षोऽपि । गुरुरागग्रहगृहीतोऽलीकमपि विजानाति सत्यम् ॥
देवीविरहाक्रान्तः प्रतिदिनमवलोकते पुरुषमार्गम् । सोऽपि खलु चिरकालात्समागतो नृपतिपार्श्वे ॥३५॥
अर्पयित्वा कल्पपादपफलोपमानि शर्करोत्कररसाढ्यानि । नारङ्गफलानि नत्वा नरवरस्ततः इदं भणितः ॥
देव्या प्रेषितानि देव ! फलानीमानि स्वर्गात् । तव भणितं तत्कथितं तथा संदिष्टं च मम योग्यम् ॥३७॥
मार्गयितव्यो देव आभरणं येनामररमणीनाम् । मध्ये शोभेऽहं सालङ्कारा विशेषेण ॥३८॥
ततस्तत्क्षणेन सचिवान् प्रभणति राजाऽस्य पुरुषस्य । देव्या यदादिष्टं लघ्वाभरणं तदर्पयत ॥३९॥
मन्त्रिभिस्तथा विहितं तस्य पश्यतस्तदनु भाण्डागारे । प्रक्षिप्य स पुरुषो निगूहितः कतिपयदिनानि ॥
पुनरप्येति व्रजति च गृहीत्वाऽऽभरणादिकं किञ्चित् । ततः केनापि धूर्तेन ज्ञात इति व्यतिकरः कथमपि ॥
ततस्तेन कनकपात्रं भूर्जमिव कारयित्वोत्कीर्णानि । तत्राक्षराणि भृतानि सुगन्धकस्तूरिकारसेन ॥४२॥

संवट्टिवि लेहं पिव तं पत्तो सो निवस्स पासम्मि। भणइ य देवीए अहं पट्ठविओ लेहवाहोत्ति ॥४३॥
तो हरिसिओ नरिंदो लेहं गहिऊण चिंतए नूणं। सग्गभुज्जं खु एयं मसीवि न हु मच्चलोईया ॥४४॥
कुसलं देवीए तओ सो पुरिसो कहइ पुच्छिओ संतो। तो छोडिऊण लेहं वायइ गाथा इमं तत्थ ॥४५॥
तद्यथा;—स्वस्तिश्रीपुरिमताले महाराजाधिराजश्रीविजयपालपादान् श्रीमत्स्वर्गाद् महाराज्ञी लक्ष्मीनामा •
सस्नेहं सोत्कण्ठं प्रणम्य विज्ञपयति यथा, कुशलमत्र, कार्यं चेदम्;—
निच्चं हियय गएणं देव ! तए गरुयभारभरियव्व। उक्कंठियावि दूरं न चएमि अहं समागमिउं ॥४६॥
ता काऊण पसायं नियंगलग्गं समग्गमाभरणं। नियतणुफरिसपवित्तं अप्पेयव्वं मइनिमित्तं ॥४७॥
किञ्च।
सुरसुंदरीण मज्झे लज्जिज्जइ तुहपसायविरहेण। तह निब्भंछण महई संजायइ मज्झ ता इत्थ ॥४८॥
पक्खंतो मासंतो पेसिज्जसु जेव तेव वत्थाई। इह वुड्ढपुरिसहत्थे नियतणुकुसलं च पसिऊण ॥४९॥
तो रन्ना मंतियणो भणिओ जह मज्झ सारमाभरणं। वरवत्थकुंकुमाई पेसह एयस्स पासम्मि ॥५०॥
यतः,
संदेसगस्स लक्खं मुल्लं लेहस्स होइ धणकोडी। दिट्ठीए कोडिसयं पियस्स वयणं पुण अमोल्लं ॥५१॥
मंतीहिवि पडिवन्नं तव्वयणं चिंतिउं जह विणट्ठं। कज्जमिणं, तो मंतिवि तेहिंवि एवं निवो भणिओ ॥
कह गमिही सग्गमिमो निवेण भणियं जहागओ, तेहिं। भणियं देविपभावा समागओ तो निवो भणइ ॥
पुव्विल्लो जह पगओ तह एसोवि हु गमिस्सए तत्थ। मंतीहिं तो भणियं सिहिदड्ढो सो गओ सग्गे ॥

---

संवर्त्य लेखमिव तत्प्राप्तः स नृपस्य पार्श्वे। भणति च देव्याहं प्रस्थापितो लेखवाह इति ॥४३॥
ततो हर्षितो नरेन्द्रो लेखं गृहीत्वा चिन्तयति नूनम्। स्वर्गभूर्जं खल्वेतद् मष्यपि न खलु मर्त्यलोकीया ॥
कुशलं देव्यास्ततः स पुरुषः कथयति पृष्टः सन्। ततश्छोटयित्वा लेखं वाचयति राजेदं तत्र ॥४५॥
नित्यं हृदयगतेन देव ! त्वया गुरुभारभृतेव। उत्कण्ठितापि दूरं न शक्नोम्यहं समागन्तुम् ॥४६॥
तस्मात्कृत्वा प्रसादं निजाङ्गलग्नं समग्रमाभरणम्। निजतनुस्पर्शपवित्रमर्पयितव्यं मन्निमित्तम् ॥४७॥
सुरसुन्दरीणां मध्ये लज्ज्यते त्वत्प्रसादविरहेण। तथा निर्भर्त्सना महती संजायते मम तस्मादत्र ॥४८॥
पक्षान्तो मासान्तः प्रेरयेर्यद्वा तद्वा वस्त्रादि। इह वृद्धपुरुषहस्ते निजतनुकुशलं प्रसद्य ॥४९॥
ततो राज्ञा मन्त्रिजनो भणितो यथा मम सारमाभरणम्। वरवस्त्रकुङ्कुमादि प्रेषयतैतस्य पार्श्वे ॥५०॥
संदेशकस्य लक्षं मूल्यं लेखस्य भवति धनकोटिः। दृष्टेः कोटिशतं प्रियस्य वचनं पुनरमूल्यम् ॥५१॥
मन्त्रिभिरपि प्रतिपन्नं तद्वचनं चिन्तयित्वा यथा विनष्टम्। कार्यमिदं, ततो मन्त्रयित्वा तैरप्येवं नृपो भणितः॥
कथं गमिष्यति स्वर्गमयं नृपेण भणितं यथागतः, तैः। भणितं देवीप्रभावात्समागतस्ततो नृपो भणति ॥५३॥
पूर्वीयो यथा प्रगतस्तथैषोऽपि हि गमिष्यति तत्र। मन्त्रिभिस्ततो भणितं शिखिदग्धः स गतः स्वर्गम् ॥५४॥

---

१ क. ओदाहण, ख. उव्वाहण।

एयस्सवि तह किज्जउ निवेण इय जंपियम्मि मंतीहिं। पज्जलियचियाभिमुहं सो निज्जंतो कहवि दिट्ठो॥
तत्थ विय वसंतेणं पउमभिहाणेण मोहरियभावा। वारसवयजुत्तेणवि, तो भणियं तेण निवभिमुहं ॥५६॥
देव। इमो अइवूढो वहुसंदेसेहिं भारिओ धणियं। न हु सक्किस्सइ गंतुं ता पेसमु कमवि तरुणनरं॥
मंतीर्हि तओ भणियं देव! इमोच्चिय सदुत्तरो तरुणो। मुहरो सिग्घगई-तो पट्ठावसु देविपासम्मि॥
रन्ना भणियं एवं करेह तो तक्खणेण मंतीहिं। बंधाविऊण बाहिं निज्जइ सो विलवमाणोवि ॥५९॥
तो से सयणा पुच्छंति केण दोसेण बंधिओ भाय!। सो भणइ समुहदोसेण कोवि नन्नो कओ दोसो॥
तो तुब्भेहिं नियतुंडरक्खणं सव्वहा उ कायव्वं। जेणं अणत्थदंडं मोहरियत्ताउ नो लहह ॥६१॥
अह सयणेहिं भणिउं मंतिं मोयाविओ य सो कहवि। तेणवि सो करुणाए मुक्को पढमोवि सिक्खविओ॥
अन्नम्मि दिणे राया मंतियणं भणइ कहवि इह देविं। आणावह सग्गाओ तव्विरहे दुक्खिओ अहयं॥
तो तेहिं मंतिऊणं कमलसिरीनामिया सुरूववई। निवइअलंकारधरा नवतरुणी बाहिरुज्जाणे ॥६४॥
मुक्का सिक्खविऊणं, कहियं तेहिं निवस्स जह पुरिसो। पट्ठविओ देवीए आवहणत्थं हरिसमीवे॥
तो बीयदिणे पत्तो सो पुरिसो साहए नरिंदस्स। वद्धाविज्जह तुब्भे उज्जाणे आगया देवी ॥६६॥
वद्धावयस्स नियअंगलग्गमाभरणमह पयच्छेइ। महया सामग्गीए पच्चोणीए गओ राया ॥६७॥
तो दिट्ठा सा देवी जाओ हिट्ठो भणेइ भो सचिवा!। देवीए सग्गवासो सच्चविओ रूवसोभाए॥
पुव्विं तु इमा सामा टप्परकन्ना य विसमगुरुदंता। लंबोट्ठचिविडनासा संपइ अन्नेव पडिहाइ ॥६९॥

---

एतस्यापि तथा क्रियतां नृपेणेति जल्पिते मन्त्रिभिः। प्रज्वलितचिताभिमुखं स नीयमानः कथमपि दृष्टः॥५५॥
तत्रैव वसता पद्माभिधानेन मौखर्यभावात्। द्वादशव्रतयुक्तेनापि, ततो भणितं तेन नृपाभिमुखम् ॥५६॥
देव! अयमतिवृद्धो बहुसंदेशैर्भारितो गाढम्। न खलु शक्ष्यति गन्तुं तस्मात्प्रेषय कमपि तरुणनरम्॥५७॥
मन्त्रिभिस्ततो भणितं देव! अयमेव सदुत्तरस्तरुणः। मुखरः शीघ्रगतिस्ततः प्रस्थापय देवीपार्श्वे ॥५८॥
राज्ञा भणितमेवं कुरुत ततस्तत्क्षणेन मन्त्रिभिः। बन्धयित्वा बहिर्नीयते स विलपन्नपि ॥५९॥
ततस्तस्य स्वजनाः पृच्छन्ति केन दोषेण बद्धो भ्रातः!। स भणति स्वमुखदोषेण कोऽपि नान्यः कृतो दोषः॥
ततो युष्माभिरपि निजतुण्डरक्षणं सर्वथा तु कर्तव्यम्। येनानर्थदण्डं मौखर्यान्नो लभध्वम् ॥६१॥
अथ स्वजनैर्भणित्वा मन्त्रिणं मोचितश्च स कथमपि। तेनापि स करुणया मुक्तः प्रथमोऽपि शिक्षितः॥
अन्यस्मिन्दिने राजा मन्त्रिजनं भणति कथमपीह देवीम्। आनाययत स्वर्गात्तद्विरहे दुःखितोऽहम्॥६३॥
ततस्तैर्मन्त्रयित्वा कमलश्रीनामिका सुरूपवती। नृपत्यलङ्कारधरा नवतरुणी बाह्योद्याने ॥६४॥
मुक्ता शिक्षयित्वा, कथितं तैर्नृपस्य यथा पुरुषः। प्रस्थापितो देव्या आह्वानार्थं हरिसमीपे ॥६५॥
ततो द्वितीयदिने प्राप्तः स पुरुषः कथयति नरेन्द्रस्य। वर्ध्यध्वे यूयमुद्यान आगता देवी ॥६६॥
वर्धकाय निजाङ्गलग्नमाभरणमथ प्रयच्छति। महत्या सामग्र्या संमुखं गतो राजा ॥६७॥
ततो दृष्टा सा देवी जातो हृष्टो भणति भो सचिव!। देव्याः स्वर्गवासः सत्यापितो रूपशोभया ॥६८॥

तो मंतीहिं भणियं मा मा इह देव ! कुणसु तं भंतिं । अमयरसभोयणेणं जाया एयारिसी एसा ॥
किञ्च ।
तुट्ठेणं सुरवइणा देहावयवावि सुंदरा विहिया । तुम्हुवरोहेण इमा मोकलिया इह महाराय ! ॥७१॥
तो तुट्ठेणं रन्ना नियकरिअद्धासणम्मि संठविउं । गुरुपुरसोहपुरस्सरमाणीआ मंदिरे नियए ॥७२॥
भुंजइ विउले भोए तीइ समं असमरागगयचित्तो । पुच्छइ य सग्गवत्तं कहेइ सा पुव्वसिक्खविया ॥
तो भो वज्जह रागं जेण समालिंगिया न याणंति । महुमत्तमाणवा इव कज्जाकज्जाइयं किंपि ॥७४॥
इय कवडवंचणावि हु चइयव्वा सावएहिं सविसेसं । असमंजसभासावि हु मोहरियत्ता न भणियव्वा ॥
जे गयविवेगवयणा पउमोव्व लहंति दुक्खसंघायं । ते इहइंपि परत्ते नरयगइं जंति नियमेण ॥७६॥
तम्हा मोहरियत्तं वज्जित्ता महुरनिउणसंबद्धं । निरवज्जं चिय वज्जरह तरह भवजलनिहिं जेण ॥७७॥

॥ इति तृतीयगुणव्रतमौखर्यातिचारविपाके पद्मकथानकं समाप्तम् ॥

---

पूर्वं स्त्रियं श्यामा करालकर्णा च विषमगुरुदन्ता । लम्बौष्ठा चिपिटनासा संप्रत्यन्येव प्रतिभाति ॥६९॥
ततो मन्त्रिभिर्भणितं मा मेह देव ! कुरु त्वं भ्रान्तिम् । अमृतरसभोजनेन जातैतादृश्येषा ॥७०॥
तुष्टेन सुरपतिना देहावयवादपि सुन्दरा विहिता । युष्मदुपरोधेनेयं मुत्कालितेह महाराज ! ॥७१॥
ततस्तुष्टेन राज्ञा निजकर्यर्धासने संस्थाप्य । गुरुपुरशोभापुरस्सरमानीता मन्दिरे निजे ॥७२॥
भुङ्क्ते विपुलान् भोगांस्तया सममसमरागगतचित्तः । पृच्छति च स्वर्गवार्ता कथयति सा पूर्वशिक्षिता ॥७३॥
ततो भो वर्जयत रागं येन समालिङ्गिता न जानन्ति । मधुमत्तमानवा इव कार्याकार्यादिकं किमपि ॥७४॥
इति कपटवञ्चनापि हि त्यक्तव्या श्रावकैः सविशेषम् । असमञ्जसभाषापि हि मौखर्यात्र भणितव्या ॥७५॥
ये गतविवेकवचना पद्म इव लभन्ते दुःखसंघातम् । त इहापि परत्र नरकगतिं यान्ति नियमेन ॥७६॥
तस्मान्मौखर्यं वर्जयित्वा मधुरनिपुणसंबद्धम् । निरवद्यमेव कथयत तरत भवजलनिधिं येन ॥७७॥

संजुत्ते जो धरईरघट्टमुसलुक्खलाइअहिगरणे । सो दुलहोव्व लहेइं दुहाइं नरयाइपभवाइं ॥१॥
तथाहि;–

मुणिजिणवरसुपवित्तं निच्चं चिय ऊसवेहिं अविउत्तं । परचक्कईइचत्तं आसि पुरं पाडलीपुत्तं ॥२॥
तत्थत्थि विजयसिट्ठी अजओ छज्जीवकायवहणम्मि । तस्स पिया पउमसिरी सिरिव्व जणनयणमणहरणी॥
ताणं तणओ दुलहो दुलहो जस्सासि सुगुरुसंजोगो । सो जोव्वणम्मि पत्तो अह अन्नया खिल्लए जूयं ॥
छिन्नोट्ठकन्ननासेण सह तओ जिणइ दम्मसयपणगं । सो य सुवन्नं वियरइ पेयवणाओ समाणेउं ॥५॥
तो पुट्ठो दुलहेणं जूयकरो कस्स पासओ कहसु । पेयवणाओ तुमए आणीयं कणगमेयंति? ॥६॥
सो भणइ तेण किं ते पओयणं गिण्ह तं जिणियदव्वं । चिंतइ दुलहो नूणं पेएणव अहव भूएण ॥७॥
सिद्धेण वावि केणवि दिन्नं एयस्स तुट्ठचित्तेण । तो भणइ तस्स समुहं कणयं गिण्हसु तुमं चेव ॥८॥
पसिऊणं कहसु फुडं दायारं पुण इमस्स , सो भणइ । झाणठिओ सो चिट्ठइ इण्हिं तो जंपए दुलहो ॥
झाणठियं पिहु दंससु तो तेण समुट्ठिऊण पेयवणे । एगो मुणी महप्पा पदंसिओ तस्स झाणठिओ ॥१०॥
तेणं नमंसिओ सो इयरेणवि तो गया नियगिहेसु । पइदिवसं चिय दुलहो मुणिस्स पयपंकयं नमइ ॥
पहरदुगं उवविट्ठो चिट्ठइ तच्चिट्ठियं परिनियंतो । अह मुणिणा सो भणिओ सोम ! सुधम्मं समज्जिणहि॥
तो सो भणेइ सामिय ! तुह पयसेवाए को परो धम्मो ? । किंतु करुणं करेउं लूणंगस्स व मह पसीय ॥
तो सो मुणिणा भणिओ तेण तुमं भोलिओ महाभाग ! । न मए किंचिवि दिन्नं वयस्स पुण कारणं मज्झ ॥

---

संयुक्तानि यो धरत्यरघट्टमुशलोदूखलाद्यधिकरणानि । स दुर्लभ इव लभते दुःखानि नरकादिप्रभवाणि ॥१॥

मुनिजिनवरसुपवित्रं नित्यमेवोत्सवैरवियुक्तम् । परचक्रेतित्यक्तमासीत्पुरं पाटलीपुत्रम् ॥२॥
तत्रास्ति विजयश्रेष्ठी अयतः षड्जीवकायवधे । तस्य प्रिया पद्मश्रीः श्रीरिव जननयनमनोहरणी ॥३॥
तयोस्तनयो दुर्लभो दुर्लभो यस्यासीद् गुरुसंयोगः । स यौवनं प्राप्तोऽथान्यदा रमते द्यूतम् ॥४॥
छिन्नौष्ठकर्णनासेन सह ततो जयति द्रम्मशतपञ्चकम् । स च सुवर्ण वितराति प्रेतवनात् समानीय ॥५॥
ततः पृष्टो दुर्लभेन द्यूतकरः कस्य पार्श्वतः कथय । प्रेतवनात् त्वयाऽऽनीतं कनकमेतदिति ? ॥ ६ ॥
स भणति तेन किं ते प्रयोजनं गृहाण त्वं जितद्रव्यम् । चिन्तयति दुर्लभो नूनं प्रेतेन वाथवा भूतेन ॥७॥
सिद्धेन वापि केनापि दत्तमेतस्य तुष्टचित्तेन । ततो भणति तस्य सम्मुखं कनकं गृहाण त्वमेव ॥८॥
प्रसद्य कथय स्फुटं दातारं पुनरस्य, स भणति । ध्यानस्थितः स तिष्ठतीदानीं ततो जल्पति दुर्लभः ॥९॥
ध्यानस्थितमपि हि दर्शय ततस्तेन समुत्थाय प्रेतवने । एको मुनिर्महात्मा प्रदर्शितस्तस्मै ध्यानस्थितः॥१०॥
तेन नमस्थितः स इतरेणापि ततो गतौ निजगृहयोः । प्रतिदिवसमेव दुर्लभो मुनेः पदपङ्कजं नमति ॥११॥
प्रहरद्विकमुपविष्टस्तिष्ठति तच्चेष्टितं परिपश्यन् । अथ मुनिना स भणितः सोम ! सुधर्म समर्जय ॥१२॥
ततः स भणति स्वामिन् ! तव पदसेवायाः कः परो धर्मः ? । किन्तु करुणां कृत्वा लूनाङ्गस्येव मयि प्रसीद॥
ततः स मुनिना भाणितस्तेन त्वं वञ्चितो महाभाग ! । न मया किञ्चिदपि दत्तं ह्येतस्य पुनः कारणं मम ॥

सो संजाओ तो सो भणइ कह नाह ! तुम्ह वयगहणे । संजाओ सो हेऊ, तो सूरी कहइ तस्स इमं ॥
इत्येव आसि सिट्ठी सागरदत्तोत्ति नाम दविणड्ढो । अइदविणरक्खणज्जणपरायणो सव्वकालंपि ॥
अह अन्नया स मंतइ नियतणयं सोहइं जहा वच्छ ! । दुक्खेण इमा लच्छी समज्जिया जाणसि तुमंपि ॥
तम्हा कीरउ रक्खा इमीए बाहिं गिहस्स दूरम्मि । गेहम्मि ठिया संती साहीणा सव्वलोयस्स ॥१८॥
ता पेयवणे गंतुं निहणिज्जउ कम्मि रहपएसम्मि । आवइगयाण जेणं साहिज्जं कुणइ अम्ह इमा ॥१९॥
एवं रहम्मि मंतिवि तणएण समं गओ मसाणम्मि । खनिऊण गुरुं गत्तं निहणंति तहिं दविणकलसे ॥
पूरेऊणं गत्तं भणिओ तो सेट्ठिणा इमं तणओ । पुत्त ! पलोएसु तुमं गंतुं सव्वंपि दिसिचक्कं ॥२१॥
जइ पुण केणवि दिट्ठं हविज्ज, सो भणइ ताय ! निउणो तं । अइभीमणे मसाणे रयणीए एइ को एत्थ ?॥
तो भणइ पिया सुनिरूवियस्स इह होइ वच्छ ! को दोसो ? । इय भणिए पुत्तेणं गंतूण निरूवियं सव्वं॥
दिट्ठो तो कप्पडिओ पडिओ मयखिड्डएण गयचिट्ठो । सासं निरुंभिऊणं दव्वट्ठाणं पलोयंतो ॥२४॥
तेणागंतुं कहियं गयसासो कोवि चिट्ठए तत्थ । तो सिट्ठिणावि भणियं जइ पुण सो दव्वलोभेण ॥
सुनिरुंभिऊण सासं पडिओ मयखेड्डयं विहेऊण । ता किंपि तस्स अंगं छेत्तुं छुरियाए लहुं एहि ॥२६॥
इय कहिए तक्कन्नं छित्तूण समागओ तओ भणिओ । बीयंपि छिंद सवणं जइ पुण धुत्तो इय सहेइ ॥
तेणवि तहेव विहियं छिन्ना नासावि उट्ठउडसहिया । तेणवि सव्वं सहियं दव्वट्ठा जेण इय भणियं ॥
तं नत्थि जं न कुव्वंति पाणिणो साहसं दविणकज्जे । नियजीवियंपि विचंति किं पुणो छेयणं तणुणो ?॥

---

स संजातः, ततः स भणति कथं नाथ ! तव व्रतग्रहणे । संजातः स हेतुः, ततः सूरिः कथयति तस्येदम् ॥
अत्रैवासीत् श्रेष्ठी सागरदत्त इति नाम द्रविणाढ्यः । अतिद्रविणरक्षणार्जनपरायणः सर्वकालमपि ॥१६॥
अथान्यदा स मन्त्रयति निजतनयं शोभनं यथा वत्स ! । दुःखेनेयं लक्ष्मीः समर्जिता जानासि त्वमपि ॥
तस्मात्क्रियतां रक्षाऽस्या बहिर्गृहाद् दूरे । गेहे स्थिता सती स्वाधीना सर्वलोकस्य ॥१८॥
तस्मात्प्रेतवने गत्वा निधीयतां कस्मिन्रहःप्रदेशे । आपद्गतानां येन साहाय्यं करोत्यस्माकमियम् ॥१९॥
एवं रहसि मन्त्रयित्वा तनयेन समं गतः श्मशाने । खनित्वा गुरुं गर्तं निदधतस्तत्र द्रविणकलशान् ॥२०॥
पूरयित्वा गर्तं भणितस्ततः श्रेष्ठिनेदं तनयः । पुत्र ! प्रलोकय त्वं गत्वा सर्वमपि दिक्चक्रम् ॥२१॥
यदि पुनः केनापि दृष्टं भवेत्, स भणति तात ! निपुणस्त्वम् । अतिभीषणे श्मशाने रजन्यामेति कोऽत्र ! ॥
ततो भणति पिता सुनिरूपितस्येह भवति वत्स ! को दोषः ? । इति भणिते पुत्रेण गत्वा निरूपितं सर्वम्॥
दृष्टस्ततः कार्पटिकः पतितो मृतचेष्टया गतचेष्टः । श्वासं निरुध्य द्रव्यस्थानं प्रलोकमानः ॥२४॥
तेनागत्य कथितं गतश्वासः कोऽपि तिष्ठति तत्र । ततः श्रेष्ठिनापि भणितं यदि पुनः स द्रव्यलोभेन ॥२५॥
सुनिरुध्य श्वासं पतितो मृतचेष्टां विधाय । तस्मात्किमपि तस्याङ्गं छित्वा क्षुरिकया लघ्वेहि ॥२६॥
इति कथिते तत्कर्णं छित्वा समागतस्ततो भणितः । द्वितीयमपि छिन्द्धि श्रवणं यदि पुनर्धूर्त इति सहते ॥
तेनापि तथैव विहितं छिन्ना नासाप्योष्ठपुटसहितो । तेनापि सर्वं सोढं द्रव्यार्थं येनेदं भणितम् ॥२८॥

तो कप्पडियं मडयं कलिऊण गओ गिहम्मि सो सिट्ठी । सुयपरिकलिओ, इत्तो कप्पडिएणावि हु झडत्ति ॥
उट्ठेऊणं गहियं तं दव्वं गोवियं च अन्नत्थ । गहिउं किंचियमित्तं पत्तो नयरम्मि गिण्हेइ ॥३१॥
वत्थागुरुकप्पूरप्पमुहाइं निवसणेण सुहुमेण । पच्छाइयलुयअंगो विलसइ वेसाण गेहेसु ॥३२॥
अह अन्नया य सोवि हु गच्छइ उज्जोणियाए उज्जाणे । मोयगमंडगवडयाइं नेइ तत्थप्पणा सद्धिं ॥
नयरस्स पाढलाइंवि तेणं सद्दावियाइं सव्वाइं । दिट्ठो ताण पयच्छइ भोयणवत्थाइयं सव्वं ॥३४॥
तह मग्गणाण जम्मगिराण दीणाइयाणवि जहिच्छं । तेवि हु तुट्ठा वन्नंति कन्ननामं विहेऊण ॥३५॥
तो जणपरंपराए तं सोउं तस्स संकिओ सिट्ठी । मम दव्वं नो गहियं तट्ठाणाओ इमेणंति ॥३६॥
जइ पुण सो कप्पडिओ तइया सासं निरुंभिउं थक्को । इय चिंतंतो तस्सवि पलोयणत्थं गओ तत्थ ॥
पेच्छइ य तयं कुंकुमपिंजरियं वेसलोयपरियरियं । वरवत्थपिहियछिन्नोट्ठनासियं चिंतए तत्तो ॥३८॥
दुक्खेण जो विढप्पइ अत्थो दुक्खेण भुज्जए सो उ । चोरचरडाण पायं चरियं एवंविहं होइ ॥३९॥
इय चिंतिय समसाणे पत्तो सो पिच्छए तयं गत्तं । कलसजुयलेण रहियं अहियं तो विन्नविउं लग्गो ॥
हा दिव्व ! दव्वनासो कह जाओ मज्झ मंदपुन्नस्स ? । सच्चं चिय जं केणवि विउसेणं पढियमेवंति ॥
"दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य । यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥"
नय मे दिन्नं दाणं न विलसियं विविहभोगभंगीहिं । नासोवि य लच्छीए जाओ तो जामि रायउले ॥
सव्वं कहेमि रन्नो जइवि हु अप्पावए इमाउ धणं । तो कोसल्लियपुव्वं साहइ रन्नो जहा देव ! ॥

---

सत्यास्ति यत्र कुर्वन्ति प्राणिनः साहसं द्रविणकार्ये । निजजीवितमपि वियन्ति किं पुनश्छेदनं तनोः ! ॥
ततः कार्पटिकं मृतकं कलयित्वा गतो गृहे स श्रेष्ठी । सुतपरिकलितः, इतः कार्पटिकेनापि हि झटिति ॥
उत्थाय गृहीतं तद् द्रव्यं गोपितं चान्यत्र । गृहीत्वा कियन्मात्रं प्राप्तो नगरे गृह्णाति ॥३१॥
वस्त्रागुरुकर्पूरप्रमुखाणि निवसनेन सूक्ष्मेण । प्रच्छादितलूनाङ्गो विलसति वेश्यानां गेहेषु ॥३२॥
अथान्यदा च सोऽपि खलु गच्छत्युज्जयिन्या उद्याने । मोदकमण्डकवटकानि नयति तत्रात्मना सार्धम् ॥३३॥
नगरस्य गायना अपि तेन शब्दिताः सर्वे । दृष्टस्तेभ्यः प्रयच्छति शोभनवस्त्रादिकं सर्वम् ॥ ३४ ॥
तथा मार्गणेभ्यो यन्मार्गयितृभ्यो दीनादिकेभ्योऽपि यथेच्छम् । तेऽपि हि तुष्टा वर्णयन्ति कर्णनाम विधाय ॥३५॥
ततो जनपरम्परया तत् श्रुत्वा तस्य शङ्कितः श्रेष्ठी । मम द्रव्यं नो गृहीतं तत्स्थानादनेनेति ॥ ३६ ॥
यदि पुनः स कार्पटिकस्तदा श्वासं निरुध्य स्थितः । इति चिन्तयंस्तस्यापि प्रलोकनार्थं गतस्तत्र ॥३७॥
पश्यति च तं कुङ्कुमपिञ्जरितं वेश्यालोकपरिकरितम् । वरवस्त्रपिहितच्छिन्नौष्ठनासिकं चिन्तयति ततः ॥३८॥
दुःखेन योऽर्ज्यतेऽर्थो दुःखेन भुज्यते स तु । चोरचरटानां प्रायश्चरितमेवंविधं भवति ॥३९॥
इति चिन्तयित्वा श्मशाने प्राप्तः स पश्यति तं गर्तम् । कलशयुगलेन रहितमधिकं ततो विज्ञपितुं लग्नः ॥
हा दैव ! द्रव्यनाशः कथं जातो मम मन्दपुण्यस्य ! । सत्यमेव यत्केनापि विदुषा पठितमेवमिति ॥४१॥
न च मया दत्तं दानं न विलसितं विविधभोगभङ्गीभिः । नाशोऽपि च लक्ष्म्या जातस्ततो यामि राजकुले ॥

उज्जाणे जो विलसइ विविहपयारेहिं सो धुवं चोरो । मह दव्वं उक्खणिउं गहियं इमिणा ममाणाओ ॥
इय सुणिउं नरवइणा भणिओ आरक्खिओ जहा सिग्घं । आणेसु मज्झ पासे बंधेउं तं महाचोरं ॥४५॥
तेणवि तहेव विहिए तेणो जंपेइ मज्झ को दोसो ? । भणइ निवो तइ अत्थो गहिओ एयस्स उक्खणिउं ॥
सो भणइ देव ! इमिणा गहियं मम संतियं किमवि अत्थि । तं अप्पावसु तो हं दविणं एयस्स अप्पिस्सं ॥
रन्ना दिट्ठिक्खेवे कयम्मि वज्जरइ सो वणी न मए । गहियं किंचिवि एयस्स जंपए तो इमं तेणो ॥४८॥
पहसमखिन्नो नरपहु ! तत्थाहं आसि निब्भरं सुत्तो । नासावंसो सवणा य कड्ढिया मह इमेणेवं ॥
ता मह एसो सवणाइं अप्पिउं लेउ अप्पणो दव्वं । इय भणिओ सो सिट्ठी सविलक्खो ठाइ, इत्तो य ॥
जइया इमस्स अप्पिहसि सिट्ठि ! सवणाइयं तया दव्वं । लहिहसि तं इइ भणिउं विसज्जिया दोवि नरवइणा ॥
तो सिट्ठी गिहपत्तो पुत्तं पन्नवइ जायवेरग्गो । जह लच्छी वच्छ ! गया खणेण तह जीवियं जाही ॥५२॥
जम्माउ जरा लोए जराउ मच्चू अवस्स देहीणं । तम्हा मच्चुमुहगया जीवा जीवंति थेवदिणे ॥५३॥
ता जइ ते परलोए गहिउं सद्धम्मसंबलं जंति । ता धुवमसोयणिज्जा सुहिया य हवंति तत्थ गया ॥५४॥
किञ्च ।
पिपतिषुरथ श्वो वा जराधुणोत्कीर्णदेहसारोऽपि । धर्मं प्रति नोद्यच्छति वृद्धपशुः पश्यत निराशः ॥
बाल्येऽस्ति यौवनाशा स्पृहयति च यौवनेऽपीह वृद्धत्वम् । मृत्यूत्सङ्गगतोऽयं वृद्धः किमपेक्ष्य निर्धर्मा ॥"
ता वच्छ ! निच्छओ मे गहियव्वो कोवि वयविसेसुत्ति । चइऊणं गिहिवासं दुहवासं ता तुमं इन्हि ॥५५॥
नियजणणीपमुहजणं पालसु दीणेसु कुणसु अणुकंपं । दव्वेण न तुह सूणं होहिंत्ति तओ सुओ भणइ ॥५६॥

---

सर्वं कथयामि राज्ञे यदि खल्वर्पयत्यस्माद् धनम् । ततः कोशलिकापूर्वं कथयति राज्ञे यथा देव ! ॥४३॥
उद्याने यो विलसति विविधप्रकारैः स ध्रुवं चौरः । मम द्रव्यमुत्खाय गृहीतमनेन स्मशानात् ॥४४॥
इति श्रुत्वा नरपतिना भणित आरक्षिको यथा शीघ्रम् । आनय मम पार्श्वे बद्ध्वा तं महाचोरम् ॥४५॥
तेनापि तथैव विहिते स्तेनो जल्पति मम को दोषः ? । भणति नृपस्त्वयार्थो गृहीत एतस्योत्खाय ॥४६॥
स भणति देव ! अनेन गृहीतं मम संबन्धि किमप्यस्ति । तदर्पय ततोऽहं द्रविणमेतस्यार्पयिष्यामि ॥४७॥
राज्ञा दृष्टिक्षेपे कृते कथयति स वणिग् न मया । गृहीतं किञ्चिदप्येतस्य जल्पति ततः इदं स्तेनः ॥४८॥
पथिश्रमखिन्नो नरप्रभो ! तत्राहमासं निर्भरं सुप्तः । नासावंशः श्रवणौ च कर्तितौ मयानेनैवम् ॥४९॥
तस्मान्ममैष श्रवणावर्पयित्वा लात्वात्मनो द्रव्यम् । इति भणितः स श्रेष्ठी सवैलक्ष्यस्तिष्ठति, इतश्च ॥५०॥
यदाऽस्यार्पयसि श्रेष्ठिन् ! श्रवणादिकं तदा द्रव्यम् । लप्स्यसे त्वमिति भणित्वा विसर्जितौ द्वावपि नरपतिना ॥
ततः श्रेष्ठी गृहप्राप्तः पुत्रं प्रज्ञापयति जातवैराग्यः । यथा लक्ष्मीर्वत्स ! गता क्षणेन तथा जीवितं यास्यति ॥
जन्मतो जरा लोके जरातो मृत्युरवश्यं देहिनाम् । तस्मान्मृत्युमुखगता जीवा जीवन्ति स्तोकदिनान् ॥५३॥
तस्माद् यदि ते परलोके गृहीत्वा सद्धर्मशम्बलं यान्ति । तदा ध्रुवमशोचनीयाः सुखिताश्च भवन्ति तत्र गताः ॥
तस्माद् वत्स ! निश्चयो मे ग्रहीतव्यः कोऽपि व्रतविशेष इति । त्यक्त्वा गृहिवासं दुःखवासं तस्मात्त्वमिदानीम् ॥

६

केसिं सयासे गिण्हिहिसि तं वयं ताय ! कहसु, सो भणइ। निग्गच्छंतस्स गिहाओ होहिंति य मज्झ जेभिमुहं
इच्चाइं पयंपेउं चलिओ तणएण सह बहिं सेट्ठी। तो सुट्ठियआयरिया नाणेणाभोगिउं समुहा ॥५८॥
पत्ता सिट्ठिस्स, तओ सिट्ठी ते वंदिउं भणइ एवं। नियदिक्खादाणेणं कुणसु पसायं तुमं भंते ! ॥५९॥
तो विहिणा ते सिट्ठिं दिक्खंति पभावणाए जिणभवणे। दुविहं सिक्खं विहिणा गिण्हइ नवदिक्खिओ साहू।
उचियसमए पवज्जइ एक्कल्लविहारपडिमप्पडिमं। सो हं सुवन्नदायग जो कहिओ तेण तेणेण ॥६१॥
इय तच्चरियं सोउं संविग्गो दुल्लहो भणइ एवं। भयवं! भवन्नवाओ नित्थारह दाउं गिहिधम्मं ॥६२॥
तो मुणिणा पन्नविओ सम्मत्ताई दुवालसविहोवि। सावयधम्मो अंगीकओ य तेणावि विहिपुव्वं ॥६३॥
पिउणोवि बीयदिवसे गुरुपासाओ दवावए धम्मं। पालंति पयत्तेणं पियपुत्ता दोवि उवउत्ता ॥६४॥
अह दुलहो कालेणं खलइ पमाएण-गुणव्वए तइए। सव्वाहिगरणपडलं पयडंतो पइदिणं एवं ॥६५॥
तथाहि;—
खग्गफरयाइसत्थे संजुत्ते धरइ समुहभित्तीए। सव्वाइं वाहणाइं तह पउणाइं घरदुवारे ॥६६॥
मुसलुक्खलहलदंतालकुंटिकुद्दालपमुहसत्थाणं। संजुत्ताणं धरणं करेइ अभिमाणनडिओ सो ॥६७॥
किं सोवि गिही भन्नइ जस्स गिहे नो इमाइं पउणाइं। चिट्ठंति सयाकालं इय भणइ समुद्धुरो निच्चं ॥
साहंकारं नाउं न कोवि सिक्खं पयच्छए तस्स। इय वच्चंते काले केणवि तव्वालमित्तेण ॥६९॥
नामंकियतवक्खग्गं आसंघेणं अमग्गिउं नीयं। संमुहघरभित्तीए विलंबमाणं पलोएउं ॥७०॥

---

निजजननीप्रमुखजनं पालय दीनेषु कुरुष्वानुकम्पाम्। द्रव्येण न तव क्षूणं भविष्यतीति ततः सुतो भणति ॥५६॥
केषां सकाशे ग्रहीष्यसि त्वं व्रतं तात ! कथय, स भणति। निर्गच्छतो गृहाद्भविष्यन्ति च मम येऽभिमुखम् ॥५७॥
इत्यादि प्रजल्प्य चलितस्तनयेन सह बहिः श्रेष्ठी। ततः सुस्थिताचार्या ज्ञानेनाभोज्य संमुखाः ॥५८॥
प्राप्ताः श्रेष्ठिनः, ततः श्रेष्ठी तान् वन्दित्वा भणत्येवम्। निजदीक्षादानेन कुरु प्रसादं त्वं भदन्त ! ॥५९॥
ततो विधिना ते श्रेष्ठिनं दीक्षन्ते प्रभावनया जिनभवने। द्विविधां शिक्षां विधिना गृह्णाति नवदीक्षितः साधुः ॥
उचितसमये प्रपद्यत एकाकिविहारप्रतिमामप्रतिमाम्। सोऽहं सुवर्णदाता यः कथितस्तेन स्तेनेन ॥६१॥
इति तच्चरितं श्रुत्वा संविग्नो दुर्लभो भणत्येवम्। भगवन् ! भवार्णवान्निस्तारयत दत्त्वा गृहिधर्मम् ॥६२॥
ततो मुनिना प्रज्ञापितः सम्यक्त्वादिर्द्वादशविधोऽपि। श्रावकधर्मोऽङ्गीकृतश्च तेनापि विधिपूर्वम् ॥६३॥
पितुरपि द्वितीयदिवसे गुरुपार्श्वाद्दापयति धर्मम्। पालयतः प्रयत्नेन पितापुत्रौ द्वावप्युपयुक्तौ ॥६४॥
अथ दुर्लभः कालेन स्खलति प्रमादेन गुणव्रते तृतीये। सर्वाधिकरणपटलं प्रकटयन्प्रतिदिनमेवम् ॥६५॥
खड्गफरकादिशस्त्राणि संयुक्तानि धरति संमुखभित्तौ। सर्वाणि वाहनानि तथा प्रगुणानि गृहद्वारे ॥६६॥
मुशलोदूखलहलदन्तालकुन्तिकाकुठारप्रमुखशस्त्राणाम्। संयुक्तानां धरणं करोत्यभिमाननटितः सः ॥६७॥
किं सोऽपि गृही भण्यते यस्य गृहे नो इमानि प्रगुणानि। तिष्ठन्ति सदाकालमिति भणति समुद्धुरो नित्यम् ॥
साहंकारं ज्ञात्वा न कोऽपि शिक्षां प्रयच्छति तस्य। इति व्रजति काले केनापि तद्बालमित्रेण ॥६९॥

नियगामे गच्छंतस्स तस्स खिसिऊण वाहणाहिंतो । पडियं न तेण नायं तं पत्तं अहिमरेण तओ ॥
तं गहिउं सो पत्तो पाडलिपुत्तम्मि रायवहणत्थं । भिच्चाण जुज्झणकए पुग्गाइं दवावए तत्थ ॥७२॥
तो रायवाडियाए गएण निसुयाइं तस्स पुग्गाइं । रन्ना तो आहूओ संभासेउं समाढत्तो ॥७३॥
तो तेण तेण खग्गेण कोसखित्तेण वाहिओ घाओ । रन्नो सहसा तत्तो पडिखलिओ अंगरक्खेण ॥७४॥
अन्नेण तओ खग्गं उद्दालेऊणं अहिमरो बद्धो । हणिओ य, तस्स खग्गं समप्पियं निवइणो सोवि॥७५॥
तं पासंतो पासइ दुल्लहनामक्खराइं तत्थ निवो । तो रोसारुणनयणो सचिवं सो भणइ लहुमेव ॥७६॥
को सो दुल्लहनामा एयं मुणिऊण मज्झ साहेसु । खग्गघडयाण सिग्घं सो दंसइ जेण घडियं तं ॥७७॥
सो भणइ मए घडियं एयं सिरिसिट्ठिविजयतणयस्स । दुल्लहनामस्स कए सेसं तु न किंपि जाणेमि ॥
तो सचिवेणं रन्नो निवेइयं सो भणेइ संभवइ । तस्स सयासे एयं जम्हा सो रायमाणी य ॥७९॥
तो अंगरक्खलोयं निरूवए तग्गिहम्मि हट्टम्मि । मुद्दाओ दावावइ आणावइ तंपि बंधेउं ॥८०॥
पुट्ठीए सिट्ठिविजओ सयणजुओ नरवरिंदपासम्मि । कोसल्लियं विहेउं पणमिय विन्नवइ नरनाहं ॥८१॥
किं देव! मज्झ तणओ चोरोव्व नियंतिउं इहाणीओ? । तिवलीतरंगभंगुरभालो तो भूवई भणइ ॥८२॥
मह अहिमरं निरूवइ वणिओवि हु रज्जकंखिरो भमइ । तो सिट्ठी पाएसुं लग्गेउं भणइ जह देव! ॥८३॥
नो घडइ इमं कहवि हु तो राया दंसए किवाणं तं । तो संभंतो सिट्ठी विन्नवइ निवस्स जह देव! ॥८४॥

---

नामाङ्किततत्खड्ग आस्थयाऽमार्गयित्वा नीतः । संमुखगृहभित्तौ विलम्बमानं प्रलोक्य ॥७०॥
निजग्रामे गच्छतस्तस्य स्रुत्वा वाहनात् । पतितो न तेन ज्ञातः स प्राप्तोऽभिमरेण ततः ॥७१॥
तं गृहीत्वा स प्राप्तः पाटलीपुत्रे राजवधार्थम् । भृत्यानां योधनकृते पूत्कृतानि दापयति तत्र ॥७२॥
ततो राजवाटिकायां गतेन श्रुतानि तस्य पूत्कृतानि । राज्ञा तत आहूतः संभाषितुं समारब्धः ॥७३॥
ततस्तेन तेन खड्गेन कोशक्षिप्तेन व्याहितो घातः । राज्ञः सहसा ततः प्रतिस्खलितोऽङ्गरक्षेण ॥७४॥
अन्येन ततः खड्गमुद्दाल्याभिमरो बद्धः । हतश्च, तस्य खड्गः समर्पितो नृपतये सोऽपि ॥७५॥
तं पश्यन्पश्यति दुर्लभनामाक्षराणि तत्र नृपः । ततो रोषारुणनयनः सचिवं स भणति लघ्वेव ॥७६॥
कः स दुर्लभनामैतज्ज्ञात्वा मम कथय । खड्गघटकेभ्यः शीघ्रं स दर्शयति येन घटितः सः ॥७७॥
स भणति मया घटित एष श्रीश्रेष्ठिविजयतनयस्य । दुर्लभनाम्नः कृते शेषं तु न किमपि जानामि ॥७८॥
ततः सचिवेन राज्ञे निवेदितं, स भणति संभवति । तस्य सकाश एष यस्मात्स राजमानी च ॥७९॥
ततोऽङ्गरक्षकलोकं निरूपयति तद्गृहे हट्टे । मुद्रा दापयत्यानाययति तमपि बद्ध्वा ॥८०॥
पृष्ठे श्रेष्ठिविजयः स्वजनयुतो नरवरेन्द्रपार्श्वे । कौशलिकां विधाय प्रणम्य विज्ञपयति नरनाथम् ॥८१॥
किं देव ! मम तनयश्चोर इव नियन्त्र्येहानीतः ? । त्रिवलीतरङ्गभङ्गुरभालस्ततो भूपतिर्भणति ॥८२॥
ममाभिमरं निरूपयति वणिगपि खलु राज्यकाङ्क्षिता भ्रमति। ततः श्रेष्ठी पादयोर्लगित्वा भणति यथा देव ! ॥८३॥
नो घटत इदं कथमपि हि ततो राजा दर्शयति कृपाणं तम् । ततः संभ्रान्तः श्रेष्ठी विज्ञपयति नृपाय यथा देव ! ॥

गयबंधं काऊणं दुलहं इह आणवेसु पसिऊण। जेण जहत्थं साहइ सोच्चिय खग्गस्स वुत्तंतं ॥८५॥
तो रायाएसेणं दुलहो तत्थागओ निवं नमिउं। उवविट्ठो तो पुट्ठो निवेण खग्गं तुह किमेयं ? ॥८६॥
सो भणइ देव! आमं किंतु इमं गामवासिमित्तेण। अमुगेणं आसि नीयं मएवि पच्छा इमं नायं ॥८७॥
तो तक्खणेण चरियं पेसेउं सोवि आणिओ मित्तो। पुट्ठो य नरिंदेणं दुल्लहखग्गं तुमे नीयं ॥८८॥
जं तं कत्थ इयाणिं, सो साहइ देव! मज्झ पासाओ। खिसिऊण तया पडियं जाणामि न केण तं पत्तं ॥
तो रन्ना तस्स करे समप्पियं तं इमं तु सो पुट्ठो। खग्गमिणं तं नो वा, तं चेव इमंति सो भणइ ॥९०॥
तो सचिवो भणइ इमं होइ जुगंतेवि नेय एयाणं। देउ करं पुट्ठीए देवो गच्छंतु सट्ठाणं ॥९१॥
सो दुलहं पइ जंपइ राया रे तुज्झ वणियमित्तस्स। किं नणु होही कज्जं किवाणरयणेहिं एएहिं ? ॥९२॥
आणाविय सव्वाइं खग्गाइं निवेण तस्स गेहाओ। नियगेहे ठवियाइं, मुक्को सो नियगिहे पत्तो ॥९३॥
बंधेहिं पीडियंगो मरिओ रुहिरस्स सत्तमदिणम्मि। अपडिक्कंतो य मओ सहिही बहुदुक्खलक्खाइं ॥९४॥
विजओ सिट्ठी आराहिऊण सम्मत्तमाइगिहिधम्मं। सोहम्मे उववन्नो तइयभवे सिज्झिही इत्थ ॥९५॥

॥ इति तृतीयगुणव्रते चतुर्थातिचारविपाके दुर्लभकथानकं समाप्तम् ॥

---

गतबन्धं कृत्वा दुर्लभमिहानायय प्रसद्य। येन यथार्थं कथयति स एव खड्गस्य वृत्तान्तम् ॥८५॥
ततो राजादेशेन दुर्लभस्तत्रागतो नृपं नत्वा। उपविष्टस्ततः पृष्टो नृपेण खड्गस्तव किमेषः ? ॥८६॥
स भणति देव! आम किन्त्वयं ग्रामवासिमित्रेण। अमुकेनासीद् नीतो मयापि पश्चादिदं ज्ञातम् ॥८७॥
ततस्तत्क्षणेन चर्यं प्रेष्य तदप्यानीतं मित्रम्। पृष्टं च नरेन्द्रेण दुर्लभखड्गस्त्वया नीतः ॥८८॥
यः स कुत्रेदानीं, स कथयति देव! मम पार्श्वात्। स्रुत्वा तदा पतितो जानामि न केन स प्राप्तः ॥८९॥
ततो राज्ञा तस्य करे समर्पितः स इदं तु स पृष्टः। खड्गोऽयं स नो वा, स एवायमिति स भणति ॥९०॥
ततः सचिवो भणतीदं भवति युगान्तेऽपि नैवैतेषाम्। ददातु करं पृष्ठे देवो गच्छन्तु स्वस्थानम् ॥९१॥
ततो दुर्लभं प्रति जल्पति राजा रे तव वणिक्पुत्रस्य। किं ननु भविष्यति कार्यं कृपाणरत्नैरेतैः ? ॥९२॥
आनाय्य सर्वे खड्गा नृपेण तस्य गेहात्। निजगेहे स्थापिताः, मुक्तः स निजगृहे प्राप्तः ॥९३॥
बन्धैः पीडिताङ्गो मृतो रुधिरेण सप्तमदिने। अप्रतिक्रान्तश्च मृतः सहिष्यते बहुदुःखलक्षाणि ॥९४॥
विजयः श्रेष्ठ्याराध्य सम्यक्त्वादिगृहिधर्मम्। सौधर्म उपपन्नस्तृतीयभवे सेत्स्यत्यत्र ॥९५॥

तइयगुणव्वयधारी अइरेगे जो करेइ भोगंगे । सो पावइ परमदुहं इहंपि वणिमूलदेवोव्व ॥१॥
तथाहि;—
परपुरिसोवद्दवरक्खगेण संखाइएण तुंगेण । सप्पुरिसेणव सालेण सोहिया आसि भरहम्मि ॥२॥
कंची नामेण पुरी तत्थ निवो रायसेहरो सोमो । जहवट्टियाभिहाणो गयवसणो भूइकलिओ य ॥३॥
सिट्ठी विसिट्ठविहवो वसइ तहिं नामओ य गुणकलिओ । वेसमणो, तस्स सुओ नामेणं मूलदेवोत्ति ॥४॥
सो जोव्वणमणुपत्तो नीओ केणावि साहुमूलम्मि । विम्हयपरव्वसो सो तं पणमइ परमभत्तीए ॥५॥
साहूवि सजलजलहरगुरुगहिररवेण देइ आसीसं । उवविसिय धरणिवट्टे सुणइ धम्मं तओ सोवि ॥६॥
पुच्छइ इय पत्थावे भयवं ! वेरग्गकारणं गरुयं । किंति तुह जेण नियतणुनिरवक्खो चरसि तवचरणं ? ॥७॥
तो भणइ मुणिवरिंदो संसारे पउरदुक्खभंडारे । वेरग्गकारणं किमिह नेय, सम्मं विचिंतेह ॥८॥
इह जं जं चिय दीसइ रागनिमित्तं सरागपुरिसाण । तं तं चिय नीसेसं वेरग्गकरं विवेईण ॥९॥
नियचित्तवियप्पेणं मुणंति जह सुंदरं मह सरीरं । असुइभरियंपि तह चेव सुंदरं एत्थ सव्वंपि ॥१०॥
परमत्थसुहविहीणे नियमइपरिकप्पणाकयसुहम्मि । परमत्थपंडियाणं संसारे होइ निव्वेओ ॥११॥
सो पुण सनिमित्तो ता सुणेसु जं इत्थ मज्झवि निमित्तं । अत्थि अवंतीविसए उज्जेणी पुरवरी रम्मा ॥१२॥
मणहरलायण्णुब्भडजोव्वणवररूवसुंदरविलासा । वेसा विलासवसही नामेण गुणेण तत्थत्थि ॥१३॥
अग्घइ भिन्नंजणपुंजपेसला वेणिवल्लरी जीए । महुमित्तवल्लहाए विलोयणंजणसलायव्व ॥१४॥
किं बहुना ।

---

तृतीयगुणव्रतधार्यतिरेकीणि यः करोति भोगाङ्गानि । स प्राप्नोति परमदुःखमिहापि वणिग्मूलदेववत् ॥१॥
परपुरुषोपद्रवरक्षकेण संख्या(ख्या)तिकेन तुङ्गेन । सत्पुरुषेणेव शालेन शोभिताऽऽसीद्भरते ॥२॥
काञ्ची नाम्ना पुरी तत्र नृपो राजशेखरः सोमः । यथावृत्ताभिधानो गतव्यसनो भूतिकलितश्च ॥३॥
श्रेष्ठी विशिष्टविभवो वसति तत्र नामतश्च गुणकलितः । वैश्रमणः, तस्य सुतो नाम्ना मूलदेव इति ॥४॥
स यौवनमनुप्राप्तो नीतः केनापि साधुमूले । विस्मयपरवशः स तं प्रणमति परमभक्त्या ॥५॥
साधुरपि सजलजलधरगुरुगभीररवेण ददात्याशिषम् । उपविश्य धरणिपट्टे शृणोति धर्मं ततः सोऽपि ॥६॥
पृच्छतीति प्रस्तावे भगवन्! वैराग्यकारणं गुरु । किमिति तव येन निजतनुनिरपेक्षश्चरसि तपश्चरणम् ? ॥७॥
ततो भणति मुनिवरेन्द्रः संसारे प्रचुरदुःखभाण्डागारे । वैराग्यकारणं किमिह नैव, सम्यग् विचिन्तय ॥८॥
इह यद्यदेव दृश्यते रागनिमित्तं सरागपुरुषाणाम् । तत्तदेव निःशेषं वैराग्यकरं विवेकिनाम् ॥९॥
निजचित्तविकल्पेन जानन्ति यथा सुन्दरं मम शरीरम् । अशुचिभृतमपि तथैव सुन्दरमत्र सर्वमपि ॥१०॥
परमार्थसुखविहीने निजमतिपरिकल्पनाकृतसुखे । परमार्थपण्डितानां संसारे भवति निर्वेदः ॥११॥
स पुनः सनिमित्तस्तस्मात् शृणु यदत्र ममापि निमित्तम् । अस्त्यवन्तीविषय उज्जयिनी पुरीवरा रम्या ॥१२॥
मनोहरलावण्योद्भटयौवनवररूपसुन्दरविलासा । वेश्या विलासवसतिर्नाम्ना गुणेन तत्रास्ति ॥१३॥

अविरयचावत्रयइढगपगाढसुढियस्स कुसुमचावस्स । मन्नामि हत्थभल्ली जयविजयत्थं इमा सिट्ठा ॥१५॥
वीरविलासभिहाणो तत्थवि य वणी•धणी सयाकालं । भोगी चाई विउसो अह अन्नया तेण सा दिट्ठा ॥
विवणिपहम्मि वयंती बहुपरियणपरिगया रहारूढा । गाढ सुरत्तचित्तो तीए॰पासम्मि पेसेइ ॥१७॥
नियमाणुसं गहेउं कणयसयं एगरत्तगहणम्मि । सा भणइ मत्तहत्थिं एगं मे देहि रत्तीए ॥१८॥
जइ मे पओयणं तुह एयं गंतूण कहसु नियपहुणो । तेणवि आगंतूणं कहियं सव्वंपि तयभिमुहं ॥१९॥
इय सोऊण सोवि हु अइदिढरागो उ तीइ उवरिम्मि । गयहेउत्थं चलिओ विंझाडविसंमुहं जम्हा ॥२०॥
तं नत्थि जं न कुव्वंति इत्थं इत्थीकएण रायंधा । तह भणियं सत्थेसु विउसेहिंविणेगहा एवं ॥२१॥

"यद् गायन्ति च वादयन्ति च नृणा नृत्यन्ति चाग्रे सदा, नीचानामपि चित्रचाटुरचनास्तोत्राणि कुर्वन्ति च ।
आरोहन्ति च रोहणाद्रिशिखरं भ्रामन्ति चाम्भोनिधिं, मर्त्यास्तत्र निमित्तमुत्तमतमा मत्तेभकुम्भस्तनी ॥
अपहृतहृदयाना कामिना कामिनीभि किमिह भवति कामं दुष्करं ह्रीकरं च ।
वहति शिरसि गङ्गा शङ्करो, दानवारि पुनरुरसि सलीला लोलनीलोत्पलाक्षीम् ॥"

अह पत्तो विंझगिरिस्स अंतिए सो कमेण तत्थ पुणो । बहुवरिसेहिं लद्धा पहाणकरिणो तओ चलिओ ॥
नियपुरवरीए समुहं पत्तो य कमेण नियगेहम्मि । पुच्छेइ तीए वेसाए एस पउत्तिं विडे बहुए ॥२३॥
तेवि य भणंति नो अत्थि काइ इयनामिया इहं वेसा । तो सो दिट्ठट्ठाणे सयं गओ वेसपाडम्मि ॥२४॥
पुच्छइ वेसावग्गं कत्थ गया सा विलासवसहित्ति ? । अमुगम्मि गिहे चिट्ठइ इय भणिए जाइ सो तत्थ ॥
ओणामिउत्तमंगं हत्थट्ठियलट्ठिविहियवट्ठंभं । नाणावलिसयकलियं ससिकरसियकेसपब्भारं ॥२६॥

---

राजते भिन्नाञ्जनपुञ्जपेशला वेणीवल्लरी यस्या । मधुमित्रवल्लभाया विलोचनाञ्जनशलाकेव ॥१४॥
अविरतचापावर्तनप्रगाढश्रान्तस्य कुसुमचापस्य । मन्ये हस्तभल्ली जगद्विजयार्थमिय सृष्टा ॥१५॥
वीरविलासाभिधानस्तत्रापि च वणिग् धनी सदाकालम् । भोगी त्यागी विद्वान्, अथान्यदा तेन सा दृष्टा ॥
विपणिपथे व्रजन्ती बहुपरिजनपरिगता रथारूढा । गाढ सुरक्तचित्तस्तस्या पार्श्वे प्रेषयति ॥१७॥
निजमानुष गृहीत्वा कनकशतमेकरात्रग्रहणे । सा भणति मत्तहस्तिनमेकं मे देहि रात्र्यै ॥१८॥
यदि मे प्रयोजन तवैतद्गत्वा कथय निजप्रभो । तेनाप्यागत्य कथित सर्वमपि तदभिमुखम् ॥१९॥
इति श्रुत्वा सोऽपि खलवतिदृढरागस्तु तस्या उपरि । गजघटार्थं चलितो विन्ध्याटवीसंमुख यस्मात् ॥२०॥
तन्नास्ति यन्न कुर्वन्त्यत्र स्त्रीकृते रागान्धा । तथा भणित शास्त्रेषु विद्वद्भिरप्यनेकधैवम् ॥२१॥
अथ प्राप्तो विन्ध्यगिरेरन्तिकं स क्रमेण तत्र पुन । बहुवर्षैर्लब्धा प्रधानकरिणस्ततश्चलित ॥२२॥
निजपुरीवराया समुख प्राप्तश्च क्रमेण निजगेहे । पृच्छति तस्या वेश्याया एष प्रवृत्तिं विटान्बहून् ॥२३॥
तेऽपि च भणन्ति नो अस्ति काचिदितिनामिकेह वेश्या । तत स दिष्टस्थाने स्वयं गतो वेश्यापाटके ॥२४॥
पृच्छति वेश्यावर्गं कुत्र गता सा विलासवसतिरिति ? । अमुष्मिन् गृहे तिष्ठतीति भणिते याति स तत्र ॥२५॥
अवनमितोत्तमाङ्गा हस्तस्थितयष्टिविहितावष्टम्भाम् । नानावलिशतकलिता शशिकरसितकेशप्राग्भाराम् ॥

लायन्नवज्जियतणू लालिल्लयदसणरहियमुहभायं। उल्लंबियपुक्कसरिच्छदीहलंबंतथणजुयलं ॥२७॥
दूसियदूमियनयणं थेरिं दट्ठूण तंपि पुच्छेइ। वत्तं विलासवसहीए सावि जंपेइ तयभिमुहं ॥२८॥
किं कज्जं तुह तीए, सब्भावे साहियम्मि सा भणइ। एसा साहं वसही हड्डुकरडस्स चिट्ठामि ॥२९॥
आ! पत्थिया विलासा तव हेउं अत्थि संपइ विलासा। तो तक्खणेण जाओ तस्स विरागो मणे गरुओ ॥
तो सो चिंतइ धिद्धी चंचलया जोव्वणस्स पयईए। जं दट्ठुं रत्तो हं तीइ अवत्था इमा जाया ॥३१॥
तथाहि;—
अइसरलतरलधवला इमीए जे आसि अच्छिविच्छोहा। तरुणजणहिययहरणा ते सह अच्छीहिंवि पणट्ठा ॥
अलिउलकज्जलकसिणो इमीए जो आसि कुंतलकलावो। सो संपइ चमरीसेयपुच्छलच्छिं विडंबेइ ॥३३॥
कुंदकलियावलिविब्भमाउ एईए आसि जे दसणा। जररक्खसीय भीया ते संपइ दूरओ नट्ठा ॥३४॥
इय भाविऊण पत्तो गिहम्मि दाऊण तत्थ बहुदाणं। जिणमंदिरेसु महिमं काउं पव्वयइ, सो य अहं ॥
इय सुणिवि मूलदेवो जंपइ जीवाण हुंतिणेगाइं। वेरग्गकारणाइं परं तुमं चेव इय कुणसि ॥३६॥
वेरग्गकारणेसुं संतेसुवि मज्झ नत्थि निव्वेओ। भोगपिवासानडियस्स नाह! ता दिससु गिहिधम्मं ॥
तो कहिओ से मुणिणा गिहत्थधम्मो दुवालसविहोवि। तेणवि सो पडिवन्नो तो तं नमिउं गिहं पत्तो ॥
पालइ कित्तियकालं भोगपिवासाए विनडिओ पच्छा। लच्छीपउरत्तणओ पमायवसगो विसेसेण ॥३९॥
अइरेगभोगअंगेसु मुच्छिओ कारवेइ अइपउरं। ओयणवंजणपमुहं ण्हाणंगं खलिजलाईयं ॥४०॥

---

लावण्यवर्जिततनुं लालावद्दशनरहितमुखभागाम्। उल्लम्बितपुक्कसदृक्षदीर्घलम्बमानस्तनयुगलाम् ॥२७॥
दूषितदावितनयनां स्थविरां दृष्ट्वा तामपि पृच्छति। वृत्तं विलासवसतेः सापि जल्पति तदभिमुखम् ॥२८॥
किं कार्यं तव तस्याः, सद्भावे कथिते, सा भणति। एषा साहं वसतिरस्थ्युत्करस्य तिष्ठामि ॥२९॥
आः! प्रस्थिता विलासा तव हेतोरस्ति संप्रति विलास्या। ततस्तत्क्षणेन जातस्तस्य विरागो मनसि गुरुः ॥
ततः स चिन्तयति धिग्धिक् चञ्चलता यौवनस्य प्रकृत्या। यां दृष्ट्वा रक्तोऽहं तस्या अवस्थेयं जाता ॥३१॥
अतिसरलतरलधवला अस्या य आसन्नक्षिविक्षोभाः। तरुणजनहृदयहरणास्ते सहाक्षिभ्यामपि प्रनष्टाः ॥३२॥
अलिकुलकज्जलकृष्णोऽस्या य आसीत्कुन्तलकलापः। स संप्रति चमरीश्वेतपुच्छलक्ष्मीं विडम्बयति ॥३३॥
कुन्दकलिकावलीविभ्रमा एतस्या आसन् ये दशनाः। जराराक्षस्या भीतास्ते संप्रति दूरतो नष्टाः ॥३४॥
इति भावयित्वा प्राप्तो गृहे दत्त्वा तत्र बहुदानम्। जिनमन्दिरेषु महिमानं कृत्वा प्रव्रजति, स चाहम् ॥३५॥
इति श्रुत्वा मूलदेवो जल्पति जीवानां भवन्त्यनेकानि। वैराग्यकारणानि परं त्वमेवेति करोषि ॥३६॥
वैराग्यकारणेषु सत्स्वपि मम नास्ति निर्वेदः। भोगपिपासानटितस्य नाथ! तस्माद्दिश गृहिधर्मम् ॥३७॥
ततः कथितस्तस्य मुनिना गृहस्थधर्मो द्वादशविधोऽपि। तेनापि स प्रतिपन्नस्ततस्तं नत्वा गृहं प्राप्तः ॥
पालयति कियत्कालं भोगपिपासया विनटितः पश्चात्। लक्ष्मीप्रचुरत्वतः प्रमादवशगो विशेषेण ॥३९॥
अतिरेकभोगाङ्गेषु मूर्च्छितः कारयत्यतिप्रचुरम्। ओदनव्यञ्जनप्रमुखं स्नानाङ्गं खलिजलादिकम् ॥४०॥

भणइ य किं सो भोगी जस्संगनिमित्तभोगअंगेसु । उव्वरिएसु न विलसइ सेवयलोओ जहिच्छाए ? ॥
तो तस्स लहुयभइणी गिहिधम्मठिया भणेइ तयभिमुहं । जइ अत्थखयं न गणसि तो किं बीहसि न पावाओ ? ॥
जओ ।
अट्ठाए तं न बंधइ जमणट्ठाए अ बंधए जीवो । अट्ठे कालाईया नियामया न उ अणट्ठाए ॥४३॥
सो भणइ जहा भइणीवइस्स मह भइणि किवणसिरमणिणो । नित्थारए न काओवि पडेइ तह मह गिहे कुणवि॥
एयं कहवि न होही जह मह गेहम्मि तुच्छभोज्जाइं । जाइस्सइ कइयावि हु जह तुह पइणो गिहम्मि जणो ॥
मरइ छुहाए निच्चं कहकहवि हु भुंजए वियालम्मि । वासियभत्तुव्वरियस्स दूरओ ताव वत्तावि ॥४६॥
इय सुणिवि सेवयजणो तयभिमुहं भणइ लोयपच्चक्खं । कूरसमुद्दो अम्हाण सामिओ मूलदेवोत्ति ॥४७॥
अन्ने उण सव्वेवि हु नियउयरं पूरयंति कट्ठेण । तव्वयणेणुद्धसिओ सो भइणिं भणइ मा एवं ॥४८॥
कइयावि दिज्ज सिक्खं अभिक्खणं दिंतलिंतयस्स महं । गच्छंतु इमे दिवसा, खणदिट्ठविणट्ठविहवस्स ॥
फलमेयं चिय जं सयणपरिजणो उवयरिज्जइ सयावि । इय भणिया सा भइणी मोणं अवलंबिऊण ठिया ॥
अह सणिवारे पत्ते तिल्लामलयाइं आणवावेउं । बाहिं नईए पत्तो न्हाणत्थं सपरिवारो सो ॥५१॥
तत्थ य सेवयलोओ अब्भंगुव्वट्टणम्मि वट्टंतो । जा चिट्ठइ ता कत्तो पत्तो पहियाण संघाओ ॥५२॥
तम्मज्झाओ केणवि खलितेल्लुव्वट्टणाइं दट्ठूण । अइपउरयरं भणिओ कूरसमुद्दस्स कोवि नरो ॥५३॥
थेवं मह तेल्लाई जइ अप्पइ तुम्ह सामिओ कहवि । ता मज्जणं करेमो इय सुणिउं मूलदेवेण ॥५४॥

---

भणति च किं स भोगी यस्याङ्गनिमित्तभोगाङ्गेषु । उद्वृत्तेषु न विलसति सेवकलोको यथेच्छम् ? ॥४१॥
ततस्तस्य लघुभगिनी गृहिधर्मस्थिता भणति तदभिमुखम् । यद्यर्थक्षयं न गणयसि ततः किं बिभ्यसि न पापात् ? ॥
यतः ।
अर्थाय तन्न बध्नाति यदनर्थाय च बध्नाति जीवः । अर्थे कालादयो नियामका न त्वनर्थे ॥४३॥
स भणति यथा भगिनीपतेर्मम भगिनि ! कृपणशिरोमणेः । निस्तारके न काकोऽपि पतति तथा मम गृहे कदापि ॥
एवं कथमपि न भविष्यति यथा मम गेहे तुच्छभोज्यादि । याचिष्यते कदापि हि यथा तव पत्युर्गृहे जनः ॥
म्रियते क्षुधा नित्यं कथंकथमपि हि भुङ्क्ते विकाले । वासितभक्तोद्वृत्तस्य दूरतस्तावद्वार्त्तापि ॥४६॥
इति श्रुत्वा सेवकजनस्तदभिमुखं भणति लोकप्रत्यक्षम् । कूरसमुद्रोऽस्माकं स्वामी मूलदेव इति ॥४७॥
अन्ये पुनः सर्वेऽपि हि निजोदरं पूरयन्ति कष्टेन । तद्वचनेनोद्धुषितः स भगिनीं भणति मैवम् ॥४८॥
कदापि दाः शिक्षामभीक्ष्णं ददल्लातो मम । गच्छन्त्विमे दिवसाः, क्षणदृष्टविनष्टविभवस्य ॥४९॥
फलमेतदेव यत्स्वजनपरिजन उपचर्यते सदापि । इति भणिता सा भगिनी मौनमवलम्ब्य स्थिता ॥५०॥
अथ शनिवासरे प्राप्ते तैलामलकाद्यानाय्य । बहिर्नद्यां प्रातः स्नानाय सपरिवारः सः ॥५१॥
तत्र च सेवकलोकोऽभ्यङ्गोद्वर्तने वर्तमानः । यावत्तिष्ठति तावत्कुतः प्राप्तः पथिकानां संघातः ॥५२॥
तन्मध्यात्केनापि खलितैलोद्वर्तनादि दृष्ट्वा । अतिप्रचुरतरं भणितः कूरसमुद्रस्य कोऽपि नरः ॥५३॥

भणियमेयाणपप्पंसु जत्तियं जाइतेल्लाभिईयं । इय सोउं ते सव्वे सिच्छाए लिंति तिल्लाई ॥५५॥
गेहाउवि आणविउं समप्पए पुणवि तं जहिच्छाए । तो तेवि हट्ठतुट्ठा थुणंति उच्चुच्चसद्देण ॥५६॥
कूरसमुद्दं भणिउं तो तेणं ताण भोयणं दिन्नं । गेहाओ तत्थ मोयगओयणमंडाइ आणविउं ॥५७॥
इय वट्टंते कत्तो तेसिं पहियाण वेरिसंघाओ । हण हण हणत्तिभणिरो पत्तो ताणुवरि पहरंतो ॥५८॥
तो ते केवि मज्जंति केवि कुव्वंति भोयणाईयं । नो लद्धं सत्थंपि हु गहिउं पहिएहिं तं दट्ठुं ॥५९॥
कूरसमुद्दो उट्ठइ करे करेऊण पहरणं भणइ । मा मा भो! एयाणं पहरह मह्पासपत्ताणं ॥६०॥
तो तेहिं पहिएहिं भणियं भो भद्द! दूरओ सरसु । जम्हा एएहिं हया अम्हाणं बंधवो बहुया ॥६१॥
इय सुणिउं सो जंपइ सम्मुहं वेरीण जावि मे पहिया। गिण्हंति मुक्कसत्थे ता सत्था होह खणमित्तं ॥६२॥
इय भणियावि हु तेणं पहिया झडझडत्ति पहरंति । तेसिंपि जो पहुप्पइ सो समुहो होइ वेरीणं ॥६३॥
इय वट्टंते भणिओ सो नियभिच्चेहिं वच्चह गिहम्मि। तहवि हु तत्थ न गच्छइ पिच्छइ तेसिं रणं तत्तो ॥
केणवि अन्नवहत्थं विमुक्कबाणेण आहओ तत्थ । कूरसमुद्दो तत्तो पंचत्तं झत्ति संपत्तो ॥६५॥
भमिही भवम्मि भीमे तइयगुणव्वयकलंककरणाओ । पंचमअइयारेणं, भमिवि भवे सिज्झिही तत्तो ॥६६॥
ते धन्ना ताण नमो ताण सुलद्धं च माणुसं जम्मं । जेणत्थदंडविरया निरया धम्मम्मि सयकालं ॥६७॥

---

स्तोकं मम तैलादि यदर्पयति तत्र स्वामी कथमपि । तदा मज्जनं कुर्मः इति श्रुत्वा मूलदेवेन ॥५४॥
भणितमेतेभ्योऽर्पय यावज्जातितैलप्रभृति । इति श्रुत्वा ते सर्वे स्वेच्छया लान्ति तैलादि ॥५५॥
गेहादप्यानाय्य समर्पयति पुनरपि तद् यथेच्छम् । ततस्तेऽपि हृष्टतुष्टाः स्तुवन्त्युच्चोच्चशब्देन ॥५६॥
कूरसमुद्रं भणित्वा ततस्तेन तेभ्यो भोजनं दत्तम् । गेहात्तत्र मोदकौदनमण्डाद्यानाय्य ॥५७॥
इति वर्तमाने कुतस्तेषां पथिकानां वैरिसंघातः । जहि जहि जहीतिभणिता प्राप्तस्तेषामुपरि प्रहरन् ॥५८॥
ततस्ते केऽपि मज्जन्ति केऽपि कुर्वन्ति भोजनादिकम्। नो लब्धं शस्त्रमपि हि ग्रहीतुं पथिकैस्तद् दृष्ट्वा ॥५९॥
कूरसमुद्र उत्तिष्ठति करे कृत्वा प्रहरणं भणति । मा मा भो! एतान् प्रहरत मत्पार्श्वप्राप्तान् ॥६०॥
ततस्तैः पथिकैर्भणितं भो भद्र! दूरतः सर । यस्मादेतैर्हता अस्माकं बन्धवो बहवः ॥६१॥
इति श्रुत्वा स जल्पति संमुखं वैरिणां यावदिमे पथिकाः। गृह्णन्ति मुक्तशस्त्राणि तावत्स्वस्था भवत क्षणमात्रम् ॥
इति भणिता अपि हि तेन पथिका झटझटिति प्रहरन्ति। तेषामपि यः प्रभवति स संमुखो भवति वैरिणाम् ॥
इति वर्तमाने भणितः स निजभृत्यैर्व्रजत गृहे । तथापि हि तत्र न गच्छति पश्यति तेषां रणं ततः ॥६४॥
केनाप्यन्यवधार्थं विमुक्तबाणेनाहतस्तत्र । कूरसमुद्रस्ततः पञ्चत्वं झटिति संप्राप्तः ॥६५॥
भ्रमिष्यति भवे भीमे तृतीयगुणव्रतकलङ्ककरणात् । पञ्चमातिचारेण, भ्रान्त्वा भवे सेत्स्यति ततः ॥६६॥
ते धन्यास्तेभ्यो नमस्तैः सुलब्धं च मानुषं जन्म । येऽनर्थदण्डविरता निरता धर्मे सदाकालम् ॥६७॥

---

१ ग. ए^२।

सव्वाणत्थपरंपरनिबंधणं सुद्धधम्मपडिवक्खं। खणमवि न खमं काउं अणत्थदंडं महादंडं ॥६८॥

॥ इति तृतीयगुणव्रते पञ्चमातिचारविपाके मूलदेवकथानकं समाप्तम् ॥

॥ तत्समाप्तौ गुणव्रतानि समाप्तानि ॥

---

सर्वानर्थपरम्परानिबन्धनं शुद्धधर्मप्रतिपक्षम्। क्षणमपि न क्षमं कर्तुमनर्थदण्डं महादण्डम् ॥६८॥



सामाइयव्वयं जो करेइ सावज्जजोगपडिवक्खं। सो नागदत्तकुमरव्व पावए परमसुक्खाइं ॥१॥
तथाहि;—
तुंगजिणभवणसिहरग्गभग्गरविरहतुरंगगइपसरं। सीहउरं नाम पुरं इह भरहे आसि सुपसिद्धं ॥२॥
तम्मि निवो रिउमल्लो निम्मूलीकयमहल्लमल्लोहो। तस्सत्थि पणइणी पेमकुलहरं वसुमई नाम ॥३॥
सा अन्नया पसुत्ता पासइ सुमिणम्मि पच्छिमनिसाए। फारप्फणाकडप्पं सप्पं दिप्पंतमणिरुइरं ॥४॥
तत्तो सा पडिबुद्धा साहइ सुमिणं पियस्स सो भणइ। दइए! एसो सुमिणो सुपुत्तलाभं फुडं कहइ ॥
ता तुह तणओ होही धरवलए एगछत्तरज्जकरो। सा भणइ नाह! एयं सच्चं तुह भासियं होउ ॥६॥
तं चिय दिणं पमाणं गब्भाहरणस्स तीए देवीए। जाओ कमेण पुत्तो पडिपुन्नदिणेहिं सुहदिवसे ॥७॥
सुमिणाणुसारओ सो महाविभूईए नागदत्तोत्ति। ताण तणयस्स नामं विहियं विहिणा गुरुयणेण ॥८॥
अह कमसो वड्ढंतेण तेण अचिरेण नागदत्तेण। गहिओ कलाकलावो गुरुं समक्खं करेऊण ॥९॥
तस्सत्थि बालमित्तो मित्तो इव पउमकोसवुड्ढिकरो। अमरगुरुमंतितणओ नयचंदो नाम समरूवो ॥१०॥
चउविहबुद्धिसमिद्धो गुणेहिं निद्धो धराए सुपसिद्धो। सो अन्नया पसुत्तो रयणीए कुमरपासम्मि॥११॥
तो अड्ढरत्तसमए सो तं नो पासए ससिज्जाए। तो संभंतो सहसा सव्वत्थ गवेसए कुमरं ॥१२॥
जा ताव वासभवणस्स उवरिभागम्मि रहसि मंतंतं। तं पिच्छइ एगाए तरुणीए इत्थियाए समं ॥१३॥
आहरणपहापिंजरियदिसिवहूवयणिया मियंकमुही। किं एसा मयणपिया रंभा वा लच्छिदेवी वा ॥

---

सामायिकव्रतं यः करोति सावद्ययोगप्रतिपक्षम्। स नागदत्तकुमार इव प्राप्नोति परमसौख्यानि ॥१॥
तुङ्गजिनभवनशिखराग्रभग्नरविरथतुरङ्गगतिप्रसरम्। सिंहपुरं नाम पुरमिह भरत आसीत्सुप्रसिद्धम् ॥२॥
तस्मिन् नृपो रिपुमल्लो निर्मूलीकृतमहामल्लौघः। तस्यास्ति प्रणयिनी प्रेमकुलगृहं वसुमती नाम ॥३॥
साऽन्यदा प्रसुप्ता पश्यति स्वप्ने पश्चिमनिशायाम्। स्फारफणासंघातं सर्पं दीप्यमानमणिरुचिरम् ॥४॥
ततः सा प्रतिबुद्धा कथयति स्वप्नं प्रियस्य, स भणति। दयिते! एष स्वप्नः सुपुत्रलाभं स्फुटं कथयति ॥५॥
तस्मात्तव तनयो भविष्यति धरावलय एकच्छत्रराज्यकरः। सा भणति नाथ! एतत्सत्यं तव भाषितं भवतु ॥
तदेव दिनं प्रमाणं गर्भधरणस्य तस्या देव्याः। जातः क्रमेण पुत्रः परिपूर्णदिनैः शुभदिवसे ॥७॥
स्वप्नानुसारतस्ततो महाविभूत्या नागदत्त इति। तयोस्तनयस्य नाम विहितं विधिना गुरुजनेन ॥८॥
अथ क्रमशो वर्धमानेन तेनाचिरेण नागदत्तेन। गृहीतः कलाकलापो गुरुं समक्षं कृत्वा ॥९॥
तस्यास्ति बालमित्रं मित्र इव पद्म(द्मा)कोशवृद्धिकरः। अमरगुरुमन्त्रितनयो नयचन्द्रो नाम समरूपः ॥१०॥
चतुर्विधबुद्धिसमृद्धो गुणैः स्निग्धो धरायां सुप्रसिद्धः। सोऽन्यदा प्रसुप्तो रजन्यां कुमारपार्श्वे ॥११॥
ततोऽर्धरात्रसमये स तं नो पश्यति स्वशय्यायाम्। ततः संभ्रान्तः सहसा सर्वत्र गवेषयति कुमारम् ॥१२॥
यावत्तावद् वासभवनस्योपरिभागे रहसि मन्त्रयन्तम्। तं पश्यत्येकया तरुण्या स्त्रिया समम् ॥१३॥
आभरणप्रभापिञ्जरितदिग्वधूवदना मृगाङ्कमुखी। किमेषा मदनप्रिया रम्भा वा लक्ष्मीदेवी वा ॥१४॥

इय चिंतंतो तीए भणिओ आगच्छ कुमरपासम्मि। नीअत्थं मा सुमरसु दोण्हं तइओ हवइ मुक्खो ॥१५॥
जम्हा देहविभिन्ना तुम्हे चित्तेण पुण अभिन्ना य। ता उवसप्पसु पहुपायपंकयं, भणइ कुमरोवि ॥१६॥
आगच्छ, तओ पत्तो ताण समीवम्मि उवविसइ जाव। ताव सहसत्ति कत्तो वीयावि हु बालिया पत्ता ॥
नमिऊणं सा पुच्छइ सामिणि! सिद्धं पओयणं नो वा?। सा भणइ भण तुमं चिय लज्जा अवरुज्झए मज्झ ॥
न मए किंचिवि कहियं पओयणं तो भणइ सा एवं। कुमर! निसुणेसु कज्जं अवहियचित्तो खणं होउं ॥
जा पारद्धं कहिउं किंचिवि ता तक्खणेण अन्नावि। झंटंतभमिरभमरउलमालियं मालियं गहिउं ॥२०॥
पत्ता विसट्टकंदोट्टवयणिया सा भणेइ तयभिमुहं। गिण्ह इमं वरमालं खिवेसु कुमरस्स कंठम्मि ॥२१॥
सा भणइ हले! सुथिरा भवेसु, तो भणइ मंतिनयचंदो। हुं विन्नायं एयं परिस्समं मा तुमं कुणसु ॥२२॥
कहसु पुण ऊसुगत्तस्स कारणं तो कहेइ सा दुइया। जह मलयकेउरन्नो कन्नाण चउक्कयं एही ॥२३॥
कुमरस्स सयंवरकारणेण रयणागराओ नयराओ। अम्हाण सामिणीए निसुयमिणं तो दुहं पत्ता ॥२४॥
भणइ य एत्तियदिवसे मह आसा आसि जह अहं पढमं। कुमरस्स घरणिसद्दं वहिस्समियमन्नहा जायं॥
इय सोऊणं भणिया मए इमा सहि! करेसु मा खेयं। धीरत्तणमवलंबसु अज्जवि न हु किंचिवि विणट्ठं ॥
पढमं चिय तं ताणं गंतूण खिवेसु तस्स वरमालं। दक्खिन्ननिही कुमरो मन्निस्सइ तुज्झ अभिरुइयं ॥२७॥
एसा वेयड्ढुत्तरसेणिपुराणं पहुस्सणंगस्स। नामेणं वेगवई कुमरी मुणिऊण कुमरगुणे ॥२८॥
अइअणुरत्ता चिट्ठइ ऊसुयचित्तस्स कारणं कहियं। पणयजणपत्थणाभंगभीरुणो हुंति इह गरुया ॥२९॥

---

इति चिन्तयंस्तया भणित आगच्छ कुमारपार्श्वे। नीत्यर्थं मा स्मार्षीर्द्वयोस्तृतीयो भवति मूर्खः ॥१५॥
यस्माद्देहविभिन्नौ युवां चित्तेन पुनरभिन्नौ च। तस्मादुपसर्प प्रभुपादपङ्कजं, भणति कुमारोऽपि ॥१६॥
आगच्छ, ततः प्राप्तस्तयोः समीप उपविशति यावत्। तावत्सहसा कुतो द्वितीयापि हि बालिका प्राप्ता॥१७॥
नत्वा सा पृच्छति स्वामिनि! सिद्धं प्रयोजनं नो वा?। सा भणति भण त्वमेव लज्जाऽवरुणद्धि माम् ॥१८॥
न मया किञ्चिदपि कथितं प्रयोजनं ततो भणति सैवम्। कुमार! शृणु कार्यमवहितचित्तः क्षणं भूत्वा ॥
यावत्प्रारब्धं कथयितुं किञ्चिदपि तावत्तत्क्षणेनान्यापि। गुञ्जद्भ्रमितृभ्रमरकुलमालां मालां गृहीत्वा ॥२०॥
प्राप्ता विकसितनीलोत्पलवदना सा भणति तदभिमुखम्। गृहाणेमां वरमालां क्षिप कुमारस्य कण्ठे ॥२१॥
सा भणति हले! सुस्थिरा भव, ततो भणति मन्त्रिनयचन्द्रः। हुं विज्ञातमेतत् परिश्रमं मा त्वं कुरु ॥२२॥
कथय पुनरुत्सुकत्वस्य कारणं ततः कथयति सा द्वितीया। यथा मलयकेतुराजस्य कन्यानां चतुष्कमेष्यति ॥
कुमारस्य स्वयंवरकारणेन रत्नाकराद् नगरात्। अस्माकं स्वामिन्या श्रुतमिदं ततो दुःखं प्राप्ता ॥२४॥
भणति चेयद्दिवसान् ममाशाऽऽसीद् यथाऽहं प्रथमम्। कुमारस्य गृहिणीशब्दं वक्ष्यामीदमन्यथा जातम् ॥
इति श्रुत्वा भणिता मयेयं सखि! कुरु मा खेदम्। धीरत्वमवलम्बस्वाद्यापि न खलु किञ्चिदपि विनष्टम् ॥२६॥
प्रथममेव त्वं ताभ्यो गत्वा क्षिप तस्य वरमालाम्। दाक्षिण्यनिधिः कुमारो मंस्यते तवाभिरुचितम् ॥२७॥
एषा वैताढ्योत्तरश्रेणिपुराणां प्रभोरनङ्गस्य। नाम्ना वेगवती कुमारी ज्ञात्वा कुमारगुणान् ॥२८॥

ता काऊण पसायं मन्नावसु मामियं तुमं निययं। इय सोउं नयचंदो तयभिमुहं भणइ जुत्तमिणं ॥३०॥
किंतु जणयाइं अज्जवि जीवंति कुमारसंतियाइं तओ। ताणं इमं-सरूवं साहिज्जउ तो थिरा होह॥३१॥
निद्दुक्खो सि महायस! परस्स पीडं न याणसे कइवि। इय भणिउं वेगवई वरमालं खिवइ कुमरस्स ॥
भणइ य तुहप्पसाया कयकिच्चा संपयं अहं जाया। जं जुत्तं तुम्हाणं अणुट्ठियव्वं तयं पच्छा ॥३३॥
किञ्च।
मह ताओ मं इच्छइ दाउं अन्नस्स तेणिमं विहियं। इय भणिउं वेगवई वेगेण गया नियं ठाणं ॥३४॥
कुमरोवि मित्तसहिओ साहइ गंतूण नियय-जणयाणं। सव्वं निसिवुत्तंतं ताणंपि हु बहु मयं एयं ॥३५॥
अह अन्नया य कुमरो वाहिं वच्चेइ गयवरारूढो। ता सउणसउणपंती पए पए होइ कुमरस्स ॥३६॥
तो भणइ मंतितणयं सउणा परिभाविया तए एए?। सो भणइ कुमर! आमं कहिंति अचब्भुयं लाभं ॥
यत आहुः शाकुनिकाः;—
"उच्चं देशं नीचादारोहन्स्निग्धशाद्वलं हरिणः। कथयत्यायतियुक्तां लक्ष्मीं सत्संगमं च तथा ॥
दृष्टाः सुरतासक्ता दृश्यन्ते यदि मृगाः पथि तदानीम्। अचिरेण भवति लाभः संदेहो नात्र कर्तव्यः ॥
शुभमावहति वराहः संकीर्तनतो ध्रुवं प्रयाणादौ। पङ्कोत्थितस्तु सद्य सिद्धिं तुष्टोऽप्यसौ कुरुते ॥
दक्षिणभागाद् वामं प्रयाति यदि जम्बुकस्तदा यातुः। सकलमपि याति सिद्धिं विचिन्तितं किमरि यन्मनसा ॥
यात्रायां दक्षिणतस्तित्तिरिरालोकितो भवेत्सिद्ध्यै। किरिपु इति त्रिर्विहितो द्रवस्वरः शस्यते तस्य ॥"
इच्चाइसउणसउणोहरंजिओ जाव वच्चइ कुमारो। नयचंदेण समेओ ताव करी अवसओ जाओ ॥३८॥
न गणइ सियसिणिहाणं सवलपहारम्मि मन्नइ न किंपि। सिच्छाइ गच्छइ तओ परिसंतो परियणो थक्को ॥

---

अत्यनुरक्ता तिष्ठत्युत्सुकचित्तस्य कारणं कथितम्। प्रणतजनप्रार्थनाभङ्गभीरवो भवन्तीह गुरवः ॥२९॥
तस्मात्कृत्वा प्रसादं मानय स्वामिनं त्वं निजम्। इति श्रुत्वा नयचन्द्रस्तदभिमुखं भणति युक्तमिदम्॥३०॥
किन्तु जनकावद्यापि जीवतः कुमारसत्कौ ततः। तयोरिदं स्वरूपं कथ्यतां ततः स्थिरे भवताम् ॥३१॥
निर्दुःखोऽसि महायशः! परस्य पीडां न जानासि कथमपि। इति भणित्वा वेगवती वरमालां क्षिपति कुमारे ॥
भणति च तव प्रसादात्कृतकृत्या सांप्रतमहं जाता। यद् युक्तं युष्माकमनुष्ठातव्यं तत्पश्चात् ॥३३॥
मम तातो मामिच्छति दातुमन्यस्मै तेनेदं विहितम्। इति भणित्वा वेगवती वेगेन गता निजं स्थानम् ॥३४॥
कुमारोऽपि मित्रसहितः कथयति गत्वा निजजनकयोः। सर्वं निशावृत्तान्तं तयोरपि बहु मतमेतत ॥३५॥
अथान्यदा च कुमारो बहिर्व्रजति गजवरारूढः। तावत्सगुणशकुनपङ्क्तिः पदे पदे भवति कुमारस्य ॥३६॥
ततो भणति मन्त्रितनयं शकुनाः परिभाविताः त्वयैते?। स भणति कुमार! आम कथयन्त्यत्यद्भुतं लाभम ॥
इत्यादिसगुणशकुनौघरञ्जितो यावद् व्रजति कुमारः। नयचन्द्रेण समेतस्तावत्करयवशो जातः ॥३८॥

---

१ ख. ग. किरु इ॰। २ ग. पढो वा यदि वा ओति पथ सम नवन्तया (? वाथवा)। भःप्यवंतन्य (? न्दतनः) पुरस्य मृगा यान्ति प्रदक्षिणाः ॥

इत्तो य करी पत्तो महाअरन्नस्स मज्झभागम्मि। तत्थ य दढपरिसंतो थक्को नग्गोहछायाए ॥४०॥
कुमरोवि मित्तसहिओ आरूढो तम्मि निसुणए सद्दं। एगाए तरुणीए सकरुणं विलवमाणीए ॥४१॥
तो करिणो ओयरिउं थेवपहं जाव ते गया दोवि। उग्गीरिउग्गखग्गो ता एगो खेयरो दिट्ठो ॥४२॥
एगाए रमणियाए सम्मुहमियभासिरो य जह अज्ज। मं मन्नसु भत्तारं सरेसु वा देवयं इट्ठं ॥४३॥
तो भणियं तीए महं सरणं सो नागदत्तवरकुमरो। रे दुट्ठ! तुह भएणं वरमाला जस्स कंठम्मि ॥४४॥
पुव्वं चिय पक्खित्ता, ता पाणा तस्स संतिया इण्हिं। इय सुणिउं सो दुट्ठो जा किल घायंपि मुंचेही॥
ता हक्कंतो पत्तो कुमरो करकलियछुरियदुप्पिच्छो। मंतितणएण सद्धिं खयराभिमुहं इमं भणइ ॥४६॥
निद्दय! नियंबिणीवहकलंकमलिणोव्व रे तुमं जाओ। उग्गिन्नखग्गपसरंतकंतिसामलियसव्वंगो ॥४७॥
तुह निक्किव रोसारुणपहनयणफुलिंगयाउ निवडंति। कह रे मालइदलकोमलम्मि महिलाए देहम्मि?॥
तो विरम विरम अज्जवि नहयरकुलसेहराण तुम्हाण। पुरिसोवि अपहरंतो न खमो वहिउं किमुय अबला॥
इच्चाइ कुमरवयणामएण गुरुरागगरलविहुरोवि। गयरागविसो जाओ कुमरं पइ जंपए खयरो ॥५०॥
तं मज्झ गुरू तं चेव बंधवो जेण रागजलनिहिणो। हेलाए बहिं खित्तो एसा पुण भइणिया मज्झ॥
रमणीवि मंतितणयं पुच्छइ को एस कहसु पसिऊण। निक्कारणकरुणारसतरंगिणीनाहमाहप्पो ?॥५२॥
सो भणइ नागदत्तो कुमरो सो एस जो निसीहम्मि। वरिओ वरमालाए इय सुणिउं लज्जिया बाला॥

---

न गणयति शितसृणिदानं सबलप्रहारान् मन्वते न किमपि। स्वेच्छया गच्छति ततः परिश्रान्तः परिजनः स्थितः॥
ततश्च करी प्राप्तो महारण्यस्य मध्यभागे। तत्र च दृढपरिश्रान्तः स्थितो न्यग्रोधच्छायायाम् ॥४०॥
कुमारोऽपि मित्त्रसहित आरूढस्तस्मिन् शृणोति शब्दम्। एकस्या रमण्याः सकरुणं विलपन्त्याः ॥४१॥
ततः करिणोऽवतीर्य स्तोकपथं यावत्तौ गतौ द्वावपि। उद्गीर्णोग्रखड्गस्तावदेकः खेचरो दृष्टः ॥४२॥
एकस्या रमण्याः सम्मुखमिति भाषिता च यथाऽद्य। मां मन्यस्व भर्तारं स्मर वा देवतामिष्टाम् ॥४३॥
ततो भणितं तया मम शरणं स नागदत्तवरकुमारः। रे दुष्ट! तव भयेन वरमाला यस्य कण्ठे ॥४४॥
पूर्वमेव प्रक्षिप्ता, तस्मात्प्राणास्तस्य संबन्धिन इदानीम्। इति श्रुत्वा स दुष्टो यावत्किल घातमपि मोक्ष्यति॥
तावन्निषेधन् प्राप्तः कुमारः करकलितक्षुरिकादुर्दर्शः। मन्त्रितनयेन सार्धं खचराभिमुखमिदं भणति ॥४६॥
निर्दय! नितम्बिनीवधकलङ्कमलिन इव रे त्वं जातः। उद्गीर्णखड्गप्रसरत्कान्तिश्यामलितसर्वाङ्गः ॥४७॥
तव निष्कृप! रोषारुणप्रभनयनस्फुलिङ्गा निपतन्ति। कथं रे मालतीदलकोमले महिलाया देहे? ॥४८॥
ततो विरम विरमाद्यापि नभश्चरकुलशेखराणां युष्माकम्। पुरुषोऽप्यप्रहरन् न क्षमो हन्तुं किमुताबला॥४९॥
इत्यादिकुमारवचनामृतेन गुरुरागगरलविधुरोऽपि। गतरागविषो जातः कुमारं प्रति जल्पति खचरः ॥५०॥
त्वं मम गुरुस्त्वमेव बान्धवो येन रागजलनिधेः। हेलया बहिः क्षिप्त एषा पुनर्भगिनी मम ॥५१॥
रमण्यपि मन्त्रितनयं पृच्छति क एष कथय प्रसद्य। निष्कारणकरुणारसतरङ्गिणीनाथमाहात्म्यः? ॥५२॥

---

१ ग. °रुणसिओवि।

जाव किल किंपि भणिही पत्तं कुमरस्स संतियं सिन्नं । खयरीजणओवि तहा तीए पउत्तिं गवेसंतो ॥
अन्नोन्नं कहिऊणं गमणागमणाइवइयरं सव्वं । वेगवइं परिणावइ कुमरसयासाउ तीए पिया ॥५५॥
कुमरोवि कइदिणेहिं पत्तो नियनयरपरिसरे जाव । ता पिच्छइ मुणिविंदं आगच्छंतं पहे समुहं ॥५६॥
तो भणइ मंतिसमुहं दंसणमेयाण किं सुहं असुहं ? । सो भणइ पुव्वसउणाण उत्तमो एस सउणोत्ति ॥
जयसिरमणिणो मुणिणो जं इह दीसंति पुन्नजोगेण । ता ओयरिउं करिणो वंदसु एयाण कमजुयलं ॥५८॥
तो कुमरेणं पढमं चिय दक्खत्ताउ वियाणिउं सूरिं । नमिओ मंतिजुएणं सेसावि हु मुणिवरा तत्तो ॥
पहपरिसंतं दट्ठुं मुणिसत्थं भणइ सूरिणोभिमुहं । कुमरो नयचंदजुओ जह पहु ! पसिऊण खणमेगं ॥
एलावणदक्खामंडवम्मि लवलीलयाण गेहम्मि । पहअइपच्चासन्ने मलए वीसमह निवतणए ॥६१॥
एवंति भणिऊणं सूरी कुमरेण सह गओ तत्थ । मुणिसमुचिए पएसे उवविट्ठो सपरिवारोवि ॥६२॥

"जीवितं यौवनं लक्ष्मीर्लावण्यं प्रियसंगमः । जैनधर्मादृते सर्वमनित्यं देहिनां भवे ॥
धर्मार्थकाममोक्षाख्यपुरुषार्थप्रसाधकम् । आयुराखण्डलोद्दण्डकोदण्डचटुलं नृणाम् ॥
कामं कामक्षमं काम्यं कामिनीजनवल्लभम् । तारुण्यं तरणीतारतारिकेवातिचञ्चलम् ॥
लक्षशो लक्ष्यमाणापि क्षयं लक्ष्मीः क्षणादपि । याति चण्डानिलोद्धूता जीमूतस्येव पद्धतिः ॥
यत्प्रभावाज्जनोऽत्यर्थं जायते दृष्टिहारकः । तल्लावण्यं गिरिस्रस्तसरिद्वेगोपमं जनाः ! ॥
अभीष्टजनसङ्गोऽपि विप्रयोगसमन्वितः । योगप्रदेशवत्तस्माद् धर्मे चैव मनः कुथाः ॥
जिनबिम्बार्चनं सेवा गुरूणां प्राणिनां दया । शमो दानं तपः शीलमेष धर्मो जिनोदितः ॥
हितकृच्छाश्वतोऽभीष्टो रूपलावण्यकारकः । स्वर्गापवर्गसंसर्गं दत्ते किं बहुनाथवा ? ॥
श्रुत्वैवमादिकं धर्मं नागदत्तः क्षितीशजः । मन्त्रिपुत्रेण संयुक्तः प्रबुद्धो जिनशासने ॥"

---

स भणति नागदत्तः कुमारः स एव यो निशीथे । वृतो वरमालयेति ज्ञात्वा लज्जिता बाला ॥५३॥
यावत्किल किमपि भणिष्यति प्राप्तं कुमारस्य संबन्धि सैन्यम् । खचरीजनकोऽपि तथा तस्याः प्रवृत्तिं गवेषयन् ॥
अन्योन्यं कथयित्वा गमनागमनादिव्यतिकरं सर्वम् । वेगवतीं परिणाययति कुमारसकाशात्तस्याः पिता॥५५॥
कुमारोऽपि कतिदिनैः प्राप्तो निजनगरपरिसरे यावत् । तावत्पश्यति मुनिवृन्दमागच्छत् पथि संमुखम् ॥५६॥
ततो भणति मन्त्रिसंमुखं दर्शनमेतेषां किं शुभमशुभम् ? । स भणति पूर्वशकुनानामुत्तम एष शकुन इति ॥
जगच्छिरोमणयो मुनयो यदिह दृश्यन्ते पुण्ययोगेन । तस्मादवतीर्य करिणो वन्दस्वैतेषां क्रमयुगलम् ॥५८॥
ततः कुमारेण प्रथममेव दक्षत्वाद् विज्ञाय सूरिम् । नतो मन्त्रियुतेन शेषा अपि हि मुनिवरास्ततः ॥५९॥
पथिपरिश्रान्तं दृष्ट्वा मुनिसार्थं भणति सूरेरभिमुखम् । कुमारो नयचन्द्रयुतो यथा प्रभो ! प्रसद्य क्षणमेकम् ॥
एलावनद्राक्षामण्डपे लवलीलतानां गेहे । पथ्यतिप्रत्यासन्ने मलये विश्राम्यत नृपीये ॥६१॥
एवमिति भणित्वा सूरिः कुमारेण सह गतस्तत्र [ मुनिसमुचिते प्रदेश उपविष्टः सपरिवारोऽपि ॥६२॥

---

१ ख. होउ भणिय ।

कुमरोवि सपरिवारो उवविट्ठो सुद्धधरणिवट्टम्मि। इत्तो धम्मो कहिउं पारद्धो सूरिणा एवं ॥६३॥
पुच्छइ सविसेसं चिय सावयधम्मं गुरूवि तं कहइ। कुमरोवि मंतिसहिओ तं गिण्हइ बारसविहंपि ॥
तो वंदिऊण सूरिं कुमरो संचलइ नियपुराभिमुहं। मग्गम्मि य वच्चंतो जंपइ मित्तेण सह एवं ॥६५॥
सउणेहिं फलं दिन्नं जह निद्दिट्ठं पुरा तए मित्त!। पत्तो अपत्तपुव्वो जं जिणधम्मो मए अज्ज ॥६६॥
इय जंपंतो पत्तो गिहम्मि पूएवि तत्थ जिणपडिमं। वंदिवि विहीए मित्तेण परिगओ भोयणं कुणइ॥
भुत्तुत्तरम्मि तत्थ य परोप्परं चिंतयंति गिहिधम्मं। सम्मं सम्मचाई सामइए किंचि संमूढा ॥६८॥
तत्तो पभायसमए जिणपूयणवंदणं विहेऊण। पत्ता सूरिसयासे विहिणा वंदेवि भत्तीए ॥६९॥
सामइयस्सरूवं सूरिं पुच्छंति कुमरनयचंदा। ताणं च हियट्ठाए सूरीवि हु साहए एवं ॥७०॥
जत्थ समसत्तुमित्तो समतिणमणिकंचणो हवइ जीवो। सामाइयाभिहाणं पढमं सिक्खावयं तमिह ॥७१॥
सपरिग्गहोवि सगिहोवि दारजुत्तोवि देसविरओवि। पावइ मुणीणं उवमं जत्थ ठिओ तत्थ किं भणिमो?॥
सामाइयट्ठियाणं जह जह उल्लसइ सुद्धपरिणामो। तह तह अणेयभवसंचियाणि कम्माणि झिज्जंति ॥
माणससरनीरं जह कलुसिज्जइ कासरेहिं विमलंपि। अइयारेहिं सामाइयंपि तह चेव, ते य इमे ॥७४॥
अणवट्ठियकरणं तह मणवइकायाण दुप्पणिहाणं। सामइयं विहियं वा नवत्ति इय संसओ तह य॥७५॥
इय नाऊणं सम्मं कुमरो सामाइयस्स सब्भावं। अट्ठमिचउदसीसुं गिण्हेयव्वं मए एयं ॥७६॥

---

कुमारोऽपि सपरिवार उपविष्टः शुद्धधरणिपट्टे। इतो धर्मः कथयितुं प्रारब्धः सूरिणैवम् ॥६३॥
पृच्छति सविशेषमेव श्रावकधर्मं गुरुरपि तं कथयति। कुमारोऽपि मन्त्रिसहितस्तं गृह्णाति द्वादशविधमपि ॥६४॥
ततो वन्दित्वा सूरिं कुमारः संचलति निजपुराभिमुखम्। मार्गे च व्रजञ्जल्पति मित्त्रेण सहैवम् ॥६५॥
शकुनैः फलं दत्तं यथा निर्दिष्टं पुरा त्वया मित्त्र!। प्राप्तोऽप्राप्तपूर्वो यज्जिनधर्मो मयाऽद्य ॥६६॥
इति जल्पन्प्राप्तो गृहे पूजयित्वा तत्र जिनप्रतिमाम्। वन्दित्वा विधिना मित्त्रेण परिगतो भोजनं करोति ॥
भुक्तोत्तरे तत्र च परस्परं चिन्तयतो गृहिधर्मम्। सम्यक्सम्यक्त्वादिं सामयिके किञ्चित्संमूढौ ॥६८॥
ततः प्रभातसमये जिनपूजनवन्दनं विधाय। प्राप्तौ सूरिसकाशं विधिना वन्दित्वा भक्त्या ॥६९॥
सामायिकस्वरूपं सूरिं पृच्छतः कुमारनयचन्द्रौ। तयोश्च हितार्थं सूरिरपि कथयत्येवम् ॥७०॥
यत्र समशत्रुमित्त्रः समतृणमणिकाञ्चनो भवति जीवः। सामायिकाभिधानं प्रथमं शिक्षाव्रतं तदिह ॥७१॥
सपरिग्रहोऽपि सगृहोऽपि दारयुक्तोऽपि देशविरतोऽपि। प्राप्नोति मुनीनामुपमां यत्र स्थितस्तत्र किं भणामः?॥
सामायिकस्थितानां यथा यथोल्लसति शुद्धपरिणामः। तथा तथानेकभवसंचितानि कर्माणि क्षीयन्ते ॥७३॥
मानससरोनीरं यथा कलुष्यते कासरैर्विमलमपि। अतिचारैः सामायिकमपि तथैव, ते चेमे ॥७४॥
अनवस्थितकरणं तथा मनोवचःकायानां दुष्प्रणिधानम्। सामायिकं विहितं वा नवेतीति संशयस्तथा च ॥
इति ज्ञात्वा सम्यक् कुमारः सामायिकस्य सद्भावम्। अष्टमीचतुर्दश्योर्ग्रहीतव्यं मयैतत् ॥७६॥

---

१ ग. °रियणो मित्तसंजुओ पायपकयं नमिउ। इ°

इय काऊण पइन्नं नमिउं सूरिं गिहम्मि संपत्तो । आसत्तो जिणधम्मे मित्तेण समं गमइ कालं ॥७७॥
अह मलयकेउरन्नो कन्नचउक्कं समागयं तत्थ । तं सोहणे मुहुत्ते कुमरो परिणेइ, इत्तो य ॥७८॥
पंचप्पयारभोए पंचहिं भज्जाहिं सहणुभुंजंतो । पिउणावि चरिमसमए अहिसित्तो सो नियपयम्मि ॥
कारइ जिणिंदभवणे रहजत्ताओ पवत्तए देसे । साहम्मियवच्छल्लं कुणइ समित्तोवि उवउत्तो ॥८०॥
इय काले वचंते कयाइ कस्सवि निवस्स उवरिम्मि । जयजत्ताए चलिओ पत्तो कम्मिवि महानयरे ॥
उव्वसिए जक्खेणं, कोवि विन्नवइ निवइणो एवं । जह इत्थ कोवि न लहइ वसिउं रयणिंपि, ता इत्तो ॥
गच्छउ देवो, तो भणइ भूवई अज्ज चउद्दसी ताव । इत्थेव चिट्ठियव्वं न पयाणं अज्ज दायव्वं ॥८३॥
तो ठाइ तत्थ राया जक्खगिहे गिण्हए य सामइयं । पिहिऊण तस्स दारं सज्झायं कुणइ, इत्तो य ॥
तत्थेव य तं पिच्छइ वेगवइं गरुयसारसिंगारं । जक्खागारस्संतो पभणंतिं एरिसं वयणं ॥८५॥
हा सामि! किमिह नट्ठो मं दुहियं मोत्तुमित्थ रन्नम्मि । किं न मुणसि मह हिययं तुह विरहे फुट्टइ तडत्ति ॥
इय सोउं सविसेसं संवेगकराइं गुणइ कुलयाइं । नरनाहो वेगवई तो इय भणिउं समारद्धा ॥८७॥
हा दइय! कहसु संपइ मह हिययाओ खणेण कह नट्ठो । सो तारिसोवि पणओ सव्वंगोवंगलीणोवि ? ॥
दूमेइ मज्झ हिययं दहइ सरीरं करेइ रणरणयं । तुह विरहो ता सामिय! मुंचसु इय गड्वडं इण्हिं ॥८९॥
जह एयं मह दुक्खं अवेइ तह नाह! कुणसु किंपि तुमं । न हु नाम महापुरिसा दुहिएसुं हुंति निक्करुणा ॥
तो राया परिचिंतइ विहीसिया कावि उट्ठिया एसा । अक्खयनिहिं विहीए समुक्खणंतस्स किमु काही ? ॥

---

*इति कृत्वा प्रतिज्ञां नत्वा सूरिं गृहे संप्राप्तः । आसक्तो जिनधर्मे मित्रेण समं गमयति कालम् ॥७७॥*
*अथ मलयकेतुराजस्य कन्याचतुष्कं समागतं तत्र । तच्छोभने मुहूर्त्ते कुमारः परिणयति, इतश्च ॥७८॥*
*पञ्चप्रकारभोगान् पञ्चभिर्भार्याभिः सहानुभुञ्जानः । पित्रापि चरमसमयेऽभिषिक्तः स निजपदे ॥७९॥*
*कारयति जिनेन्द्रभवनानि रथयात्राः प्रवर्तयति देशे । साधर्मिकवात्सल्यं करोति समित्रोऽप्युपयुक्तः ॥८०॥*
*इति काले व्रजति कदाचित्कस्यापि नृपस्योपरि । जययात्रया चलितः प्राप्तः कस्मिन्नपि महानगरे ॥८१॥*
*उद्वसिते यक्षेण, कोऽपि विज्ञपयति नृपतेरेवम् । यथात्र कोऽपि न लभते वस्तुं रजनिमपि, तस्मादितः ॥८२॥*
*गच्छतु देवः, ततो भणति भूपतिरद्य चतुर्दशी तावत् । अत्रैव स्थातव्यं न प्रयाणमद्य दातव्यम् ॥८३॥*
*ततस्तिष्ठति राजा यक्षगृहे गृह्णाति च सामायिकम् । पिधाय तस्य द्वारं स्वाध्यायं करोति, इतश्च ॥८४॥*
*तत्रैव च तां पश्यति वेगवतीं गुरुसारशृङ्गाराम् । यक्षागारस्यान्तः प्रभणन्तीमीदृशं वचनम् ॥८५॥*
*हा स्वामिन्! किमिह नष्टो मां दुःखितां मुक्त्वाऽत्रारण्ये । किं न जानासि मम हृदयं तव विरहे स्फुटति तडिति ॥*
*इति श्रुत्वा सविशेषं संवेगकराणि गणयति कुलकानि । नरनाथः, वेगवती तत इति भणितुं समारब्धा ॥८७॥*
*हा दयित! कथय संप्रति मां हृदयात्क्षणेन कथं नष्टः । हा तादृशोऽपि प्रणयः सर्वाङ्गोपाङ्गलीनोऽपि ॥८८॥*
*दुनोति मम हृदयं दहति शरीरं करोति रणरणकम् । तव विरहस्तस्मात्स्वामिन्! मुञ्चेत्याटोपमिदानीम् ॥८९॥*
*यथैतन्मम दुःखमपैति तथा नाथ! कुरु किमपि त्वम् । न हि नाम महापुरुषा दुःखितेषु भवन्ति निष्करुणाः ॥*

इत्थंतरे सयं चिय सो जक्खो गडयडं पकुव्वंतो। पत्तो निवस्स पासे विउव्विउं रूवमइभीमं ॥९२॥
भणइ नियपोरिसेणं मन्नसि भुवणंपि तणसमं मूढ !। मा पभणसु नो कहियं तं मारिस्सामि अहमिण्हि ॥
ता सरसु इट्ठदेवं सेवं वा मज्झ तं पवज्जेसु। इय भणिउं उग्गामइ मुग्गरमेगं निवस्सुवरिं ॥९४॥
भणइ य मुंचसु नयरं सज्जो वा पोरिसं वलंबेसु। अह नियसिरकमलेणं पूयसु मह पायकमलं वा ॥९५॥
इय सोउं सविसेसं सज्झायंतो स चिट्ठई जाव। ता तत्थ कवडिजक्खो नरवइरक्खाकए पत्तो ॥९६॥
बहुसुरकयंगरक्खो कमलदलक्खो रणम्मि निरु दक्खो। तं दट्ठूणं नट्ठो भयभीओ सोवि पुरजक्खो ॥
तो राया सामइयं पारइ विहिणा करित्तु संभासं। कवडिजक्खेण समयं भणइ इमं तुम्हभयनट्ठं ॥९८॥
हक्कारवसु जक्खं पडिबोहिस्सामि तं अहं जेण। उव्वासियपुरलोओ वसई दुक्खेण अन्नत्थ ॥९९॥
तो तक्खणेण सो तत्थ आणिओ तस्स सुरविसेसेहिं। पणमित्तु महारायं कयड्डिजक्खं च निवभिमुहं ॥
भणइ अहो तं पुरिसो धीरत्तं तुज्झ चेव धरणीए। मज्झुवसग्गेहिं जो पवणेहिं गिरिव्व नो खुहिओ ॥१०१॥
किञ्च।
सुत्थावत्थाए जणो नियकज्जसहो हवेइ सव्वोवि। सो विरलो विसमदसाइ जो पुणो सत्तमारुहइ ॥१०२॥
ता तुट्ठो हं नरवर! पसिऊणं भणसु किंपि तं कज्जं। तो भणइ कवडिजक्खो अज्जवि तं पुच्छसे एयं ॥
नियनाणेणं सयमवि परिभावसु जं इमस्स मणइट्ठं। तो तक्खणेण जक्खो उवओगं देवि भणइ इमं ॥
तुज्झ पसाएणं सो पुरलोओ लहउ अप्पणो रिद्धिं। तं सामियं विहेउं कवड्डिजक्खस्स साहिज्जा ॥

---

ततो राजा परिचिन्तयति विभीषिका काप्युत्थितैषा। अक्षतनिधिं विधिना समुत्खनतः किमु करिष्यति? ॥९१॥
अत्रान्तरे स्वयमेव स यक्षो गडगडं प्रकुर्वन्। प्राप्तो नृपस्य पार्श्वे विकृत्य रूपमतिभीमम् ॥९२॥
भणति निजपौरुषेण मन्यसे भुवनमपि तृणसमं मूढ!। मा प्रभण नो कथितं त्वां मारयिष्याम्यहमधुना ॥९३॥
तस्मात्स्मरेष्टदेवं सेवां वा मम त्वं प्रपद्यस्व। इति भणित्वोत्थापयति मुद्गरमेकं नृपस्योपरि ॥९४॥
भणति च मुञ्च नगरं सद्यो वा पौरुषमवलम्बस्व। अथ निजशिरःकमलेन पूजय मम पादकमलं वा ॥९५॥
इति श्रुत्वा सविशेषं स्वाध्यायन्स तिष्ठति यावत्। तावत्तत्र कपर्दियक्षो नरपतिरक्षाकृते प्राप्तः ॥९६॥
बहुसुरकृताङ्गरक्षः कमलदलाक्षो रणे निश्चितं दक्षः। तं दृष्ट्वा नष्टो भयभीतः सोऽपि पुरयक्षः ॥९७॥
ततो राजा सामायिकं पारयति विधिना कृत्वा संभाषम्। कपर्दियक्षेण समं भणतीमं युष्मद्भयनष्टम् ॥९८॥
हक्कारय यक्षं प्रतिबोधयिष्यामि तमहं येन। उद्वासितपुरलोको वसति दुःखेनान्यत्र ॥९९॥
ततस्तत्क्षणेन स तत्रानीतस्तस्य सुरविशेषैः। प्रणम्य महाराजं कपर्दियक्षं च नृपाभिमुखम् ॥१००॥
भणत्यहो त्वं पुरुषो धीरत्वं तवैव धरण्याम्। ममोपसर्गैर्यः पवनैर्गिरिरिव नो क्षुभितः ॥१०१॥
सुस्थावस्थायां जनो निजकार्यसहो भवति सर्वोऽपि। स विरलो विषमदशायां यः पुनः सत्त्वमारोहति ॥१०२॥
तस्मात्तुष्टोऽहं नरवर! प्रसद्य भण किमपि त्वं कार्यम्। ततो भणति कपर्दियक्षोऽद्यापि त्वं पृच्छस्येतत् ॥
निजज्ञानेन स्वयमपि परिभाव्य यदस्य मनइष्टम्। ततस्तत्क्षणेन यक्ष उपयोगं दत्त्वा भणतीदम् ॥१०४॥

तो सव्वो सुरलोओ निरुविओ तप्पुरस्स लोयाणं । आहवणत्थं तेणवि समाणिओ सो इमं भणिओ ॥
नियनियगिहसामित्तं कुणह जणा! निवपए नमेऊण । एसो तुम्हाण पहू तेवि हु तह चेव कुव्वंति ॥
तो भणइ निवं जक्खो एयपुरसामिएण तं विहियं । मह किंपि जं न कहिउं पारिज्जइ तो निवो भणइ ॥
पाएण निरवराहे जणम्मि न हु कोवि मंगुलं कुणइ । मुत्तूणं खुद्दजणं अन्नाणुयं मच्छराइन्नं ॥१०९॥
किञ्च ।
गरुयावराहिणंपि हु अणुकंपंतीह जे महासत्ता । जम्हा जे करुणपरा तेहिं चिय भूसिया धरणी ॥११०॥
ता खमसु पुरजणम्मी पुरनाहस्सावि, तो भणइ जक्खो । सो पाविओ मए च्चिय परलोयं तो भणइ राया ॥
तत्तणयं आणेउं ठवेसु रज्जम्मि, तेण तं विहियं । तो राया से सिक्खं ताण समक्खं इमं देइ ॥११२॥
नयवंतो जो पालइ दुट्ठे निग्गहइ नीइबद्धरई । दीणाणाहं समणं पोसइ तह सयणवग्गं च ॥११३॥
सो होइ निवो लोए जहत्थनामो नराण पालणओ । नियपोट्टभरणतुट्ठो न होइ नेव य पमाईवि ॥११४॥
किं ताण जीविएणं किंवा लच्छीए किंव रज्जेण । पिच्छंताणवि जाणं निवाण दुहिओ जणो होइ ? ॥
इय नवनिवमणुसासिय पुरजक्खं भणइ नरवई एवं । जिणधम्मं पडिवज्जसु तो जक्खो भणइ तं कहसु ॥
नियजीयनिव्विसेसा सव्वेवि विसेसओ दुहियसत्ता । सव्वेणवि दट्ठव्वा विवेगिणा पुण विसेसेण ॥
देवं धम्मं तत्तं सवित्थरं से कहेइ तो राया । पडिवज्जिवि सो सव्वं रायाभिमुहं इमं भणइ ॥११८॥
भूसियपुहइतलाणं महाणुभावाण दंसणंपि सुहं । संसग्गी संभासो य सुहयरो पुन्नपुरिसाण ॥११९॥

---

तव प्रसादेन स पुरलोको लभतामात्मन ऋद्धिम् । त्वां स्वामिनं विधाय कपर्दियक्षस्य साहाय्यात् ॥१०५॥
ततः सर्वः सुरलोको निरूपितस्तत्पुरस्य लोकानाम् । आह्वानार्थं तेनापि समानीतः स इदं भणितः ॥१०६॥
निजनिजगृहस्वामित्वं कुरुत जनाः! नृपपादान् नत्वा । एष युष्माकं प्रभुस्तेऽपि हि तथैव कुर्वन्ति ॥१०७॥
ततो भणति नृपं यक्ष एतत्पुरस्वामिना तद् विहितम् । मम किमपि यन्न कथयितुं पार्यते ततो नृपो भणति ॥
प्रायेण निरपराधे जने न खलु कोऽप्यनिष्टं करोति । मुक्त्वा क्षुद्रजनमज्ञायकं मत्सराकीर्णम् ॥१०९॥
गुर्वपराधवतामपि ह्यनुकम्पन्त इह ये महासत्त्वाः । यस्माद्ये करुणापरास्तैरेव भूषिता धरणी ॥११०॥
तस्मात्क्षमस्व पुरजनं पुरनाथमपि, ततो भणति यक्षः । स प्रापितो मयैव परलोकं ततो भणति राजा ॥१११॥
तत्तनयमानीय स्थापय राज्ये, तेन तद्विहितम् । ततो राजा तस्मै शिक्षां तेषां समक्षमिमां ददाति ॥११२॥
नयवतो यः पालयति दुष्टान् निगृह्णाति नीतिबद्धरतिः । दीनानाथं श्रमणं पोषयति तथा स्वजनवर्गं च ॥
स भवति नृपो लोके यथार्थनामा नराणां पालनतः । निजोदरभरणतुष्टो न भवति नैव च प्रमाद्यपि ॥११४॥
किं तेषां जीवितेन किंवा लक्ष्म्या किंवा राज्येन । पश्यतामपि येषां नृपाणां दुःखितो जनो भवति? ॥११५॥
इति नवनृपमनुशास्य पुरयक्षं भणति नरपतिरेवम् । जिनधर्मं प्रतिपद्यस्व ततो यक्षो भणति तं कथय ॥११६॥
निजजीवनिर्विशेषाः सर्वेऽपि विशेषतो दुःखितसत्त्वाः । सर्वेणापि द्रष्टव्या विवेकिना पुनर्विशेषेण ॥११७॥
देवं धर्मं तत्त्वं सविस्तरं तस्य कथयति ततो राजा । प्रतिपद्य स सर्वं राजाभिमुखमिदं भणति ॥११८॥—

अह पुरसुत्थं काउं कवड्डिजक्खाइयं विसज्जेउं । राया पुरओ चलिओ ता पुरजक्खेण इय भणिओ ॥
जस्सोवरि तं चलिओ निवस्स सो संपयं तुह समीवे । सयमिह वद्धो एही ता तं मा वच्च तस्सुवरिं ॥
तं च तहेव य जायं सेवं मन्नाविऊण सो मुक्को । अह नियनयराभिमुहं चलिओ रायावि पत्तो य ॥
वेगवईए पुत्तं नियरज्जे ठाविऊण समयम्मि । पंचत्तं संपत्तो तइयभवे सिज्झिही एत्थ ॥१२३॥
इय सामइए भावा इहइंपि हु नागदत्तनरनाहो । जाओ सपाडिहेरो ता करणीयं इममवस्सं ॥१२४॥
सामाइयगयचित्तो सेविज्जइ देवदाणवेहिंपि । पोराणयबहुकम्मं खवेइ थेवेण कालेण ॥१२५॥

॥ इति सामायिकदृष्टान्ते नागदत्तनृपकथानकं समाप्तम् ॥

---

भूषितपृथिवीतलानां महानुभावानां दर्शनमपि शुभम् । संसर्गः संभाषश्च शुभतरः पुण्यपुरुषाणाम् ॥११९॥
अथ पुरसौस्थ्यं कृत्वा कपर्दियक्षादिकं विसृज्य । राजा पुरतश्चलितस्तावत्पुरयक्षेणेति भणितः ॥१२०॥
यस्योपरि त्वं चलितो नृपस्य स सांप्रतं तव समीपे । स्वयमिह बद्ध एष्यति तस्मात्त्वं मा व्रज तस्योपरि ॥
तच्च तथैव च जातं सेवां मानयित्वा स मुक्तः । अथ निजनगराभिमुखं चलितो राजापि प्राप्तश्च ॥१२२॥
वेगवत्याः पुत्रं निजराज्ये स्थापयित्वा समये । पञ्चत्वं संप्राप्तस्तृतीयभवे सेत्स्यत्यत्र ॥१२३॥
इति सामायिके भावादिहापि हि नागदत्तनरनाथः । जातः सप्रातिहार्यस्तस्मात्करणीयमिदमवश्यम् ॥१२४॥
सामायिकगतचित्तः सेव्यते देवदानवैरपि । पुराणबहुकर्म क्षपयति स्तोकेन कालेन ॥१२५॥



सामाइयं गहेउं दुप्पणिहाणं करेइ जो मणसा । सो माणुव्व पमत्तो निरुंभए अत्तणो सुगइं ॥१॥
तथाहि;—
जस्सावलोअणकए मन्ने सक्केणं लोयणसहस्सं । विहियं तमत्थि नयरं रयणपुरं नाम विक्खायं ॥२॥
तत्थवि य धणगरिट्ठो सिट्ठी नामेण गंगदत्तोत्ति । भज्जा गुणमइनामा पुत्तो माणोत्ति तीणत्थि ॥३॥
किंचिवि कलासु कुसलो वियरइ सिच्छाए काणणाईसु । दुल्ललियमित्तसहिओ अहन्नया जिणहरे पत्तो ॥
पिच्छइ पभूयलोयं भत्तीए सूरिसंनिहाणम्मि । निसुणंतं गिहिधम्मं सम्मत्ताइं पयत्तेण ॥५॥
ता सोवि देइ कन्नं गुरुण वयणे तडट्ठिओ संतो । तो केणवि सड्ढेणं पच्चभिनाऊण सो भणिओ ॥
उवविससु इत्थ भणिऊण साहियं साहुनाहपायाणं । जह गंगदत्ततणओ एसो माणोत्ति वंदेइ ॥७॥
तो सविसेसं सूरी साहइ अक्खेवणिं कहं तस्स । भद्दगभावत्ताओ सुणेइ सो अवहिओ होउं ॥८॥
अग्गाहारो नामेण अत्थि गामो धणेण पडिपुन्नो । निप्पुन्नगाभिहाणो एगो कुलपुत्तओ तत्थ ॥९॥
वसइ ववसायसहिओ नवरं जं किंपि कुणइ ववसायं । तत्थ अणत्थं पावइ विढवेइ न कवड्डियं कहवि ॥
तो अन्नया य भणिओ केणवि सयणेण पाउसे पढमे । मज्झ वलद्दे गहिउं हलमेगं कुणसु किंतु तए ॥११॥
संझासमए पत्ते मज्झ वलद्दा पुरोहडस्संतो । मह दिट्ठीए दंसिवि ठाएयव्वा पइदिणंपि ॥१२॥
तेणवि तं पडिवन्नं पइदियहं खेडिऊण खित्तम्मि । तग्गोणे तह कुणई अह वावइ सो तहिं पढमं ॥१३॥
मुग्गचावलयाइधन्नं कत्तरियं कत्तरेहिं जायंपि । तं तत्थवि तो तुसलि वावइ सो किणिवि वरबीयं ॥१४॥

---

सामायिकं गृहीत्वा दुष्प्रणिधानं करोति यो मनसा । स मान इव प्रमत्तो निरुणद्ध्यात्मनः सुगतिम् ॥१॥
यस्यावलोकनकृते मन्ये शक्रेण लोचनसहस्रम् । विहितं तदस्ति नगरं रत्नपुरं नाम विख्यातम ॥२॥
तत्रापि च धनगरिष्ठः श्रेष्ठी नाम्ना गङ्गदत्त इति । भार्या गुणमतीनामा पुत्रो मान इति तयोरस्ति ॥३॥
किञ्चिदपि कलासु कुशलो विचरति स्वेच्छया काननादिषु । दुर्ललितमित्रसहितोऽन्यदा जिनगृहे प्राप्तः ॥
पश्यति प्रभूतलोकं भक्त्या सूरिसंनिधाने । शृण्वन्तं गृहिधर्मं सम्यक्त्वादिं प्रयत्नेन ॥५॥
ततः सोऽपि ददाति कर्णं गुरूणां वचने तटस्थितः सन् । ततः केनापि श्राद्धेन प्रत्यभिज्ञाय स भणितः ॥६॥
उपविशात्र भणित्वा कथितं साधुनाथपादानाम् । यथा गङ्गदत्ततनय एष मान इति वन्दते ॥७॥
ततः सविशेषं सूरिः कथयत्याक्षेपणीं कथां तस्य । भद्रकभावत्वाच्छृणोति सोऽवहितो भूत्वा ॥८॥
अग्राधारो नाम्नाऽस्ति ग्रामो धनेन परिपूर्णः । निष्पुण्यकाभिधान एकः कुलपुत्रकस्तत्र ॥९॥
वसति व्यवसायसहितः केवलं यं कमपि करोति व्यवसायम् । तत्रानर्थं प्राप्नोत्यर्जयति न कपर्दिकां कथमपि ॥
ततोऽन्यदा च भणितः केनापि स्वजनेन प्रावृषि प्रथमायाम् । मम बलीवर्दौ गृहीत्वा हलमेकं कुरु किन्तु त्वया ॥
सन्ध्यासमये प्राप्ते मम बलीवर्दौ वाटकस्यान्तः । मम दृष्ट्या दर्शयित्वा स्थापयितव्यौ प्रतिदिनमपि ॥१२॥
तेनापि तत्प्रतिपन्नं प्रतिदिवसं कृष्ट्वा क्षेत्रे । तद्गावौ तथा करोत्यथ वपति स तत्र प्रथमम् ॥१३॥
मुद्गतण्डुलादिधान्यं कृत्तं कर्तरैर्जातमपि । तत् तत्रापि ततो धान्यं वपति स क्रीत्वा वरबीजम् ॥१४॥

भज्जासहीए गहिउं किंचिवि कडयाइ अड्डवेऊण । तवणि कुणइ सभज्जो तो से खित्तम्मि तिड्डीहिं ॥
उत्थारिया जुआरी पुणोवि सो खेडए तयं खित्तं । संझासमए गोणा तस्स नियंतस्स पक्खिवइ ॥१६॥
तव्वाडयम्मि, अह अन्नयां य दिट्ठीए दंसिउं तस्स । मुक्का गोणा वाहिं तेण न नाया कहिंपि गया ॥
तो तस्स गिहे पत्तो पुच्छइ निप्पुन्नयं कहिं गोणा ?। सो भणइ तुज्झ गेहे खित्ता वाडम्मि संझाए ॥१८॥
तई दिट्ठीए दिट्ठा, दिट्ठा सो भणइणवहिएण मए । किंतु तए नो भणियं गोणेहिं समं 'भलिज्जासु' ॥१९॥
ता मे अप्पसु गोणे निप्पुन्नो भणइ अप्पिआ चेव । इय जाए संवाए चलिया ते दोवि विवयंता ॥२०॥
नयरम्मि सचिवपासे कलहंता जंति जाव ते मग्गे । एगो तुरयारूढो पुरिसो तुरयस्स पुट्ठीए ॥२१॥
धावंतो संजाओ समुहो निप्पुन्नगस्स तो तेण । भणिओ सो जइ एयं आसं वालेसु भो पहिय ! ॥२२॥
तेणवि नियडंगाए हणिओ सो वालिउं तओ झत्ति । मम्माहओ मओ सो पडिओ सहसत्ति धरणियले ॥
पभणेइ आसवारो तुमए किं मारिओ इमो आसो ?। सो भणइ तुज्झ वयणेण वालिओ मारिओ न उण ॥
सोवि हु लग्गो पुट्ठिं झगडयबुद्धीए जाइ तेहिं समं । तो नगरपरिसरम्मि जाया रयणी तओ तत्थ ॥२५॥
सुत्ता वडस्स उवरिं सव्वे ते सावयाण भयभीया । पच्छागयं च किंचिवि सुत्तं नडपेडयं हिट्ठा ॥२६॥
निप्पुन्नगो विचिंतइ अहह अहं कह इमाण छुट्टिस्सं । जीवंतो, ता उब्बंधिऊण मरणं सरेमित्ति ॥२७॥
इय चिंताणंतरओ नियउत्तरिएण पासयं काउं । वडसाहाए अप्पा मुक्को उल्लंबिउं तेण ॥२८॥
जरजिन्नं उत्तरियं त्तडत्ति तुट्टं तओ अहे पडिओ । पेडावइणो भज्जाए उवरिं हिट्ठम्मि सुत्ताए ॥२९॥

---

भार्यासख्या गृहीत्वा किञ्चिदपि काणिशाघर्दयित्वा । उञ्छं करोति सभार्यस्ततस्तस्य क्षेत्रे शरभैः ॥१५॥
आक्रान्तं धान्यं पुनरपि स कृषति तत् क्षेत्रम् । सन्ध्यासमये गावौ तस्य पश्यतः प्रक्षिपति ॥१६॥
तद्वाटके, अथान्यदा च दृष्ट्या दर्शयित्वा तस्य । मुक्तौ गावौ बहिस्तेन न ज्ञातौ कुत्रापि गतौ ॥१७॥
ततस्तस्य गृहे प्राप्तः पश्यति निष्पुण्यकं कुत्र गावौ ?। स भणति तव गेहे क्षिप्तौ वाटके सन्ध्यायाम् ॥१८॥
त्वया दृष्ट्या दृष्टौ, दृष्टौ स भणत्यनवहितेन मया । किन्तु त्वया नो भणितं गोभ्यां समं 'भालयस्व' ॥१९॥
तस्मान्मेऽर्पय गावौ निष्पुण्यो भणत्यर्पितावेव । इति जाते संवादे चलितौ तौ द्वावपि विवदमानौ ॥२०॥
नगरे सचिवपार्श्वे कलहायमानौ यातो यावत्तौ मार्गे । एकस्तुरगारूढः पुरुषस्तुरगस्य पृष्ठे ॥२१॥
धावन् संजातः संमुखो निष्पुण्यस्य ततस्तेन । भणितः स यद्येतमश्वं वालय भोः पथिक ! ॥२२॥
तेनापि निजयष्ट्या हतः स वालयितुं ततो झटिति । मर्माहतो मृतः स पतितः सहसेति धरणीतले ॥२३॥
प्रभणत्यश्ववारस्त्वया किं मारितोऽयमश्वः ?। स भणति तव वचनेन वालितो मारितो न पुनः ॥२४॥
सोऽपि लग्नः पृष्ठे विद्रावणबुद्ध्या याति ताभ्यां समम् । ततो नगरपरिसरे जाता रजनिस्ततस्तत्र ॥२५॥
सुप्ता वटस्योपरि सर्वे ते श्वापदेभ्यो भयभीताः । पश्चादागतं च किञ्चिदपि सुप्तं नटपेटकमधः ॥२६॥
निष्पुण्यको विचिन्तयत्यहह अहं कथमाभ्यां छुटिष्यामि । जीवन्, तस्मादुद्बध्य मरणं सरामीति ॥२७॥
इति चिन्तानन्तरं निजोत्तरीयेण पाशं कृत्वा । वटशाखायामात्मा मुक्त उल्लम्बितुं तेन ॥२८॥

तो तब्भारवक्कंता मया नडी तस्स पुण न रोमंपि । फुरियं, तो तब्भत्ता रोरं पइ जंपए एवं ॥३०॥
रे दुट्ठ ! मज्झ भज्जा कहं तए मारिया महापाव ! । सो भणइ न तुह भज्जामरणत्थं एवमायरियं ॥३१॥
किंतु इमाण भएणं एवं विहियं जओ इमे दोवि । मह झगडेणं लग्गा गोणतुरंगाण कज्जेण ॥३२॥
तइओ तुमंपि दुक्कसु पच्चूसे सचिवसंनिहाणम्मि । जं भणिही सो तमहं तुज्झवि उचियं करिस्सामि ॥
तो पत्ते पच्चूसे करणनिविट्ठस्स मंतिणो कहिओ । सव्वोवि य वुत्तंतो सव्वेहिवि, भणइ तो मंती ॥
भो गोणइन्न ! किं ते दिट्ठा गोणा इमेण मुच्चंता ? । सो भणइ सचिव ! दिट्ठा परं न वुत्तं इमं वयणं ॥
जह तुह इमे बलद्दा पिच्छसु ता जामि नियगिहे अहयं । जेण ववत्था एसा पढमं चिय जंपिया आसि ॥
तत्तो तुरयाहिवई पुट्ठो सचिवेण किं तए भणियं । चालेसु इमं तुरगं, सो भणइ एवमेयंति ॥३७॥
निप्पुन्नगोवि पुट्ठो किं रे उल्लंघिओ तए अप्पा ? । सो जंपइ एयाणं भएण एवं मए विहियं ॥३८॥
तह दाणी दायव्वा बीयं भत्तं च किराणियं जेसिं । ताण भएणवि जम्हा न बीयमित्तंपि मे वलियं ॥
किंपुण मरणंपि न मे संजायं मंदभग्गभागिस्स । इय अप्पं सोयंतस्स तस्स उइयं सुहं कम्मं ॥४०॥
तत्तो तदुवरि करुणा जाया मंतिस्स, पभणए एवं । गोणवइं नियनयणे अप्पिय गिण्हेसु तं गोणे ॥
तुरयाहिवई भणिओ निययजीहं अप्पिऊण एयस्स । गिण्हसु इमाउ तुरगं पभणइ पेडावइंपि तहा ॥४२॥
तं अवलंबसु अप्पं उच्चतराए वडस्स साहाए । एस अहो सोविस्सइ पडेसु तं उवरिमेयस्स ॥४३॥

---

जराजीर्णमुत्तरीयं तडदिति त्रुटितं ततोऽश्वः पतितः । पेटकपतेर्भार्याया उपर्येव सुतायाः ॥२९॥
ततस्तद्भाराक्रान्ता मृता नटी तस्य पुनर्न रोमापि । स्फुटितं, ततस्तद्भर्त्ता रोरं प्रति जल्पत्येवम् ॥३०॥
रे दुष्ट ! मम भार्या कथं त्वया मारिता महापाप ! । स भणति न तव भार्यामरणार्थमेवमाचरितम् ॥३१॥
किन्त्वनयोर्भयेनैवं विहितं यत इमौ द्वावपि । मम विद्रावणे लग्नौ गोतुरङ्गयोः कार्येण ॥३२॥
तृतीयस्त्वमपि ढौकस्व प्रत्यूषे सचिवसंनिधाने । यद् भणिष्यति स तदहं तवाप्युचितं करिष्यामि ॥३३॥
ततः प्राप्ते प्रत्यूषे करणनिविष्टस्य मन्त्रिणः कथितः । सर्वोऽपि च वृत्तान्तः सर्वैरपि, भणति ततो मन्त्री ॥
भो गोमन् ! किं त्वया दृष्टौ गावावनेन मुच्यमानौ ? । स भणति सचिव ! दृष्टौ परं नोक्तमिदं वचनम् ॥
यथा तवेमौ बलीवर्दौ पश्य तावद् यामि निजगृहेऽहम् । येन व्यवस्थैषा प्रथममेव जल्पिताऽऽसीत् ॥३६॥
ततस्तुरगाधिपतिः पृष्टः सचिवेन किं त्वया भणितम् । चालयेमं तुरगं, स भणत्येवमेतदिति ॥३७॥
निष्पुण्यकः पृष्टः किं रे उल्लङ्घितस्त्वयाऽऽत्मा ? । स जल्पत्येतयोर्भयेनैवं मया विहितम् ॥३८॥
तथा करो दातव्यो द्वितीयं भक्तं च किराणीनं येषाम् । तेषां भयेनापि यस्माद् न बीजमात्रमपि मे वलितम् ॥
किन्तु मरणमपि न मे संजातं मन्दभाग्यभागिनः । इत्यात्मानं शोचतस्तस्योदितं शुभं कर्म ॥४०॥
ततस्तदुपरि करुणा जाता मन्त्रिणः, प्रभणत्येवम् । गोपतिं निजनयने अर्पयित्वा गृहाण त्वं गावौ ॥४१॥
तुरगाधिपतिर्भणितो निजजिह्वामर्पयित्वैतस्मै । गृहाणास्मात् तुरगं प्रभणति पेटकपतिमपि तथा ॥४२॥
त्वमवलम्बयात्मानमुच्चतरायां वटस्य शाखायाम् । एषोऽधः स्वप्स्यति पत त्वमुपर्येतस्य ॥४३॥

चिंतंति गोणतुरयाहिवावि इह नयणजीहसत्ताए । हुंतीए अन्नेवि हु होहिंती गोणतुरयाई ॥४४॥
पेडावईवि चिंतइ भज्जावि मया मर्मपि मारेइ । जिन्नवसणस्स पासो तुट्टो एयस्स, नो मज्झ ॥४५॥
सो तुट्टिही जओ मे वलियं वत्थं, कहंपि तुट्टेवि। निवडंतस्सवि पाणा नेय मए तस्स गमिहंति ॥४६॥
इय चिंतिऊण मुक्को सव्वेहिवि दुग्गओ गओ गेहे । सचिवेण तस्स मुक्का दाणी तवणीवि य विन्ना ॥
इय सुणिउं सो माणो पइदिवसं एइ सूरिवक्खाणे । अइअक्खित्तो·अक्खेवणीए मुत्तूण वावारं ॥४८॥
तज्जोगयं मुणेउं सूरी साहइ गिहत्थजणउचियं । सम्मत्ताईबारसविहंपि धम्मं सवित्थरओ ॥४९॥
तेणवि सो पडिवन्नो पिउणा सममंपि पइदिणं तत्तो । वंदंति देवगुरुणो, सामइयं पुण विसेसेण ॥५०॥
गिण्हंति उभयकालं, हट्टे ववहरइ माणओ चेव । परिचत्तवाललीलो धम्मपभावेण सो जाओ ॥५१॥
ववहरइ तस्स हट्टे पयाइलोओ सयावि पाएण । लद्धम्मि भत्तए ते तस्स पयच्छंति तं दव्वं ॥५२॥
इय वच्चंते काले केणवि भत्तम्मि लद्धए संते । नो माणयस्स दिन्नं किंचिवि मग्गंतयस्सावि ॥५३॥
अन्नेण पुणो अद्धं अन्नेणद्धस्स अद्धयं दिन्नं । ता जाव दस सहस्सा जाया छेयंम्मि माणस्स ॥५४॥
असमाहाणं जायं तहवि हु सामाइयं न मिल्लेइ । गहियम्मिवि सामइए मणम्मि माणो विचिंतेइ॥५५॥
एएणं दुट्ठेणं पयाइवग्गेण मज्झ बहुदव्वं । गमिअं संपइभत्ते, भविस्सभत्तम्मि पुण अहयं ॥५६॥
दाऊण किंपि वइगरणियाण एयाणं सव्वमवि भत्तं । उवरिंपि हु गिण्हिस्सं तो मे सव्वंपि तं दव्वं ॥
होही, वियाररहियं तो तेहिं समं कमेण ववहारं । संवरिय करिस्समहं गहणाणं उवरि ववहारं ॥५८॥

---

चिन्तयतो गोतुरगाधिपावपीह नयनजिह्वासत्तायाम् । भवन्त्यामन्येऽपि हि भविष्यन्ति गोतुरगादयः ॥४४॥
पेटकपतिरपि चिन्तयति भार्यापि मृता मामपि मारयति । जीर्णवसनस्य पाशस्त्रुटित एतस्य, नो मम ॥४५॥
स त्रुटिष्यति यतो मे पीनं वस्त्रं, कथमपि त्रोटयित्वा । निपततोऽपि प्राणा नैव मया तस्य गमिष्यन्ते ॥
इति चिन्तयित्वा मुक्तः सर्वैरपि दुर्गतो गतो गेहे । सचिवेन तस्य मुक्तः करं उञ्छोऽपि च वितीर्णः ॥
इति श्रुत्वा स मानः प्रतिदिवसमेति सूरिव्याख्याने । अत्याक्षिप्त आक्षेपण्या मुक्त्वा व्यापारम् ॥४८॥
तद्योग्यतां ज्ञात्वा सूरिः कथयति गृहस्थजनोचितम् । सम्यक्त्वादिद्वादशविधमपि धर्मं सविस्तरम् ॥४९॥
तेनापि स प्रतिपन्नः पित्रा सममपि प्रतिदिनं ततः । वन्देते देवगुरून्, सामयिकं पुनर्विशेषेण ॥५०॥
गृह्णीत उभयकालं, हट्टे व्यवहरति मान एव । परित्यक्तबाललीलो धर्मप्रभावेण स जातः ॥५१॥
व्यवहरति तस्य हट्टे प्रजादिलोकः सदापि प्रायेण । लब्धे भक्ते ते तस्य प्रयच्छन्ति तद् द्रव्यम् ॥५२॥
इति व्रजति काले केनापि भक्ते लब्धे सति । नो मानस्य दत्तं किञ्चिदपि मार्गयतोऽपि ॥५३॥
अन्येन पुनरर्धमन्येनार्धस्यार्धं दत्तम् । तावद् यावद् दश सहस्राणि जातानि च्छेदे मानस्य ॥५४॥
असमाधानं जातं तथापि हि सामायिकं न मुञ्चति । गृहीतेऽपि सामयिके मनसि मानो विचिन्तयति ॥५५॥
एतेन दुष्टेन प्रजादिवर्गेण मम बहुद्रव्यम् । गमितं संप्रतिभक्ते, भविष्यद्भक्ते पुनरहम् ॥५६॥
दत्त्वा किमपि वैकरणिकेभ्य एतेषां सर्वमपि भक्तम् । उपर्यपि हि ग्रहीष्ये ततो मे सर्वमपि तद् द्रव्यम् ॥

इअ निच्चलम्मि झाणे वट्टंतो सूरिणावि सो नाओ। नाणेण तओ भणिओ भो भो वज्जसु अवज्झाणं॥
जओ।

गहिऊणं सामइयं गिहचिंतं जो य चिंतए सड्ढो। अट्टवसट्टोवगओ निरत्थयं तस्स सामइयं॥६०॥
इय सोउं सो जंपइ भयवं! अत्थेण होइ धम्मोवि। ववहारेण स तुट्टो ता चिंता मह न फिट्टेइ॥६१॥
तो भणइ मुणिवरिंदो मा एवं भणसु देसु भावेण। मिच्छादुक्कडमहुणा सोवि न से उत्तरं देइ॥६२॥
नवरमभिग्गहजुत्तं सामइयं कुणइ नियगिहट्ठिओवि। मणसा अट्टवसट्टो तत्थवि अज्जिणइ बहुकम्मं॥
अह अन्नया य सामाइयट्ठिओ कसिणचउद्दसीए गिहे। खुद्दामरीए छलिओ तो सो मरिउं भवे भमिओ॥
सेट्ठीवि गंगदत्तो पालेउं निक्कलंकगिहिधम्मं। ईसाणे उववन्नो तइयभवे सिज्झिही तत्थ॥६५॥

॥ इति सामायिकप्रथमातिचारविपाके मानस्य दृष्टान्तः॥

---

भविष्यति, विचाररहितं ततस्तैः समं क्रमेण व्यवहारम्। संवृत्य करिष्येऽहं वन्चकानामुपरि व्यवहारम्॥
इति निश्चले ध्याने वर्तमानः सूरिणापि स ज्ञातः। ज्ञानेन ततो भणितो भो भो वर्जयापध्यानम्॥५९॥
यतः।
गृहीत्वा सामायिकं गृहचिन्तां यश्च चिन्तयति श्राद्धः। आर्तवशार्तोपगतो निरर्थकं तस्य सामायिकम्॥
इति श्रुत्वा स जल्पति भगवन्! अर्थेन भवति धर्मोऽपि। व्यवहारेण स त्रुटितस्तस्माच्चिन्ता मम न भ्रश्यति॥
ततो भणति मुनिवरेन्द्रो मैवं भण देहि भावेन। मिथ्यादुष्कृतमधुना सोऽपि न तस्योत्तरं ददाति॥६२॥
केवलमभिग्रहयुक्तं सामायिकं करोति निजगृहस्थितोऽपि। मनसार्तवशार्तस्तत्राप्यर्जयति बहुकर्म॥६३॥
अथान्यदा च सामायिकस्थितः कृष्णचतुर्दश्यां गृहे। क्षुद्रामर्याश्छलितस्ततः स मृत्वा भवे भ्रान्तः॥६४॥
श्रेष्ठ्यपि गङ्गदत्तः पालयित्वा निष्कलङ्कगृहिधर्मम्। ईशान उपपन्नस्तृतीयभवे सेत्स्यति तत्र॥६५॥

असमंजसाइं जंपइ गहिउं सामाइयंपि जो सड्ढो। विसढोव्व कुगइपत्तो सो सोयइ अप्पणो खलियं ॥१॥
तथाहि;—
अच्छरियाण कुलं पिव लच्छीए निवासवासभवणंव। विन्नाण निहाणं पिव नयरं इह अत्थि साकेयं ॥
तम्मि मिउमहुरभासी आसी सिट्ठी विसिट्ठजणजिट्ठो। आसधरो नामेणं भज्जा तस्सत्थि वसुहारा ॥
अट्ठमयठाणथद्धो अहम्मसद्धो सयावि अवियड्ढो। ताणत्थि सुओ, विसढो मित्तो तस्सवि वणी निसढो॥
धम्मम्मि दढो असढो, विसढो कुंढोव्व लोयसंतावी। वियरंति दोवि समगं वणिज्जकज्जेण देसेसु ॥५॥
अह अन्नया भमंतेहिं तेहिं पंथम्मि पहपरिब्भट्ठं। दिट्ठं मुणीण जुयलं उवविट्ठं साहिछायाए ॥६॥
भणियं विसढेण तओ एए जाणंति सव्वमवि निसढ!। पुच्छिज्जंतु इमे ता लाभालभाइयं किंपि ॥
इय बुद्धीए तओ ते पत्ता साहूण पायपासम्मि। नमिऊण साहुजुयलं उवविट्ठा उचियठाणम्मि ॥८॥
जिट्ठेण साहुणा ते पुट्ठा मग्गं पुरस्स कस्सावि। हसिऊण परुप्परओ मग्गं साहंति तस्स तओ ॥९॥
पुट्ठा मुणिणावि तओ किं भो तुब्भेहिं हसियमन्नोन्नं?। नियभिप्पाओ कहिओ विसढेण मुणिस्स जह अम्हे ॥
पुच्छिस्सं लाभाई तुम्हे मग्गंपि जे न याणेह। तक्कहणं ता दूरे अम्हेहिं विणिच्छियं तुम्ह ॥११॥
तो भणइ मुणी सच्चं एयं जं जंपियं परं किंतु। दव्वपहम्मि भुल्ला लहंति मग्गं जह तहेय ॥१२॥
भावपहम्मि उ भट्ठा कट्ठेण उविंति तं पुणो कहवि। जह तुम्हे पब्भट्ठा परियडह अयाणुया धणियं ॥
तो भणियं विसढेणं एक्कं चिय बुज्झिमो वयं मग्गं। गामागराइयाणं न उणो मग्गंतरं अन्नं ॥१४॥

---

असमञ्जसानि जल्पति गृहीत्वा सामायिकमपि यः श्राद्धः। विसढ इव कुगतिप्राप्तः स शोचत्यात्मनः स्खलितम् ॥
आश्चर्याणां कुलमिव लक्ष्म्या निवासवासभवनमिव। विज्ञानां निधानमिव नगरमिहास्ति साकेतम् ॥२॥
तस्मिन्मृदुमधुरभाष्यासीच्छ्रेष्ठी विशिष्टजनज्येष्ठः। आशाधरो नाम्ना भार्या तस्यास्ति वसुधारा ॥३॥
अष्टमदस्थानस्तब्धोऽधर्मश्रद्धः सदाप्यविदग्धः। तयोरस्ति सुतो विसढो मित्रं तस्यापि वणिग् निषढः ॥४॥
धर्मे दृढोऽशठः, विसढः कुण्ठ इव लोकसंतापी। विचरतो द्वावपि समं वाणिज्यकार्येण देशेषु ॥५॥
अथान्यदा भ्रमद्भ्यां ताभ्यां पथि पथिपरिभ्रष्टम्। दृष्टं मुन्योर्युगलमुपविष्टं शाखिच्छायायाम् ॥६॥
भणितं विसढेन तत एतौ जानीतः सर्वमपि निसढ!। पृच्छ्येतामिमौ तस्माल्लाभालाभादिकं किमपि ॥७॥
इति बुद्ध्या ततस्तौ प्राप्तौ साध्वोः पादपार्श्वे। नत्वा साधुयुगलमुपविष्टावुचितस्थाने ॥८॥
ज्येष्ठेन साधुना तौ पृष्टौ मार्गं पुरस्य कस्यापि। हसित्वा परस्परतो मार्गं कथयतस्तस्य ततः ॥९॥
पृष्टौ मुनिनापि ततः किं भो युवाभ्यां हसितमन्योन्यम्?। निजाभिप्रायः कथितो विसढेन मुनेर्यथावाम् ॥
प्रक्ष्यावो लाभादि युष्मान् मार्गमपि ये न जानीथ। तत्कथनं तस्माद् दूरं आवाभ्यां विनिश्चितं युष्माकम् ॥
ततो भणति मुनिः सत्यमेतद् यज्जल्पितं परं किन्तु। द्रव्यपथे भ्रष्टा लभन्ते मार्गं यथा तथैव ॥१२॥
भावपथे तु भ्रष्टाः कष्टेनोपयन्ति तं पुनः कथमपि। यथा युवां प्रभ्रष्टौ पर्यटथोऽज्ञायकौ बाढम् ॥१३॥
ततो भणितं विसढेनैकमेव बुध्यावह आवां मार्गम्। ग्रामाकरादिकानां न पुनर्मार्गान्तरमन्यत् ॥१४॥

तो भणइ मुणी गामाइयाण पढमो य दव्वमग्गोत्ति। नाणाइयाण बीओ विन्नेओ भावमग्गोत्ति ॥१५॥
जीवाइया पयत्था जाणिज्जंतीह जेण तं नाणं। तं पुण पंचपयारं मइनाणाई मुणेयव्वं ॥१६॥
सम्मत्तं पुण वुत्तं जीवाइपयत्थसत्थसद्दहणं। देवा अरिहंता चिय गुरुणो य सुसाहुणो चेव ॥१७॥
तं पुण तिविहं खाइग खाओवसमं च उवसमसमुत्थं। अहवा कारगरोयगदीवगभेएण तं तिविहं ॥१८॥
चारित्तंपि य दिट्ठं पंचविहं समइयाइभेएण। इय किंचि वित्थरेणं कहिओ भो भावमग्गोवि ॥१९॥
जह तुम्हेहिं कहिओ पंजलओ अम्ह दव्वमग्गोत्ति। तह तुम्हाणं कहिओ अम्हेहिवि भावमग्गोत्ति ॥२०॥
तुम्हकहियम्मि मग्गे गच्छिस्सं वट्टमाणजोगेण। अम्हकहियम्मि मग्गे तुम्हेवि पयट्टह जइच्छा ॥२१॥
विसढेण तओ भणियं कहेह देसेण भावमग्गंपि। पडिपुन्नभावमग्गे गंतुमसत्ता जओ नाह! ॥२२॥
सम्मत्तस्स सरूवं थूलयपाणाइवायविरयाइं। बारसविहगिहिधम्मं कहेइ साहू सवित्थरंपि ॥२३॥
तेहिंवि तं पडिवन्नं सम्मं अवहारिउं विसेसेणं। अह मुणिणो संचलिया तक्कहियपहेण, तेवि तओ ॥२४॥
नमिउं अभिरुइयपुरे पत्ता तत्थवि य थेवदियहेहिं। पत्तमणिच्छियलाभा चलिया तो नियपुरं पत्ता ॥२५॥
कुव्वंति जहाकहियं सम्मं सम्मत्तयाइगिहिधम्मं। सामाइए विसेसेण ताणं जत्तो इमं सुणिउं ॥२६॥
सामाइयम्मि उ कए समणो इव सावओ हवइ जम्हा। एएण कारणेणं बहुसो सामाइयं कुज्जा ॥२७॥
सामाइयट्ठियाणं जह जह उल्लसइ सुद्धपरिणामो। तह तह अणेयभवसंचियाणि कम्माणि निद्दलइ ॥२८॥
इय सामइयरयाणं ताणं वच्चंति वासरा बहुया। किंतु विसढो पमाई रायकहाईवि भासेइ ॥२९॥

---

ततो भणति मुनिर्ग्रामादिकानां प्रथमश्च द्रव्यमार्ग इति। ज्ञानादिकानां द्वितीयो विज्ञेयो भावमार्ग इति ॥१५॥
जीवादिकाः पदार्था ज्ञायन्त इह येन तज्ज्ञानम्। तत् पुनः पञ्चप्रकारं मतिज्ञानादि ज्ञातव्यम् ॥१६॥
सम्यक्त्वं पुनरुक्तं जीवादिपदार्थसार्थश्रद्धानम्। देवा अर्हन्त एव गुरवश्च सुसाधव एव ॥१७॥
तत् पुनस्त्रिविधं क्षायिकं क्षायोपशमिकं चोपशमसमुत्थम्। अथवा कारकरोचकदीपकभेदेन तत् त्रिविधम् ॥
चारित्रमपि च दिष्टं पञ्चविधं सामायिकादिभेदेन। इति किञ्चिद्विस्तरेण कथितो भो भावमार्गोऽपि ॥१९॥
यथा युवाभ्यां कथितः प्राञ्जलोऽस्माकं द्रव्यमार्ग इति। तथा युवयोः कथितोऽस्माभिरपि भावमार्ग इति ॥२०॥
युष्मत्कथिते मार्गे गमिष्यावो वर्तमानयोगेन। अस्मत्कथिते मार्गे युवामपि प्रयतेतां यदिच्छा ॥२१॥
विसढेन ततो भणितं कथयत देशेन भावमार्गमपि। परिपूर्णभावमार्गे गन्तुमशक्तौ यतो नाथ! ॥२२॥
सम्यक्त्वस्य स्वरूपं स्थूलप्राणातिपातविरतादिम्। द्वादशविधगृहिधर्मं कथयति साधुः सविस्तरमपि ॥२३॥
ताभ्यामपि स प्रतिपन्नः सम्यगवधार्य विशेषेण। अथ मुनी संचलितौ तत्कथितपथेन, तावपि ततः ॥२४॥
नत्वाऽभिरुचितपुरं प्राप्तौ तत्रापि च स्तोकदिवसैः। प्राप्तमनईप्सितलाभौ चलितौ ततो निजपुरं प्राप्तौ ॥
कुरुतो यथाकथितं सम्यक् सम्यक्त्वादिगृहिधर्मम्। सामायिके विशेषेण तयोर्यत्न इदं श्रुत्वा ॥२६॥
सामायिके तु कृते श्रमण इव श्रावको भवति यस्मात्। एतेन कारणेन बहुशः सामायिकं कुर्यात् ॥२७॥
सामायिकस्थितानां यथा यथोल्लसति शुद्धपरिणामः। तथा तथानेकभवसंचितानि कर्माणि निर्दलति ॥२८॥

इय जंपंतो सिट्ठी मरिउं तत्थेव मलयमज्झम्मि । जाओ पवंगपोओ तम्मयकिच्चाइं काऊण ॥१५॥
पुत्तावि हु वावारं कुणंति एगत्थसंठिया सव्वे । अह ताण मलयमज्झे समोसढो केवली कइया ॥१६॥
सिरिभुवणभाणुनामा सदेवमणुयासुराए परिसाए, धम्मं वागरमाणो तप्पिउजीवेण पवगेण ॥१७॥
सहयारतरुट्ठिएणं दिट्ठो तो सोवि सुणइ वयणमिणं । भो भो भव्वा ! मुच्छा परिहरियव्वा पयत्तेण ॥१८॥
गिहधणपुत्तकलत्ताइएसु खणदिट्ठनट्ठरूवेसु । जेणं सच्चिय हेऊ गुरुपावभरस्स जीवाणं ॥१९॥
मुच्छापरिगयचित्तो अट्टवसट्टो करेइ जइ कालं । तो तिरिएसुं गच्छइ जह वेसमणो इहनिवासी ॥२०॥
साहामिगोवि सुणिउं नियनामं जायजाइसरणो सो । पत्तो केवलिपासे कुणइ पणामं तओ परिसा ॥
विम्हियहियया पुच्छइ को एसो वानरो, कहइ नाणी । सो एसो वेसमणो जो इहवासी मए कहिओ ॥
परिसामज्झगएणं पढमसुएणं नियस्स जणयस्स । सोउं चरियं पुट्ठो नाणी कह वानरो एसो ॥२३॥
संजाओ मज्झ पिया वेसमणो समणमाहणाईणं । जो दावेंतो दाणं, तो पभणइ केवली एवं ॥२४॥
छलिओ मुच्छाए इमो गिहधणपुत्ताइयाण अइधणियं । किं बहुणा एसोच्चिय साहिस्सइ अक्खरे लिहिउं ॥
नियचरियं तुम्हाणं, तेणवि तह चेव साहियं सव्वं । तो पढमसुएणं ते आहूया बंधुणो तत्थ ॥२६॥
ताणवि कहियं तेणं पिउणो चरियं तओ य केवलिणा । कहिओ दुविहो धम्मो जइगिहिभेएण सव्वाण ॥
पढमसमत्थेहिं तओ भणिओ नाणी कहेह अम्हाण । सावयधम्मं सव्वं तो नाणी कहइ तं ताण ॥२८॥
तो तेवि हु सविसेसं नमिउं पुच्छंति सूरिपासम्मि । पहु ! पोसहसद्दत्थं कहेह, सूरीवि तो कहइ ॥२९॥

---

इति जल्पन् श्रेष्ठी मृत्वा तत्रैव मलयमध्ये । जातः प्लवङ्गपोतस्तन्मृतकृत्यानि कृत्वा ॥१५॥
पुत्रा अपि हि व्यवहारं कुर्वन्त्येकान्तसंस्थिताः सर्वे । अथ तेषां मलयमध्ये समवसृतः केवली कदा ॥१६॥
श्रीभुवनभानुनामा सदेवमनुजासुरायां पर्षदि । धर्मं व्याकुर्वंस्तत्पितृजीवेन प्लवगेन ॥१७॥
सहकारतरुस्थितेन दृष्टस्ततः सोऽपि शृणोति वचनमिदम् । भो भो भव्या मूर्च्छा परिहर्तव्या प्रयत्नेन ॥१८॥
गृहधनपुत्रकलत्रादिकेषु क्षणदृष्टनष्टरूपेषु । येन सैव हेतुर्गुरुपापभरस्य जीवानाम् ॥१९॥
मूर्च्छापरिगतचित्त आर्तवशार्तः करोति यदि कालम् । ततस्तिर्यक्षु गच्छति यथा वैश्रमण इहनिवासी ॥२०॥
शाखामृगोऽपि श्रुत्वा निजनाम जातजातिस्मरणः सः । प्राप्तः केवलिपार्श्वे करोति प्रणामं ततः पर्षत् ॥२१॥
विस्मितहृदया पृच्छति क एष वानरः, कथयति ज्ञानी । स एष वैश्रमणो य इहवासी मया कथितः॥२२॥
पर्षन्मध्यगतेन प्रथमसुतेन निजस्य जनकस्य । श्रुत्वा चरितं पृष्टो ज्ञानी कथं वानर एषः ॥२३॥
संजातो मम पिता वैश्रमणः श्रमणब्राह्मणादिभ्यः । यो दापयन्दानं, ततः प्रभणति केवल्येवम् ॥२४॥
छलितो मूर्च्छयाऽयं गृहधनपुत्रादिकानामतिगाढम् । किं बहुनैष एव कथयिष्यत्यक्षराणि लिखित्वा ॥२५॥
निजचरितं युष्मभ्यं, तेनापि तथैव कथितं सर्वम् । ततः प्रथमसुतेन त आहूता बन्धवस्तत्र ॥२६॥
तेभ्योऽपि कथितं तेन पितुश्चरितं ततश्च केवलिना । कथितो द्विविधो धर्मो यतिगृहिभेदेन सर्वेभ्यः ॥२७॥
प्रथमासमर्थैस्ततो भणितो ज्ञानी कथयतास्माकम् । श्रावकधर्मं सर्वं ततो ज्ञानी कथयति तं तेभ्यः ॥२८॥

पोसहसद्दो रूढीए एत्थ पव्वाणुवायओ भणिओ। अट्ठमिपभिईणि य ताणि इत्थ समए पसिद्धाणि ॥३०॥
उववसणं जं च पुणो तेसि सो पोसहोववासुत्ति। भन्नइ धम्मेण नरं पोसइ वा पोसहो तेणं ॥३१॥
आहारदेहसक्कारबंभवावारभेयओ सोवि। चउभेओ निद्दिट्ठो सिद्धंते पुव्वसूरीहिं ॥३२॥
सो देससव्वभेया पत्तेयंपि हु दुहा तहिं देसे। निद्दिट्ठवत्थुचाओ सव्वाहाराण सव्वम्मि ॥३३॥
भन्नइ सरीरसक्कारपोसहो देससव्वभेएण। दुविहो तत्थ य देसे निद्दिट्ठाणं परिच्चाओ ॥३४॥
न्हाणुव्वट्टणवन्नगविलेवणप्पमुहविविहवत्थूण। सव्वे उण सव्वेसिं चाओ वत्थूण निद्दिट्ठो ॥३५॥
अह बंभपोसहो सो एएण कमेण भन्नए दुविहो। देसे दिणाइबंभं सव्वे सव्वं अहोरत्तं ॥३६॥
वावारा पुण रंधगघरलिंपणदलणखंडणाईया। असुभा सुभा य दुविहा तत्थ देसम्मि असुहाण ॥३७॥
निद्दिट्ठाणं चाओ सव्वेणं सव्वहा परिच्चाओ। सुहवावाराणुमया पोसहियस्सत्ति अपडिसिद्धा ॥३८॥
सव्वेणं पुण एयं गिण्हंतेणं अवस्सकायव्वं। सामइयं तह मुणिसंनिहिम्मि पाएण ठायव्वं ॥३९॥
तह अइयारविमुक्कं पालेयव्वं इमं पयत्तेणं। ते अइयारा एए पन्नत्ता पोसहे पंच ॥४०॥
तद्यथा;—
अप्पडिदुप्पडिलेहियअपमज्जियदुपमज्जियाण सया। सव्वाण सिज्जफलगाण गहणओ मोयणे वावि ॥
तह मुत्तुच्चाराईण करणओ थंडिलम्मि एमेव। तह पोसहस्स सम्मं अपालणेणं अईयारा ॥४२॥
इय सोउं सिट्ठिसुया सव्वे गिण्हंति सावयवयाइं। पवरो पुण पडिवज्जइ सदंसणं अणमणं विहिणा ॥

---

ततस्तेऽपि हि सविशेषं नत्वा पृच्छन्ति सूरिपार्श्वे। प्रभो! पौषधशब्दार्थं कथयत, सूरिरपि ततः कथयति ॥
पौषधशब्दो रूढ्याऽत्र पर्वानुवाचको भणितः। अष्टमीप्रभृतीनि च तान्यत्र समये प्रसिद्धानि ॥३०॥
उपवसनं यच्च पुनस्तेषु स पौषधोपवास इति। भण्यते धर्मेण नरं पुष्णाति वा पौषधस्तेन ॥३१॥
आहारदेहसत्कारब्रह्मव्यापारभेदतः सोऽपि। चतुर्भेदो निर्दिष्टः सिद्धान्ते पूर्वसूरिभिः ॥३२॥
स देशसर्वभेदात्प्रत्येकमपि हि द्विधा तत्र देशे। निर्दिष्टवस्तुत्यागः सर्वाहाराणां सर्वस्मिन् ॥३३॥
भण्यते शरीरसत्कारपौषधो देशसर्वभेदेन। द्विविधस्तत्र च देशे निर्दिष्टानां परित्यागः ॥३४॥
स्नानोद्वर्तनवर्णकविलेपनप्रमुखविविधवस्तूनाम्। सर्वस्मिन्पुनः सर्वेषां त्यागो वस्तूनां निर्दिष्टः ॥३५॥
अथ ब्रह्मपौषधः स एतेन क्रमेण भण्यते द्विविधः। देशे दिनादिब्रह्म सर्वस्मिन्सर्वमहोरात्रम् ॥३६॥
व्यापाराः पुनः पचनगृहलेपनदलनखण्डनादिकाः। अशुभाः शुभाश्च द्विविधास्तत्र देशेऽशुभानाम् ॥३७॥
निर्दिष्टानां त्यागः सर्वस्मिन्सर्वथा परित्यागः। शुभव्यापारा अनुमताः पौषधिकस्याप्रतिषिद्धाः ॥३८॥
सर्वेण पुनरेतं गृह्णताऽवश्यकर्तव्यम्। सामायिकं तथा मुनिसंनिधौ प्रायेण स्थातव्यम् ॥३९॥
तथातिचारविमुक्तं पालयितव्यमिदं प्रयत्नेन। तेऽतिचारा एते प्रज्ञप्ताः पौषधे पञ्च ॥४०॥
अप्रतिलेखितदुष्प्रतिलेखिताप्रमार्जितदुष्प्रमार्जितानां सदा। सर्वेषां शय्याफलकानां ग्रहणतो मोचने वापि ॥४१॥
तथा मूत्रोच्चारादीनां करणतः स्थण्डिल एवमेव। तथा पौषधस्य सम्यगपालनेनातीचाराः ॥४२॥

केवलनाणी निच्चं तप्पासठिओ करेइ अणुसट्ठिं। पुत्तावि तस्स उवरिं रयंति पुप्फोवयाराई ॥४४॥
जंपंति य तयभिमुहं कोडिं दव्वस्स तुज्झ पुन्नट्ठा। जिणभवणबिंबपोत्थयपभिईसुं विव्वइस्सामो ॥४५॥
तं अणुमन्नइ सोवि हु सत्तदिणंते तओ मरेऊण। अट्ठमकप्पम्मि सुरो संजाओ अइमहिड्ढीओ ॥४६॥
सेट्ठिसुयावि हु सव्वे सावयधम्मं कुणंति उवउत्ता। पव्वतिहीसु य गिण्हंति पोसहं तह चउब्भेयं ॥४७॥
इय वच्चंते काले अन्नया पोसहम्मि गहियम्मि। निद्दापमायवसओ पढमसुओ कहवि उत्तालो ॥४८॥
अप्पडिलेहियसेज्जं गिण्हंतो चेव करयले डसिओ। गुरुविसहरेण तत्तो मुक्को पाणेहिं नागेसु ॥४९॥
उववन्नो तत्तोच्चिय महाविदेहम्मि लद्धपव्वज्जो। परिमुक्ककम्मकवओ मोक्खसुहं पाविही अइरा ॥५०॥
पोसहठिओवि दुइओ धणियं निद्धंधसो तहा अलसो। दुप्पडिलेहियसिज्जं समारुहंतो य चरणम्मि ॥
अह कइयावि हु दट्ठो अहिमुत्तुब्भडविंछुएण तओ। अइनिविडपीडिओ सो मरिउं भवणाहिवो जाओ ॥
तइओवि पोसहठिओ सरीरचिंताए बाहिओ बाढं। अपमज्जियथंडिल्ले रयणीए निसीहसमयम्मि ॥५३॥
पासवणं कुणमाणो दट्ठो गुज्झम्मि भूमिफोडीए। मरिऊणं तो सोवि हु जोइसियसुरेसु उववन्नो ॥५४॥
तुरिओवि पोसहठिओ मंदग्गी उयरवियणाविहुरो। असहो सहसावि तओ दुपमज्जियथंडिले झुसिरे ॥
उच्चारं कुणमाणो अपाणदेसम्मि गरुयगरडाए। दट्ठो पीडाए मओ तत्तो सो वंतरो जाओ ॥५६॥
तह गहियपोसहेणवि विहिओ पंचमसुएण पंचमओ। अइआरो; तो सोवि हु छुहिओ चिंतओ एवं ॥

---

इति श्रुत्वा श्रेष्ठिसुताः सर्वे गृह्णन्ति श्रावकव्रतानि। प्लवग. पुनः प्रतिपद्यते सद्दर्शनमनशनं विधिना ॥
केवलज्ञानी नित्यं तत्पार्श्वस्थितः करोत्यनुशास्तिम्। पुत्रा अपि तस्योपरि रचयन्ति पुष्पोपचारादि ॥४४॥
जल्पन्ति च तदभिमुखं कोटिं द्रव्यस्य तव पुण्यार्थम्। जिनभवनबिम्बपुस्तकप्रभृतिषु व्ययिष्यामहे ॥४५॥
तदनुमन्यते सोऽपि हि सप्तदिनान्ते ततो मृत्वा। अष्टमकल्पे सुरः संजातोऽतिमहर्द्धिकः ॥४६॥
श्रेष्ठिसुता अपि हि सर्वे श्रावकधर्मं कुर्वन्त्युपयुक्ताः। पर्वतिथिषु च गृह्णन्ति पौषधं तथा चतुर्भेदम् ॥४७॥
इति व्रजति कालेऽन्यदा पौषधे गृहीते। निद्राप्रमादवशतः प्रथमसुतः कथमप्युत्तालः ॥४८॥
अप्रतिलेखितशय्यां गृह्णन्नेव करतले दष्टः। गुरुविषधरेण ततो मुक्तः प्राणैर्नागेषु ॥४९॥
उपपन्नस्तत एव महाविदेहे लब्धप्रव्रज्यः। परिमुक्तकर्मकवचो मोक्षसुखं प्राप्स्यत्यचिरात् ॥५०॥
पौषधस्थितोऽपि द्वितीयो गाढं निष्ठुरस्तथाऽलसः। दुष्प्रतिलेखितशय्यां समारोहंश्च चरणे ॥५१॥
अथ कदापि हि दष्टोऽहिमुक्तोद्भटवृश्चिकेन ततः। अतिनिविडपीडितः स मृत्वा भवनाधिपो जातः ॥५२॥
तृतीयोऽपि पौषधस्थितः शरीरचिन्तया बाधितो बाढम्। अप्रमार्जितस्थण्डिले रजन्यां निशीथसमये ॥५३॥
प्रस्रवणं कुर्वन्दष्टो गुह्ये भूमिस्फोटया। मृत्वा ततः सोऽपि हि ज्योतिष्कसुरेषूपपन्नः ॥५४॥
तुर्योऽपि पौषधस्थितो मन्दाग्निरुदरवेदनाविधुरः। असहः सहसापि ततो दुष्प्रमार्जितस्थण्डिलेऽभ्युषिते ॥५५॥
उच्चारं कुर्वन्नपानदेशे गुरुगर्दभेन। दष्टः पीडया मृतस्ततः स व्यन्तरो जातः ॥५६॥
तथा गृहीतपौषधेनापि विहितः पञ्चमसुतेन पञ्चमः। अतिचारः, ततः सोऽपि हि क्षुधितश्चिन्तयत्येवम् ॥५७॥

जइ बहुवंजणपक्कन्नपेसलं रसवइं करावेउं। भुंजिस्सामि पहाए एवमाई विचिंततो ॥५८॥
नवघणनिवडियदुस्सहविज्जुपहाराहओ मरेऊणं। नागेसुं उववन्नो तइयभवे पाविही मोक्खं ॥५९॥
इय जाणिऊण भव्वा! कलंकमुक्कं सया वयं धरह। अन्नह तुब्भेहिं भवे भमियव्वं भूरिकालंपि ॥६०॥
सुविसुद्धवयाइं महप्फलाइं भंगे य कडुविवागाइं। वरमग्गहणं चिय ताण होज्ज मा पच्छओ भंगो ॥६१॥
वरमग्गिम्मि पवेसो वरं विसुद्धेण कम्मुणा मरणं। मा गहियव्वयभंसो मा जीयं खलियसीलस्स ॥६२॥
तथा,
गच्छंतेण ठिएणं निच्चं किच्चाइं तह कुणंतेण। मणवइकाएसु सया उवओगो नेय मोत्तव्वो ॥६३॥
जह जह वयपरिणामो वड्ढइ जह नेय हुंति अइयारा। जह य विसुद्धी जायइ विरईए तह विहेयव्वं ॥६४॥
धन्ना हु साहुणोचिय विसिट्ठवयपालणुज्जयमई य। अवि ते चयंति जीयं करंति पावं न ईसिंपि ॥
परिचत्ततणुविहूसा विसयविरत्ता विमुक्कवावारा। तवसंजमकयचित्ता गमंति कालं निरासंसा ॥६६॥
इय चउरंगसमग्गं सम्मं जो पोसहं विगयदोसं। पालेइ पवलघणकम्मकयवरं सो लहुं डहइ ॥६७॥
धन्ना घरवावारं दुहवारं पडिहरित्तु कयपुन्ना। पुन्नतिहीसुवि कुव्वंति पोसहं दोसहं सुद्धं ॥६८॥

॥ इति पौषधव्रतातिचारविपाके वैश्रवणपुत्राणां कथानकं समाप्तम् ॥

---

यथा बहुव्यञ्जनपक्वान्नपेशलां रसवतीं कारयित्वा। भोक्ष्ये प्रभाते एवमादि विचिन्तयन् ॥५८॥
नवघननिपतितदुस्सहविद्युत्प्रहाराहतो मृत्वा। नागेषूपपन्नस्तृतीयभवे प्राप्स्यति मोक्षम् ॥५९॥
इति ज्ञात्वा भव्याः! कलङ्कमुक्तं सदा व्रतं धरत। अन्यथा युष्माभिर्भवे भ्रमितव्यं भूरिकालमपि ॥६०॥
सुविशुद्धव्रतानि महाफलानि भङ्गे च कटुविपाकानि। वरमग्रहणमेव तेषां भवेन्मा पश्चाद्भङ्गः ॥६१॥
वरमग्नौ प्रवेशो वरं विशुद्धेन कर्मणा मरणम्। मा गृहीतव्रतभ्रंशो मा जीवितं स्खलितशीलस्य ॥६२॥
गच्छता स्थितेन नित्यं कृत्यानि तथा कुर्वता। मनोवचःकायेषु सदोपयोगो नैव मोक्तव्यः ॥६३॥
यथा यथा व्रतपरिणामो वर्धते यथा नैव भवन्त्यतिचाराः। यथा च विशुद्धिर्जायते विरतेस्तथा विधातव्यम् ॥
धन्याः खलु साधव एव विशिष्टव्रतपालनोद्यतमतयश्च। अपि ते त्यजन्ति जीवितं कुर्वन्ति पापं नेषदपि ॥
परित्यक्ततनुविभूषा विषयविरक्ता विमुक्तव्यापाराः। तपःसंयमकृतचित्ता गमयन्ति कालं निराशंसाः ॥६६॥
इति चतुरङ्गसमग्रं सम्यग् यः पौषधं विगतदोषम्। पालयति प्रबलघनकर्मतृणोत्करं स लघु दहति ॥६७॥
धन्या गृहव्यापारं दुःखवारं परिहृत्य कृतपुण्याः। पुण्यतिथिष्वपि कुर्वन्ति पौषधं दोषघ्नं शुद्धम् ॥६८॥

सद्धासुद्ध नायागय च तह कप्पणिज्जमसणाई । दिज्जा गिही मुणीणं काले पत्ताण पत्ताण ॥१॥
उल्लसियबहलपुलओ दाण साहूण देइ जो सुद्ध । सो सतिमइव्व लहु पावइ सुरसोक्खसपत्ति ॥२॥
तथाहि ;–
सुरमज्जणकयसोह सुवन्नकमलालिरायहसड्ढं । माणससरव सुपय नामेण विलासपुरनयर ॥३॥
तत्यत्थि सत्थसत्थोहकयसमो पडिउव्व, सुपयडो । रिउतिमिरहरणसूरो सूरो नामेण नरनाहो ॥४॥
तस्सत्थि पिया भज्जा सज्जा सयलेसु धम्मकज्जेसु । नामेण विलासवई वइतणुचित्तेहिं पइभत्ता ॥५॥
तह तत्थ अत्थि सिट्ठी निरु धम्मिड्ढी विसिट्ठआयारो । सव्वगुणाणाहारो साहारो नाम सुपसिद्धो ॥
तप्पणइणी सुनयणा विमला नामेण सोमसमवयणा । ताण च सुया जाया संतिमई नाम सीलवई ॥७॥
रूवं सईए सील सईण सुंदेरिम च अमरीण । गहिऊण जा निउण मन्ने विहिणा विणिम्मविया ॥८॥
मा ससारम्मि इमा निवडउ अइनिब्भर मइ पसत्ता । बालत्तेवि हु चत्ता पइणा विसयाण चाएण ॥९॥
अह अन्नया य तीए दिट्ठो कुसुमागरम्मि उज्जाणे । वहुमुणिजणपरियरिओ उवसमसिरिसगओ सुगओ ॥
सोहग्गनिही गुणरयणसायरो वयणनिज्जियछणिंदू । बहुविबुहवदणिज्जो कलिकालेण अकलणिज्जो ॥
वेल्लहलबाहुजुयलो सारयससिसोमयासमाइन्नो । पीऊससुहयवयणो जियमयणो कमलदलनयणो ॥१२॥
सिरिअभयदेवसूरी अपुव्वसूरो सयावि उदइल्लो । सतावहरो सुथिरो बहुबुहसंगो असत्तासो ॥१३॥
त वदिऊण तीए तस्स समीवे निसामिओ धम्मो । जइसावयमेएणं गहिओ य गिहीण सद्धम्मो ॥१४॥

---

श्रद्धाशुद्ध न्यायागत च तथा कल्पनीयमशनादि । दद्याद् गृही मुनिभ्य काले प्राप्तेभ्य पात्रेभ्य ॥१॥
उल्लसितबहलपुलको दान साधुभ्या ददाति य शुद्धम् । स शान्तिमतीव लघु प्राप्नोति सुरसौख्यसपत्तिम् ॥
सुरममाणजन (सुरमज्जन) कृतशोभ सुवर्णकमलालिराजहसाढ्यम् ।
मानससर इव सुमज (पयस्क) नाम्ना विलासपुरनगरम् ॥३॥
तत्रास्ति शस्तश(शा)स्त्रौघकृतश्रम पण्डित इव, सुप्रचण्ड । रिपुतिमिरहरणसूर शूरो नाम्ना नरनाथ ॥
तस्यास्ति प्रिया भार्या सज्जा सकलेषु धर्मकार्येषु । नाम्ना विलासवती वचस्तनुचित्तै पतिभक्ता ॥५॥
तथा तत्रास्ति श्रेष्ठी निश्चित धर्मर्द्धिर्विशिष्टाचार । सर्वगुणानामाधार साधारो नाम सुप्रसिद्ध ॥६॥
तत्प्रणयिनी सुनयना विमला नाम्ना सोमसमवदना । तयोश्च सुता जाता शान्तिमती नाम शीलवती ॥७॥
रूप रत्या शील शचीना सौन्दर्य चामरीणाम् । गृहीत्वा या निपुण मन्ये विधिना निर्मिता ॥८॥
मा ससार इय निपतत्वतिनिर्भर मयि प्रसक्ता । बालत्वेऽपि हि त्यक्ता पत्या विषयाणा त्यागेन ॥९॥
अथान्यदा च तया दृष्ट कुसुमाकर उद्यान । बहुमुनिजनपरिकरित उपशमश्रीसगत सुगत ॥१०॥
सौभाग्यनिधिर्गुणरत्नसागरो वचननिर्जितक्षणेन्दु । बहुविबुधवन्दनीय कलिकालेनाकलनीय ॥११॥
कोमलबाहुयुगल शारदशशिसौम्यतासमाकीर्ण । पीयूषसुभगवचना जितमदन कमलदलनयन ॥१२॥
श्रीअभयदेवसूरिरपूर्वसूर सदाप्युदयी । सतापहर सुस्थिरो बहुबुधसङ्गोऽसत्रास ॥१३॥

मा ताय ! तत्थ वच्चसु वरिसंते नेंति मुणिवरा जम्हा । पायं उस्सग्गेणं बालगिलाणं पमोत्तूण ॥२९॥
साहूण ताण मज्झे न कोवि एयारिसो मया दिट्ठो । सव्वेवि महासत्ता तवकम्मे पयडिउच्छाहा ॥३०॥
किञ्च ।
धीराण कायराणं कसवट्टो संकडे समावडिए । नियमपरिपालणेणं, सुत्थावत्थाए सव्वोवि ॥३१॥
पालइ अभिग्गहं, हुज्ज नाम वा तत्थ ताय ! तणुपीडा ? । इय अवसरो न लब्भइ पुन्नेहिं विणा तवस्सावि ॥
किञ्च ।
जीविउ कासु न वल्लहउ धणु पुण कासु न इट्ठु । दोन्निवि अवसरवडियाइं तिणसमु गणइ विसिट्ठु ॥
ता ताय! अवसरागयमरणंपि महूसवो मह मुणेहि । जत्थ व तत्थ व समए मरियव्वं ताव नियमेण ॥३४॥
तुज्झ पसाएण मए दिन्नं दाणं मुणीण चिरकालं । सीलं सुनिम्मलं चिय चिरमवि परिपालियं तह य ॥
मुत्तावलिमाईयं तह तवकम्मपि विहिपुरस्सरयं । विहियं जहसत्तीए विभाविया भावणाओवि ॥३६॥
साहम्मियवच्छल्ले छलिया न कयावि तहय निच्छउमं । तित्थयरबिंबपूया पवत्तिया नियसत्तीए ॥३७॥
इय सुगहियपत्थयणा परलोयं पइ मरामि जइ ताय! । तो किं मज्झ अणिट्ठं होही ता कुणसु मा खेयं ॥
इय पभणंता सहसा खामियनिस्सेससत्तसंघाया । पच्चक्खियआहारा समाहिमरणेण मरिऊण ॥३९॥
माहिंदे उववन्ना देवत्तेणं महिड्ढियसुरेसु । तत्तो य चुया लहिही तइयभवे सिवसुहं नियमा ॥४०॥

॥ इति चतुर्थशिक्षाव्रतेऽतिथिसंविभागे शान्तिमतीकथा समाप्ता ॥

---

मा तात ! तत्र व्रज वर्षति नायान्ति मुनिवरा यस्मात् । प्राय उत्सर्गेण बालग्लान प्रमुच्य ॥२९॥
साधूनां तेषां मध्ये न काप्येतादृशो मया दृष्टः । सर्वेऽपि महासत्त्वास्तपःकर्मणि प्रकटितोत्साहाः ॥३०॥
धीराणां कातराणां कषपट्टः सङ्कटे समापतिते । नियमपरिपालनेन, सुस्थावस्थाया सर्वोऽपि ॥३१॥
पालयत्यभिग्रहं, भवेन्नाम का तत्र तात ! तनुपीडा ? । इत्यवसरो न लभ्यते पुण्येन विना तपसोऽपि ॥३२॥
जीवितं कस्य न वल्लभं धनं पुनः कस्य नेष्टम् । द्वे अपि अवसरपतिते तृणसमे गणयति विशिष्टः ॥३३॥
तस्मात्तात ! अवसरागतमरणमपि महोत्सवं मम जानीहि । यत्र वा तत्र वा समये मर्तव्यं तावन्नियमेन ॥३४॥
तव प्रसादेन मया दत्तं दानं मुनिभ्यश्चिरकालम् । शीलं सुनिर्मलमेव चिरमपि परिपालितं तथा च ॥३५॥
मुक्तावल्यादिकं तथा तपःकर्मापि विधिपुरस्सरम् । विहितं यथाशक्ति विभाविता भावना अपि ॥३६॥
साधर्मिकवात्सल्ये छलिता न कदापि तथा च निश्छद्म । तीर्थकरबिम्बपूजा प्रवर्तिता निजशक्त्या ॥३७॥
इति सुगृहीतपथ्यदना परलोकं प्रति म्रिये यदि तात ! । ततः किं ममानिष्टं भविष्यति तस्मात्कुरु मा खेदम् ॥
इति प्रभणन्ती सहसा क्षमितनिःशेषसत्त्वसंघाता । प्रत्याख्याताहारा समाधिमरणेन मृत्वा ॥३९॥
माहेन्द्रे उपपन्ना देवत्वेन महर्द्धिसुरेषु । ततश्च च्युता लप्स्यते तृतीयभवे शिवसुखं नियमात् ॥४०॥

जो कयविभागनियमो ओयणमाई ठवेइ सचित्ते । सो चित्तदुट्ठयाए लच्छिव्व लहिज्ज छलभावं ॥१॥
तथाहि;—
सिरिसंकेयट्ठाणं पुहईठाणंति अत्थि गुरुनयरं । तत्थ निवो बलसारो सिट्ठीवि धणंजओ तह य ॥२॥
सिट्ठिस्स लच्छिनामा भज्जा लच्छिव्व विण्हुणो इट्ठा । किंतु अवच्चाभावो महल्लसल्लं मणे तीए ॥३॥
सो कोवि नत्थि जक्खाइवंतरो जस्स इच्छियं नेय । ओयाइयं तहावि हु न पुत्तमुहदंसणं जायं ॥४॥
नेमित्तियावि बहुया उवयरिया बहुधणेण भत्तीए । बद्धाओ मूलियाओ ण्हवणाइयाइं विहियाइं ॥५॥
तहवि न सुयसंपत्ती जाया तीए वणिस्स गहिणीए । अह अन्नया य बाहिं लोयं दट्ठूण वचंतं ॥६॥
पुट्ठा तीए कावि हु सुसाविया कत्थ वचए लोओ ? । सा भणइ दिव्वनाणी समोसढो चिट्ठए बाहिं ॥७॥
तव्वंदणत्थमेसो लोओ वच्चेइ सावि तो भणइ । गच्छामि अहंपि य सहि ! जइ सो मह कहइ सुयजम्मं ॥
सा भणइ सहि ! न गम्मइ इय बुद्धीए मुणीण पासम्मि । एमेव ताण भत्तीए सिज्झए चिंतियं सव्वं ॥
तो रहवरमारुहिउं चलिया सा सावियाए सह तत्थ । तीए कहिएण विहिणा वंदवि धरणीए उवविट्ठा ॥
सम्मत्ताई सव्वं सावयधम्मं कहेइ से नाणी । तीएवि पसिणियं पुण विसेसओ कहइ अतिहिवयं ॥११॥
गिहिणो गिहे पसत्थे भोयणकाले उवट्ठिए जो उ । अकयअकारियपिंडाइसंगहं कुणइ सो अतिही ॥१२॥
तस्स सिवसोक्खहेउं नायविढत्तं तु होइ जं दव्वं । तं देई भत्तीए इय भावंतो मणे सड्ढो ॥१३॥

धन्नो अहं जस्स इमम्मि काले, पत्तो गिहे एस मुणी महप्पा ।
पसत्थभावेण विसुद्धदव्वे, दिन्नम्मि एयस्स महामुणिस्स ॥१४॥

---

यः कृतविभागनियम ओदनादि स्थापयति सचित्ते । स चित्तदुष्टतया लक्ष्मीरिव लभेत च्छलभावम् ॥१॥
श्रीसंकेतस्थानं पृथिवीस्थानमित्यस्ति गुरुनगरम् । तत्र नृपो बलसारः श्रेष्ठ्यपि धनञ्जयस्तथा च ॥२॥
श्रेष्ठिनो लक्ष्मीनामा भार्या लक्ष्मीरिव विष्णोरिष्टा । किन्त्वपत्याभावो महाशल्यं मनसि तस्याः ॥३॥
स कोऽपि नास्ति यक्षादिव्यन्तरो यस्येप्सितं नैव । उपयाचितं तथापि हि न पुत्रमुखदर्शनं जातम् ॥४॥
नैमित्तिका अपि बहव उपचरिता बहुधनेन भक्त्या । बद्धा मूलिकाः स्नपनादिकानि विहितानि ॥५॥
तथापि न सुतसंप्राप्तिर्जाता तस्या वणिजो गृहिण्याः । अथान्यदा च बहिर्लोकं दृष्ट्वा व्रजन्तम् ॥६॥
पृष्टा तया कापि हि सुश्राविका कुत्र व्रजति लोकः ? । सा भणति दिव्यज्ञानी समवसृतस्तिष्ठति बहिः ॥७॥
तद्वन्दनार्थमेष लोको व्रजति सापि ततो भणति । गच्छाम्यहमपि च सखि ! यदि स मम कथयति सुतजन्म ॥
सा भणति सखि ! न गम्यत इति बुद्ध्या मुनीनां पार्श्वे । एवमेव तेषां भक्त्या सिध्यति चिन्तितं सर्वम् ॥
ततो रथवरमारुह्य चलिता सा श्राविकया सह तत्र । तया कथितेन विधिना वन्दित्वा धरण्यामुपविष्टा ॥
सम्यक्त्वादि सर्वं श्रावकधर्मं कथयति तस्यै ज्ञानी । तयापि प्रश्नितं पुनर्विशेषतः कथयत्यतिथिव्रतम् ॥११॥
गृहिणो गृहे प्रशस्ते भोजनकाल उपस्थिते यस्तु । अकृताकारितपिण्डादिसंग्रहं करोति सोऽतिथिः ॥१२॥
तस्मै शिवसौख्यहेतोर्न्यायार्जितं तु भवति यद् द्रव्यम् । तद्ददाति भक्त्येति भावयन्मनसि श्राद्धः ॥१३॥

तिन्नो मए जम्मजराजलाउलो, कुग्गाहगाहाइयजंतुसंकुलो ।
दुक्खोहउत्तुंगतरंगसंगओ, संसारसिंधूवि अणोरपारओ ॥१५॥
जं माहणाखत्तियवेससुद्दा, अप्पप्पणो वित्तियणिंदियाए ।
दव्वं उवज्जेवि वयंति पत्ते, नायागयं तं तु भणंति बुद्धा ॥१६॥
तं अक्खयं तं च विवागसुंदरं, तं चेव दिन्नं हवई अणंतयं ।
जं एसणीयं तह फासुयं च, वन्निज्जए तं अतिहीण दाणं ॥१७॥

एयं च भावणाए जह गहियं अतिहिसंविभागवयं । अइयारेहिं सुविसुद्धं पालेयव्वं तहच्चेय ॥१८॥
अइयारा पुण सचित्तदव्वनिक्खिवणपिहाणरूवाओ । तहा कालाइक्कमणे परववएस पओसे य ॥१९॥
तत्थ य सचित्तेसु दव्वेसु सुद्धयंपि अन्नं जं । निक्खिवइ गिही तं इह वुच्चइ सचित्तनिक्खिवणं ॥२०॥
जं पुण सच्चित्तेणं कुणइ पिहाणाइं देयदव्वस्स । तं सचित्तपिहाणं दुइयइयारं भणंति बुहा ॥२१॥
जं कुणइ भोयणविहिं पुव्वमइक्कमिउं साहुणो वेलं । कालाइक्कमदाणं तं भणियं वीयराएहिं ॥२२॥
जं पुण परकीयमिणं दव्वं नियंयपि साहइ मुणीण । लुद्धो सड्ढो, वुच्चइ तं परववएसदाणंपि ॥२३॥
जं पुण मणिणो दट्ठुं कुप्पइ अह देइ अवरईसाए । कोहाइकलुसियमई मच्छरदाणं तमिह भणियं ॥२४॥
इय अइयारविसुद्धं जो पालइ अतिहिसंविभागवयं । सो इह परलोएवि य पावइ सुमहल्लकल्लाणं ॥२५॥

---

धन्योऽहं यस्यास्मिन् काले प्राप्तो गृह एव मुनिर्महात्मा ।
प्रशस्तभावेन विशुद्धद्रव्ये दत्त एतस्मै महामुनये ॥१४॥
तीर्णो मया जन्मजराजलाकुल कुग्राहग्राहादिकजन्तुसकुल ।
दु खौघोत्तुङ्गतरङ्गसगत ससारसिन्धुरप्यनादिपार ॥१५॥
यद् ब्राह्मणक्षत्रियवैश्यशूद्रा आत्मात्मनो वृत्त्याऽनिन्दितया ।
द्रव्यमुपार्ज्य व्ययन्ते पात्रे न्यायागत तत्तु भणन्ति बुद्धा· ॥१६॥
तदक्षय तच्च विपाकसुन्दरं तदेव दत्त भवत्यनन्तम् ।
यदेषणीय तथा प्रासुक च वर्ण्यते तदतिथीना दानम् ॥१७॥

एतच्च भावनया यथा गृहीतमतिथिसंविभागव्रतम् । अतिचारै· सुविशुद्धं पालयितव्यं तथैव ॥१८॥
अतिचारा· पुन सचित्तद्रव्यनिक्षेपणपिधानरूपौ तु । तथा कालातिक्रमणे परव्यपदेश प्रद्वेषश्च ॥१९॥
तत्र च सचित्तेषु द्रव्येषु शुद्धमप्यन्नं यत् । निक्षिपति गृही तदिहोच्यते सचित्तनिक्षेपणम् ॥२०॥
यत्पुन सचित्तेन करोति पिधानादि देयद्रव्यस्य । तत् सचित्तपिधान द्वितीयातिचार भणन्ति बुधा ॥२१॥
यत्करोति भोजनविधिं पूर्वमतिक्रम्य साधोर्वेलाम् । कालातिक्रमदानं तद् भणित वीतरागै ॥२२॥
यत्पुनः परकीयमिदं द्रव्यं निजमपि कथयति मुनिभ्य· । लुब्ध श्राद्ध , उच्यते तत्परव्यपदेशदानमपि ॥
यत्पुनर्मुनीन् दृष्ट्वा कुप्यत्यथ ददात्यपरेर्ष्यया । क्रोधादिकलुषितमतिर्मत्सरदान तदिह भणितम् ॥२४॥

इच्चाइ निसुणिऊणं समुट्ठियाए समग्गपरिसाए। अतिहीण संविभागे लच्छीएभिग्गहो गहिओ ॥२६॥
भणिओ केवलनाणी मज्झ गिहे पइदिणंपि नियमुणिणो। पट्ठवियव्वा पहुणा भिक्खट्ठाणुग्गहं काउं ॥
इय भणिउं सा पत्ता नियगेहे पालए य वयमेयं। पुत्तं समीहमाणी न उणो धम्माहिलासेण ॥२८॥
अह पुव्वकम्मवसओ पुत्तुप्पत्ती न से समुप्पन्ना। सिढिलियदाणपइन्ना तत्तो लोयाणुवित्तीए ॥२९॥
वियरइ किंचिवि दाणं वियलियभत्ती जईण निच्चंपि। अह अन्नया य कम्मिवि महूसवे रसवइं पउरं ॥
निप्फाइऊण तीए सयलजणो मेलिओ नियगिहम्मि। भोयणहेउं तत्तो इंते दट्ठूण मुणिवसहे ॥३१॥
मुग्गपिंडियाए उवरिं ठवइ सालिदालियालीओ। ताणुवरिं पक्कन्नं तो पत्ता साहुणो तत्थ ॥३२॥
अब्भुट्ठेउं वंदइ पडिलाभत्थं च उट्ठए तत्तो। गहिऊणं सालिकूरं तो सा भणिया मुणिवरेहिं ॥३३॥
नो कप्पइ अम्हाणं सच्चित्तनिहित्तयं इमं जेण। तो लग्गा निंदेउं अप्पाणं सुणइ जह लोओ ॥३४॥
हा हा अहं अहन्ना जमिमं साहूण नेय उवयरियं। फासुयमेसणियंपि हु कुविया तो भणइ नियचेडिं ॥
हा दुट्ठु तए विहियं भग्गनिरासे! इमं कुणंतीए। पक्कन्नाइविसिट्ठं सव्वं सच्चित्तनिक्खिवणा ॥३६॥
तो अमणुन्नं दाउं तेसिं समुवट्ठिया मणे तुट्ठा। भणइ अहो! मह हत्था एयं देंतीए न वहंति ॥३७॥
तो मुणिभत्ताए देवयाए सिक्खाकए करो तीए। सकरोडिओ सभत्तो थंभिवि पत्तम्मि अवयरिउं ॥३८॥
देवी जंपइ दुट्ठे मायाविणि कूडकारिणि अणज्जे!। चारित्तरयणनिहिणोवि मुणिवरे इय पवंचेसि ॥३९॥

---

इत्यतिचारविशुद्धं यः पालयत्यतिथिसंविभागव्रतम्। स इह परलोकेऽपि च प्राप्नोति सुमहाकल्याणम् ॥
इत्यादि श्रुत्वा समुत्थितायां समग्रपर्षदि। अतिथीनां संविभागे लक्ष्म्याऽभिग्रहो गृहीतः ॥२६॥
भणितः केवलज्ञानी मम गृहे प्रतिदिनमपि निजमुनयः। प्रस्थापयितव्याः प्रभुणा भिक्षार्थमनुग्रहं कृत्वा ॥
इति भणित्वा सा प्राप्ता निजगेहे पालयति च व्रतमेतत्। पुत्रं समीहमाना न पुनर्धर्माभिलाषेण ॥२८॥
अथ पूर्वकर्मवशतः पुत्रोत्पत्तिर्न तस्याः समुत्पन्ना। शिथिलितदानप्रतिज्ञा ततो लोकानुवृत्त्या ॥२९॥
वितरति किञ्चिदपि दानं विगलितभक्तिर्यतिभ्यो नित्यमपि। अथान्यदा च कस्मिन्नपि महोत्सवे रसवतीं प्रचुराम्॥
निष्पाद्य तया सकलजनो मेलितो निजगृहे। भोजनहेतोस्तत आयतो दृष्ट्वा मुनिवृषभान् ॥३१॥
मुद्गपिण्डिकाया उपरि स्थापयति सा शालिसूपस्थालीः। तासामुपरि पक्वान्नं ततः प्राप्ताः साधवस्तत्र ॥
अभ्युत्थाय वन्दते प्रतिलाभार्थं चोत्तिष्ठति ततः। गृहीत्वा शालिकूरं ततः सा भणिता मुनिवरैः ॥३३॥
नो कल्पतेऽस्माकं सचित्तनिहितमिदं येन। ततो लग्ना निन्दितुमात्मानं शृणोति यथा लोकः ॥३४॥
हाहा अहमधन्या यदिदं साधुभ्यो नैवोपचरितम्। प्रासुकमेषणीयमपि हि कुपिता ततो भणति निजचेटीम्॥
हा दुष्टु त्वया विहितं भाग्यनिराशे! इदं कुर्वत्या। पक्वान्नादिविशिष्टं सर्वं सचित्तनिक्षेपणात् ॥३६॥
ततोऽमनोज्ञं दातुं तेभ्यः समुपस्थिता मनसि तुष्टा। भणत्यहो! मम हस्तावेतद्ददत्या न वहतः ॥३७॥
ततो मुनिभक्तया देवतया शिक्षाकृते करस्तस्याः। सकरोटिकः समक्तः स्तम्भयित्वा पात्रेऽवतीर्य ॥३८॥

---

१ ख, °रोडिओ।

इय निंदिवि देवीए भणिया लच्छी हले ! न हणिया सि। जीवदयच्चिय धम्मो इय भणिवि अदंसणं पत्ता॥
धिक्कारिया य लच्छी सयणेहिं तओ य थोवकालेण। उत्थंभिया य तीए अप्पडिकंता य मरिऊण ॥४१॥
पणपन्नियाण मज्झे उववन्ना सा तओ भवे भमिउं। संपत्तबोहिलाभा लहिही सा मोक्खसोक्खंपि ॥४२॥
इय नाऊणं भव्वा ! अइयारविवज्जियं वयं चरह। इहरा इहलोएवि हु पाविस्सह तिक्खदुक्खाइं ॥४३॥

॥ इत्यतिथिसंविभागे प्रथमातिचारदृष्टान्तः ॥

---

देवी जल्पति दुष्टे मायाविनि कूटकारिणि अनार्ये। चारित्ररत्ननिधीनपि मुनिवरानिति प्रवञ्चयसे ॥३९॥
इति निन्दित्वा देव्या भणिता लक्ष्मीर्हले ! न हतासि। जीवदयैव धर्म इति भणित्वाऽदर्शनं प्राप्ता ॥४०॥
धिक्कारिता च लक्ष्मीः स्वजनैस्ततश्च स्तोककालेन। उत्तम्भिता च तयाऽप्रतिक्रान्ता च मृत्वा ॥४१॥
प्रणपर्णिकानां मध्य उपपन्ना सा ततो भवे भ्रमित्वा। संप्राप्तबोधिलाभा लप्स्यते सा मोक्षसौख्यमपि ॥४२॥
इति ज्ञात्वा भव्याः ! अतिचारविवर्जितं व्रतं चरत। इतरथेहलोकेऽपि हि प्राप्स्यथ तीक्ष्णदुःखानि ॥४३॥



सच्चित्तेणं पिहई देयं जोतिहिविभागकयनियमो । सो वंधइ घणकम्मं जह वद्धं विजयसिट्ठिणीए ॥१॥
तयाहि;—

पवरखमाहरकलियं वहुविज्जाहरसुरूववेयड्ढं । जणवयसयसंकिन्नं वित्थिन्नं भरहखित्तंव ॥२॥
भद्दिलपुरमत्थि पुरं अत्थियसमत्थो सुपत्थिवो पत्थो । तत्थासि तहा सुजसो सम्मद्दिट्ठी नयरसिट्ठी ॥३॥
तस्सासि पिया विजया विजयपडायव्व कामभवणस्स । जिणधम्मम्मि पमत्ता संसत्ता कुमयचारीसु ॥४॥
अह सुजसो उज्जाणे पाउसकालम्मि संठिया गुरुणो । समजलधिसूरिणो विमलनाणिणो वंदए गंतुं ॥
सुणइ य जिणिंदधम्मं पइदिवसं सूरिदेसणाहिट्ठो । भणइ य भज्जं गंतुं नमिउं सूरिं सुणसु धम्मं ॥६॥
सा भणइ अहं गच्छामि किंतु जइ ते न दिंति मह नियमे । सच्चित्तणंतयाणं तो सिट्ठी भणइ न कयाई ॥
ते दिंति वला नियमं दिसंति धम्मं सुणेत्तु तं भव्वा । जे जे नियमे मग्गंति ताण ते देंति जहजोग्गं ॥
इय धीरविउं नीया गुरूण पासम्मि सिट्ठिणा भज्जा । वंदेउं उवइट्ठा ताण पुरो धम्मसवणत्थं ॥९॥
सम्मत्ताइसावयवयाइं कहियाइं तीए तो भणियं । अतिहीण संविभागे मह नियमं देह पसिऊण ॥१०॥
तो तीए पुरो गुरुणा सवित्थरं साहिऊण अइयारे । दिन्नो नियमो अतिहिव्वयम्मि तह कहियमेयं च ॥
पोसहपारणयम्मि नियमा साहूण जं किर न दिन्नं । तं भुंजइ न हु सड्ढो तो सुद्धो पोसहो होइ ॥१२॥
सव्वारंभपउत्ता गिहिणो साहूण संविभागम्मि । निच्चं करेंति जुत्तं किं पुण उववासपारणए ? ॥१३॥
जो निच्चं चिय जइणो विसुद्धभावेण संविभागंति । भत्तेण मणुन्नेणं ते सुहिणो हुंति सव्वत्थ ॥१४॥

---

सचित्तेन पिदधाति देयं योऽतिथिविभागकृतनियमः । स बध्नाति घनकर्म यथा बद्धं विजयश्रेष्ठिन्या ॥१॥
प्रवरक्षमाधरकलितं वहुविद्याधरसुरूपवैदग्ध्य(ताढ्य)म् । जनपदशतसंकीर्णं विस्तीर्णं भरतक्षेत्रमिव ॥२॥
भद्दिलपुरमस्ति पुरमर्थिसमर्थः सुपार्थिवः पार्थः । तत्रासीत्तथा सुयशाः सम्यग्दृष्टिर्नगरश्रेष्ठी ॥३॥
तस्यासीत्प्रिया विजया विजयपताकेव काममवनस्य । जिनधर्मे प्रमत्ता संसक्ता कुमतचारिषु ॥४॥
अथ सुयशा उद्याने प्रावृट्काले संस्थितान् । शमजलधिसूरीन् विमलज्ञानान् वन्दते गत्वा ॥५॥
शृणोति च जिनेन्द्रधर्मं प्रतिदिवसं सूरिदेशनाहृष्टः । भणति च भार्यां गत्वा नत्वा सूरिं शृणु धर्मम् ॥६॥
सा भणत्यहं गच्छामि किन्तु यदि ते न ददति मम नियमान् । सचित्तानन्तानां ततः श्रेष्ठी भणति न कदाचित् ॥
ते ददति वलान्नियमं दिशन्ति धर्मं श्रुत्वा तं भव्याः । यान्यान्नियमान्मार्गयन्ति तेषां तान्ददति यथायोग्यम् ॥८॥
इति धीरयित्वा नीता गुरूणां पार्श्वे श्रेष्ठिना भार्या । वन्दित्वोपविष्टा तेषां पुरो धर्मश्रवणार्थम् ॥९॥
सम्यक्त्वादिश्रावकव्रतानि कथितानि तया ततो भणितम् । अतिथीनां संविभागे मम नियमं दत्त प्रसद्य ॥
ततस्तस्याः पुरो गुरुणा सविस्तरं कथयित्वातिचारान् । दत्तो नियमोऽतिथिव्रते तथा कथितमेतच्च ॥११॥
पौषधपारणे नियमात्साधुभ्यो यत्किल न दत्तम् । तद् भुङ्क्ते न हि श्राद्धस्ततः शुद्धः पौषधो भवेत् ॥१२॥
सर्वारम्भप्रवृत्ता गृहिणः साधूनां संविभागे । नित्यं कुर्वन्ति यत्नं किं पुनरुपवासपारणे ? ॥१३॥
यो नित्यमेव यतीन् विशुद्धभावेन संविभजन्ते । भक्तेन मनोज्ञेन ते सुखिनो भवन्ति सर्वत्र ॥१४॥

ते धन्ना धणवइणो जाण धणं निच्चमेव उवओगं । वच्चइ जिणभवणेसुं जईसु साहम्मिएसुं च ॥१५॥
जं नवि धणं धणीणं उवउज्जइ धम्मिएसु कज्जेसु । कज्जवसरिसं तं खलु बहुएणवि को गुणो तेण ?॥
धन्ना ते खलु पुरिसा दाणं दिंताण जाण सयकालं । वोलीणमाउयं सुविहियाण सुविसुद्धभत्तीए ॥१७॥
इय भावणाए सम्मं पक्खालित्ता मणोमल सव्वं । आराहए विसुद्धं सावयधम्मं सया सड्ढो ॥१८॥
इय निसुणिऊण संवेगपरवसा मा भणेइ मुणिरायं । मह गेहे निच्चंपि हु पेसेयव्वं मुणीण जुयं ॥१९॥
तो सूरी तयभिमुहं भणइ जहा वट्टमाणजोगेण । चरणेसु लग्गिऊणं सिट्ठी पभणेइ तं एवं ॥२०॥
एयं पमायबहुलं नित्थारह करिवि गरुयकारुन्नं । जम्हा नन्नोवाओ इमीए भवजलहितरणम्मि ॥२१॥
इच्चाइ जंपिऊणं सिट्ठी पत्तो सभज्जओ गेहे । पट्ठवियं मुणिजुयलं सिट्ठिगिहे सूरिणा समए ॥२२॥
तं इंतं सा दट्ठुं वंदइ भत्तीए सिट्ठिणा सहिया । चउविहआहारेणं पडिलाहइ सुद्धसद्धाए ॥२३॥
एवं निच्चंपि तओ सिट्ठी दावावए पउरदव्वं । तो सा चिंतइ एवं बहुव्वओ अम्हगेहम्मि ॥२४॥
नियमो मएवि गहिओ अतिहीणं निच्चमेव दाणम्मि । ता तह करेमि जह दोवि हुंति एवं विचिंतेउं ॥
बहुलीबहुलत्तणओ सालियपाईण थालियाणुवरिं । विज्जउरचिब्भिडेहिं कुणइ पिहाणाइं सव्वत्थ ॥२६॥
जह साहूण न कप्पइ, अह साहुसमागमम्मि तह चेव । पडिवत्तिं काऊणं समुट्ठए दाणमणुदाउं ॥२७॥
सालिप्पमुहं गहिउं मुणीहिं भणियं सचित्तपिहियमिणं । अम्हाण नो कप्पइ ता मा गिण्हेसु अम्हकए ॥
तो सा भणेइ हद्धी साहूण अकप्पियं इमं जायं । कम्मारियाइ कीइवि मज्झ अपुन्नेहिं इय विहियं॥२९॥

---

ते धन्या धनपतयो येषां धनं नित्यमेवोपयोगम् । व्रजति जिनभवनेषु यतिषु साधर्मिकेषु च ॥१५॥
यन्नैव धनं धनिनामुपयुज्यते धार्मिकेषु कार्येषु । तृणावकरसदृशं तत्खलु बहुनापि को गुणस्तेन ! ॥१६॥
धन्यास्ते खलु पुरुषा दानं ददतां येषां सदाकालम् । अतिक्रान्तमायुः सुविहितेभ्यः सुविशुद्धभक्त्या ॥१७॥
इति भावनया सम्यक् प्रक्षाल्य मनोमल सर्वम् । आराधयति विशुद्धं श्रावकधर्मं सदा श्राद्धः ॥१८॥
इति श्रुत्वा संवेगपरवशा सा भणति मुनिराजम् । मम गेहे नित्यमपि हि प्रेषयितव्यं मुन्योर्युगम् ॥१९॥
ततः सूरिस्तदभिमुखं भणति यथा वर्तमानयोगेन । चरणेषु लगित्वा श्रेष्ठी प्रभणति तमेवम् ॥२०॥
एतां प्रमादबहुलां निस्तारयत कृत्वा गुरुकारुण्यम् । यस्मान्नान्योपायोऽस्या भवजलधितरणे ॥२१॥
इत्यादि जल्पित्वा श्रेष्ठी प्राप्तः सभार्यो गेहे । प्रस्थापितं मुनियुगलं श्रेष्ठिगृहे सूरिणा समये ॥२२॥
तदायत् सा दृष्ट्वा वन्दते भक्त्या श्रेष्ठिना सहिता । चतुर्विधाहारेण प्रतिलम्भयति शुद्धश्रद्धया ॥२३॥
एवं नित्यमपि ततः श्रेष्ठी दापयति प्रचुरद्रव्यम् । ततः सा चिन्तयत्येवं बहुव्ययोऽस्मद्गेहे ॥२४॥
नियमो मयापि गृहीतोऽतिथीनां नित्यमेव दाने । तस्मात्तथा करोमि यथा द्वावपि भवत एवं विचिन्त्य ॥
मायाबहुलत्वतः शालिप्रभृतीनां स्थालीनामुपरि । बीजपूरचिर्भटैः करोति पिधानानि सर्वत्र ॥२६॥
यथा साधूनां न कल्पते, अथ साधुसमागमे तथैव । प्रतिपत्तिं कृत्वा समुत्तिष्ठति दानमनुदातुम् ॥२७॥
शालिप्रमुखं गृहीतुं मुनिभिर्भणितं सचित्तपिहितमिदम् । अस्माकं नो कल्पते तस्मान्मा गृहाणास्मत्कृते ॥२८॥

हा हा अहं अभग्गा जाया इच्चाइ जंपमाणी सा। अन्नंपि हु विहरावसु इय भणिया सेट्टिणा तत्तो ॥
वल्लचणगाइदव्वं दाऊणं मुणिवरे नमंसेउं। नियगेहाउ विसज्जइ अणुगम्मिवि कइवयपयाइं ॥३१॥
तह यट्टइ सचित्तं कयावि इंते मुणीसरे दट्ठुं। कइया करे करेई सनीरकरंपि एमेव ॥३२॥
जलियजलणस्स उवरिं धरेइ घयकूरथालियाईयं। इय एवं कुव्वंती साहूहिं कमेण सा नाया ॥३३॥
बहुकूडकवडकलिया एसा दाउं न इच्छए किंपि। उवरोहेणं सेट्ठिस्स तहवि ते जंति भिक्खट्ठा ॥३४॥
अह अन्नया मया सा वासियवमणेण पीडिया बाढं। पणपन्नियाण मज्झे उववन्ना वंतरसुरेसु ॥३५॥
तत्तो चुया य भमिही कइवि भवे तो विदेहवासम्मि। संपत्तचरणरिद्धी सिद्धिंपि हु पाविही कमसो ॥

॥ इत्यतिथिसंविभागे द्वितीयातिचारविपाके विजयादृष्टान्तः ॥

---

ततः सा भणति हा विक्साधूनामकल्प्यमिदं जातम्। कर्मचारिकया कयापि ममापुण्यैरिति विहितम् ॥२९॥
हा हा अहमभाग्या जातेत्यादि जल्पन्ती सा। अन्यदपि हि विहारयेति भणिता श्रेष्ठिना ततः ॥३०॥
वल्लचणकादिद्रव्यं दत्त्वा मुनिवरान्नमस्यित्वा। निजगेहाद् विसृजत्यनुगम्य कतिपयपदानि ॥३१॥
तथा वर्त्स्यति सचित्तं कदाप्यायतो मुनीश्वरान् दृष्ट्वा। कदा करे करोति सनीरपात्रमप्येवमेव ॥३२॥
ज्वलितज्वलनस्योपरि धराति घृतकूरस्थाल्यादिकम्। इत्येवं कुर्वती साधुभिः क्रमेण सा ज्ञाता ॥३३॥
बहुकूटकपटकलितैषा दातुं नेच्छति किमपि। उपरोधेन श्रेष्ठिनस्तथापि ते यान्ति भिक्षार्थम् ॥३४॥
अथान्यदा मृता सा वासितवमनेन पीडिता बाढम्। प्रणपर्णिकानां मध्य उपपन्ना व्यन्तरसुरेषु ॥३५॥
ततश्च्युता च भ्रमिष्यति कत्यपि भवांस्ततो विदेहवर्षे। संप्राप्तचरणर्द्धिः सिद्धिमपि हि प्राप्स्यति क्रमशः ॥

---

१ ग. °रवंपि।

कालाइक्कमदाणं दिंतोवि हु तप्फल न पावेइ । जह देवचंदसड्ढो सढचित्तो दाणकयनियमो ॥१॥
तथाहि;—
लच्छीमंदिरनामं नयरं इह अत्थिसुत्थियजणोहं । सप्पुरिसचरियचित्ताइं जत्थ भवणाइं दीसंति ॥२॥
तत्थ दरियारिमिगनाहदप्पदलणम्मि सरहसो सरहो । ससिकंतिकित्तिसुरसरिहिमायलो वज्जसारनिवो ॥
तह देवचंदनामा निवसइ वणिओ पभूयधणकलिओ । तब्भज्जा देवसिरी सिरीव हरिणो सयाणुगया ॥
अइकिविणो पगईए न देइ दाणं कयावि कस्सवि य । तहवि हु धम्महिलासी न विलासी जोव्वणत्थोवि ॥
अह चउनाणी सूरी समोसढो तत्थ बाहिरुज्जाणे । उज्जाणपालयाणं पासम्मि गओ तया सोवि ॥६॥
उग्गाहणियाहेउ तेवि हु सूरीण पायमूलम्मि । जिणधम्मं निसुणंता दिट्ठा तो सोवि तं सूरिं ॥७॥
वंदेउ उवविट्ठो निसुणइ धम्मं परेण विणएण । दाणतवसीलभावणमइयं मइमोहनिम्महणं ॥८॥
तथाहि;—

दाणसीलतवभावणसंसिउ धीरिहिं धम्मु चउव्विहु दंसिउ ।
उत्तरतिविहकरणअसमत्थहं दाणधम्मु परु जि जयइ गिहत्थह ॥९॥

आरंभनिपत्ताणं अकरिंताणं अकारविंताणं । धम्मट्ठा दायव्वं गिहीहिं साहूण जं भणियं ॥१०॥
संतं यज्झमणिच्चं जो ठाणे दाणपि नो दए । वराओ तुच्छओ एसो कह सीलं दुद्धरं धरे? ॥११॥
जम्हा धन्नाणं चिय नराण देयं च दाणसत्ती य । पत्तेण य सह जोगो जायइ चिरचिन्नपुन्नेहिं ॥१२॥
तथाहि;—

---

कालातिक्रमदान ददपि हि तत्फल न प्राप्नोति । यथा देवचन्द्रश्राद्ध शठचित्तो दानकृतनियम ॥१॥
लक्ष्मीमन्दिरनाम नगरमिहास्ति सुस्थितजनौघम् । सत्पुरुषचरितचित्राणि यत्र भवनानि दृश्यन्ते ॥२॥
तत्र दृप्तारिमृगनाथदर्पदलने सरभस शरभ । शशिकान्तिकीर्त्तिसुरसरिद्धिमाचलो वज्रसारनृप ॥३॥
तथा देवचन्द्रनामा निवसति वणिक् प्रभूतधनकलित । तद्भार्या देवश्री श्रीरिव हरे सदानुगता ॥४॥
अतिकृपण प्रकृत्या न ददाति दान कदापि कस्यापि च । तथापि हि धर्माभिलाषी न विलासी यौवनस्थोऽपि ॥
अथ चतुर्ज्ञान सूरि समवसृतस्तत्र बहिरुद्याने । उद्यानपालकाना पार्श्वे गतस्तदा सोऽपि ॥६॥
उद्ग्राहणिकाहेतोस्तेऽपि हि सूरीणा पादमूले । जिनधर्म शृण्वन्तो दृष्टास्तत सोऽपि त सूरिम् ॥७॥
वन्दित्वोपविष्ट शृणोति धर्म परेण विनयेन । दानतप शीलभावनामय मतिमोहनिर्मथनम् ॥८॥
दानशीलतपोभावनाशंसितो धीरैर्धर्मश्चतुर्विधो दर्शित ।
उत्तरत्रिविधकरणासमर्थाना दानधर्म परो जयति गृहस्थानाम् ॥९॥
आरम्भनिवृत्तेभ्योऽकुर्वद्भ्योऽकारयद्भ्य । धर्मार्थं दातव्यं गृहिभि साधुभ्यो यद्भणितम् ॥१०॥
सद् बाह्यमनित्य य स्थाने दानमपि नो दद्यात् । वराकस्तुच्छ एष कथ शीलं दुर्धरं धरेत् ? ॥११॥
यस्माद्धन्यानामेव नराणा देय च दानशक्तिश्च । पात्रेण च सह योगो जायते चिरचीर्णपुण्यै ॥१२॥

केवि नियजीवियंपि हु संदेहतुलाए ठाविऊण सया। लंघंति जलनिहिं नहु पावंति वराडियं तहवि॥
अन्ने कहमवि पावंति किंपि पुन्नेहिं तेवि किवणत्ता। पाणच्चएवि विचंति नियधणं नेय जं भणियं॥१४॥
चाइयणकरपरंपरपरियत्तणखेयवसपरिस्संता। अत्था किविणघरत्था सत्थावत्था सुयंतिव्व॥१५॥
आयरपवड्ढियावि हु सव्वपयत्तेण रक्खिया निचं। किविणाण धणसमिद्धी परकज्जट्ठा कुमारिव्व॥
अहव केसिंपि जायइ धणसंपत्तीवि दाणसत्तीवि। तहविकेसिंपि दुलहो सुपत्तसंगो हवइ जम्हा॥१७॥
सव्वारंभनियत्तं निम्मलचित्तं पवित्तचारित्तं। निक्कारणकरुणारसजुत्तं पत्तं जए विरलं॥१८॥
ता किं बहुणा इह जंपिएण जइ महह कहवि भवविरहं। सुत्तविहिणा सुपत्ते उवउंजह नियधणं धणिणो॥
यतः—

"पटुतरपवनवशाकुलितकुवलयदलतरलानि। जीवितयौवनयुवतिजनधनलवलाभसुखानि"॥

इय सुणिवि देवचंदेणभिग्गहो अतिहिसंविभागम्मि। गहिओ तो आहूया भिक्खट्ठा नियगिहे मुणिणो॥
समए तेवि हु पत्ता विसुद्धसिद्धन्तसंगहनिमित्तं। गिण्हंति तेण दिन्नं जहोचियं भणइ सो एवं॥२१॥
अज्ज सुभत्तं भुत्तं पागविही मज्झ अज्ज खलु सफला। जं गुरुभोयणसेसं भुंजिस्समहंति सो तयणु॥
अणुगमिऊणं मुणिणो भुंजइ य सयं मुणीण उव्वरियं। मुणिणोवि गुरुसयासे सव्वे एयं निवेयंति॥
भणिया जइणो गुरुणा एयस्स गिहे सयावि गंतव्वं। अवसरइ किविणसद्दो पावइ तह निज्जरं जेण॥
तो पइदियहं मुणिणो गच्छंति गिहम्मि तस्स भिक्खट्ठा। पयईए तस्स भज्जा उयारचित्ता तओ पउरं॥
देइ घयघोलमोयगसक्करदव्वाइं पइदिणं पायं। पिच्छइ य देवचंदो दिज्जंतं तं तओ भणइ॥२६॥

---

केऽपि निजजीवितमपि हि संदेहतुलायां स्थापयित्वा सदा। लङ्घन्ते जलनिधिं नहि प्राप्नुवन्ति वराटिकां तथापि॥
अन्ये कथमपि प्राप्नुवन्ति किमपि पुण्यैस्तेऽपि कृपणत्वात्। प्राणात्ययेऽपि व्ययन्ते निजधनं नैव यद्भणितम्॥
त्यागिजनकरपरम्परापरिवर्तनखेदवशपरिश्रान्ताः। अर्थाः कृपणगृहस्थाः स्वस्थावस्थाः स्वपन्तीव॥१५॥
आदरप्रवर्धिता अपि हि सर्वप्रयत्नेन रक्षिता नित्यम्। कृपणानां धनसमृद्धिः परकार्यार्था कुमारीव॥१६॥
अथवा केषामपि जायते धनसंपत्तिरपि दानशक्तिरपि। तथापि केषामपि दुर्लभः सुपात्रसङ्गो भवति यस्मात्॥
सर्वारम्भनिवृत्तं निर्मलचित्तं पवित्रचारित्रम्। निष्कारणकरुणारसयुक्तं पात्रं जगति विरलम्॥१८॥
तस्मात्किं बहुनेह जल्पितेन यदि काङ्क्षत कथमपि भवविरहम्। सूत्रविधिना सुपात्र उपयुङ्ग्ध्वं निजधनं धनिनः॥
इति श्रुत्वा देवचन्द्रेणाभिग्रहोऽतिथिसंविभागे। गृहीतस्तत आहूता भिक्षार्थं निजगृहे मुनयः॥२०॥
समये तेऽपि हि प्राप्ता विशुद्धसिद्धान्तसंग्रहनिमित्तम्। गृह्णन्ति तेन दत्तं यथोचितं भणति स एवम्॥२१॥
अद्य सुभक्तं भुक्तं पाकविधिर्ममाद्य खलु सफलः। यद् गुरुभोजनशेषं भोक्ष्येऽहमिति स तदनु॥२२॥
अनुगम्य मुनीन् भुङ्क्ते च स्वयं मुनीनामुद्वृत्तम्। मुनयोऽपि गुरुसकाशे सर्वं एतन्निवेदयन्ति॥२३॥
भणिता यतिनो गुरुणैतस्य गृहे सदापि गन्तव्यम्। अपसरति कृपणशब्दः प्राप्नोति तथा निर्जरां येन॥२४॥
ततः प्रतिदिवसं मुनयो गच्छन्ति गृहे तस्य भिक्षार्थम्। प्रकृत्या तस्य भार्योदारचित्ता ततः प्रचुरम्॥२५॥

नियभज्जं किवणत्ता पडिलाभिस्सामि मुणिवरे अहयं । इत्यट्टे मह नियमो इय भणिउं बीयदिवसम्मि ॥
सयमेव गओ वसहिं मुणिणो आमंतिऊण नियगेहे । आणेउं पडिलाहइ घएण पलियद्धमाणेण ॥२८॥
तो वंदिउं विसज्जइ मुणिणो अन्नत्थ विहरिउं पत्ता । सूरीण संनिहाणे ता पुट्ठा सूरिणा मुणिणो ॥
किं तस्स गिहे लद्धं तो मुणिणा दंसियं तयं तुप्पं । गुरुणावि य ते भणिया तस्स गिहे नेय गंतव्वं ॥
अनिमंतिएहिं, तत्तो तइयदिणे आगओ निमंतेउं । मुणिवरभोयणकाले समइक्कंतम्मि, तो गुरुणा ॥
भणियं भुत्ता मुणिणो अब्भत्तट्ठं न जेहिं भो ! विहियं । सढसीलयाए खेयं कुणमाणो पुणवि सो भणिओ ॥
मा कुणसु भद्द ! खेय कारणओ अज्ज तुज्झ गेहम्मि । न गया मुणिणो तो सो भुत्तो गंतूण गेहम्मि ॥
अइमत्ताहारेणं संजायविसूइओ तओ मरिउं । उववन्नो भूएसु कमेण लहिही सिवसुहंपि ॥३४॥
ता भो ! वयाइयारो कायव्वो नेय बुद्धिमंतेहिं । अइयारे कुणमाणो कमेण भंगंपि सो कुणइ ॥३५॥

॥ इत्यतिथिसंविभागव्रते तृतीयातिचारदृष्टान्तः ॥

---

ददाति घृतघोलमोदकशर्कराद्रव्याणि प्रतिदिनं प्रायः । पश्यति च देवचन्द्रो दीयमानं ततो भणति ॥२६॥
निजभार्यां कृपणत्वात्प्रतिलम्भयिष्यामि मुनिवरानहम् । अत्रार्थे मम नियम इति भणित्वा द्वितीयदिवसे ॥
स्वयमेव गतो वसतिं मुनीनामन्त्र्य निजगेहे । आनीय प्रतिलम्भयति घृतेन पल्यार्धमानेन ॥२८॥
ततो वन्दित्वा विसृजति मुनयोऽन्यत्र विहृत्य प्राप्ताः । सूरीणां संनिधाने तदा पृष्टाः सूरिणा मुनयः ॥२९॥
किं तस्य गृहे लब्धं ततो मुनिना दर्शितं तद् घृतम् । गुरुणापि च ते भणितास्तस्य गृहे नैव गन्तव्यम् ॥
अनिमन्त्रितैः, ततस्तृतीयदिन आगतो निमन्त्रयितुम् । मुनिवरभोजनकाले समतिक्रान्ते, ततो गुरुणा ॥३१॥
भणितं भुक्ता मुनयोऽभक्तार्थं न यैर्भोः ! विहितम् । शठशीलतया खेदं कुर्वन् पुनरपि स भणितः ॥३२॥
मा कुरु भद्र ! खेदं कारणतोऽद्य तव गेहे । न गता मुनयस्ततः स भुक्तो गत्वा गेहे ॥३३॥
अतिमात्राहारेण संजातविसूचिकस्ततो मृत्वा । उपपन्नो भूतेषु क्रमेण लप्स्यते शिवसुखमपि ॥३४॥
तस्माद् भो व्रतातिचारः कर्तव्यो नैव बुद्धिमद्भिः । अतिचारान्कुर्वन्क्रमेण भङ्गमपि स करोति ॥३५॥



नियदव्वंपि परक्कं पत्ते गिहमागएवि जे बिंति । कयअतिहिदाणनियमा थेरिव्व लहंति ते दुक्खं ॥१॥
तथाहि;—

अत्थि सुविसालसालग्गभग्गरविरहतुरंगगइपसरं । नामेणं विस्सपुरं विस्सस्सवि विस्सुयं नयरं ॥२॥
जं वा कुलीणवासं मुणीहिं परिवज्जियं हरिपुरिंपि । हसइ हरहाससससहरहसियजिणहरसिहरसोहाहिं ॥
पउमाणणाहिं सुपओहराहिं पप्फुल्लकुवलयच्छीहिं । मज्झे नियंबिणीहिं वहिया सरसीहिं सोहेइ ॥४॥
तं परिपालइ पत्थिवमत्थयमणिकिरणविच्छुरियचरणो । राया समयमियारी भज्जा से चंदलेहत्ति ॥५॥
तत्थवि य वसइ एक्का थेरी गुरुदुक्खभारतवियंगी । ईसरगिहेसु कम्मं कुणमाणी गमइ दियहाइं ॥६॥
अह तत्थ समोसरिओ सूरी नामेण मलयचंदोत्ति । जाइ जणो तव्वंदणहेउं थेरीवि भत्तीए ॥७॥
वंदेउं उवविट्ठा निसुणइ धम्मं मुणिंदपासम्मि । पढमं चिय सम्मत्तं वन्नइ सूरी इयसरूवं ॥८॥
तथाहि;—

दुत्तारदूरतीरे फुडिए जाणम्मि मज्जमाणस्स । पुरिसस्स जलहिमज्झे जह फलयासायणं सरणं ॥९॥
तह संसारसमुद्दे दुत्तारे दुसहदुक्खजलगहिरे । जीवस्स होइ सरणं सम्मत्तासायणं चेव ॥१०॥
जह दुक्काले काले असणविहीणस्स कस्सइ नरस्स । छुहियस्स होइ सहसा परमन्नं किंपि पुन्नेहिं ॥११॥
तह दूसमाए काले पमायबहुलस्स जीववग्गस्स । दुहियस्स होइ सहसा सम्मत्तं अमयनीसंदं ॥१२॥
जह कोइ हीरमाणो तरलतरंगेण गिरिनइजलेण । कहकहवि जीयसेसो पावइ तडविडविआलंबं ॥१३॥
तह रायमहागिरिनइपवाहपिल्लणगलत्थिओ जीवो । पावइ कोइ सउन्नो सम्मत्ततरुवरालंबं ॥१४॥

---

निजद्रव्यमपि परकीयं पात्रे गृहमागतेऽपि ये ब्रुवन्ति । कृतातिथिदाननियमा स्थविरेव लभन्ते ते दुःखम् ॥१॥
अस्ति सुविशालशालाग्रभग्नरविरथतुरङ्गगतिप्रसरम् । नाम्ना विश्वपुरं विश्वस्यापि विश्रुतं नगरम् ॥२॥
यद् वा कुलीनवासं मुनिभिः परिवर्जितां हरिपुरीमपि । हसति हरहासशशधरहसितजिनगृहशिखरशोभाभिः ॥३॥
पद्माननाभिः सुपयोधराभिः प्रफुल्लकुवलयाक्षी(च्छा)भि' । मध्ये नितम्बिनीभिर्बहिः सरसीभिः शोभते ॥४॥
तत्परिपालयति पार्थिवमस्तकमणिकिरणच्छुरितचरणः । राजा समयमृगारिर्भार्या तस्य चन्द्रलेखेति ॥५॥
तत्रापि च वसत्येका स्थविरा गुरुदुःखभारतप्ताङ्गी । ईश्वरगृहेषु कर्म कुर्वाणा गमयति दिवसानि ॥६॥
अथ तत्र समवसृतः सूरिर्नाम्ना मलयचन्द्र इति । याति जनस्तद्वन्दनहेतोः स्थविरापि भक्त्या ॥७॥
वन्दित्वोपविष्टा शृणोति धर्मं मुनीन्द्रपार्श्वे । प्रथममेव सम्यक्त्वं वर्णयति सूरिरितिस्वरूपम् ॥८॥
दुस्तारदूरतीरे स्फुटिते याने मज्जतः । पुरुषस्य जलधिमध्ये यथा फलकासादनं शरणम् ॥९॥
तथा संसारसमुद्रे दुस्तारे दुस्सहदुःखजलगभीरे । जीवस्य भवति शरणं सम्यक्त्वासादनमेव ॥१०॥
यथा दुष्काले कालेऽशनविहीनस्य कस्यचिन्नरस्य । क्षुधितस्य भवति सहसा परमान्नं किमपि पुण्यैः ॥११॥
तथा दुष्षमायां काले प्रमादबहुलस्य जीववर्गस्य । दुःखितस्य भवति सहसा सम्यक्त्वममृतनिःस्यन्दम् ॥
यथा कोऽपि ह्रियमाणस्तरलतरङ्गेण गिरिणदीजलेन । कथंकथमपि जीवितशेषः प्राप्नोति तटविटपिप्रालम्बम् ॥

जह लोहाण सुवन्नं तणाण धन्नं धणाण रयणाइं । रयणाण कामरयणं तह भो धम्माण जिणधम्मो ॥
जह नंदणं वणाणं दुमाण कप्पद्दुमो मुणीण जिणो । पुरिसाण चक्कवट्टी तहेव धम्माण जिणधम्मो॥१६॥
नायाणं नागिंदो चंदो नक्खत्ततारगाणं च । असुराणं असुरिंदो तहेव धम्माण जिणधम्मो ॥१७॥
देवाणं देविंदो जहव नरिंदो नराण मेज्झम्मि । जह मिगवई मिगाणं तह भो धम्माण जिणधम्मो॥१८॥
सो दुविहो पन्नत्तो जइगिहिभेएण पढमओ दसहा । बीओ बारसभेओ कमेण सो देइ सिवसोक्खं ॥
केणवि पढमो गहिओ बीओ केणावि ताण पासम्मि । अतिहीण संविभागे नियमं थेरी पवज्जेइ ॥२०॥
अह सा गिहम्मि पत्ता भोयणसमयम्मि मग्गए मग्गं । सुमुणीणं जइ पिच्छइ तो जच्छइ तेसिमसणाइं॥
अह अन्नया य कम्मिवि पत्ते परमूसवम्मि केणावि । दिन्नो य कलमसाली पायसघयसंजुओ तीए ॥२२॥
रद्धा खीरी तत्तो समागओ मासपारणयकाले । एगो महातवस्सी तीए घरे सावि तो किंचि ॥२३॥
वल्लचणयादिभत्तं वियरइ मायाए भणइ मुणिसमुहं । जइ परकीया खीरी न हवइ ता तुह अहं देमि ॥
किं एत्तियपुन्नाइं होहिंति कयाइ मह अभग्गाए । जं मुणिणो पारणए परमन्नं मह गिहे होही ॥२५॥
किंपुण चाउलनीरं गिण्ह जहिच्छाए फासुएसणीयं । जइ तुह पओयणं ता एयं मह संतियं जम्हा ॥२६॥
मुणिणावि हु तं गहियं पज्जत्तीए गओ य अन्नत्थ । थेरीएवि परमन्नं पच्छा भुत्तं समग्गंपि ॥२७॥
आकंडिकंठपमाणं भुत्ता रयणीए चरिमजामम्मि । सम्मत्तेण समेयं वमियं तं तक्खणे चेव ॥२८॥

---

तथा रागमहागिरिनदीप्रवाहपीडनगलस्थितो जीवः । प्राप्नोति कोऽपि सपुण्यः सम्यक्त्वतरुवरालम्बम् ॥१४॥
यथा लोहानां सुवर्णं तृणानां धान्यं धनानां रत्नानि । रत्नानां कामरत्नं तथा भो धर्माणां जिनधर्मः ॥१५॥
यथा नन्दनं वनानां द्रुमाणां कल्पद्रुमो मुनीनां जिनः । पुरुषाणां चक्रवर्ती तथैव धर्माणां जिनधर्मः ॥१६॥
नागानां नागेन्द्रश्चन्द्रो नक्षत्रतारकाणां च । असुराणामसुरेन्द्रस्तथैव धर्माणां जिनधर्मः ॥१७॥
देवानां देवेन्द्रो यथा वा नरेन्द्रो नराणां मध्ये । यथा मृगपतिर्मृगाणां तथैव धर्माणां जिनधर्मः ॥१८॥
स द्विविधः प्रज्ञप्तो यतिगृहिभेदेन प्रथमो दशधा । द्वितीयो द्वादशभेदः क्रमेण स ददाति शिवसौख्यम् ॥१९॥
केनापि प्रथमो गृहीतो द्वितीयो केनापि तेषां पार्श्वे । अतिथीनां संविभागे नियमं स्थविरा प्रपद्यते ॥२०॥
अथ सा गृहे प्राप्ता भोजनसमये मार्गयति मार्गम् । सुमुनीनां यदि पश्यति ततो यच्छति तेभ्योऽशनादि ॥२१॥
अथान्यदा च कस्मिन्नपि प्राप्ते परमोत्सवे केनापि । दत्तश्च कलमशालिः पायसघृतसंयुतस्तस्यै ॥२२॥
राद्धा क्षैरेयी ततः समागतो मासपारणकाले । एको महातपस्वी तस्या गृहे सापि ततः किञ्चित् ॥२३॥
वल्लचणकादिभक्तं वितरति मायया भणति मुनिसंमुखम् । यदि परकीया क्षैरेयी न भवेत्तदा तेऽहं दद्याम् ॥
किमेतावत्पुण्यानि भवेयुः कदाचिन्ममाभाग्यायाः । यन्मुनेः पारणके परमान्नं मम गृहे भवेत् ? ॥२५॥
किन्त्वोदननीरं गृहाण यदृच्छया प्रासुकैषणीयम् । यदि तव प्रयोजनं तदैतन्मदीयं यस्मात् ॥२६॥
मुनिनापि हि तद् गृहीतं पर्याप्त्या गतश्चान्यत्र । स्थविरयापि परमान्नं पश्चाद् भुक्तं समग्रमपि ॥२७॥

---

१ क. ख. मरयरओ ।

पाणेहिं परिमुक्का मज्झिमगुणसंजुया मरेऊण । मणुएसुं उववन्ना सिज्झिस्सइ खवियकम्मंसा ॥२९॥

॥ इत्यतिथिव्रते चतुर्थातिचारदृष्टान्तः समाप्तः ॥

---

आकंटीकण्ठप्रमाणं मुक्ता रजन्याश्चरमयामे। सम्यक्त्वेन समेतं वान्तं तत्क्षण एव ॥२८॥
प्राणैः परिमुक्ता मध्यमगुणसंयुता मृत्वा । मनुजेषूपपन्ना सेत्स्यति क्षपितकर्मांशा ॥२९॥



एसोवि देइ दाणं किमहं असमत्थओ इमाओवि। इय बुद्धीए दिंतो लहेइ नंदोव्व अप्पफलं ॥१॥
तथाहि ;—
सुरगिरिदीहरदंडो वसुमइचड्डो सरोहनेहिल्लो। जंबुद्दीवो दीवोव्व अत्थि पज्जलिरतरणिसिहो ॥२॥
तम्मि भरहं सुखित्तं तस्स य खंडम्मि मज्झिमिल्लम्मि। दाहिणदिसिवहुतिलयं सिरिनिलयं सिरिपुरं अत्थि॥
जम्मि जिणभवणकलहोयकलसकरनियरपसरपिंजरियं। गयणंगणं विरायइ दिणेवि संझब्भरायसमं ॥४॥
सरला सदला सहला सउणजणासेविया सिणिद्धा य। अंतो विहवड्ढजणा बाहिं पुण विडविणो जत्थ॥५॥
तम्मि नरिंदो नरविंदवंदिओ दिवायरोव्व तेयस्सी। निहणियअरिबलतिमिरो रिउबलमहणोत्ति नामेण ॥६॥
एक्कोत्थि नवरि दोसो कित्तिपिया जस्स विलसइ जहिच्छं। गयवीडारिगिहेसुवि जसेण नियबंधुणा सद्धिं॥
तह सयलवणिवरिट्ठो निवसइ तत्थेव गुणगणगरिट्ठो। सिट्ठी सुंदरनामा तह नंदो वसइ तत्थेव ॥८॥
अह रन्नो मत्तकरी आलाणं भंजिऊण अन्नदिणे। अगणंतो पडिकारे चूरंतो रहघराइं य ॥९॥
चलिओ बाहिं गंतुं तं सोऊणं भडेहिं परियरिओ। संचलिओ पिट्ठीए तुरयारूढो निवोवि तओ॥१०॥
पवरफलाणाहारं साहारं पिच्छिऊण उज्जाणे। चलिओ वीसामत्थं हत्थी जा तस्स छायाए ॥११॥
ता परमक्खरलीणो तणुणा झीणो मणम्मि अदीणो। काउस्सग्गम्मि ठिओ दिट्ठो साहू, तयणु सोवि
संजायजाइसरणो पणमइ पयपंकयाइं वरमुणिणो। तं पिच्छिऊण राया रंजियहियओ भणइ एवं॥
अच्छरियं अच्छरियं जं तिरिओवि हु नमंसए साहुं। तो अम्हाणवि एसो नमंसणिज्जोत्ति इय भणिउं॥

---

एषोऽपि ददाति दानं किमहमसमर्थोऽस्मादपि। इति बुद्ध्या ददल्लभते नन्द इवाल्पफलम् ॥१॥
सुरगिरिदीर्घदण्डो वसुमतीपात्रः सरओधस्नेहवान्। जम्बूद्वीपो दीप इवास्ति प्रज्वलितृतरणिशिखः ॥२॥
तस्मिन्भरतं सुक्षेत्रं तस्य च खण्डे मध्यमे। दक्षिणदिग्वधूतिलकं श्रीनिलयं श्रीपुरमस्ति ॥३॥
यस्मिञ्जिनभवनकलधौतकलशकरनिकरप्रसरपिञ्जरितम्। गगनाङ्गणं विराजते दिनेऽपि सन्ध्याभ्ररागसमम् ॥४॥
सरला सदला सफला सगुण(शकुन)जनासेविता स्निग्धाश्च। अन्तर्विभवाढ्यजना बहिष्पुनर्विटपिनो यत्र॥५॥
तस्मिन्नरेन्द्रो नरवृन्दवन्दितो दिवाकर इव तेजस्वी। निहतारिबलतिमिरो रिपुबलमथन इति नाम्ना ॥६॥
एकोऽस्ति किन्तु दोषः कीर्त्तिप्रिया यस्य विलसति यथेच्छम्। गतव्रीडारिगृहेष्वपि यशसा निजबन्धुना सार्धम्॥
तत्र सकलवणिग्वरिष्ठो निवसति तत्रैव गुणगणगरिष्ठः। श्रेष्ठी सुन्दरनामा तथा नन्दो वसति तत्रैव ॥८॥
अथ राज्ञो मत्तकर्यालानं भङ्क्त्वाऽन्यदिने। अगणयन्प्रतिकारांश्चूर्णयन् रथगृहाणींश्च ॥९॥
चलितो बहिर्गन्तुं तत् श्रुत्वा भटैः परिकरितः। संचलितः पृष्ठे तुरगारूढो नृपोऽपि ततः ॥१०॥
प्रवरफलानामाधारं शाखिनं दृष्ट्वोद्याने। चलितो विश्रामार्थं हस्ती यावत्तस्य च्छायायाम् ॥११॥
तावत्परमाक्षरलीनस्तनुना क्षीणो मनस्यदीनः। कायोत्सर्गे स्थितो दृष्टः साधुः, तदनु सोऽपि ॥१२॥
संजातजातिस्मरणः प्रणमति पदपङ्कजानि वरमुनेः। तद् दृष्ट्वा राजा रञ्जितहृदयो भणत्येवम् ॥१३॥
आश्चर्यमाश्चर्यं यत्तिर्यङ्ङपि हि नमस्यति साधुम्। ततोऽस्माकमप्येष नमस्यनीय इतीदं भणित्वा ॥१४॥

तुरयाओ उत्तरेउं वंदइ राया सपरियणो साहुं। उववूहिउं करिंदं उवविट्ठो सुद्धभूमीए ॥१५॥
अह उवसंते करिणो हल्लप्फलए मुणिस्स नमणत्थं। संपत्ता सुंदरनंदसिट्ठिणो दोवि जुगवंपि ॥१६॥
झाणसमत्तीए तओ साहू साहेइ ताण जिणधम्मं। समयम्मि निवो पुच्छइ तं साहुं रइयकरकोसो ॥१७॥
को निव्वेओ जाओ वयगहणे तुज्झ जोव्वणभरेवि। भणइ मुणी संसारे सुलहोच्चिय राय! निव्वेओ ॥
तुज्झवि नवरं मन्ने अज्जवि कम्मं निवारगं अत्थि। चरणावरणं तम्हा निसुणिज्जउ अम्हवयहेउं ॥१९॥
जइवि हु तुज्झवि तस्सवणओ अ जाएइ कहवि वेरग्गं। इय कारणा कहिज्जइ तक्कहणमसंगयं इहरा ॥
तद्यथा;—
अत्थि पुहईपसिद्धा उववणवणसंडमंडिउद्देसा। रयणउरी वरनयरी तत्थ निवो रयणचूडोत्ति ॥२१॥
रज्जमणुपालयंतो अमावसाए निसाए सो राया। परिहरियपावकिच्चो विसज्जियासेसअवरोहो ॥२२॥
वासहरयं पविट्ठो सुहचिट्ठो जाव सिज्जमारूढो। दीवसिहाए दिट्ठी ताव निविट्ठा तओ दिट्ठो ॥२३॥
एगो तरलपयंगो दीवसिहं पविसिउं अहिलसंतो। करुणापणइणिपरिपेरिएण तो चिंतियं रन्ना ॥२४॥
अहह वराओ एसो अन्नाणविमोहिओ पईवम्मि। पडिऊणं मा डज्झउ तत्तो गहिउं करयलेण ॥२५॥
कुंचियविवरेण बहिं पक्खित्तो आगओ पुणो पुणवि। वेलापणगं जाव य तो चिंतइ नरवई एवं ॥२६॥
जह निसुणिज्जइ लोए किल पुरिसो रक्खिओ उवाएहिं। वाससयाइंवि जीवइ करेमि ता किंपुवायं से॥
मच्चुमुहाओ एयं जइ कहवि हु रक्खिउं तरिस्सामि। ता जाणिस्समवस्सं विज्जोसहमंततंतेहिं ॥२८॥

---

तुरगादुत्तीर्य वन्दते राजा सपरिजनः साधुम्। उपबृंह्य करीन्द्रमुपविष्टः शुद्धभूमौ ॥१५॥
अथोपशान्ते करिण आकुलत्वे मुनेर्नमनार्थम्। संप्राप्तौ सुन्दरनन्दश्रेष्ठिनौ द्वावपि युगपदपि ॥१६॥
ध्यानसमाप्तौ ततः साधुः कथयति तयोर्जिनधर्मम्। समये नृपः पृच्छति तं साधुं रचितकरकोशः ॥१७॥
को निर्वेदो जातो व्रतग्रहणे तव यौवनभरेऽपि। भणति मुनिः संसारे सुलभ एव राजन्! निर्वेदः ॥१८॥
तवापि किन्तु मन्येऽद्यापि कर्म निवारकमस्ति। चारित्रावरणं तस्मात् श्रूयतामस्मद्व्रतहेतुम् ॥१९॥
यदि हि तवापि तच्छ्रवणतश्च जायते कथमपि वैराग्यम्। इति कारणात्कथ्यते तत्कथनमसंगतमितरथा ॥
अस्ति पृथिवीप्रसिद्धोपवनवनषण्डमण्डितोद्देशा। रत्नपुरी वरनगरी तत्र नृपो रत्नचूड इति ॥२१॥
राज्यमनुपालयन्नमावास्याया निशि स राजा। परिहृतपापकृत्यो विसृष्टाशेषावरोधः ॥२२॥
वासगृहं प्रविष्टः सुखचेष्टो यावच्छय्यामारूढः। दीपशिखायां दृष्टिस्तावन्निविष्टा ततो दृष्टः ॥२३॥
एकस्तरलपतङ्गो दीपशिखां प्रवेष्टुमभिलषन्। करुणाप्रणयिनीपरिप्रेरितेन ततश्चिन्तितं राज्ञा ॥२४॥
अहह वराक एषोऽज्ञानविमोहितः प्रदीपे। पतित्वा मा दह्यतां ततो गृहीत्वा करतलेन ॥२५॥
कुञ्चितविवरेण बहिष्प्रक्षिप्त आगतः पुनः पुनरपि। वेलापञ्चकं यावच्च तत्रश्चिन्तयति नरपतिरेवम् ॥२६॥
यथा श्रूयते लोके किल पुरुषो रक्षित उपायैः। वर्षशतान्यपि जीवति करोमि तस्मात्कमप्युपायमस्य ॥२७॥

---

१ रा. ग मउम्मिमिलियकरो।

मरणपरित्ताणमवस्समत्थि, जइ जीविही न पुण एसो । ता मच्चुपरित्ताणं नत्थि हु भुवणम्मि कस्सवि य ॥
इय चिंतिऊण रन्ना पलोइयाइं समग्गपासाइं । तो दिट्ठो य समुग्गो एगो उग्घाडियदुवारो ॥३०॥
तो सलहो गहिऊणं पक्खित्तो तत्थ ढक्किउं दारं । नियपासे तं काउं सुत्तो राया समाहीए ॥३१॥
निद्दक्खए विबुद्धो चिंतइ किं तस्स मह उवाएण । जायं, तो य समुग्गं उग्घाडिवि पिच्छए जाव ॥
ताव न पिच्छइ सलहं रयणुज्जोएण निरु गविट्ठंपि । एक्कं घरकोइलियं तत्थ निलुक्कं पलोएइ ॥३३॥
तो चिंतेइ नरिंदो नूणं एसो इमाए गिलिउत्ति । ही संसारसहाओ सव्वो खणदिट्ठनट्ठोत्ति ॥३४॥
किल रक्खाबुद्धीए एस समुग्गे मया परिक्खित्तो । एत्थवि इमीए गसिओ नय मोक्खो अत्थि विहियस्स॥
जित्तियमित्तं कम्मं विहियं जीवेण पुव्वजम्मम्मि । तत्तियमित्तं चिय देइ सो फलं नत्थि संदेहो ॥३६॥
विज्जा कुणंति किरियं ओसहजोएहिं मंतबलजुत्ता । नय चायंति वराया पुव्वकयं कम्ममवणेउं ॥३७॥
पच्चक्खं जेण इमो मए पयंगो समुग्गए खित्तो । गिलिओ गिलोइयाए को किर मच्चूए रक्खिज्जा ? ॥
तो नत्थि इत्थ सरणं जयम्मि सचराचरम्मि जीवाण । पुव्वविहियं नियं चिय कम्मं सुहमसुहमुवणेइ ॥
ता कीस एस लोओ न मुयइ घरवासपमुहवावारं । घणरागदोससमूढो सिढिलो सद्धम्मकिरियाए? ॥४०॥
एवं नराहिवइणो सहसा वेरग्गमग्गचडियस्स । जायं जाईसरणं कम्मक्खयउवसमवसेण ॥४१॥
[1]तो तेण विन्नाओ पुव्वभवो सुमरियं च जं पढियं । गयचारित्तावरणो झत्ति विरत्तो भवदुहस्स ॥४२॥

---

मृत्युमुखादेनं यदि कथमपि हि रक्षितुं शक्ष्यामि । तदा ज्ञास्याम्यवश्यं वैद्यौषधमन्त्रतन्त्रैः ॥२८॥
मरणपरित्राणमवश्यमस्ति, यदि जीविष्यति न पुनरेषः । तदा मृत्युपरित्राणं नास्ति हि भुवने कस्यापि च ॥
इति चिन्तयित्वा राज्ञा प्रलोकितानि समग्रपार्श्वानि । ततो दृष्टश्च समुद्ग एक उद्घाटितद्वारः ॥३०॥
ततः शलभो गृहीत्वा प्रक्षिप्तस्तत्राच्छाद्य द्वारम् । निजपार्श्वे तं कृत्वा सुप्तो राजा समाधिना ॥३१॥
निद्राक्षये विबुद्धश्चिन्तयति किं तस्य ममोपायेन । जातं, ततश्च समुद्गमुद्घाट्य पश्यति यावत् ॥३२॥
तावन्न पश्यति शलभं रत्नोद्द्योतेन निश्चितं गवेषितमपि । एकां गृहोलिकां तत्र निलीनां प्रलोकते ॥३३॥
ततश्चिन्तयति नरेन्द्रो नूनमेषोऽनया गीर्ण इति । ही संसारस्वभावः सर्वः क्षणदृष्टनष्ट इति ॥३४॥
किल रक्षाबुद्ध्यैष समुद्गे मया परिक्षिप्त. । अत्राप्यनया ग्रस्तो नच मोक्षोऽस्ति विहितस्य ॥३५॥
यावन्मात्रं कर्म विहितं जीवेन पूर्वजन्मनि । तावन्मात्रमेव ददाति स फलं नास्ति संदेहः ॥३६॥
वैद्याः कुर्वन्ति क्रियामौषधयोगैर्मन्त्रबलयुक्ता । न च शक्नुवन्ति वराकाः पूर्वकृतं कर्मापनेतुम् ॥३७॥
प्रत्यक्षं येनायं मया पतङ्गः समुद्गे क्षिप्तः । गीर्णो गृहोलिकया क. किल मृत्यो रक्षेत् ? ॥३८॥
ततो नास्त्यत्र शरणं जगति सचराचरे जीवानाम् । पूर्वविहितं निजमेव कर्म सुखमसुखमुपनयति ॥३९॥
ततः कस्मादेष लोको न मुञ्चति गृहवासप्रमुखव्यापारम् । घनरागद्वेषमूढः शिथिल. सद्धर्मक्रियायाम् ? ॥४०॥
एवं नराधिपतेः सहसा वैराग्यमार्गचटितस्य । जातं जातिस्मरणं कर्मक्षयोपशमवशेन ॥४१॥

---

१ ग समरिउ च ।

